# चरक-संहिता।

महामुनिनाग्निवेशेन प्रणीता

महर्षिचरकेण प्रतिसंस्कृता

कविराज श्रीदेवेन्द्रनाथ सेन गुप्तेन

कविराज श्रीउपेन्द्रनाथ सेन गुप्तेन च

सम्पादिता संशोधिता प्रकाशिता च।

---

# CHARAKA SAMHITA.

BY

## MAHAMUNI AGNIBESHA.

REVISED BY

## MAHARSHI CHARAKA.

COMPILED & EDITED BY

KABIRAJ DEBENDRA NATH SEN

AND

KABIRAJ UPENDRA NATH SEN.

---


कलिकाता राजधान्यां

उनत्रिंशसंख्यककलुटोलाभवनस्य

धन्वन्तरि मेसिन यन्त्रे

श्रीहरिदास वन्द्योपाध्यायेन

मुद्रिता।

# विज्ञापनम् ।

इह खलु चरकसंहिता—रत्नाकरमन्थनोत्थितायुर्व्वेदरत्नेषु उज्ज्वलतमं रत्नम् । प्राणिनामस्माकं धर्म्मार्थपरिपन्थि-सर्व्वरोगोपशमाय इयमेकान्तेनैवोपयोगिनी । इन्द्रियाणां मन इव, भूतानां चेतनेव संहितानां चरकसंहिता श्रेष्ठतरा; परन्तु सकलदेशप्रचलितानां चिकित्साशास्त्राणां मूलमिति प्रत्नतत्त्वविद्भिरेकवाक्येन स्वीकृतम् । अस्यां भगवान् कृष्णात्रेयो वक्ता, अग्निवेशः श्रोता, चरकमुनिः प्रतिसंस्कर्त्ता च । तस्माच्चरकसंहिता गुरुसूत्र-शिष्यसूत्र-प्रतिसंस्कर्त्तृसूत्रमयीत्यर्थतोऽवगन्तव्यम् । अस्याश्च एकैकमपि सूत्रं चिकित्सासरितां एकैक उत्स एव । अस्याः प्रभावेनैव अस्माकमायुर्व्वेदीयचिकित्सा सर्व्वैः समादृता सुपूजिता च । अहो कालधर्म्मेण एतादृशं महारत्नं विलुप्तप्रायम् ! अस्याश्चक्रपाणिकृतायुर्व्वेददीपिकाख्या टीका विलुप्तैव, किंपुनर्विशुद्धमूलमप्राप्तिदुष्प्रापं यद्यपि केनचित् केनचिन्महात्मना वङ्गानुवादसहितं चरकमूलं मुद्रितं प्रकाशितञ्च किन्तु तन्न मनोरमम् । विशुद्धसंस्करणाभावेनाधुना चरकस्याध्ययनाध्यापनकार्य्यमतीवदुष्करत्वेनाविविरलिजनकतया च वर्त्तते । अतोऽस्माभिर्वहुत्रमेण विशेषयत्नेन स्वतः परतश्चेष्टया प्रचुरार्थव्ययेन च काशी-काश्मीर-वम्बे-द्राविड़-पुना-प्रभृतिभ्यो नानास्थानेभ्यो हस्तलिखितानि वहूनि पुस्तकानि समाहृत्य तानि, अस्माकमपि प्राचीनतम-हस्तलिखित-विशुद्धपुस्तकानि च अवलोक्यातिसावधानतया असङ्गतपाठानां सुसङ्गतिं कृत्वा विशुद्धरूपेण चरकसंहिता मुद्रिता प्रकाशिता च । रत्नाकर इव चरकसंहिता सुगभीरा, अस्यां कुत्रचित् किञ्चिद्रत्नं निहितमस्ति तत्सर्व्वं निरूपयितुं

न कोऽप्यलमल्पचेष्टया, अतोऽस्माभिरस्याः सुविस्तृता सूची प्रदत्ता। अलमति पल्लवितेन।

उपसंहारसमये वक्तव्यम्—अस्यास्मरकसंहितायाः संस्करणे विशोधनेच अस्मदायुर्व्वेदविद्यालयाध्यापकेन आयुर्व्वेदविशारदेन विद्यारत्नोपाधिक-परमपूज्यपाद-श्रीयुक्तप्रसन्नकुमारवन्द्योपाध्यायेन असाधारणो यत्नः श्रमश्च कृतः अतोवयं तत्समीपे चिरकृतज्ञतापाशेन बद्धाः स्मः। सुहृद्वर-भक्तिभाजन श्रीयुक्त पण्डित चन्द्रशेखर काव्यतीर्थ काव्यचुञ्चु कविरत्नेन तथा भिषग्वरश्रीयुक्त हरिपदसेनगुप्तयशस्विना तथा लब्धप्रतिष्ठकविराज श्रीयुक्तकुञ्जविहारिकाव्यतीर्थधन्वन्तरिणा अत्र महान् श्रमः कृतः अतस्तेषामपि सकाशे चिरकृतज्ञाः स्मः। इति

शकः १८१९ | श्रीदेवेन्द्रनाथ सेन गुप्त कविराजः।
तां १ आषाढ़ः। | श्रीउपेन्द्रनाथ सेन गुप्त कविराजः।

# चरक-संहितायाः सूचीपत्रम् ।

## पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः।



## सप्तमोऽध्यायः।

## अष्टमोऽध्यायः ।



## नवमोऽध्यायः ।



## दशमोऽध्यायः ।



## एकादशोऽध्यायः ।

## पञ्चदशोऽध्यायः ।



## षोडशोऽध्यायः ।



## सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः ।



## ऊनविंशोऽध्यायः ।

### विंशोऽध्यायः ।



### एकविंशोऽध्यायः ।

## सप्तविंशोऽध्यायः।

## अष्टाविंशोऽध्यायः ।

इति सूत्रस्थानसूचीपत्रं समाप्तम्।

# निदान-स्थानस्य सूचीपत्रम् ।

इति निदानस्थानस्य सूचीपत्रं समाप्तम्।

## विमान-स्थानस्य सूचीपत्रम्।

### प्रथमोऽध्यायः।



### द्वितीयोऽध्यायः।



### तृतीयोऽध्यायः।

## चतुर्थोऽध्यायः।



## पञ्चमोऽध्यायः।



## षष्ठोऽध्यायः।

इति विमानस्थान-सूचीपत्रं समाप्तम्।

# अथ शारीरस्थानस्य सूचीपत्रम् ।

## तृतीयोऽध्यायः ।



## चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः।



## षष्ठोऽध्यायः।

इति शारीरस्थानस्य सूचीपत्रं समाप्तम्।

## इन्द्रियस्थानस्य सूचीपत्रम्।

### प्रथमोऽध्यायः।



### द्वितीयोऽध्यायः।



### तृतीयोऽध्यायः।



### चतुर्थोऽध्यायः।

इतीन्द्रियस्थानस्य सूचीपत्रं समाप्तम् ।

---

# चिकित्सितस्थानस्य सूचीपत्रम् ।

## प्रथमोऽध्यायः ।



---



---

## तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः।

## नवमोऽध्यायः ।

## दशमोऽध्यायः ।



## एकादशोऽध्यायः ।



## द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः।

## चतुर्दशोऽध्यायः

## पञ्चदशोऽध्यायः ।

## अष्टादशोऽध्यायः।

## अतिसारचिकित्सिताध्यायः।

## विंशोऽध्यायः ।



## एकविंशोऽध्यायः ।

## द्वाविंशोऽध्यायः ।

## चतुर्व्विंशोऽध्यायः।

## पञ्चविंशोऽध्यायः।

### षड्विंशोऽध्यायः ।

इति चरकसंहितायाश्चिकित्सास्थानस्य सूचीपत्रम्

---

## कल्पस्थानस्य सूचीपत्रम् ।

### प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।



## तृतीयोऽध्यायः ।



## चतुर्थोऽध्यायः ।



## पञ्चमोऽध्यायः ।

### दशमोऽध्यायः।



### एकादशोऽध्यायः।



### द्वादशोऽध्यायः।



इति चरक-संहितायाः कल्पस्थानस्य सूचीपत्रम्।

## सिद्धिस्थानस्य सूचीपत्रम्।

### प्रथमोऽध्यायः।

## द्वितीयोऽध्यायः ।



## तृतीयोऽध्यायः ।

## सप्तमोऽध्यायः ।

## दशमोऽध्यायः।



## एकादशोऽध्यायः।

इति सिद्धिस्थानस्य सूचीपत्रं समाप्तम् ।

## समाप्तमिदं सूचीपत्रम् ।

### भ्रमसंशोधनम् ।

प्रमादान्मुद्रणकाले ५२० पृष्ठात् परं ५२१ पत्राङ्कस्थले ५२२ संख्या; पुनः ९८० अङ्कात् परं ९८१ संख्यास्थले ९४१ संख्या सञ्जाता, अतस्तदारभ्य यथाक्रमं बुद्धिमद्भिः संशोधनीयमिति ।

# चरक-संहिता।

## सूत्रस्थानम् ।

### प्रथमोऽध्यायः ।

अथातो दीर्घञ्जीवितीयमध्यायं व्याख्यास्याम
इति ह स्माह भगवानात्रेयः । १ ॥

दीर्घञ्जीवितमन्विच्छन् भरद्वाज उपागमत् ।
इन्द्रमुग्रतपा बुद्ध्वा शरण्यममरेश्वरम् ॥
ब्रह्मणा हि यथाप्रोक्तमायुर्व्वेदं प्रजापतिः ।
जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥
अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम् ।
ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥ २ ॥
विघ्नभूता यदा रोगाः प्रादुर्भूताः शरीरिणाम् ।
तपोपवासाध्ययनब्रह्मचर्य्यव्रतायुषाम् ॥
तदा भूतेष्वनुक्रोशं पुरस्कृत्य महर्षयः ।
समेताः पुण्यकर्म्माणः पार्श्वे हिमवतः शुभे ॥

अङ्गिरा यमदग्निश्च वशिष्ठः काश्यपो भृगुः ।
आत्रेयो गौतमः साङ्ख्यः पुलस्त्यो नारदोऽसितः ॥
अगस्त्यो वामदेवश्च मार्कण्डेयाश्वलायनौ ।
पारिक्षिर्भिक्षुरात्रेयो भरद्वाजः * कपिष्ठलः ॥
विश्वामित्राश्वरथ्यौ च भार्गवश्च्यवनोऽभिजित् ।
गार्ग्यः शाण्डिल्यकौण्डिल्यौ वार्क्षिर्देवलगालवौ ॥
साङ्कृत्यो वैजवापिश्च कुशिको वादरायणः ।
वड़िशः शरलोमा च काप्यकात्यायनावुभौ ॥
काङ्कायनः कैकशेयो धौम्यो मारीचिकाश्यपौ ।
शर्कराक्षो हिरण्याक्षो लोकाक्षः पैङ्गिरेव च ॥
शौनकः शाकुनेयश्च मैत्रेयो मैमतायनिः ।
वैखानसा वालखिल्यास्तथा चान्ये महर्षयः ॥
ब्रह्मज्ञानस्य निधयो यमस्य † नियमस्य च ।
तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः ॥
सुखोपविष्टास्ते तत्र पुण्याञ्चक्रुः कथामिमाम् ।
धर्म्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ॥
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च ।
प्रादुर्भूतो मनुष्याणामन्तरायो महानयम् ॥
कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः ॥ ३ ॥
अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा ।
स वक्ष्यति शमोपायं यथावदमरप्रभुः ॥ ४ ॥

---

* कपिञ्जल इति पाठान्तरम् । † दमस्येति वा पाठः ।

कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम् ।
अहमर्थे नियुज्येयमत्रेति प्रथमं वचः ।
भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः ॥ ५ ॥
स शक्रभवनं गत्वा सुरर्षिगणमध्यगम् ।
ददर्श बलहन्तारं दीप्यमानमिवानलम् ॥
सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम् ।
प्रोवाच भगवान् धीमान् ऋषीणां वाक्यमुत्तमम् ॥
व्याधयो हि समुत्पन्नाः सर्व्वप्राणिभयङ्कराः ।
तद्ब्रूहि मे शमोपायं यथावदमरप्रभो ॥ ६ ॥
तस्मै प्रोवाच भगवानायुर्व्वेदं शतक्रतुः ।
पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये ॥
हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम् ।
त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः ॥ ७ ॥
सोऽनन्तपारं त्रिस्कन्ध * मायुर्व्वेदं महामतिः ।
यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः ॥
तेनायुरमितं लेभे भरद्वाजः सुखान्वितम् ।
ऋषिभ्योऽनधिकं तत्तु शशंसानवशेषयन् ॥
ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् ।
दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः ॥ ८ ॥
तेनर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा ।
सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म्म च ॥

---

* त्रिस्कन्धमिति पाठान्तरम् ।

समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः।
लेभिरे परमं शर्म्म जीवितञ्चाप्यनश्वरम् ॥ ९ ॥
अथ मैत्रीपरः पुण्यमायुर्व्वेदं पुनर्व्वसुः।
शिष्येभ्यो दत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया ॥
अग्निवेशश्च भेलश्च जतूकर्णः पराशरः।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्व्वचः ॥ १० ॥
बुद्धेर्व्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः।
तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत् ॥
अथ भेलादयश्चक्रुः स्वं स्वं तन्त्रं कृतानि च।
श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः ॥
श्रुत्वा सूत्रणमर्थानामृषयः पुण्यकर्म्मणाम्।
यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे ॥ ११ ॥
सर्व्वे एवास्तुवंस्तांश्च सर्व्वभूतहितैषिणः।
साधु भूतेष्वनुक्रोश इत्युच्चैरब्रुवन् समम् ॥
तं पुण्यं शुश्रुवुः शब्दं दिवि देवर्षयः स्थिताः।
सामराः परमर्षीणां श्रुत्वा मुमुदिरे परम् ॥
अहो साध्विति निर्घोषो लोकांस्त्रीनन्ववादयत्।
नभसि स्निग्धगम्भीरो हर्षाद्भूतैरुदीरितः ॥
शिवो वायुर्व्ववौ सर्व्वा भाभिरुन्मीलिता दिशः।
निपेतुः सजलाश्चैव दिव्याः कुसुमवृष्टयः ॥ १२ ॥
अथाग्निवेशप्रमुखान् विविशुर्ज्ञानदेवताः।
बुद्धिः सिद्धिः स्मृतिर्मेधा धृतिः कीर्त्तिः क्षमा दया ॥ १३ ॥
तानि चानुमतान्येषां तन्त्राणि परमर्षिभिः।

भावाय भूतसङ्घानां प्रतिष्ठां भुवि लेभिरे ॥ १४ ॥
हिताहितं सुखं दुःखमायुस्तस्य हिताहितम् ।
मानञ्च तच्च यत्रोक्तमायुर्व्वेदः स उच्यते ॥ १५ ॥
शरीरेन्द्रियसत्त्वात्मसंयोगो धारि जीवितम् ।
नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते ॥ १६ ॥
तस्यायुषः पुण्यतमो वेदो वेदविदां मतः ।
वक्ष्यतेऽयम्मनुष्याणां लोकयोरुभयोर्हितः ॥ १७ ॥
सर्व्वदा सर्व्वभावानां सामान्यं वृद्धिकारणम् ।
ह्रासहेतुर्व्विशेषश्च प्रवृत्तिरुभयस्य तु ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्ययः ॥ १८ ॥
सत्त्वमात्मा शरीरञ्च त्रयमेतत्त्रिदण्डवत् ।
लोकस्तिष्ठति संयोगात् तत्र सर्व्वं प्रतिष्ठितम् ॥
स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम् ।
वेदस्यास्य तदर्थं हि वेदोऽयं सम्प्रकाशितः ॥ १९ ॥
खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः ।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ॥ २० ॥
सार्था गुर्व्वादयो बुद्धिः प्रयत्नान्ताः परादयः ।
गुणाः प्रोक्ताः प्रयत्नादि कर्म्म चेष्टितमुच्यते ॥ २१ ॥
समवायोऽपृथग्भावो भूम्यादीनां गुणैर्म्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥ २२ ॥
यत्राश्रिताः कर्म्मगुणाः कारणं समवायि यत् ।
तद्द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः ॥ २३ ॥

संयोगे च विभागे च कारणं द्रव्यमाश्रितम्।
कर्त्तव्यस्य क्रिया कर्म्म कर्म्म नान्यदपेक्षते ॥ २४ ॥
इत्युक्तं कारणं कार्य्यं धातुसाम्यमिहोच्यते।
धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥ २५ ॥
कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च।
द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रहः ॥ २६ ॥
शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः।
तथा सुखानां योगस्तु सुखानां कारणं समः ॥ २७ ॥
निर्व्विकारः परस्त्वात्मा सत्त्वभूतगुणेन्द्रियैः।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः ॥ २८ ॥
वायुः पित्तं कफश्चोक्तः शारीरो दोषसंग्रहः।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥
प्रशाम्यत्यौषधैः पूर्व्वो दैवयुक्तिव्यपाश्रयैः।
मानसो ज्ञानविज्ञानधैर्य्यस्मृतिसमाधिभिः ॥ २९ ॥
रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।
विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति ॥
सस्नेहमुष्णं तीक्ष्णञ्च द्रवमम्लं सरं कटु
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥
गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः।
श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः ॥ ३० ॥
विपरीतगुणैर्देशमात्राकालोपपादितैः।
भेषजैर्व्विनिवर्त्तन्ते विकाराः साध्यसम्मताः।
साधनं नत्वसाध्यानां व्याधीनामुपदिश्यते ॥ ३१ ॥

भूयश्चातो यथाद्रव्यं गुणकर्म्माणि वक्ष्यते ॥ ३२ ॥
रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा ।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः ॥
स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च ।
कषायश्चेति षट्कोऽयं रसानां संग्रहः स्मृतः ॥ ३३ ॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः ।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥ ३४ ॥
किञ्चिद्दोषप्रशमनं किञ्चिद्धातुप्रदूषणम् ।
स्वस्थवृत्तौ मतं किञ्चित् त्रिविधं द्रव्यमुच्यते ॥ ३५ ॥
तत् पुनस्त्रिविधं ज्ञेयं जाङ्गमौद्भिदपार्थिवम् ।
मधूनि गोरसाः पित्तं वसा मज्जासृगामिषम् ॥ ३६ ॥
विण्मूत्रचर्म्मरेतोऽस्थिस्नायुशृङ्गनखाः खुराः ।
जङ्गमेभ्यः प्रयुज्यन्ते केशा लोमानि रोचनाः ॥
सुवर्णं समलाः पञ्च लोहाः ससिकता सुधा ।
मनःशिलाले मणयो लवणं गैरिकाञ्जने ॥
भौममौषधमुद्दिष्टमौद्भिदन्तु चतुर्विधम् ।
वनस्पतिस्तथा वीरुद् वानस्पत्यस्तथौषधिः ॥
फलैर्वनस्पतिः पुष्पैर्वानस्पत्यः फलैरपि ।
ओषध्यः फलपाकान्ताः प्रतानैर्वीरुधः स्मृताः ॥
मूलत्वक्सारनिर्य्यासनाड़स्वरसपल्लवाः ।
क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कण्टकाः ॥
पत्राणि शुङ्गाः कन्दाश्च प्ररोहाश्चौद्भिदो गणः ॥ ३७ ॥
मूलिन्यः षोड़शैकोना फलिन्यो विंशतिः स्मृताः ।

महास्नेहाश्च चत्वारः पञ्चैव लवणानि च ॥
अष्टौ मूत्राणि संख्यातान्यष्टावेव पयांसि च ।
शोधनार्थाश्च षड् वृक्षाः पुनर्वसुनिदर्शिताः ॥
य एतान् वेत्ति संयोक्तुं विकारेषु स वेदवित् ॥ ३८ ॥
हस्तिदन्ती हैमवती श्यामा त्रिवृदधोगुड़ा ।
सप्तला श्वेतनामा च प्रत्यक्श्रेणी गवाक्ष्यपि ॥
ज्योतिष्मती च विम्बी च शणपुष्पी विषाणिका ।
अजगन्धा द्रवन्ती च चीरिणी चात्र षोड़शी ॥
शणपुष्पी च विम्बी च छर्द्दने हैमवत्यपि ।
श्वेता ज्योतिष्मती चैव योज्या शीर्षविरेचने ॥
एकादशावशिष्टा याः प्रयोज्यास्ता विरेचने ।
इत्युक्ता नामकर्म्मभ्यां मूलिन्यः फलिनीः शृणु ॥ ३९ ॥
शङ्खिन्यथ विड़ङ्गानि त्रपुषं मदनानि च ।
आनूपं स्थलजञ्चैव क्लीतकं द्विविधं स्मृतम् ॥
धामार्गवमथेक्ष्वाकु जीमूतं कृतवेधनम् ।
प्रकीर्य्या चोदकीर्य्या च प्रत्यक्पुष्पी तथाभया ॥
अन्तःकोठरपुष्पी च हस्तिपर्णाश्च शारदम् ।
कम्पिल्लकारग्वधयोः फलं यत् कुटजस्य च ॥
मदनं कुटजञ्चैव त्रपुषं हस्तिपर्णिनी ।
एतानि वमने चैव योज्यान्यास्थापनेषु च ॥
नस्तःप्रच्छर्द्दने चैव प्रत्यक्पुष्पी विधीयते ।
दश यान्यवशिष्टानि तान्युक्तानि विरेचने ।
नामकर्म्मभिरुक्तानि फलान्येकोनविंशतिः ॥ ४० ॥

सर्पिस्तैलं वसा मज्जा स्नेहो दृष्टश्चतुर्व्विधः।
पानाभ्यञ्जनवस्त्यर्थं नस्यार्थञ्चैव योगतः॥
स्नेहना जीवना वर्ण्या बलोपचयवर्द्धनाः।
स्नेहाह्येते च विहिता वातपित्तकफापहाः॥ ४१॥
सौवर्च्चलं सैन्धवञ्च विड़मौद्भिदमेव च।
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च॥
स्निग्धान्युष्णानि तीक्ष्णानि दीपनीयतमानि च।
आलेपनार्थे युज्यन्ते स्नेहस्वेदविधौ तथा॥
अधोभागोर्द्धभागेषु निरूहेष्वनुवासने।
अभ्यञ्जने भोजनार्थे शिरसश्च विरेचने॥
शस्त्रकर्म्मणि वर्त्त्यर्थमञ्जनोत्सादनेषु च।
अजीर्णानाहयोर्वाते गुल्मे शूले तथोदरे॥ ४२॥
उक्तानि लवणान्यूर्द्ध मूत्राण्यष्टौ निबोध मे।
मुख्यानि यानि ह्यष्टानि सर्व्वाण्यात्रेयशासने॥
अविमूत्रमजामूत्रं गोमूत्रं माहिषञ्च यत्।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च॥ ४३॥
उष्णं तीक्ष्णमथोऽरूक्षं कटुकं लवणान्वितम्।
मूत्रमुत्सादने युक्तं युक्तमालेपनेषु च॥
युक्तमास्थापने मूत्रं युक्तञ्चापि विरेचने।
स्वेदेष्वपि च तद्युक्तमानाहेष्वगदेषु च॥
उदरेष्वथ चार्शःसु गुल्मकुष्ठकिलासिषु।
तद्युक्तमुपनाहेषु परिषेके तथैव च॥
दीपनीयं विषघ्नञ्च क्रिमिघ्नञ्चोपदिश्यते।

पाण्डुरोगोपसृष्टानामुत्तमं सर्व्वथोच्यते * ॥
श्लेष्माणं शमयेत् पीतं मारुतञ्चानुलोमयेत्।
कर्षेत् पित्तमधोभागमित्यस्मिन् गुणसंग्रहः ॥
सामान्येन मयोक्तस्तु पृथक्त्वेन प्रवक्ष्यते ॥ ४४ ॥
अवीमूत्रं सतिक्तं स्यात् स्निग्धं पित्ताविरोधि च।
आजं कषायमधुरं पथ्यं दोषान्निहन्ति च ॥
गव्यं समधुरं किञ्चित् दोषघ्नं क्रिमिकुष्ठनुत्।
कण्डूञ्च शमयेत् पीतं सम्यग् दोषोदरे हितम् ॥
अर्शःशोफोदरघ्नन्तु सक्षारं माहिषं सरम् ॥
हास्तिकं लवणं मूत्रं हितन्तु क्रिमिकुष्ठिनाम्।
प्रशस्तं बद्धविण्मूत्रविषश्लेष्मामयार्शसाम् ॥
सतिक्तं श्वासकासघ्नमर्शोघ्नं चौष्ट्रमुच्यते।
वाजिनां तिक्तकटुकं कुष्ठव्रणविषापहम् ॥
खरमूत्रमपस्मारोन्मादग्रहविनाशनम्।
इतीहोक्तानि मूत्राणि यथासामर्थ्ययोगतः ॥ ४५ ॥
अथ क्षीराणि वक्ष्यन्ते कर्म्मचैषां गुणाश्च ये।
अवीक्षीरमजाक्षीरं गोक्षीरं माहिषञ्च यत् ॥
उष्ट्रीणामथ नागीनां वड़वायाः स्त्रियास्तथा। ४६ ॥
प्रायशो मधुरं स्निग्धं शीतं स्तन्यं पयोमतम्।
प्रीणनं वृंहणं वृष्यं मेध्यं बल्यं मनस्करम् ॥
जीवनीयं श्रमहरं श्वासकासनिवर्हणम्।
हन्ति शोणितपित्तञ्च सन्धानं विहतस्य च ॥

* शस्यते चोच्यते इति पाठान्तरम्।

सर्व्वप्राणभृतां सात्म्यं शमनं शोधनं तथा ।
तृष्णाघ्नं दीपनीयञ्च श्रेष्ठं क्षीणक्षतेषु च ॥
पाण्डुरोगेऽम्लपित्ते च शोषे गुल्मे तथोदरे ।
अतीसारे ज्वरे दाहे श्वयथौ च विधीयते ॥
योनिशुक्रप्रदोषेषु मूत्रेषु प्रदरेषु च ।
पुरीषे ग्रथिते पथ्यं वातपित्तविकारिणाम् ॥
नस्यालेपावगाहेषु वमनास्थापनेषु च ।
विरेचने स्नेहने च पयः सर्व्वत्र युज्यते ॥
यथाक्रमं क्षीरगुणानेकैकस्य पृथक् पृथक् ।
अन्नपानादिकेऽध्याये भूयो वक्ष्याम्यशेषतः ॥ ४७ ॥
अथापरे त्रयो वृक्षाः पृथक् ये फलमूलिभिः ।
स्नुह्यर्काश्मन्तकास्तेषामिदं कर्म्म पृथक् पृथक् ॥
वमनेऽश्मन्तकं विद्यात् स्नुहीक्षीरं विरेचने ।
क्षीरमर्कस्य विज्ञेयं वमने सविरेचने ॥ ४८ ॥
इमांस्त्रीनपरान् वृक्षानाहुर्येषां हितास्त्वचः ।
पूतिकः कृष्णगन्धा च तिल्वकश्च तथा तरुः ॥
विरेचने प्रयोक्तव्यः पूतिकस्तिल्वकस्तथा ।
कृष्णगन्धा परीसर्पे शोथेष्वर्शःसु चोच्यते ॥
दद्रुविद्रधिगण्डेषु कुष्ठेष्वप्यलजीषु च ।
षड् वृक्षान् शोधनानेतानपि विद्याद्विचक्षणः ॥ ४९ ॥
इत्युक्ताः फलमूलिन्यः स्नेहाश्च लवणानि च ।
मूत्रं क्षीराणि वृक्षाश्च षड् ये दृष्टाः पयस्त्वचः ॥ ५० ॥
ओषधीर्नामरूपाभ्यां जानते ह्यजपा वने ।

अविपाश्चैव गोपाश्च ये चान्ये वनवासिनः ॥ ५१ ॥
न नामज्ञानमात्रेण रूपमात्रेण वा पुनः ।
ओषधीनां परांप्राप्तिं कश्चिद्वेदितुमर्हति ॥
योगविन्नामरूपज्ञस्तासां तत्वविदुच्यते ।
किं पुनर्यो विजानीयादोषधीः सर्व्वथा भिषक् ॥ ५२ ॥
योगमासान्तु यो विद्याद्देशकालोपपादितम् ।
पुरुषं पुरुषं वीक्ष्य सविज्ञेयो भिषक्तमः ॥ ५३ ॥
यथा विषं यथा शस्त्रं यथाग्निरशनिर्यथा ।
तथौषधमविज्ञातं विज्ञातममृतं यथा ॥ ५४ ॥
औषधं ह्यनभिज्ञातं नामरूपगुणैस्त्रिभिः ।
विज्ञातमपि दुर्युक्तमनर्थायोपपद्यते ॥
योगादपि विषं तीक्ष्णं उत्तमं भेषजं भवेत् ।
भेषजं वापि दुर्युक्तं तीक्ष्णं सम्पद्यते विषम् ॥ ५५ ॥
तस्मान्न भिषजा युक्तं युक्तिवाह्येन भेषजम् ।
धीमता किञ्चिदादेयं जीवितारोग्यकाङ्क्षिणा ॥
कुर्य्यान्निपतितो मूर्द्ध्नि सशेषं वासवाशनिः ।
सशेषमातुरं कुर्य्यान्नत्वज्ञमतमौषधम् ॥ ५६ ॥
दुःखिताय शयानाय श्रद्दधानाय रोगिणे ।
यो भेषजमविज्ञाय प्राज्ञमानी प्रयच्छति ॥
त्यक्तधर्म्मस्य पापस्य मृत्युभूतस्य दुर्म्मतेः ।
नरो नरकपाती स्यात्तस्य सम्भाषणादपि ॥ ५७ ॥
वरमाशीविषविषं क्वथितं ताम्रमेव वा ।
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः ॥

न तु श्रुतवतां वेशं विभ्रता * शरणागतात् ।
गृहीतमन्नं पानं वा वित्तं वा रोगपीड़ितात् ॥ ५८ ॥
भिषग्बुभुषु † र्म्मतिमानतः स्वगुणसम्पदि ।
परं प्रयत्नमातिष्ठेत् प्राणदः स्याद्यथा नृणाम् ॥ ५९ ॥
तदेव युक्तं भैषज्यं यदारोग्याय कल्पते ।
स चैव भिषजां श्रेष्ठो रोगेभ्यो यः प्रमोचयेत् ॥
सम्यक् प्रयोगं सर्व्वेषां सिद्धिराख्याति कर्म्मणाम् ।
सिद्धिराख्याति सर्व्वैश्च गुणैर्युक्तं भिषक्तमम् ॥ ६० ॥

तत्र श्लोकाः ।

आयुर्व्वेदागमो हेतुरागमस्य प्रवर्त्तनम् ।
सूत्रणाख्यानुज्ञानमायुर्व्वेदस्य निर्णयः ॥
सम्पूर्णं कारणं कार्य्यमायुर्व्वेदप्रयोजनम् ।
हेतवश्चैव दोषाश्च भेषजं संग्रहेण च ॥
रसाः सप्रत्ययद्रव्यास्त्रिविधो द्रव्यसंग्रहः ।
मूलिन्यश्च फलिन्यश्च स्नेहाश्च लवणानि च ॥
मूत्रं क्षीराणि वृक्षाश्च षड़् ये क्षीरत्वगाश्रयाः ।
कर्म्माणि चैषां सर्व्वेषां योगायोगगुणागुणाः ॥
वैद्यापवादो यत्रस्थाः सर्व्वे च भिषजां गुणाः ।
सर्व्वमेतत् समाख्यातं पूर्व्वाध्याये महर्षिणा ॥ ६१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
दीर्घञ्जीवितीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

* विभ्रत इति पाठान्तरम् ।　† बुभूर्षु रिति पाठान्तरम् ।

## द्वितीयोऽध्यायः

अथातोऽपामार्गतण्डुलीयमध्यायं व्याख्यास्याम
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अपामार्गस्य वीजानि पिप्पलीर्मरिचानि च ।
विडङ्गान्यथ शिग्रूणि सर्षपांस्तुम्बुरूणि च ॥
अजाजीं चाजगन्धां च पिलून्येलां हरेणुकाम् ।
पृथ्वीकां सुरसां श्वेतां कुठेरकफणिज्झकौ ॥
शिरीषवीजं लशुनं हरिद्रे लवणद्वयम् ।
ज्योतिष्मतीं नागरं च दद्याच्छीर्षविरेचने ॥
गौरवे शिरसः शूले पीनसेऽर्द्धावभेदके ।
क्रिमिव्याधावपस्मारे घ्राणनाशे प्रमोहके ॥ २ ॥
मदनं मधुकं निम्बं जीमूतं कृतवेधनम् ।
पिप्पलीकुटजेक्ष्वाकूण्येलां धामार्गवाणि च ॥
उपस्थिते श्लेष्मपित्ते व्याधावामाशयाश्रये ।
वमनार्थं प्रयुञ्जीत भिषग्देहमदूषयन् ॥ ३ ॥
त्रिवृतां त्रिफलां दन्तीं नीलिनीं सप्तलां वचाम् ।
कम्पिल्लकं गवाक्षीं च क्षीरिणीमुदकीर्य्यकाम् ॥
पीलून्यारग्वधं द्राक्षां द्रवन्तीं निचुलानि च ।
पक्वाशयगते दोषे विरेकार्थं प्रयोजयेत् ॥ ४ ॥
पाटलिं चाग्निमन्थं च विल्वं श्योणाकमेव च ।

काश्मर्य्यं शालपर्णीञ्च पृश्निपर्णीं निदिग्धिकाम् ॥
बलां श्वदंष्ट्रां वृहतीमेरण्डं सपुनर्नवम् ।
यवान् कुलत्थान् कोलानि गुडूचीं मदनानि च ॥
पलाशं कत्तृणञ्चैव स्नेहांश्च लवणानि च ।
उदावर्त्ते विबन्धेषु युञ्ज्यादास्थापनेषु च ॥
अतएवौषधगणात् सङ्कल्प्यमनुवासनम् ।
मारुतघ्नमिति प्रोक्तः संग्रहः पाञ्चकर्म्मिकः ॥ ५ ॥
तान्युपस्थितदोषाणां स्नेहस्वेदोपपादनैः ।
पञ्चकर्म्माणि कुर्व्वीत मात्राकालौ विचारयन् ॥ ६ ॥
मात्राकालाश्रया युक्तिः सिद्धिर्युक्तौ प्रतिष्ठिता ।
तिष्ठत्युपरि युक्तिज्ञो द्रव्यज्ञानवतां सदा ॥ ७ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्व्विविधौषधाः ।
विविधानां विकाराणां तत्साध्यानां निवृत्तये ॥ ८ ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी चोपसाधिता ॥ ९ ॥
दधित्थबिल्वचाङ्गेरीतक्रदाड़िमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ १० ॥
शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाड़िमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ ११ ॥
पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता ॥
दद्यात् सातिविषां पेयां सामे साम्लां सनागराम् ॥ १२ ॥
श्वदंष्ट्राकण्टकारीभ्यां मूत्रकृच्छ्रे सफाणिताम् ॥ १३ ॥

विड़ङ्गपिप्पलीमूलशिग्रुभिर्म्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्च्चिका॥ १४ ॥
मृद्वीकाशारिवालाजापिप्पलीमधुनागरैः।
पिपासाघ्नी विषघ्नी च सोमराजीविपाचिता॥ १५ ॥
सिद्धा वराहनिर्य्यूहे यवागूर्व्वृंहणी मता।
गवेधुकानां भृष्टानां कर्षणीया समाक्षिका॥ १६ ॥
सर्पिष्मती बहुतिला स्नेहनी लवणान्विता।
कुशामलकनिर्य्यूहश्यामाकानां विरूक्षणी॥ १७ ॥
दशमूलीशृता कासहिक्काश्वासकफापहा।
यमके मदिरासिद्धा पक्वाशयरुजापहा॥ १८ ॥
शाकैर्म्मांसैस्तिलैर्म्माषैः सिद्धा वर्च्चोनिरस्यति।
जम्ब्वाम्रास्थिदधित्थाम्लविल्वैः साङ्ग्राहिकी मता॥ १९ ॥
क्षारचित्रकहिङ्ग्वम्लवेतसैर्भेदिनी मता।
अभयापिप्पलीमूलविश्वैर्व्वातानुलोमनी॥ २० ॥
तक्रसिद्धा यवागूः स्याद् घृतव्यापद्विनाशिनी।
तैलव्यापदि शस्ता स्यात् तक्रपिण्याकसाधिता॥ २१ ॥
गव्यमांसरसैः साम्ला विषमज्वरनाशिनी
कण्ठ्या यवानां यमके पिप्पल्यामलकैः शृता॥ २२ ॥
ताम्रचूड़रसे सिद्धा रेतोमार्गरुजापहा।
समाषविदला वृष्या घृतक्षीरोपसाधिता॥ २३ ॥
उपोदिकादधिभ्यान्तु सिद्धा मदविनाशिनी।
क्षुधं हन्यादपामार्गक्षीरगोधारसैः शृता॥ २४ ॥

तत्र श्लोकाः।

अष्टाविंशतिरित्येता यवाग्वः परिकीर्त्तिताः ।
पञ्चकर्म्माणि चाश्रित्य प्रोक्तो भैषज्यसंग्रहः ॥
पूर्व्वं मूलफलज्ञानहेतोरुक्तं यदौषधम् ।
पञ्चकर्म्माश्रयज्ञानहेतोस्तत् कीर्त्तितं पुनः ॥
स्मृतिमान् हेतुयुक्तिज्ञो जितात्मा प्रतिपत्तिमान् ।
भिषगौषधसंयोगैश्चिकित्सां कर्त्तुमर्हति ॥ २५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अपामार्गतण्डुलीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

अथात आरग्वधीयमध्यायं व्याख्यास्याम
इति ह स्माह भगवानात्रेयः ॥ १ ॥

आरग्वधः सैडगजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्राह्वः सुराह्वः खदिरो धवश्च निम्बो विडङ्गं करवीरकत्वक् ॥
ग्रन्थिश्च भौर्ज्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला काशीशलोध्रार्ज्जुनमुस्तसर्ज्जाः ॥
इत्यर्द्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिमं सदद्रु ।

भगन्दरार्शांस्यपचीं सपामां
हन्युः प्रयुक्तास्त्वचिरान्नराणाम् ॥ २ ॥
कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारु शिग्रु।
ससर्षपं तुम्बुरुधान्यवन्यं
चण्डाञ्च चूर्णानि समानि कुर्य्यात् ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत।
तेनास्य कण्डूः पिड़काः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ३ ॥
कुष्ठामृतासङ्गकटङ्कटेरी-
काशीशकम्पिल्लकमुस्तलोध्रम्।
सौगन्धिकं सर्जरसो विड़ङ्गं
मनःशिलाले करवीरकत्वक् ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम्।
दद्रूः सकण्डूः किटिमानि पामा
विचर्च्चिकाचैव तथैति शान्तिम् ॥ ४ ॥
मनःशिलाले मरिचानि तैल-
मार्कं पयः कुष्ठहरः प्रदेहः।
तुत्थं * विड़ङ्गं मरिचानि कुष्ठं
लोध्रञ्च तद्वत् समनःशिलं स्यात् ॥ ५ ॥

---

* तुल्यमिति पाठान्तरम्।

रसाञ्जनं सप्रपन्नाड़वीजं युक्तः कपित्थस्य रसेन लेपः।
करञ्जवीजैड़गजं सकुष्ठं गोमूत्रपिष्टञ्च परः प्रदेहः॥ ६ ॥
उभे हरिद्रे कुटजस्य वीजं करञ्जवीजं सुमनःप्रवालान्।
त्वचं समध्यां हयमारकस्य लेपं तिलक्षारयुतं विदध्यात्॥ ७ ॥
मनःशिला त्वक् कुटजात् सकुष्ठः सलोमशः सैड़गजः करञ्जः।
ग्रन्थिश्च भौर्ज्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन॥
पलाशनिर्दाहरसेन चापि कर्षोद्धृतान्याढ़कसंमितेन।
दर्व्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठनिसूदनाय॥ ८ ॥
पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च॥ ९ ॥
कोलं कुलत्थाः सुरदारु रास्ना माषातसीतैलफलानि कुष्ठम्।
वचा शताह्वा यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः॥ १० ॥
आनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात्।
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैर्वानिलजित् प्रदेहः॥ ११ ॥
तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात्।
कुष्ठं शताह्वां सवचां यवानां चूर्णं सतैलाम्लमुशन्ति वाते॥ १२ ॥
उभे शताह्वे मधुकं मधूकं बलां प्रियालञ्च कशेरुकञ्च।
घृतं विदारीञ्च सितोपलाञ्च कुर्य्यात् प्रदेहं पवने सरक्ते॥ १३ ॥
रास्नां गुडूचीं मधुकं बले द्वे सजीवकं सर्षभकं पयश्च।
घृतञ्च सिद्धं मधुशेषयुक्तं रक्तानिलार्त्तौ प्रवदेत् प्रदेहः॥ १४ ॥
वाते सरक्ते सघृतप्रदेहो गोधूमचूर्णं छगलीपयश्च।
नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतः प्रदेहः॥ १५ ॥
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च।

शिरोरुजायां सघृतः प्रदेहो लोहैरकापद्मकचोरकैश्च ॥ १६ ॥
रास्ना हरिद्रे नलदं शताह्वे द्वे देवदारूणि सितोपलाञ्च।
जीवन्तिमूलं सघृतं सतैलमालेपनं पार्श्वरुजासु कोष्णम् ॥ १७
शैवालपद्मोत्पलवेत्रतुङ्गं प्रपौण्डरीकाण्यमृणाललोध्रम्।
प्रियङ्गुकालीयकचन्दनानि निर्व्वापणः स्यात् सघृतः प्रदेहः ॥ १८
सिताल्लतावेतसपद्मकानि यष्ट्याह्वमैन्द्री नलिनानि दूर्व्वा।
यवासमूलं कुशकाशयोश्च निर्व्वापणः स्यात् जलमेरका च ॥१९
शैलेयमेलागुरुणी सकुष्ठे चण्डा नतं त्वक् सुरदारु रास्ना।
शीतं निहन्यादचिरात् प्रदेहोविषं शिरीषस्तु ससिन्धुवारः॥२०
शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ २१ ॥

तत्र श्लोकः।

इहात्रिजः सिद्धतमानुवाच द्वात्रिंशतं सिद्धमहर्षिपूज्यः।
चूर्णप्रदेहान् विविधामयघ्नानारग्वधीये जगतो हितार्थम् ॥ २२

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
आरग्वधीयो नाम तृतीयोऽध्यायः। ३।

---

## चतुर्थोऽध्यायः।

अथातः षड्विरेचनशताश्रितीयमध्यायं व्याख्यास्याम
इति ह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु षड् विरेचनशतानि भवन्ति। षड् विरेचना-

श्रयाः । पञ्च कषायशतानि । पञ्च कषाययोनयः । पञ्चविधं कषायकल्पनम् । पञ्चाशन्महाकषाया इति संग्रहः ॥ २ ॥

षड् विरेचनशतानीति यदुक्तं तदिह संग्रहेणोदाहृत्य विस्तरेण कल्पोपनिषद्यनुव्याख्यास्यामः ॥ ३ ॥

त्रयस्त्रिंशद् योगशतं प्रणीतं
फलेष्वेकोनचत्वारिंशज्जीमूतकेषु योगाः ।
पञ्च चत्वारिंशदिक्ष्वाकुषु
धामार्गवः षष्टिधा भवति योगयुक्तः ॥
कुटजस्त्वष्टादशधा योगमेति
कृतवेधनं षष्टिधा भवति योगयुक्तम् ।

श्यामा त्रिवृद् योगशतं प्रणीतं दशापरे चात्र भवन्ति योगाः ॥
चतुरङ्गुलो द्वादशधा योगमेति लोध्रं विधौ षोडशयोगयुक्तम् ।

महावृक्षो भवति विंशतियोगयुक्त-
एकोनचत्वारिंशत् सप्तलाशङ्खिन्योर्योगाः ॥

अष्टाचत्वारिंशद्दन्तीद्रवन्त्योरिति षड् विरेचनशतानि ॥ ४ ॥
षड् विरेचनाश्रया इति क्षीरमूलत्वक्पत्रपुष्पफलानीति ॥ ५ ॥

पञ्चकषाययोनय इति मधुरकषायः अम्लकषायः कटुकषायः तिक्तकषायः कषायकषायश्चेति तन्त्रे संज्ञा ॥ ६ ॥

पञ्चविधं कषायकल्पनमिति तद्यथा स्वरसः कल्कः शृतः शीतः फाण्टः कषाय इति ॥ ७ ॥

यन्त्रप्रपीडनाद् द्रव्याद्रसः स्वरस उच्यते ।
यत् पिण्डं रसपिष्टानां तत् कल्कं परिकीर्त्तितम् ॥
वह्नौ तु क्वथितं द्रव्यं शृतमाहुश्चिकित्सकाः ।

द्रवग्राद्रांपोथितात्तोये तत् पुनर्निशि संस्थितात् ॥
कषायो योऽभिनिर्य्याति स शीतः समुदाहृतः।
क्षिप्तोष्णतोये मृदितं तत् फाण्टं परिकीर्त्तितम् ॥ ८ ॥

तेषां यथापूर्व्वं बलाधिक्यम्। अतः कषायकल्पना व्याध्यातुरबलापेक्षिणी। नत्वेवं खलु सर्व्वाणि सर्व्वत्रोपयोगीनि भवन्ति ॥ ९ ॥

पञ्चाशन्महाकषाया इति यदुक्तं तदनुव्याख्यास्यामः। तद्यथा जीवनीयो वृंहणीयो लेखनीयो भेदनीयः सन्धानीयो दीपनीय इति षट्कः कषायवर्गः। बल्यो वर्ण्यः कण्ठ्यो हृद्य इति चतुष्कः कषायवर्गः। तृप्तिघ्नोऽर्शोघ्नः कुष्ठघ्नः कण्डूघ्नः क्रिमिघ्नो विषघ्न इति षट्कः कषायवर्गः। स्तन्यजननः स्तन्यशोधनः शुक्रजननः शुक्रशोधन इति चतुष्कः कषायवर्गः। स्नेहोपगः स्वेदोपगो वमनोपगो विरेचनोपग आस्थापनोपगोऽनुवासनोपगः शिरोविरेचनोपग इति सप्तकः कषायवर्गः। छर्द्दिनिग्रहणस्तृष्णानिग्रहणो हिक्कानिग्रहण इति त्रिकः कषायवर्गः। पुरीषसंग्रहणीयः पुरीषविरजनीयो मूत्रसंग्रहणीयो मूत्रविरजनीयो मूत्रविरेचनीय इति पञ्चकः कषायवर्गः। कासहरः श्वासहरः शोथहरो ज्वरहरः श्रमहर इति पञ्चकः कषायवर्गः। दाहप्रशमनः शीतप्रशमनः उदर्द्दप्रशमनोऽङ्गमर्द्दप्रशमनः शूलप्रशमन इति पञ्चकः कषायवर्गः। शोणितास्थापनो वेदनास्थापनः संज्ञास्थापनः प्रजास्थापनो वयःस्थापन इति पञ्चकः कषायवर्गः। इति पञ्चाशन्महाकषायाः महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति।

तेषामेकैकस्मिन् महाकषाये दश दशावेयविकान् कषाया-ननुव्याख्यास्यामः । तान्येव पञ्चकषायशतानि भवन्ति । तद्यथा जीवकर्षभकौ मेदामहामेदा काकोलीक्षीरकाकोली मुद्गमाषपर्ण्यौ जीवन्ती मधुकमिति दशेमानि जीवनीयानि भवन्ति (१) । क्षीरिणीराजक्षवकबलाकाकोलीक्षीरकाकोली-वाट्यायनी भद्रौदनी भारद्वाजी पयस्यर्ष्यगन्धा इति दशेमानि बृंहणीयानि भवन्ति ( २ ) । मुस्तकुष्ठहरिद्रादारुहरिद्रावचा-तिविषाकटुरोहिणीचित्रकचिरिविल्वहैमवत्य इति दशेमानि लेखनीयानि भवन्ति ( ३ ) । सुवहार्कोरुवुकाग्निमुखीचित्रा चित्रकचिरिविल्वशङ्खिनी शकुलादनी स्वर्णक्षीरिण्य इति दशे-मानि भेदनीयानि भवन्ति ( ४ ) । मधुकमधुपर्णीपृश्निपर्ण्य-म्बष्ठकी समङ्गा मोचरसधातकीलोध्रप्रियङ्गुकट्फलानीति दशे-मानि सन्धानीयानि भवन्ति (५) । पिप्पलीपिप्पलीमूलचव्य-चित्रकशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिङ्गुनिर्य्यासा इति दशेमानि दीपनीयानि भवन्ति (६) इति षट्कः कषायवर्गः ।

ऐन्द्र्यृषभ्यतिरसर्ष्यप्रोक्तापयस्याश्वगन्धास्थिरारोहिणी-बलातिबला इति दशेमानि बल्यानि भवन्ति ( ७ ) । चन्दन-तुङ्गपद्मकोशीरमधुकमञ्जिष्ठासारिवा पयस्या सितालता इति दशेमानि वर्ण्यानि भवन्ति (८) । सारिवेक्षुमूलमधुक पिप्पली-द्राक्षाविदारीकैटर्य्यहंसपादीबृहती कण्टकारिका इति दशे-मानि कण्ठ्यानि भवन्ति ( ९ ) । आम्राम्रातकनिकुच-करमर्द्दवृक्षाम्लाम्लवेतसकुवलबदरदाड़िममातुलुङ्गानीति दशे-मानि हृद्यानि भवन्ति ( १० ) । इति चतुष्कः कषायवर्गः ॥

नागरचित्रकचव्यविड़ङ्गमूर्व्वागुड़ूचीवचामुस्तपिप्पलीपटोलानीति दशेमानि तृप्तिघ्नानि भवन्ति ( ११ )। कुटजविल्वचित्रक-नागरातिविषाभयाधन्वयासक-दारुहरिद्रा-वचाचव्यानीति दशेमानि अर्शोघ्नानि भवन्ति ( १२ )। खदिराभयामलक-हरिद्रारुष्करसप्तपर्णारग्वधकरवीर-विड़ङ्ग-जातिप्रवाला इति दशेमानि कुष्ठघ्नानि भवन्ति ( १३ )। चन्दननलदकृतमालनक्तमालनिम्बकुटजसर्षपमधुकदारुहरिद्रामुस्तानीति दशेमानि कण्डूघ्नानि भवन्ति ( १४ )। अक्षीवमरीचगण्डीरकेवूकविड़ङ्गनिर्गुण्डी-किणिही श्वदंष्ट्राद्व-षपर्णिकाखुपर्णिका इति दशेमानि क्रिमिघ्नानि भवन्ति ( १५ )। हरिद्रामञ्जिष्ठासुवहासूक्ष्मैलापालिन्दीचन्दनकतकशिरीषसिन्धुवारश्लेष्मातका इति दशेमानि विषघ्नानि भवन्ति ( १६ )।

इति षट्कः कषायवर्गः।

वीरण-शालीषष्टिकेक्षुवालिका, दर्भकुश-काशगुन्द्रेत्कटकत्तृणमूलानीति दशेमानि स्तन्यजननानि भवन्ति ( १७ )। पाठामहौषधसुरदारुमुस्तमूर्व्वा, गुड़ूचीवत्सकफलकिराततिक्तकटुरोहिणीसारिवा इति दशेमानि स्तन्यशोधनानि भवन्ति (१८) जीवकर्षभककाकोलीक्षीरकाकोलीमुद्गपर्णीमाषपर्णीमेदावृद्धरुहाजटिलाकुलीङ्गा इति दशेमानि शुक्रजननानि भवन्ति(१९)। कुष्ठैलवालुककटफलसमुद्रफेनफदम्बनिर्य्यासेक्षुकाण्डेक्षुरकनसुकोशीराणीति दशेमानि शुक्रशोधनानि भवन्ति ( २० )।

इति चतुष्कः कषायवर्गः॥

मृद्वीकामधुकमधुपर्णीमेदाविदारीकाकोलीक्षीरकाकोली

जीवकजीवन्ती-शालपर्ण्य इति दशेमानि स्नेहोपगानि भवन्ति (२१)। शोभाञ्जनकैरण्डार्कवृश्चीरपुनर्नवायवतिलकुलत्थमाषबदराणीति दशेमानि स्वेदोपगानि भवन्ति (२२)। मधुमधुक-कोविदारकर्बुदारनीपविदुल-बिम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्य इति दशेमानि वमनोपगानि भवन्ति (२३)। द्राक्षाकाश्मर्य्यपरूषकाभयामलक-विभीतककुवलबदरकर्कन्धूपीलूनीति दशेमानि विरेचनोपगानि भवन्ति (२४)। त्रिवृद्बिल्वपिप्पलीकुष्ठसर्षपवचावत्सकफलशतपुष्पामधुकमदनफलानीति दशेमान्यास्थापनोपगानि भवन्ति (२५)। रास्नासुरदारुबिल्व-मदनशतपुष्पा-वृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योनाका इति दशेमान्यनुवासनोपगानि भवन्ति (२६)। ज्योतिष्मतीक्षवकमरिचपिप्पलीविडङ्गशिग्रुसर्षपापामार्गतण्डुलश्वेतामहाश्वेता इति दशेमानि शिरोविरेचनोपगानि भवन्ति (२७)। इति सप्तकः कषायवर्गः।

जम्ब्वाम्रपल्लवमातुलुङ्गाम्लबदरदाडिमयवयष्टिकोशीरमृल्लाजा इति दशेमानि छर्द्दिनिग्रहणानि भवन्ति (२८)। नागरधन्वयवासकमुस्तपर्पटकचन्दनकिराततिक्तकगुडूचीह्रीवेरधान्यकपटोलानीति दशेमानि तृष्णानिग्रहणानि भवन्ति (२९)। शटीपुष्करमूलबदरबीजकण्टकारिकाबृहतीवृक्षरुहाभयापिप्पली-दुरालभाकुलीरशृङ्ग्य इति दशेमानि हिक्कानिग्रहणानि भवन्ति (३०)। इति त्रिकः कषायवर्गः।

प्रियङ्ग्वनन्ताम्रास्थिकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मापद्मकेशराणीति दशेमानि पुरीषसंग्रहणीयानि भवन्ति (३१)।

जम्बुशल्लकीत्वक्कच्छुरामधुकशाल्मली-श्रीवेष्टक-भृष्टमृत पयस्योतपलतिलकणा इति दशेमानि पुरीषविरजनीयानि भवन्ति (३२)। जम्ब्वाम्रप्लक्षवटकपीतनोडुम्बराश्वत्थ भल्लातकाश्मन्तकसोमवल्का इति दशेमानि मूत्रसंग्रहणानि भवन्ति ( ३३ )। पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रमधुकप्रियङ्गुधातकीपुष्पाणीति दशेमानि मूत्रविरजनीयानि भवन्ति ( ३४ )। वृक्षादनीश्वदंष्ट्रावसुकवशिरपाषाणभेददर्भकुशकाशगुन्द्रेतक्कटमूलानीति दशेमानि मूत्रविरेचनीयानि भवन्ति ( ३५ )। इति पञ्चकः कषायवर्गः।

द्राक्षाभयामलक-पिप्पलीदुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवातामलक्य इति दशेमानि कासहराणि भवन्ति ( ३६ )। शठीपुष्करमूलाम्लवेतसैलाहिङ्गुगुरुसुरसातामलकीजीवन्तीचण्डा इति दशेमानि श्वासहराणि भवन्ति ( ३७ )। पाटलाग्निमन्थविल्वश्योणाक-काश्मर्यकण्टकारिकावृहतीशालपर्णीपृश्निपर्णीगोक्षुरका इति दशेमानि शोथहराणि भवन्ति (३८)। शारिवाशर्करापाठामञ्जिष्ठा-द्राक्षापीलुपरुषकाभयामलकविभीतकानीति दशेमानि ज्वरहराणि भवन्ति ( ३९ )। द्राक्षाखर्ज्जूरपियालवदरदाड़िमफलगुपरूषकेक्षुयवयष्टिका इति दशेमानि श्रमहराणि भवन्ति ( ४० )। इति पञ्चकः कषायवर्गः।

लाजाचन्दनकाश्मर्य्यफलमधुकशर्करानीलोतपलोशीरशारिवा गुड़ूचीह्रीवेराणीति दशेमानि दाहप्रशमनानि भवन्ति (४१)। तगरागुरु-धान्यक-शृङ्गवेरभूतीकवचा-कण्टकारिकाग्निमन्थ-

श्योनाकपिप्पल्यश्च इति दशेमानि शीतप्रशमनानि भवन्ति (४२)। तिन्दुकपियालबदरखदिरकदरसप्तपर्णाश्वकर्णार्ज्जुनासनारिमेदा इति दशेमानुदर्द्दप्रशमनानि भवन्ति (४३)। विदारिगन्धापृश्निपर्णीबृहतीकण्टकारिकैरण्डकाकोलीचन्दनोशीरैलामधुकानीति दशेमान्यङ्गमर्द्दप्रशमनानि भवन्ति (४४)। पिप्पलीपिप्पलीमूल-चव्यचित्रकशृङ्गवेर-मरिचाजमोदाजगन्धाजाजीगण्डीराणीति दशेमानि शूलप्रशमनानि भवन्ति (४५)। इति पञ्चकः कषायवर्गः।

मधुमधुकरुधिरमोचरसमृत्कपाललोध्रगैरिकप्रियङ्गुशर्करालाजा इति दशेमानि शोणितस्थापनानि भवन्ति (४६)। शालकट्फलकदम्बपद्मकतुङ्ग-मोचरसशिरीषवञ्जुलैलवालुकाशोका इति दशेमानि वेदनास्थापनानि भवन्ति (४७)। हिङ्गुकैटर्य्यारिमेदवचाचोरकवयःस्थागोलोमीजटिलापलङ्कषाशोकरोहिण्यश्च इति दशेमानि संज्ञास्थापनानि भवन्ति (४८)। ऐन्द्रीब्राह्मीशतवीर्य्या-सहस्रवीर्य्यामोघाव्यथाशिवारिष्टावाट्य-पुष्पीविष्वक्सेनकान्ता इति दशेमानि प्रजास्थापनानि भवन्ति (४९) अमृताभयाधात्रीमुक्ताश्वेताजीवन्त्यातिरसामण्डूकपर्णी-स्थिरा-पुनर्नवा इति दशेमानि वयःस्थापनानि भवन्ति (५०)। इति पञ्चकः कषायवर्गः

इति पञ्च कषायशतान्यभिसमस्य पञ्चाशन्महाकषायाः महतां च कषायाणां लक्षणोदाहरणार्थं व्याख्याता भवन्ति। १०।

नहि विस्तरस्य प्रमाणमस्ति नचाप्यतिसंक्षेपोऽल्प-

बुद्धीनां सामर्थ्यायोपकल्पते। तस्मादनतिसंक्षेपेणानतिविस्तरेण चोद्दिष्टाः। एतावन्तो ह्यल्पबुद्धीनां व्यवहाराय बुद्धिमताञ्च स्वालक्षण्यानुमानयुक्तिकुशलानामनुक्तार्थज्ञानायेति । ११ ।

एव वादिन भगवन्तमात्रेय मग्निवेश उवाच । नैतानि भगवन् पञ्चकषायशतानि पूर्य्यन्ते, तानि तानि ह्यङ्गा-ङ्गानि संप्लवन्ते तेषु तेषु महाकषायेष्विति । १२ । तमुवाच भगवानात्रेयः । नैतदेवं बुद्धिमता द्रष्टव्यमग्निवेश । एकोऽपि ह्यनेकां संज्ञां लभते कार्य्यान्तराणि कुर्व्वन । तद्-यथा पुरुषो बहूनां कर्म्मणां करणे समर्थो भवति । स यद्यत् कर्म्म करोति तस्य तस्य कर्म्मणः कर्त्तृकरणकार्य्यसंप्रयुक्तं तत्तद् गौणं नामविशेषं प्राप्नोति । तद्वदौषधद्रव्यमपि द्रष्टव्यम् । यदि चैकमेव किञ्चिद् द्रव्यमासादयामस्तथा-गुणयुक्तं यत् सर्व्वकर्म्मणां करणे समर्थं स्यात् कस्ततोऽन्यादि-च्छेदुपधारयितुमुपदेष्टुं वा शिष्येभ्य इति । १३ ।

तत्र श्लोकाः ।

यतो यावन्ति यैर्द्रव्यैर्विरेचनशतानि षट् ।
उक्तानि संग्रहेणेह तथैवैषां षडाश्रयाः ॥
रसा लवणवर्ज्जाश्च कषाया इति संज्ञिताः ।
तस्मात् पञ्चविधा योनिः कषायाणामुदाहृता ॥
तथा कल्पनमप्येषामुक्तं पञ्चविधं पुनः ।
महतां च कषायाणां पञ्चाशत् परिकीर्त्तिताः ॥
पञ्च चापि कषायाणां शतान्युक्तानि भागशः ।

लक्षणार्थं प्रमाणं हि विस्तरस्य न विद्यते ॥
न चालमतिसंक्षेपः सामर्थ्यायोपकल्पते ।
अल्पबुद्धेरयं तस्मान्नातिसंक्षेपविस्तरः ॥
मन्दानां व्यवहाराय बुधानां बुद्धिवृद्धये ।
पञ्चाशत्कोह्यय वर्गः कषायाणामुदाहृतः ॥
तेषां कर्म्मसु वाह्येषु योगमाभ्यन्तरेषु च ।
संयोगञ्च प्रयोगञ्च यो वेद स भिषग्वरः ॥ १४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
षड्विरेचनशताश्रितीयो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

अथातो मात्राशितीयमध्यायं व्याख्यास्यामः
इति ह स्माह भगवानात्रेयः ॥ १ ॥

मात्राशी स्यात । आहारमात्रा पुनरग्निबलापेक्षिणी । यावद्ध्यस्याशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यम्भवति ॥ २ ॥

तत्र शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रापेक्षीणि भवन्ति । तथा पिष्टेक्षु-क्षीरविकृति-माषानूपौदकपिशितादीन्याहार-द्रव्याणि प्रकृतिगुरूण्यपि मात्रामेवापेक्षन्ते । न चैवमुक्ते द्रव्ये गुरुलाघवमकारणं मन्येत । लघूनि हि द्रव्याणि वाय्वग्निगुणबहु-

लानि भवन्ति। पृथिवीसोमगुणबहुलानीतराणि। तस्मात् स्वगुणादपि लघून्यग्निसन्धुक्षणस्वभावान्यल्पदोषाणि चोच्यन्ते अपि सौहित्योपयुक्तानि। गुरूणि पुनर्नाग्निसन्धुक्षणस्वभावान्यसामान्यादतश्चातिमात्रं दोषवन्ति सौहित्योपयुक्तानि अन्यत्र व्यायामाग्निबलात्॥ ३॥

सैषा भवत्यग्निबलापेक्षिणी मात्रा नच नापेक्षते द्रव्यम्। द्रव्यापेक्षया च त्रिभागसौहित्यमर्द्धसौहित्यं वा गुरूणामुपदिश्यते। लघूनामपि च नातिसौहित्यमग्नेर्युक्त्यर्थम्। मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपयोक्तारमवश्यमिति॥ ४॥

भवन्ति चात्र।

गुरु पिष्टमयं तस्मात्तण्डुलान् पृथुकानपि।
न जातु भुक्तवान् खादेन्मात्रां खादेद् बुभुक्षितः॥
वल्लूरं शुष्कशाकानि शालूकानि विसानिच।
नाभ्यसेद गौरवान्मांसं कृशं नैवोपयोजयेत्॥
कूर्च्चिकांश्च किलाटांश्च शौकरं गव्यमाहिषम्।
मत्स्यान् दधि च माषांश्च यवकांश्च न शीलयेत्॥ ५॥
षष्टिकान् शालिमुद्गांश्च सैन्धवामलके यवान्।
आन्तरीक्षं पयः सर्पिर्जाङ्गलं मधु चाभ्यसेत्॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत्॥ ६॥
अत ऊर्द्ध्वं शरीरस्य कार्य्यमभ्यञ्जनादिकम्।
स्वस्थवृत्तमभिप्रेत्य गुणतः संप्रवक्ष्यते॥

सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत्।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थे रसाञ्जनम्॥ ७॥
चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मतो भयम्।
दिवा तन्न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्॥
विरेकदुर्ब्बला दृष्टिरादित्यं प्राप्य सीदति।
तस्मात् स्राव्यं निशायान्तु ध्रुवमञ्जनमिष्यते।
ततः श्लेष्महरं कर्म्म हितं दृष्टेः प्रसादनम्॥ ८॥
यथा हि कनकादीनां मलिनां विविधात्मनाम्।
धौतानां निर्म्मला शुद्धिस्तैलचेलकचादिभिः॥
एवं नेत्रेषु मर्त्त्यानामञ्जनाश्च्योतनादिभिः॥
दृष्टिर्निराकुला भाति निर्म्मले नभसीन्दुवत्॥ ९॥
हरेणुकां प्रियङ्गुञ्च पृथ्वीकां केशरं नखम्।
ह्रीवेरं चन्दनं पत्रं त्वगेलोशीरपद्मकम्॥
ध्यामकं मधुकं मांसी गुग्गुल्वगुरु शर्करम्।
न्यग्रोधोडुम्बराश्वत्थप्लक्षलोध्रत्वचः शुभाः॥
वन्यं सर्ज्जरसं मुस्तं शैलेयं कमलोत्पले।
श्रीवेष्टकं शल्लकीञ्च शुकबर्हमथापि च॥
पिष्ट्वा लिम्पेच्छरेषीकां तां वर्त्तिं यवसन्निभाम्।
अङ्गुष्ठसंमितां कुर्य्यादष्टाङ्गुलसमां भिषक्॥
शुष्कां विगर्भां तां वर्त्तिं धूमनेत्रार्पितां नरः।
स्नेहाक्तामग्निसंप्लुष्टां पिबेत् प्रायोगिकीं सुखाम्॥ १०॥
वसाघृतमधूच्छिष्टैर्युक्तियुक्तैर्वरौषधैः।
वर्त्तिं मधुरकैः कृत्वा स्नैहिकीं धूममाचरेत्॥ ११॥

श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ।
गन्धाश्चागुरुपत्राद्या धूमो मूर्द्धविरेचनम् ॥ १२ ॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥
दन्तदौर्ब्बल्यमास्रावः स्रोतोघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्युपजिह्विका ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनन्तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥
न च वातकफात्मानो बलिनोऽप्यूर्द्ध्वजत्रुजाः ।
धूमवक्त्रकपानस्य व्याधयः स्युः शिरोगताः ॥ १३ ॥
प्रयोगपाने तस्याष्टौ कालाः सम्परिकीर्त्तिताः ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान् विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ॥
तथा वातकफात्मानो न भवन्त्यूर्द्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥
परं द्विकालपायी स्यादह्नः कालेषु बुद्धिमान् ।
प्रयोगे स्नैहिके त्वेकं वैरेच्य त्रिश्चतुः पिबेत् ॥ १४ ॥
हृत्कण्ठेन्द्रियसंशुद्धिर्लघुत्वं शिरसः शमः ।

यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ॥ १५ ॥
वाधिर्य्यमान्ध्यमूकत्वं रक्तपित्तं शिरोभ्रमम् ।
अकाले चातिपीतस्य धूमः कुर्य्यादुपद्रवान् ॥
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्पणम् ।
स्नैहिकं धूमजे दोषे वायुः पित्तानुगो यदि ।
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम् ॥ १६ ॥
परन्त्वतः प्रवक्ष्यामि धूमो येषां विगर्हितः ।
न विरिक्तः पिवेद्धूमं न कृते वस्तिकर्म्मणि ।
न रक्ती न विषेणार्त्तो न शोची न च गर्भिणी ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे ।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥
न मद्यदुग्धे पीत्वा च न स्नेहं न च माक्षिकम् ।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥
न तालुशोषे तिमिरे शिरस्यभिहते न च ।
न शङ्खके न रोहिण्यां न मेहे न मदात्यये ॥
एषु धूममकालेषु मोहात् पिवति योनरः ।
रोगास्तस्य प्रवर्द्धन्ते दारुणा धूमविभ्रमात् ॥ १७ ॥
धूमयोग्यः पिवेद्दोषे शिरोघ्राणाक्षिसंश्रये ।
घ्राणेनास्येन कण्ठस्थे मुखेन घ्राणगो वमेत् ॥
आस्येन धूमकवलान् पिवन् घ्राणेन नोद्वमेत् ।
प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी ॥
ऋज्वङ्गचक्षुस्तच्चेताः सूपविष्टस्त्रिपर्य्ययम् ।
पिवेच्छिद्रं पिधायैकं नासया धूममात्मवान् ॥ १८ ॥

चतुर्व्विंशतिकं नेत्रं स्वाङ्गुलीभिर्व्विरेचने ।
द्वात्रिंशदङ्गुलं स्नेहे प्रयोगेऽध्यर्द्धमिष्यते ॥
ऋजु त्रिकोषाफलितं कोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥
दूराद्विनिर्गतः पर्व्वच्छिन्नो नाड़ीतनूकृतः ।
नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः ॥ १९ ॥
यदाचोरश्च कण्ठश्च शिरश्च लघुतां व्रजेत् ।
कफश्च तनुतां प्राप्तः सुपीतं धूममादिशेत् ॥ २० ॥
अविशुद्धः स्वरो यस्य कण्ठश्च सकफो भवेत् ।
स्तिमितो मस्तकश्चैवमपीतं धूममादिशेत् ॥ २१ ॥
तालु मूर्द्धा च कण्ठश्च शुष्यते परितप्यते ।
तृष्यते मुह्यते जन्तू रक्तञ्च स्रवतेऽधिकम् ॥
शिरश्च भ्रमतेऽत्यर्थं मूर्च्छा चास्योपजायते ।
इन्द्रियाण्युपतप्यन्ते धूमेऽत्यर्थं निषेविते ॥ २२ ॥
वर्षेवर्षेऽणुतैलञ्च कालेषु त्रिषु नाचरेत् ।
प्रावृट्शरद्वसन्तेषु गतमेघे नभस्तले ॥
नस्यकर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुप्यन्ते वर्द्धन्ते च विशेषतः ॥
मन्यास्तम्भः शिरःशूलमर्द्दितं हनुसंग्रहः ।
पीनसार्द्धावभेदौ च शिरःकम्पश्च शाम्यति ॥
सिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ।

नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान्।
सर्व्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥
नचास्य रोगाः सहसा प्रभवन्त्यूर्द्ध्वजत्रुजाः।
जीर्य्यतश्चोत्तमाङ्गे च जरा नं लभते बलम् ॥ २३ ॥
चन्दनागुरुणी पत्रं दार्व्वीत्वक् मधुकं बलाम्।
प्रपौण्डरीकं सूक्ष्मैलां विड़ङ्गं विल्वमुत्पलम् ॥
ह्रीवेरमभयं वन्यं त्वङ्मुस्तं सारिवां स्थिराम्।
सुराह्वं पृश्निपर्णीञ्च जीवन्तीञ्च शतावरीम् ॥
हरेणुं बृहतीं व्याघ्रीं सुरभीं पद्मकेशरम्।
विपाचयेच्छतगुणे माहेन्द्रे विमलेऽम्भसि ॥
तैलाद्दशगुणं शेषं कषायमवतारयेत्।
तेन तैलं कषायेन दशकृत्वो विपाचयेत् ॥
अथास्य दशमे पाके समांशं छागलं पयः।
दद्यादेषोऽणुतैलस्य नावनीयस्य संविधिः ॥
तस्य मात्रां प्रयुञ्जीत तैलस्यार्द्धपलोन्मिताम्।
स्निग्धस्विन्नोत्तमाङ्गस्य पिचुना नावनैस्त्रिभिः ॥
त्र्यहात् त्र्यहाच्च सप्ताहमेतत् कर्म्म समाचरेत्।
निवातोष्णसमाचारो हिताशी नियतेन्द्रियः ॥
तैलमेतत् त्रिदोषघ्नमिन्द्रियाणां बलप्रदम्।
प्रयुञ्जानो यथाकालं यथोक्तानश्नुते गुणान् ॥ २४ ॥
आपोथितग्रं द्वौ कालौ कषायं कटुतिक्तकम्।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥

निहन्ति गन्धवैरस्यं जिह्वादन्तास्यजं मलम् ।
निष्कृष्य रुचिमाधत्ते सद्यो दन्तविशोधनम् ॥
करञ्जकरवीरार्कमालतीककुभासनाः ।
शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः ॥ २५ ॥
सुवर्णरूप्यताम्राणि त्रपुरीतिमयानि च ।
जिह्वानिर्लेखनानि स्युरतीक्ष्णान्यनृजूनि च ॥
जिह्वामूलगतं यच्च मलमुच्छ्वासरोधि च ।
सौगन्ध्यं भजते तेन तस्माज्जिह्वां विनिर्लिखेत् ॥ २६ ॥
धार्य्याण्यास्येन वैशद्यरुचिसौगन्ध्यमिच्छता ।
जातीकटुकपूगानां लवङ्गस्य फलानि च ॥
कक्कोलकफलं पत्रं ताम्बूलस्य शुभन्तथा ।
तथा कर्पूरनिर्य्यासः सूक्ष्मैलायाः फलानि च ॥ २७ ॥
हन्वोर्बलं स्वरबलं वदनोपचयः परः ।
स्यात् परञ्च रसज्ञानमन्ने च रुचिरुत्तमा ॥
नचास्य कण्ठशोषः स्यान्नौष्ठयोः स्फुटनाद्भयम् ।
नच दन्ताः क्षयं यान्ति दृढ़मूला भवन्ति च ॥
न शूल्यन्ते न चाम्लेन हृष्यन्ते भक्षयन्तिच ।
खरानपि परान् भक्ष्यान् तैलगण्डूषधारणात् ॥ २८ ॥
नित्य स्नेहार्द्रशिरसः शिरःशूलं न जायते ।
न खालित्यं न पालित्यं न केशाः प्रपतन्ति च ॥
बलं शिरःकपालानां विशेषेणाभिवर्द्धते ।
दृढ़मूलाश्च दीर्घाश्च कृष्णाः केशा भवन्ति च ॥
इन्द्रियाणि प्रसीदन्ति सुत्वग् भवति चाननम् ।

निद्रालाभः सुखञ्च स्यान्मूर्द्ध्नि तैलनिषेवणात् ॥ २९ ॥
न कर्णरोगा वातोत्था न मन्याहनुसंग्रहः ।
नोच्चैःश्रुति नैवाधिर्य्यं स्यान्नित्यं कर्णतर्पणात् ॥ ३० ॥
स्नेहाभ्यङ्गाद् यथा कुम्भश्चर्म्म स्नेहविमर्द्दनात् ।
भवत्युपाङ्गादक्षश्च दृढ़ः क्लेशसहो यथा ॥
तथाशरीरमभ्यङ्गाद्दृढ़ं सुत्वक् प्रजायते ।
प्रशान्तमारुताबाधं क्लेशव्यायामसंसहम् ॥
स्पर्शने चाधिको वायुः स्पर्शनञ्च त्वगाश्रितम् ।
त्वच्यश्च परमोऽभ्यङ्गस्तस्मात्तं शीलयेन्नरः ॥
नचाभिघाताभिहतं गात्रमभ्यङ्गसेविनः ।
विकारं भजतेऽत्यर्थं बलकर्म्मणि वा क्वचित् ॥
सुस्पर्शोपचिताङ्गश्च बलवान् प्रियदर्शनः ।
भवत्यभ्यङ्गनित्यत्वान्नरोऽल्पजर एव च ॥ ३१ ॥
खरत्वं शुष्कतां रौक्ष्यं श्रमः सुप्तिश्च पादयोः ।
सद्य एवोपशाम्यन्ति पादाभ्यङ्गनिषेवनात् ॥
जायते सौकुमार्य्यञ्च बलं स्थैर्य्यञ्च पादयोः ।
दृष्टिः प्रसादं लभते मारुतश्चोपशाम्यति ॥
न च स्याद् गृध्रसीवाताः पादयोः स्फुटनं न च ।
न सिरास्नायुसङ्कोचः पादाभ्यङ्गेन पादयोः ॥ ३२ ॥
दौर्गन्ध्यं गौरवं तन्द्रां कण्डूमलमरोचकम् ।
स्वेदं वीभत्सतां हन्ति शरीरपरिमार्ज्जनम् ॥ ३३ ॥
पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम् ।
शरीरबलसन्धानं स्नानमोजस्करं परम् ॥ ३४ ॥

काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम्।
श्रीमत्पारिषदं शस्तं निर्म्मलाम्बरधारणम् ॥ ३५ ॥
वृष्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम्।
सौमनस्यमलक्ष्मीघ्नं गन्धमाल्यनिषेवनम् ॥ ३६ ॥
धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम्।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥ ३७ ॥
मेध्यम्पवित्रमायुष्यमलक्ष्मीकलिनाशनम्।
पादयोर्मलमार्गाणां शौचाधानमभीक्ष्णशः ॥ ३८ ॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपविराजनम्।
केशश्मश्रुनखादीनां कल्पनं संप्रसाधनम् ॥ ३९ ॥
चक्षुष्यं स्पर्शनहितं पादयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं वृष्यं पादत्रधारणम् ॥ ४० ॥
ईते विंवमनं बल्यं गुप्तावरणशङ्करम्।
घर्म्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते ॥ ४१ ॥
स्खलतः सम्प्रतिष्ठानं शत्रूणाञ्च निसूदनम्।
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ ४२ ॥
नगरी नगरस्येव रथस्येव रथी सदा।
स्वशरीरस्य मेधावी कृतेष्ववहितो भवेत् ॥ ४३ ॥

भवति चात्र।

वृत्त्युपायान्निषेवेत ये स्युर्धर्म्माविरोधिनः।
शममध्ययनञ्चैव सुखमेवं समश्नुते ॥ ४४ ॥

तत्र श्लोकाः।

मात्रा द्रव्याणि मात्राञ्च संश्रित्य गुरुलाघवम्।

द्रव्याणां गर्हितोऽभ्यासो येषां येषाञ्च शस्यते ॥
अञ्जनं धूमवर्त्तिश्च त्रिविधा वर्त्तिकल्पना ।
धूमपानगुणाः कालाः पानमानञ्च यस्य यत ॥
व्यापत्तिचिह्नं भैषज्यं धूमो येषां विगर्हितः ।
पेयो यथा यन्मयञ्च नेत्रं यस्य च यद्विधम् ॥
नस्यकर्म्मगुणा नस्तःकार्यं यच्च यथा यथा ।
भक्षयेद्दन्तपवनं यथा यद्यद् गुणञ्च यत् ॥
यदर्थं यानि चासीन धार्य्याणि कवडग्रहे ।
तैलस्य ये गुणा दृष्टाः शिरस्तैलगुणाश्च ये ॥
कर्णतैले तथाभ्यङ्गे पादाभ्यङ्गे च मार्ज्जने ।
स्नाने वाससि शुद्धे च सौगन्ध्ये रत्नधारणे ॥
शौचे संहरणे लोम्नां पादत्रच्छत्रधारणे ।
गुणा मात्राशितीयेऽस्मिन् यथोक्ता दण्डधारणे ॥ ४५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
मात्राशितीयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातस्तस्याशितीयमध्यायं व्याख्यास्यामः
इति ह स्माह भगवानात्रेयः ॥ १ ॥
तस्याशिताद्यादाहाराद्बलं वर्णश्च वर्द्धते ।
तस्यर्त्तुसात्म्यं विदितं चेष्टाहारव्यपाश्रयम् ॥ २ ॥

इह खलु सम्वत्सरं षड़ङ्गमृतुविभागेन विद्यात्। तदादित्यस्योदगयनमादानञ्च त्रीनृतून् शिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्। वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गञ्च॥ ३

विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्ति इतरे पुनरादाने। सोमश्चाव्याहतबलः शिशिराभिर्भाभिरापूरयन् जगदाप्याययति शश्वदतो विसर्गः सौम्यः॥ ४॥

आदानं पुनराग्नेयं तावेतावर्कवायू सोमश्च कालस्वभावमार्गपरिगृहीताः कालर्त्तुरसदोषदेहबलनिर्वृत्तिप्रत्ययभूताः समुपदिश्यन्ते॥ ५॥

तत्र रविर्भाभिराददानो जगतः स्नेहं वायवस्तीव्ररूक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेषु यथाक्रमं रौक्ष्यमुत्पादयन्तो रूक्षान् रसान् तिक्तकषायकटुकांश्चाभिवर्द्धयन्तो नृणां दौर्ब्बल्यमावहन्ति॥ ६॥

वर्षाशरद्धेमन्तेषु तु दक्षिणाभिमुखेऽर्के कालमार्गमेघवातवर्षाभिहतप्रतापे शशिनि चाव्याहतबले महेन्द्रसलिलप्रशान्तसन्तापे जगत्यरूक्षा रसाः प्रवर्द्धन्तेऽम्ललवणमधुरा यथाक्रमं तत्र बलमुपचीयते नृणामिति॥ ७॥

भवति चात्र।

आदावन्ते च दौर्ब्बल्यं विसर्गादानयोर्नृणाम्।
मध्ये मध्यबलन्त्वन्ते श्रेष्ठमग्रे च निर्द्दिशेत्॥ ८॥
शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली।
पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः॥
स यदा नेन्धनं युक्तं लभते देहजं तदा।

रसं हिनस्त्यतो वायुः शीतः शीते प्रकुप्यति ॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान् ।
औदकानूपमांसानां मेध्यानामुपयोजयेत् ॥
बिलेशयानां मांसानि प्रसहानां भृतानि च ।
भक्षयेन्मदिरां सीधुं मधु चानुपिवेन्नरः ॥
गोरसानिक्षुविकृतीर्वसां तैलं नवोदनम् ॥ ६ ॥
हेमन्तेऽभ्यसतस्तोयमुष्णञ्चायुर्न हीयते ।
अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जेन्ताकमातपम् ॥
भजेद् भूमिगृहञ्चोष्णमुष्णं गर्भगृहन्तथा ।
शीतेषु संवृतं सेव्यं यानं शयनमासनम् ॥
प्रावाराजिनकौषेयप्रवेणीकुथकास्तृतम् ।
गुरूष्णवासा दिग्धाङ्गो गुरुणागुरुणा सदा ॥
शयने प्रमदां पीनां विशालोपचितस्तनीम् ।
आलिङ्ग्यागुरुदिग्धाङ्गीं सुप्यात् समदमन्मथः ॥
प्रकामञ्च निषेवेत मैथुनं शिशिरागमे ।
वर्ज्जयेदन्नपानानि लघूनि वातलानि च ।
प्रवातं प्रमिताहारमुदमन्थं हिमागमे ॥ १० ॥
हेमन्तशिशिरे तुल्ये शिशिरेऽल्पविशेषणम् ।
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ॥
तस्माद्धैमन्तिकः सर्व्वः शिशिरे विधिरिष्यते ।
निवातमुष्णन्त्वधिकं शिशिरे गृहमाश्रयेत् ॥
कटुतिक्तकषायाणि वातलानि लघूनि च ।
वर्ज्जयेदन्नपानानि शिशिरे शीतलानि च ॥ ११ ॥

हेमन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून्॥
तस्माद्वसन्ते कर्म्माणि वमनादीनि कारयेत।
गुर्व्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत्॥
व्यायामोद्वर्त्तनं धूमं कवड़ग्रहमञ्जनम्।
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे॥
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम्॥
भक्षयेन्निगदं सीधुं पिवेन्माध्वीकमेव वा।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम्॥ १२॥
मयूखैर्जगतः सारं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम्॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम्।
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्ज्जयेत्॥
दिवा शीतगृहे निद्रां निशि चन्द्रांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्म्यमस्तके॥
व्यजनैः पाणिसंस्पर्शैश्चन्दनोदकशीतलैः।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः॥
काननानि च शीतानि जलानि कुसुमानि च।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः॥ १३॥
आदानदुर्ब्बले देहे पक्ता भवति दुर्ब्बलः।

स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥
भूवास्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥
तस्मात् साधारणः सर्व्वो विधिर्वर्षासु चेष्यते ।
उदमन्थं दिवास्वप्नमवश्यायं नदीजलम् ॥
व्यायाममातपञ्चैव व्यवायञ्चात्र वर्ज्जयेत् ।
पानभोजनसंस्कारान् प्रायः क्षौद्रान्वितान् भजेत् ॥
व्यक्ताम्ललवणस्नेहं वातवर्षाकुलेऽहनि ।
विशेषशीते भोक्तव्यं वर्षास्वनिलशान्तये ॥
अग्निसंरक्षणवता यवगोधूमशालयः ।
पुराणा जाङ्गलैर्मांसै र्भोज्या यूषैश्च संस्कृतैः ॥
पिवेत् क्षौद्रान्वितञ्चाल्पं माध्वीकारिष्टमम्बु वा ।
माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा ॥
प्रघर्षोद्वर्त्तनस्नानगन्धमाल्यपरो भवेत् ।
लघुशुद्धाम्बरः स्थानं भजेदक्लेदि वार्षिकम् ॥ १४ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥
तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥
लावान् कपिञ्जलानेणानुरभ्रान् शरभान् शशान् ।
शालीन् सयवगोधूमान् सेव्यानाहुर्घनात्यये ॥
तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम् ।
धाराधरात्यये कार्य्यमातपस्य च वर्ज्जनम् ॥

श्लैष्मिकान् स्वेदयेत् पूर्व्वैर्वातिकान् समुपाचरेत् ॥ ९ ॥

द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि।
भूगृहेषुच जेन्ताकेषूष्णगर्भगृहेषुच।
विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम् ॥ १० ॥

ग्राम्यानूपौदकं मांसं पयो वस्तशिरस्तथा।
वराहमध्यपित्तासृक्स्नेहवत्तिलतण्डुलाः ॥
इत्येतानि समुत्क्वाथ्य नाड़ीस्वेदं प्रयोजयेत्।
देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः ॥ ११ ॥

वारुणामृतकैरण्डशिग्रुमूलकसर्षपैः।
वासावंशकरञ्जार्कपत्रैरश्मान्तकस्य च ॥
शोभाञ्जनकशैरीयमालतीसुरसार्ज्जकैः।
पत्रैरुत्क्वाथ्य सलिलं नाड़ीस्वेदं प्रयोजयेत् ॥
भूतीकपञ्चमूलाभ्यां शैरीयैर्दधिमस्तुना।
मूत्रैरम्लैश्च सस्नेहैर्नाड़ीस्वेदं प्रयोजयेत् ॥ १२ ॥

एतएव च निर्यूहाः प्रयोज्या जलकोष्ठके।
स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत् ॥ १३ ॥

गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः।
सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते ॥
गन्धैः सुरायाः किट्टेन जीवन्त्या शतपुष्पया।
उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् ॥
चर्म्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः।
उष्णवीर्य्यैरलाभेतु कौशेयाविकशाटकैः ॥
रात्रौ बद्धं दिवा मुञ्चेत् मुञ्चेद्रात्रौ दिवाकृतम्।

विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले ॥ १४ ॥
सङ्करः प्रस्तरो नाड़ी परिषेकोऽवगाहनम्।
जेन्ताकोऽश्मघनः कर्षूः कुटी भूःकुम्भिकैव च।
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश।
तान् यथावत् प्रवक्ष्यामि सर्व्वानेवानुपूर्व्वशः ॥ १५ ॥

तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् ॥ १६ ॥

शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुवुकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्व्वगात्रस्य शयानस्योपरिस्वेदनं प्रस्तरस्वेद इति विद्यात् ॥ १७ ॥

स्वेदद्रव्याणां पुनर्मूलफलपत्रशुङ्गादीनां मृगशकुनिपिशितशिरस्पदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वास्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्व्वतो वातहरपत्रसम्वृतच्छिद्रया द्विस्त्रिर्वा विनमितया वातहरसिद्धस्नेहाभ्यक्तगात्रो वास्पमुपहरेत्। वास्पो ह्यनूर्द्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाड़ीस्वेदः ॥ १८ ॥

वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वर्षुनिकाः प्रनाड़ीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः ॥ १९ ॥

वातहरोत्क्राथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः ॥ २० ॥

अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत। तत्र पूर्व्वस्यां दिशुत्तरस्याम्वा गुणवति प्रशस्ते भूमिभागे कृष्णमृत्तिके सुवर्णमृत्तिके वा परीवापपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सूपतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वा अरत्नीः सूपक्रम्योदकात् प्राङ्मुखमुदङ्मुखम्वाभिमुखतीर्थं कूटागारं कारयेत्। उत्सेधविस्तारतः परमरत्नीः षोड़श समन्तात् सुवृत्तं मृतकर्म्मसम्पन्नमनेकवातायनम्। अस्य कूटागारस्यान्तः समन्ततो भित्तिमरत्नीविस्तारोत्सेधां पिण्डिकां कारयेदाकपाटात्। मध्ये चास्य कूटागारस्य चतुष्किष्कुमात्रं पुरुषप्रमाणं मृन्मयं कन्दुसंस्थानं बहुसूक्ष्मच्छिद्रमङ्गारकोष्ठकस्तम्भं सपिधानकं कारयेत्। तच्च खादिराणामाश्वकर्णादीनाम्वा काष्ठानां पूरयित्वा प्रदीपयेत्। स यदा जानीयात् साधुदग्धानि काष्ठानि गतधूमानि, अवतप्तञ्च केवलमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति तत्रैनं पुरुषं वातहराभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत्, प्रवेशयंश्चैनमनुशिष्यात्, सौम्य! प्रविश कल्याणायारोग्याय चेति। प्रविश्य चैनां पिण्डिकामधिरुह्य पार्श्वापपार्श्वाभ्यां यथासुखं शयीथाः, न च त्वया स्वेदमूर्च्छापरीतेनापि सता पिण्डिकैषा विमोक्तव्या आप्राणोच्छ्वासात्। भ्रश्यमानो ह्यतः पिण्डिकावकाशात् द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यः प्राणान् जह्याः, तस्मात् पिण्डिकामेनां न कथञ्चन मुञ्चेथाः। त्वं यदा जानीयाः, विगताभि-

ष्यन्दमात्मानं सम्यक् प्रसृतस्वेदपिच्छं सर्व्वस्रोतोविमुक्तं लघूभूतमपगतविबद्धस्तम्भसुप्तिवेदनागौरवमिति ततस्तां पिण्डिकामनुसरन् द्वारं प्रपद्येथाः। निष्क्रम्य च न सहसा चक्षुषोः परिपालनार्थं शीतोदकमुपस्पृशेथाः। अपगतसन्तापक्लमस्तु मुहूर्त्तात् सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नीयाः। इति जेन्ताकस्वेदः॥ २१॥

शयानस्य प्रमाणेन घनामश्ममयीं शिलाम्।
तापयित्वा मारुतघ्नैर्दारुभिः सम्प्रदीपितैः॥
व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा।
तां शिलामथ कुर्व्वीत कौषेयाविकसंस्तराम्॥
तस्यां स्वभ्यक्तसर्व्वाङ्गः शयानः स्विद्यते सुखम्।
रौरवाजिनकौषेयप्रावाराद्यैः सुखं वृतः॥
इत्युक्तोऽश्मघनस्वेदः कर्षूस्वेदः प्रवक्ष्यते॥ २२॥
खानयेच्छयनस्याधः कर्षूं स्थानविभागवित्।
दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत्ततः॥
तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम्॥ २३॥
अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम्।
घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः सम्प्रलेपयेत्॥
कुटीमध्ये भिषक् शय्यां स्वास्तीर्णाञ्चोपकल्पयेत्।
प्रावाराजिनकौषेयकुथ्यकम्बलगोलकैः॥
स हसन्तिकाभिरङ्गारपूर्णाभिस्ताञ्च सर्व्वशः।
परिवार्य्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम्॥ २४॥
य एवाश्मघनस्वेदविधिर्भूमौ स एव तु।

प्रशस्तायां निवातायां समायामुपदिश्यते ॥ २५ ॥
कुम्भीं वातहरक्काथपूर्णां भूमौ निखातयेत् ।
अर्द्धभागं त्रिभागम्वा शयनं तत्र चोपरि ॥
स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् ।
अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुड़ान् ॥
पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ।
सुसम्वृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः ॥ २६ ॥
कूपं शयनविस्तारं द्विगुणञ्चापि वेधतः ।
देशे निवाते शस्ते च कुर्य्यादन्तः सुमार्जितम् ॥
हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते ।
स्ववच्छन्नः सुसंस्तीर्णोऽभ्यक्तः स्विद्यति ना सुखम् ॥ २७ ॥
धीतीकांस्तु करीषाणां यथोक्तानां प्रदीपयेत् ।
शयनान्तः प्रमाणेन शय्यामुपरि तत्र च ॥
सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् ।
स्ववच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् ॥
होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणा ।
इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः ॥ २८ ॥
व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा ।
बहुपानं भयक्रोधावुपनाहाह वातपाः ॥
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ।
इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च ॥ २९ ॥
एकाङ्गसर्व्वाङ्गगतः स्निग्धो रूक्षस्तथैव च ।
इत्येतत् त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितः ॥

स्निग्धः स्वेद्यस्तमक्रांत्यः स्विन्नः पथ्याशनो भवेत्।
तदहः स्विन्नगात्रस्तु व्यायामं वर्ज्जयेन्नरः ॥ ३० ॥

तत्र श्लोकाः।

स्वेदो यथा कार्य्यकरो हितो येभ्यश्च यद्विधः।
यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा ॥
स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम्।
अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना ॥
त्रयोदशविधः स्वेदो विना दशविधोऽग्निना।
संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः ॥
स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा।
शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्व्वसुः ॥ ३१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
स्वेदाध्यायो नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः।

अथात उपकल्पनीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

इह खलु राजानं राजमात्रमन्यं वा विपुलद्रव्यं सम्भृत-सम्भारं वमनं विरेचनं पाययितुकामेन भिषजा प्रागेवौषध-पानात् सम्भारा उपकल्पनीया भवन्ति। सम्यक् चैव हि गच्छत्यौषधे प्रतिभोगार्थाः व्यापन्ने चौषधे व्यापदः परिसंख्याय

प्रतीकारार्थाः। न हि सन्निकृष्टे काले प्रादुर्भूतायामापदि सत्यामपि क्रयाक्रये सुकरमाशु सम्भरणमौषधानां यथावदितीएवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच ॥ २ ॥

ननु भगवन्नादावेव ज्ञानवता तथा प्रतिविधातव्यम् यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन। सम्यक्प्रयोगनिमित्ता हि सर्व्वकर्म्मणां सिद्धिरिष्टा व्यापच्चासम्यक् प्रयोगनिमित्ता। अथ सम्यगसम्यक् च समारब्धं कर्म्म सिध्यति व्यापद्यते वा नियमेन तुल्यं भवन्ति ज्ञानमज्ञानेनेति ॥ ३ ॥

तमुवाच भगवानात्रेयः। शक्यं तथा प्रतिविधातुमस्माभिरस्मद्विधैर्वाप्यग्निवेश यथा प्रतिविहिते सिध्येदेवौषधमेकान्तेन। तच्च प्रयोगसौष्ठवमुपदेष्टुं यथावन्नहि कश्चिदस्ति य एतदेव उपदिष्टमुपधारयितुमुत्सहेत उपधार्य्य वा तथा प्रतिपत्तुं प्रयोक्तुं वा। सूक्ष्माणि हि दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि। यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्य्युः किंपुनरल्पबुद्धेः। तस्मादुभयमेतद् यथावदुपदेक्ष्यामः सम्यक् प्रयोगञ्चौषधानां व्यापन्नानाञ्च व्यापत्साधनानि सिद्धिषूत्तरकालम्। इदानीं तावत् सम्भारान् विविधानपि समासेनोपदेक्ष्यामः ॥ ४ ॥

तद्यथा—दृढं निवातं प्रवातैकदेशं सुखप्रविचारमनुपत्यकं धूमातपरजसामनभिगमनीयमनिष्टानाञ्च शब्दस्पर्शरसरूपगन्धानां सोपानोदूखलमुषलवर्चःस्थानस्नानभूमिमहानसोपेतं वास्तुविद्याकुशलः प्रशस्तं गृहमेव तावत् पूर्व्वमुपकल्पयेत् ॥ ५ ॥

ततः शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नानुपचारकुशलान् सर्व्वकर्म्मसु पर्य्यवदातान् सूपौदनपाचकस्नापकसम्वाहकोत्थापकसम्वेशकौषधपेषकांश्च परिचारकान् सर्व्वकर्म्मस्वप्रतिकूलान्, तथा गीतवादित्रोल्लापकश्लोकगाथाख्यायिकेतिहासपुराणकुशलानभिप्रायज्ञाननुमतांश्च देशकालविदः परिषद्यांश्च। तथा लावकपिञ्जलशशहरिणैनकालपुच्छकमृगमातृकोरभ्रान्। गां दोग्ध्रीं शीलवतीमनातुरां जीवद्वत्सां सुप्रतिविहिततृणशरणपानीयाम्। पात्र्याचमनीयोदकोष्ठमणिकघटपिठरपर्य्योगकुम्भीकुम्भकुण्डशरावदर्व्वीकटोदञ्चनपरिपचनमन्थानचर्म्मचेलसूत्रकार्पासोर्णादीनि च शयनासनादीनि चोपन्यस्तभृङ्गारप्रतिग्रहाणि सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानानि स्वापाश्रयाणि सम्वेशनस्नेहस्वेदाभ्यङ्गप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनशिरोविरेचनमूत्रोच्चारकर्म्मणामुपचारसुखानि सुप्रक्षालितोपधानाश्च सुश्लक्ष्णखरमध्यमा दृषदः शस्त्राणि चोपकरणार्थानि। धूमनेत्रञ्च वस्तिनेत्रञ्चोत्तरवस्तिकञ्च कुशहस्तकञ्च तुलाञ्च मानभाण्डञ्च, घृततैलवसामज्जक्षौद्रफाणितलवणेन्धनोदकमधुसीधुसुरासौवीरकतुषोदकमैरेयमेदकदधिदधिमण्डोदश्विद्धान्याम्लमूत्राणि च॥ ६॥

तथा शालिषष्टिकमुद्गमाषयवतिलकुलत्थबदरमृद्वीकापरूषाभयामलकविभीतकानि नानाविधानि च स्नेहस्वेदोपकरणानि द्रव्याणि तथैवोर्द्धहरानुलोमिकोभयभागिकसंग्रहणीयदीपनीयपाचनीयोपशमनीयवातहराणि समाख्यातानि चौषधानि यच्चान्यदपि किञ्चिद्व्यापदः परिसंख्यायोपकरणं विद्यात् यच्च प्रतिभोगार्थं तत्तदुपकल्पयेत्॥ ७॥

ततस्तं पुरुषं यथोक्ताभ्यां स्नेहस्वेदाभ्यां यथार्हमुपपादयेत्। तस्य चेदस्मिन्नन्तरे मानसः शारीरो वा व्याधिः कश्चित्तीव्रतरः सहसाभ्यागच्छेत् तमेव तावदस्योपावर्त्तयितुं यतेत। ततस्तमुपावर्त्त्य तावन्तमेवैनं तथाविधेनैव कर्म्मणोपाचरेत्। ततस्तं पुरुषं स्नेहस्वेदोपपन्नमनुपहतमानसमभिसमीक्ष्य सुखोषितं प्रजीर्णभक्तं शिरःस्नातमनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसम्वीतं देवताग्निद्विजगुरुवृद्धवैद्यानर्च्चितवन्तम् इष्टे नक्षत्रे तिथिकरणमुहूर्त्ते कारयित्वा ब्राह्मणान् स्वस्तिवाचनं प्रयुक्ताभिराशीर्भिरभिमन्त्रितां मधुमधुकसैन्धवफाणितोपहितां मदनफलकषायमात्रां पाययेत्॥ ८॥

मदनफलकषायमात्राप्रमाणन्तु खलु सर्व्वसंशोधनमात्राप्रमाणानि च प्रतिपुरुषमपेक्षितव्यानि भवन्ति। यावद्धि यस्य संशोधनं पीतं वैकारिकदोषहरणायोपपद्यते। नचातियोगायोगाय तावदस्य मात्राप्रमाणं वेदितव्यं भवति॥ ९॥

पीतवन्तन्तु खल्वेनं मुहूर्त्तमनुकाङ्क्षेत, तस्य यदा जानीयात् स्वेदप्रादुर्भावेन दोषं प्रविलयनमापद्यमानं लोमहर्षेण च स्थानेभ्यः प्रचलितं कुक्षिसमाध्मानेन च कुक्षिमनुगतम् हृल्लासास्यस्रवणाभ्यामपचितोर्द्ध्वमुखीभूतमथास्मै जानुसममसम्बाधं सुप्रयुक्तास्तरणोत्तरप्रच्छदोपधानं स्वापाश्रयमासनमुपवेष्टुं प्रयच्छेत्। प्रतिग्रहांश्चोपचारयेत्। ललाटप्रतिग्रहे पार्श्वोपग्रहणे नाभिप्रपीड़ने पृष्ठोन्मर्द्दने च अनपत्रपणीयाः सुहृदोऽनुमताः प्रयतेरन्॥ १०॥

अथैनमनुशिष्यात् विवृतोष्ठतालुकण्ठो नातिमहता

व्यायामेन वेगानुदीर्णानुदीरयन् किञ्चिदवनम्य ग्रीवामूर्द्ध-शरीरमुपवेगमप्रवृत्तान् प्रवर्त्तयन् सूपलिखितनखाभ्यामङ्गुलीभ्या-मुत्पलकुमुदसौगन्धिकनालैर्वा कण्ठमनभिस्पृशन् सुखं प्रवर्त्तयस्वेति । स तथाविधं कुर्य्यात् । ततोऽस्य वेगान् प्रति-ग्राहगतानवेक्षेत । वेगविशेषदर्शनाद्धि कुशलो योगायोगाति-योगविशेषानुपलभ्यते । वेगविशेषदर्शी पुनः कृत्यं यथार्ह-मवबुध्येत लक्षणेन । तस्माद्वेगानवेक्षेतावहितः ॥ ११ ॥

तत्र अमून्ययोगयोगातियोगविशेषज्ञानानि भवन्ति । तद्यथा अप्रवृत्तिः कुतश्चित् केवलस्य वाप्यौषधस्य विभ्रंशो विबन्धो वेगानामयोगलक्षणानि भवन्ति । काले प्रवृत्तिरनति-महती व्यथा यथाक्रमं दोषहरणं स्वयञ्चावस्थानमिति योग-लक्षणानि भवन्ति । योगेन तु दोषप्रमाणविशेषेण तीक्ष्ण-मृदुमध्यविभागो ज्ञेयः । योगाधिक्येन तु फेनिलरक्तचन्द्रि-कोपगमनमित्यतियोगलक्षणानि भवन्ति ॥ १२ ॥

तत्रातियोगायोगनिमित्तानिमानुपद्रवान् विद्यात् । आध्मान परिकर्त्तिका परिस्रावो हृदयोपसरणमङ्गग्रहो जीवादानं विभ्रंशः स्तम्भः क्लम उपद्रवा इति ॥ १३ ॥

योगेन तु खल्वेनं छर्द्दितवन्तमभिसमीक्ष्य सुप्रक्षालित-पाणिपादास्यं मुहूर्त्तमाश्वास्य स्नैहिकवैरेचनिकोपशमनीयानां धूमानामन्यतमं सामर्थ्यतः पाययित्वा पुनरेवोदकमुप-स्पर्शयेत् । उपस्पृष्टोदकञ्चैनं निवातमागारमनुप्रवेश्य संवेश्य चानुशिष्यात् । उच्चैर्भाष्यमत्यशनमतिस्थानमतिचंक्रमणं क्रोध-शोकहिमातपावश्यायातिप्रवातान् यानयानं ग्राम्यधर्ममस्वपनं

निशि दिवास्वप्नम्। विरुद्धाजीर्णासात्म्याकालाप्रमितातिहीन-गुरुविषमभोजनवेगसन्धारणोदीरणमिति भावानेतान् मनसाऽप्यसेवमानः सर्व्वमाहारमद्यादिति। स तथा कुर्य्यात्॥१४॥

अथैनं सायाह्ने परे वाह्नि सुखोदकपरिषिक्तं पुराणानां लोहितशालितण्डुलानां स्ववक्लिन्नां मण्डपूर्व्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य चैवं द्वितीये तृतीये चान्नकाले। चतुर्थे त्वन्नकाले तथाविधानामेव शालितण्डुलानामुत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। एवं पञ्चमे षष्ठे चान्नकाले। सप्तमे त्वन्नकाले तथाविधानामेव शालीनां द्विप्रसृतं सुस्विन्नमोदनमुष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत् एवमष्टमे नवमे चान्नकाले। दशमे त्वन्नकाले लावकपिञ्जलादीनामन्यतमस्य मांसरसेनोदकलावणिकेनापि सारवता भोजयेत् उष्णोदकानुपानमेवमेकादशे द्वादशे चान्नकाले। अत ऊर्द्ध्वमन्नगुणान् क्रमेणोपयुञ्जानः सप्तरात्रेण प्रकृतिभोजनमागच्छेत्॥ १५॥

अथैनं पुनरेव स्नेहस्वेदाभ्यामुपपाद्यानुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं कृतहोमबलिमङ्गलजपप्रायश्चित्तमिष्टतिथिनक्षत्रकरणमुहूर्त्ते ब्राह्मणान् स्वस्ति वाचयित्वा त्रिवृत्कल्कमक्षमात्रं यथार्हमालोड्यन् प्रतिविनीतं पाययेत् प्रसमीक्ष्य दोषभेषजदेशकालबलशरीराहारसात्म्यसत्वप्रकृतिवयसामवस्थान्तराणि विकारांश्च। विरिक्तञ्चैनं वमनोक्तेन धूमवर्ज्जेन विधिनोपपादयेदाबलवर्णप्रतिलाभात् बलवर्णोपपन्नञ्चैन

मनुपहतमनसमभिसमीक्ष्य सुखोषितं सुप्रजीर्णभक्तं शिरःस्नात-मनुलिप्तगात्रं स्रग्विणमनुपहतवस्त्रसंवीतमनुरूपालङ्कारा-लङ्कृतं सुहृदां दर्शयित्वा ज्ञातीनां दर्शयेदथैनं कामेष्ववसृजेत् ॥ १६ ॥

भवति चात्र ।

अनेन विधिना राजा राजमात्रोऽथवा पुनः ।
यस्य वा विपुलं द्रव्यं स संशोधनमर्हति ॥
दरिद्रस्त्वापदं प्राप्य प्राप्तकालं विरेचनम् ।
पिबेत् काममसम्भृत्य सम्भारानपि दुर्लभान् ॥
नहि सर्व्वमनुष्याणां सन्ति सर्व्वपरिच्छदाः ।
न च रोगा न बाधन्ते दरिद्रानपि दारुणाः ॥
यद्यच्छक्यं मनुष्येण कर्त्तुमौषधमापदि ।
तत्तत्सेव्यं यथाशक्ति वसनान्यशनानि च ॥
मलापहं रोगहरं बलवर्णप्रसादनम् ।
पीत्वा संशोधनं सम्यगायुषा युज्यते चिरम् ॥ १७ ॥

तत्र श्लोकाः ।

ईश्वराणां वसुमतां वमनं सविरेचनम् ।
सम्भारा ये यदर्थञ्च समानीय प्रयोजयेत् ॥
यथाप्रयोज्यं या मात्रा यदयोगस्य लक्षणम् ।
योगातियोगयोर्यच्च दोषा ये चाप्युपद्रवाः ॥
यदसेव्यं विशुद्धेन यश्च संसर्जनक्रमः ।
तत् सर्व्वं कल्पनाध्याये व्याजहार पुनर्व्वसुः ॥ १८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
उपकल्पनीयो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

# षोडशोऽध्यायः ।

अथातश्चिकित्साप्राभृतीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

चिकित्साप्राभृतो विद्वान् शास्त्रवान् कर्म्मतत्परः ।
नरं विरेचयति यं स योगात् सुखमश्नुते ॥
यं वैद्यमानी त्वबुधो विरेचयति मानवम् ।
सोऽतियोगादयोगाच्च मानवो दुःखमश्नुते ॥ २ ॥
दौर्ब्बल्यं लाघवं ग्लानिर्व्याधीनामल्पता रुचिः ।
हृद्वर्णशुद्धिः क्षुत्तृष्णा काले वेगप्रवर्त्तनम् ॥
बुद्धीन्द्रियमनःशुद्धिर्मारुतस्यानुलोमता ।
सम्यग्विरिक्तलिङ्गानि कायाग्नेश्चानुवर्द्धनम् ॥ ३ ॥
ष्ठीवनं हृदयाशुद्धिरुत्क्लेशः श्लेष्मपित्तयोः ।
आध्मानमरुचिश्छर्द्दिरदौर्ब्बल्यमलाघवम् ॥
जङ्घोरुसदनं तन्द्रा स्तैमित्यं पीनसागमः ।
लक्षणान्यविरिक्तानां मारुतस्य च निग्रहः ॥ ४ ॥
विट्पित्तकफवातानामागतानां यथाक्रमम् ।
परं स्रवति यद्रक्तं मेदोमांसोदकोपमम् ॥
निःश्लेष्मपित्तमुदकं शोणितं कृष्णमेव वा ।
तृष्यतो मारुतार्त्तस्य सोऽतियोगः प्रमुह्यतः ॥ ५ ॥
वमनेऽतिकृते लिङ्गान्येतान्येव भवन्ति हि ।
ऊर्द्ध्वगा वातरोगाश्च वाग्ग्रहश्चाधिको भवेत् ॥ ६ ॥
चिकित्साप्राभृतं तस्मादुपेयाच्छरणं नरः ।

युज्यते य एनमत्यन्तमायुषा च सुखेन च ॥ ७ ॥
अविपाकोऽरुचिः स्थौल्यं पाण्डुता गौरवं क्लमः ।
पिडकाकोठकण्डूनां सम्भवोऽरतिरेव च ॥
आलस्यश्रमदौर्ब्बल्यं दौर्गन्ध्यमवसादकः ।
श्लेष्मपित्तसमुत्क्लेशो निद्रानाशोऽतिनिद्रता ॥
क्लैव्यं तन्द्रिरबुद्धित्वमशस्तस्वप्नदर्शनम् ।
बलवर्णप्रणाशश्च तृप्यतो वृंहणैरपि ॥
बहुदोषस्य लिङ्गानि तस्मै संशोधनं हितम् ।
ऊर्द्धञ्चैवानुलोमञ्च यथादोषं यथाबलम् ॥ ८ ॥
एवं विशुद्धकोष्ठस्य कायाग्निरतिवर्द्धते ।
व्याधयश्चोपशाम्यन्ति प्रकृतिश्चानुवर्त्तते ॥
इन्द्रियाणि मनोबुद्धिर्वर्णश्चास्य प्रसीदति ।
बलं पुष्टिरपत्यञ्च वृषता चास्य जायते ॥
जरां कृच्छ्रेण लभते चिरं जीवत्यनामयः ।
तस्मात् संशोधनं काले युक्तियुक्तं पिबेन्नरः ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ।
जिताः संशोधनैर्य्येतु न तेषां पुनरुद्भवः ॥
दोषाणाञ्च द्रुमाणाञ्च मूलेऽनुपहते सति ।
रोगाणां प्रसराणाञ्च गतानामागतिर्ध्रुवा ॥ ९ ॥
भेषजक्षपिते पथ्यमाहारैश्चैव वृंहणम् ।
घृतमांसरसक्षीरहृद्ययूषोपसंहितैः ॥
अभ्यङ्गोत्सादनैः स्नानैर्निरूहैः सानुवासनैः ।
तथा स लभते शर्म्म युज्यते चायुषा चिरम् ॥ १० ॥

अतियोगानुबन्धानां सर्पिःपानं प्रशस्यते ।
तैलं मधुरकैः सिद्धमथवाप्यनुवासनम् ॥
यस्य त्वयोगस्तं स्निग्धं पुनः संशोधयेन्नरम् ।
मात्राकालबलापेक्षी स्मरन् पूर्व्वमनुक्रमम् ॥ ११ ॥
स्नेहने स्वेदने शुद्धौ रोगाः संसर्ज्जने च ये ।
जायन्तेऽमार्गविहिते तेषां सिद्धिषु साधनम् ॥ १२ ॥
जायन्ते हेतुवैषम्याद्विषमा देहधातवः ।
हेतुसाम्यात् समास्तेषां स्वभावो परमः सदा ॥ १३ ॥
प्रवृत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम् ।
केचित्तत्रापि मन्यन्ते हेतुं हेतोरवर्त्तनम् ॥ १४ ॥
एवमुक्तार्थमाचार्य्यमग्निवेशोऽभ्यभाषत ।
स्वभावोपरमे कर्म्म चिकित्साप्राभृतस्य किम् ॥
भेषजैर्विषमान् धातून् कान् समीकुरुते भिषक् ।
का वा चिकित्सा भगवन् किमर्थं वा प्रयुज्यते ॥ १५ ॥
तच्छिष्यवचनं श्रुत्वा व्याजहार पुनर्व्वसुः ।
श्रूयतामत्र या सौम्य युक्तिर्दृष्टा महर्षिभिः ॥ १६ ॥
न नाशकारणाभावाद्भावानां नाशकारणम् ।
ज्ञायते नित्यगस्येव कालस्यात्ययकारणम् ॥
शीघ्रं गत्वा यथाभूतस्तथा भावो विपद्यते ।
निरोधे कारणं तस्य नास्ति नैवान्यथाक्रिया ॥ १७ ॥
याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म्म तद्भिषजां मतम् ॥ १८ ॥
कथं शरीरे धातूनां वैषम्यं न भवेदिति ।

समानाञ्चानुबन्धः स्यादित्यर्थं क्रियते क्रिया ॥ १६ ॥
त्यागाद्विषमहेतूनां समानाञ्चोपसेवनात् ।
विषमाननुबध्नन्ति जायन्ते धातवः समाः ॥
समैस्तु हेतुभिर्यस्माद्धातून् संजनयेत् समान् ॥ २० ॥
चिकित्साप्राभृतस्तस्माद्दाता देहसुखायुषाम् ।
धर्म्मस्यार्थस्य कामस्य नृलोकस्योभयस्य च ॥
दाता सम्पद्यते वैद्यो दानाद्देहसुखायुषाम् ॥ २१ ॥

तत्र श्लोकाः ।

चिकित्साप्राभृतगुणो दोषो यश्चेतराश्रयः ।
योगायोगातियोगानां लक्षणं सिद्धिसंश्रयम् ॥
बहुदोषस्य लिङ्गानि संशोधनगुणाश्च ये ।
चिकित्सासूत्रमात्रञ्च सिद्धिव्यापत्तिसंश्रयम् ॥
याच युक्तिश्चिकित्साया यश्चार्थं कुरुते भिषक् ।
चिकित्साप्राभृताध्याये तत् सर्व्वमवदन्मुनिः ॥ २२ ॥

इति कल्पनाचतुष्कम् ।

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने चिकित्साप्राभृतीयो नाम षोड़शोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

अथातः कियन्तः शिरसीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

कियन्तः शिरसि प्रोक्ता रोगा हृदि च देहिनाम् ।
कति वाप्यनिलादीनां रोगा मानविकल्पजाः ॥
क्षयाः कति समाख्याताः पिड़काः कति वानघ ।
गतिः कतिविधा चोक्ता दोषाणां दोषसूदन ॥ २ ॥
हुताशवेशस्य वचस्तच्छ्रुत्वा गुरुरब्रवीत् ।
पृष्टवानसि यत् सौम्य तन्मे शृणु सविस्तरम् ॥ ३ ॥
दृष्टाः पञ्च शिरोरोगाः पञ्चैव हृदयामयाः ।
व्याधीनां द्व्यधिका षष्टिर्दोषमानविकल्पजा ॥
दश चाष्टौ क्षयाः सप्त पिड़का मधुमेहिकाः ।
दोषाणां त्रिविधा चोक्ता गतिर्वक्ष्यामि विस्तरम् ॥ ४ ॥
सन्धारणाद्दिवास्वप्राद्रात्रौ जागरणान्मदात् ।
उच्चैर्भाष्यादवश्यायात् प्राग्वातादतिमैथुनात् ॥
गन्धादसात्म्यादाघ्रातादजोधूमानिलातपात् ।
गुर्व्वम्लहरितादानादतिशीताम्बुसेवनात् ॥
शिरोभितापाद्दुष्टामाद्रोदनाद्वाष्पनिग्रहात् ।
मेघागमान्मनस्तापाद्देशकालविपर्य्ययात् ॥
वातादयः प्रकुप्यन्ति शिरस्यस्रञ्च दुष्यति ।
ततः शिरसि जायन्ते रोगा विविधलक्षणाः ॥
प्राणाः प्राणभृतां यत्र श्रिताः सर्व्वेन्द्रियाणि च ।

यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ॥ ५ ॥
अर्द्धावभेदको वा स्यात् सर्व्वं वा रुज्यते शिरः ।
प्रतिश्यामुखनासाक्षिकर्णरोगशिरोभ्रमाः ॥
अर्द्दितं शिरसः कम्पो गलमन्याहनुग्रहः ।
विविधाश्चापरे रोगा वातादिक्रिमिसम्भवाः ॥ ६ ॥
पृथग्दृष्टास्तु ये पञ्च संग्रहे परमर्षिभिः ।
शिरोगदांस्तान् शृणु मे यथास्वैर्हेतुलक्षणैः ॥ ७ ॥
उच्चैर्भाष्यातिभाष्याभ्यां तीक्ष्णपानात् प्रजागरात् ।
शीतमारुतसंस्पर्शाद्व्यायामाद्वेगनिग्रहात् ॥
उपवासादभिघाताद्विरेकवमनादति ।
वास्पशोकभयत्रासाद्भारमार्गातिकर्षणात् ॥
शिरोगता वै धमनीर्वायुराविश्य कुप्यति ।
ततः शूलं महत्तस्य वातात् समुपजायते ॥
निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा ।
भ्रुवोर्मध्यं ललाटञ्च तपतीवातिवेदनम् ॥
बध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ।
घूर्णतीव शिरःसर्व्वं सन्धिभ्य इव मुच्यते ॥
स्फुरत्यतिशिराजालं स्तभ्यते च शिरोधरा ।
स्निग्धोष्णमुपसेवेत शिरोरोगेऽनिलात्मके ॥ ८ ॥
कट्वम्ललवणक्षारमद्यक्रोधातपानलैः ।
पित्तं शिरसि संदुष्टं शिरोरोगाय कल्पते ॥
दह्यते तुद्यते तेन शिरःशीतं सुसूयते ।
दह्येते चक्षुषी तृष्णाभ्रमः स्वेदश्च जायते ॥ ९ ॥

आस्यासुखैः स्वप्नसुखैर्गुरुस्निग्धातिभोजनैः।
श्लेष्मा शिरसि संदुष्टः शिरोरोगाय कल्पते ॥
शिरो मन्दरुजं तेन सुप्तस्तिमितभारिकम्।
भवत्युत्पद्यते तन्द्रा तथालस्यमरुचिस्तथा ॥ १० ॥
वाताच्छूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा।
कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे ॥ ११ ॥
तिलक्षीरगुड़ाजीर्णपूतिसङ्कीर्णभोजनात्।
क्लेदोऽसृक्कफमांसानां दोषलस्योपजायते ॥
ततः शिरसि संक्लेदात् क्रिमयः पापकर्म्मणः।
जनयन्ति शिरोरोगं जाता बीभत्सलक्षणम् ॥
छेदव्यधनरुक्कण्डूशोफदौर्गन्ध्यदुःखितम्।
क्रिमिरोगातुरं विद्यात् क्रिमीणां लक्षणेन च ॥ १२॥
शोकोपवासव्यायामरूक्षशुष्काल्पभोजनैः।
वायुराविश्य हृदयं जनयत्युत्तमां रुजम् ॥
वेपथुर्वेष्टनं स्तम्भः प्रमोहः शून्यता भ्रमः।
हृदि वातातुरे रूपं जीर्णे चात्यर्थवेदना ॥ १३ ॥
उष्णाम्ललवणक्षारकटुकाजीर्णभोजनैः।
मद्यक्रोधातपैश्चाशु हृदि पित्तं प्रकुप्यति।
हृद्दाहस्तिक्तता वक्त्रे तिक्ताम्लोद्गिरणं क्लमः ॥
तृष्णा मूर्च्छा भ्रमः स्वेदः पित्तहृद्रोगलक्षणम् ॥ १४ ॥
अत्यादानं गुरुस्निग्धमचिन्तनमचेष्टनम्।
निद्रासुखं चाप्यधिकं कफहृद्रोगकारणम् ॥
हृदयं कफहृद्रोगे सुप्तं स्तिमितभारिकम्।

तन्त्रावचिपरीतस्य भवत्यस्माहृतं यथा ॥ १५ ॥
हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः ।
हृद्रोगः कष्टदः कष्टसाध्य उक्तो महर्षिभिः ।
त्रिदोषजेतु हृद्रोगे यो दुरात्मा निषेवते ॥
तिलक्षीरगुड़ादीनि ग्रन्थिस्तस्योपजायते ।
मर्म्मैकदेशे संक्लेदं रसश्चास्योपगच्छति ॥
संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः।
मर्म्मैकदेशे ते जाताः सर्पन्तो भक्षयन्ति च ॥
तुद्यमानं सहृदयं सूचीभिरिव मन्यते ।
छिद्यमानं यथाशस्त्रैर्जातकण्डू महारुजम् ॥
हृद्रोगं क्रिमिजन्त्वेतैर्लिङ्गैर्बुद्धा सुदारुणम् ।
त्वरेत जेतुं तं विद्वान् विकारं शीघ्रकारिणम् ॥ १६ ॥
द्युरुल्वणैकोल्वणैः षट्स्युर्हीनमध्याधिकैश्च षट् ।
समैश्चैको विकारास्ते सन्निपातास्त्रयोदश ॥ १७ ॥
संसर्गेन नवैते षड़ेकवृद्ध्या समैस्त्रयः ।
पृथक्त्रयश्च तैर्वृद्धैर्व्याधयः पञ्चविंशतिः ॥
यथावृद्धैस्तथाक्षीणैर्दोषैः स्युः पञ्चविंशतिः ।
वृद्धिक्षयकृतश्चान्यो विकल्प उपदिश्यते ॥ १८ ॥
वृद्धिरेकस्य समता चैकस्यैकस्य संक्षयः ।
द्वन्द्ववृद्धिः क्षयश्चैकस्यैकवृद्धिर्द्वयोः क्षयः ॥ १९ ॥
प्रकृतिस्थं यदापित्तं मारुतः श्लेष्मणः क्षये
स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥
तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः ।

गात्रदेशे भवेत्तस्य श्रमो दौर्ब्बल्यमेव च ॥ २० ॥
प्रकृतिस्थं कफं वायुः क्षीणे पित्ते यदा बली ।
कर्षेत् कुर्य्यात्तदा शूलं शैत्यस्तम्भनगौरवम् ॥ २१ ॥
प्रकृतिस्थं यदा वातं पित्तं कफपरिक्षये ।
संरुणद्धि तदा दाहः शूलञ्चास्योपजायते ॥ २२ ॥
प्रकृतिस्थं कफं पित्तं यदा वातपरिक्षये ।
सन्निरुन्ध्यात्तदा कुर्य्यात् सतन्द्रागौरवं ज्वरम् ॥ २३ ॥
प्रकृतिस्थं यदा वातं श्लेष्मा पित्तपरिक्षये ।
सन्निरुन्ध्यात्तदा कुर्य्याच्छीतकं गौरवं ज्वरम् ॥ २४ ॥
प्रकृतिस्थं यदा पित्तं श्लेष्मा मारुतसंक्षये ।
सन्निरुन्ध्यात्तदा कुर्य्यान्मृदग्नित्वं शिरोग्रहम् ॥
निद्रां तन्द्रां प्रलापञ्च हृद्रोगं गात्रगौरवम् ।
नखादीनाञ्च पीतत्वं ष्ठीवनं कफपित्तयोः ॥ २५ ॥
हीनवातस्य तु श्लेष्मा पित्तेन सहितश्चरन् ।
करोत्यरोचकापाकौ सदनं गौरवं तथा ॥
हृल्लासमास्यस्रवणं पाण्डुतां दूयनं मदम् ।
विरेकस्य च वैषम्यं वैषम्यमनलस्य च ॥ २६ ॥
हीनपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः ।
स्तम्भं शैत्यञ्च तोदञ्च जनयत्यनवस्थितम् ॥
गौरवं मृदुतामग्नेर्भक्ताश्रद्धाञ्च वेपनम् ।
नखादीनाञ्च शुक्लत्वं गात्रपारुष्यमेव च ॥ २७ ॥
मारुतस्तु कफे हीने पित्तञ्च कुपितं द्वयम् ।
करोति यानि लिङ्गानि शृणु तानि समासतः ॥

भ्रमसुद्वेष्टनं तोदं दाहं स्फुटनवेपने ।
अङ्गमर्द्द परीशोषं हृदये धूपनं तथा ॥ २८ ॥
वातपित्तक्षये श्लेष्मा स्रोतांस्यपिदधद् भृशम् ।
चेष्टाप्रणाशं मूर्च्छाञ्च वाक्सङ्गञ्च करोति हि ॥ २९ ॥
वातश्लेष्मक्षये पित्तं देहौजः स्रंसयेच्चरत् ।
ग्लानिमिन्द्रियदौर्ब्बल्यं तृष्णां मूर्च्छां क्रियाक्षयम् ॥ ३० ॥
पित्तश्लेष्मक्षये वायुर्म्मर्म्माण्यभिनिपीड़यन् ।
प्रणाशयति संज्ञाञ्च वेपयत्यथवा नरम् ॥ ३१ ॥
दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम् ।
क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्व्वते ॥ ३२ ॥
वातादीनां रसादीनां मलानामोजसस्तथा ।
क्षयास्तत्रानिलादीनामुक्तं संक्षीणलक्षणम् ॥ ३३ ॥
घट्टते सहते शब्दं नोच्चैर्द्रवति शूल्यते ।
हृदयं ताम्यति स्वल्पचेष्टस्यापि रसक्षये ॥
परुषा स्फुटिता म्लाना त्वग्रुक्षा रक्तसंक्षये ।
मांसक्षये विशेषेण स्फिग्ग्रीवोदरशुष्कता ॥
सन्धीनां स्फुटनं ग्लानिरक्ष्णोरायास एव च ।
लक्षणं मेदसि क्षीणे तनुत्वञ्चोदरस्य च ॥
केशलोमनखश्मश्रुद्विजप्रपतनं श्रमः ।
ज्ञेयमस्थिक्षये रूपं सन्धिशैथिल्यमेव च ॥
शीर्य्यन्त इव चास्थीनि दुर्ब्बलानि लघूनि च ।
प्रततं वातरोगाणि क्षीणे मज्जनि निर्द्दिशेत् ॥
दौर्ब्बल्यं मुखशोषश्च पाण्डुता सदनं श्रमः ।

क्लैव्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥
क्षीणे शकृति चान्त्राणि पीडयन्निव मारुतः।
रूक्षोन्नमयन् कुक्षिं तिर्य्यगूर्द्धञ्च गच्छति ॥
मूत्रक्षये मूत्रकृच्छ्रं मूत्रवैवर्ण्यमेव च।
पिपासा बाधते चास्य मुखञ्च परिशुष्यति ॥
मलायनानि चान्यानि शून्यानि च लघूनि च।
विशुष्काणि च लक्ष्यन्ते यथास्वं मलसंक्षये ॥
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः।
दुश्छायो दुर्मना रूक्षः क्षामश्चैवौजसः क्षये ॥ ३४ ॥
हृदि तिष्ठति यच्छुभ्रं रक्तमीषत् सपीतकम्।
ओजः शरीरे संख्यातं तन्नाशान्ना विनश्यति ॥ ३५ ॥
प्रथमे जायते ह्योजः शरीरेऽस्मिन् शरीरिणाम्।
सर्पिर्वर्णं मधुरसं लाजगन्धि प्रजायते ॥
भ्रमरैः फलपुष्पाभ्यां यथा संह्रियते मधु।
एवमोजः स्वकर्म्मभ्यो गुणैः संह्रियते नृणाम् ॥ ३६ ॥
व्यायामोऽनशनं चिन्ता रूक्षाल्पप्रमिताशनम्।
वातातपौ भयं शोकौ रूक्षपानं प्रजागरः ॥
कफशोणितशुक्राणामतिवर्त्तनमोक्षणम्।
कालो भूतोपघातश्च विज्ञेयाः क्षयहेतवः ॥ ३७ ॥
गुरुस्निग्धाम्ललवणान्यतिमात्रं समश्नताम्।
नवमन्नञ्च पानञ्च निद्रामास्यासुखानि च ॥
त्यक्तव्यायामचिन्तानां संशोधनमकुर्व्वताम्
श्लेष्मा पित्तञ्च मेदश्च मांसञ्चातिप्रवर्द्धते ॥

तैरावृतगतिर्वायुरोज आदाय गच्छति ।
यदा वस्तिं तदा कृच्छ्रो मधुमेहः प्रवर्त्तते ॥
समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः ।
दर्शयत्याकृतिं गत्वा क्षयमाप्यायते पुनः ॥ ३८ ॥
उपेक्षयाऽस्य जायन्ते पिड़काः सप्त दारुणाः ।
मांसलेष्ववकाशेषु मर्म्मस्वपि च सन्धिषु ॥
शराविका कच्छपिका जालिनी सर्षपी तथा ।
अलजी विनताख्या च विद्रधी चेति सप्तमी ॥ ३९ ॥
अन्तोन्नता मध्यनिम्ना श्यामा क्लेदरुगन्विता ।
शराविका स्यात् पिड़का शरावाकृतिसंस्थिता ॥ ४० ॥
अवगाढार्त्तिनिस्तोदा महावास्तुपरिग्रहा ।
श्लक्ष्णा कच्छपपृष्ठाभा पिड़का कच्छपी मता ॥ ४१ ॥
स्तब्धा शिराजालवती स्निग्धा स्रावा महाशया ।
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ ४२ ॥
पिड़का नातिमहती क्षिप्रपाका महारुजा ।
सर्षपी सर्षपाभाभिः पिड़काभिश्चिता भवेत् ॥ ४३ ॥
दहति त्वचमुत्थाने तृष्णामोहज्वरान्विता ।
विसर्पत्यनिशं दुःखं दहत्यग्निरिवालजी ॥ ४४ ॥
अवगाढरुजाक्लेदा पृष्ठे वाप्युदरेऽपि च ।
महती विनता नीला पिड़का विनता मता ॥ ४५ ॥
विद्रधिं द्विविधामाहुर्बाह्यामाभ्यान्तरीन्तथा ।
बाह्या त्वक्स्नायुमांसोत्था कण्डराभा महारुजा ॥ ४६ ॥
शीतकाम्लविदाह्युष्णरूक्षशुष्कातिभोजनात् ।

विरुद्धाजीर्णसंक्लिष्टविषमासात्म्यभोजनात् ॥
व्यापन्नबहुमद्यत्वाद्वेगसन्धारणात् श्रमात्।
जिह्मव्यायामशयनादतिभाराध्वमैथुनात्॥
अन्तःशरीरे मांसासृक् प्रविशन्ति यदामलाः।
तदा संजायते ग्रन्थिर्गंभीरस्थः सुदारुणः॥
हृदये क्लोम्नि यकृति प्लीह्नि कुक्षौ च वृक्कयोः।
नाभ्यां वङ्क्षणयोर्वापि बस्तौ वा तीव्रवेदनः॥ ४७ ॥
दुष्टरक्तातिमात्रत्वात् सर्वे शीघ्रं विदह्यते।
ततः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते॥ ४८ ॥
व्यधच्छेदभ्रमानाहशब्दस्फुरणसर्पणैः।
वातिकीं पैत्तिकीं तृष्णादाहमोहमदज्वरैः॥
जृम्भोत्क्लेशारुचिस्तम्भशीतकैः श्लैष्मिकीं विदुः॥ ४९ ॥
सर्व्वासु महच्छूलं विद्रधीषूपजायते।
शस्त्रैर्भिद्यतइव च्छोल्मुकैरिव दह्यते॥
विद्रधी व्यम्लतां याता वृश्चिकैरिव दश्यते॥ ५० ॥
तनुरूक्षारुणं श्यावं फेनिलं वातविद्रधी।
तिलमाषकुलत्थोदसन्निभं पित्तविद्रधी॥
श्लैष्मिकी स्रवति श्वेतं पिच्छिलं बहलं बहु।
लक्षणं सर्व्वमेवैतद्भजते सान्निपातिकी॥ ५१

अथासां विद्रधीणां साध्यासाध्यत्वविशेषविज्ञानार्थं स्थानकृतं लिङ्गविशेषमुपदेक्ष्यामः। तत्र प्रधानमर्म्मजायां विद्रध्यां हृद्घट्टनतमकप्रमोहकासाः। क्लोमजायां पिपासामुखशोषगलग्रहाः। यकृज्जायां श्वासः। प्लीहजायामुच्छ्वासोपरोधः।

कुक्षिजायां कुक्षिपार्श्वान्तरांसशूलम् । वृक्कजायां पार्श्वपृष्ठ-कटीग्रहः । नाभिजायां हिक्का । वङ्क्षणजायां सक्थिसादः । वस्तिजायां कृच्छ्रमूत्रपूतिवर्च्चस्त्वञ्चेति । पक्वासु प्रभिन्नासूर्द्ध्वजासु मुखात् स्रावः, अधोजासु गुदात्, उभयतस्तु नाभिजासु । आसां हृन्नाभिवस्तिजाः परिपक्वाः सान्निपातिकीच मरणाय । शेषाः पुनः कुशलमाशुप्रतिकारिणं चिकित्सकमासाद्योपशा-म्यन्ति । तस्मादचिरोत्थितां विद्रधीं शस्त्रसर्पविद्युदग्नितुल्यां स्नेहस्वेदविरेचनैश्चोपक्रमेत । सर्व्वशो गुल्मवच्चेति ॥ ५२ ॥

भवन्ति चात्र ।

विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ।
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ५३ ॥
शराविका कच्छपिका जालिनी चेति दुःसहा ।
जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसः ॥ ५४ ॥
सर्षपी त्वलजी चैव विनता विद्रधी च याः ।
साध्याः पित्तोल्वणास्तास्तु सम्भवन्त्यल्पमेदसः ॥ ५५ ॥
मर्म्मस्वंसे गुदे पाण्योस्तले सन्धिषु पादयोः ।
जायन्ते यस्य पिड़काः स प्रमेही न जीवति ॥ ५६ ॥
तथान्याः पिड़काः सन्ति पीतरक्तासितारुणाः ।
पाण्डुराः पाण्डुवर्णाश्च भस्माभा मेचकप्रभाः ॥
मृद्व्यश्च कठिनाश्चान्याः स्थूलाः सूक्ष्मास्तथापराः ।
मन्दवेगा महावेगाः स्वल्पशूला महारुजाः ॥
ता बुद्ध्वा मारुतादीनां यथास्वं हेतुलक्षणैः ।
ब्रूयादुपाचरेच्चाशु प्रागुपद्रवदर्शनात् ॥ ५७ ॥

तट्श्वासमांससंकोषमोहहिक्कामदज्वराः।
विसर्पमर्म्मसंरोधाः पिड़कानामुपद्रवाः ॥ ५८॥
चयः स्थानञ्च वृद्धिश्च दोषाणां त्रिविधा गतिः।
ऊर्द्ध्वञ्चाधश्च तिर्य्यक् च विज्ञेया त्रिविधापरा ॥
त्रिविधा चापरा कोष्ठशाखामर्म्मास्थिसन्धिषु।
इत्युक्ता विधिभेदेन दोषाणां त्रिविधा गतिः ॥ ५९ ॥
चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्।
भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु ॥ ६० ॥
गतिः कालकृता चैषा चयाद्या पुनरुच्यते।
गतिश्च द्विविधा दृष्टा प्राकृती वैकृती तथा ॥ ६१ ॥
पित्तादेवोष्मणः पक्तिर्नराणामुपजायते।
पित्तञ्चैव प्रकुपितं विकारान् कुरुते बहून् ॥ ६२ ॥
प्राकृतश्च बलं श्लेष्मा वैकृतो मल उच्यते।
स चैवौजः स्मृतं काये स च पाप्मोपदिश्यते ॥ ६३ ॥
सर्व्वाहि चेष्टा वातेन सप्राणः प्राणिनां स्मृतः।
तेनैव रोगा जायन्ते तेन चैवावरुध्यते ॥ ६४ ॥
नित्यं सन्निहितामित्रं परीक्ष्यात्मानमात्मवान्।
नित्यं युक्तः परिचरेदिच्छन्नायुरनित्वरम् ॥ ६५ ॥

तत्र श्लोकौ।

शिरोरोगाः सहृद्रोगाः रोगा मानविकल्पजाः।
चयाश्च पिड़काश्चोक्ता दोषाणां गतिरेव च ॥
कियन्तःशिरसीयेऽस्मिन्नध्याये तत्त्वदर्शिना।
ज्ञानार्थं भिषजाञ्चैव प्रजानाञ्च हितैषिणा ॥ ६६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
कियन्तः शिरसीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथातस्त्रिशोथीयमध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

त्रयः शोथा भवन्ति वातपित्तकफनिमित्ताः । ते पुनर्द्विविधाः निजागन्तुभेदेन । तत्र आगन्तवश्छेदनभेदनक्षणनभञ्जनपिच्छनोत्पेषणवेष्टनप्रहारवधबन्धनव्यधनपीड़नादिभिर्वा, भल्लातकपुष्पफलरसात्मगुप्ताशूकक्रिमिशूकाहितपत्रलतागुल्मसंस्पर्शनैर्वा, स्वेदप्रसिमर्पणावमूत्रणैर्वा विषिणां, सविषाविषप्राणिदन्तविषाणनखनिपातैर्वा, सागरविषवातहिमदहनसंस्पर्शनैर्वा शोथाः समुपजायन्ते ॥ २ ॥

ते पुनर्यथास्वं हेतुव्यञ्जनैरादावुपलभ्यन्ते निजव्यञ्जनैकदेशविपरीतैः ॥ ३ ॥

बन्धमन्त्रागदप्रलेपप्रतापनिर्वापणादिभिश्चोपक्रमैरुपक्रम्यमाणाः प्रशान्तिमापद्यन्ते ॥ ४ ॥

निजाः पुनः स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनानामयथावत् प्रयोगान्मिथ्यासंसर्ज्जनाद्वा, छर्द्द्यलसकविसूचिकाश्वासकासातीसारशोषपाण्डुरोगोदरप्रदरभगन्दरार्शोविकारातिकर्षणैर्वा, कुष्ठकण्डूपिड़कादिभिर्वा, छर्द्दिक्षवथूद्गारशुक्रवातमूत्रपुरीषवेगविधारणैर्वा, कर्म्मरोगोपवासाध्वकर्षितस्य वा, सहसातिगुर्व्वम्ललवणपिष्टान्नफलशाकरागदधिहरितकमद्यमन्दकविरूढ़-नवशूकशमीधान्यानूपौदकपिशितोपयोगात्, मृत्पङ्कलोष्टभक्षणाल्लवणातिभक्षणात्, गर्भसंपीड़नादामगर्भ-

प्रपतनात्, प्रजातानाञ्च मिथ्योपचारादुदीर्णदोषत्वाच्च शोथाः प्रादुर्भवन्ति इत्युक्तः सामान्यो हेतुः॥ ५॥

अयन्त्वत्र विशेषः। शीतरूक्षलघुविशदश्रमोपवासाति-कर्षणक्षपणादिभिर्वायुः कुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति। स क्षिप्रोत्थानप्रशमो भवति। तथा श्यावा-रुणवर्णः प्रकृतिवर्णो वा चलनः स्पन्दनः खरपरुषभिन्नरोमा छिद्यत इव भिद्यत इव पीड्यत इव सूचीभिरिव तुद्यते पिपी-लिकाभिरिव संसृप्यते सर्षपकल्कावलिप्त इव॰ चिमिचिमायते संकुच्यत आयम्यत इति वातशोथः॥ ६॥

उष्णतीक्ष्णकटुकक्षारलवणाम्लाजीर्णभोजनैरग्न्यातपप्रता-पैश्च पित्तं प्रकुपितं त्वङ्मांसशोणितादीन्यभिभूय शोथं जन-यति। स क्षिप्रोत्थानप्रशमो भवति, कृष्णपीतनीलताम्रावभास उष्णो मृदुः कपिलताम्रलोमा म उष्यते दूयते धूप्यते उष्मायते स्विद्यते क्लिद्यते न च स्पर्शमुष्णं सहते इति पित्तशोथः॥ ७॥

गुरुमधुरशीतस्निग्धोपयोगैरतिस्वप्नाव्यायामादिभिः श्लेष्मा प्रकुपितस्त्वङ्मांसशोणितादीन्यभिभूय शोथं जनयति। स कृच्छ्रोत्थानप्रशमो भवति, पाण्डुश्वेतावभासो गुरुः स्निग्धः श्लक्ष्णः स्थिरः स्त्यानः शुक्लाग्ररोमा स्पर्शोष्णसहश्चेति श्लेष्म-शोथः॥ ८॥

यथास्वकारणाकृतिसंसर्गाद्द्विदोषजास्त्रयः शोथा भवन्ति। यथास्वकारणाकृतिसन्निपातात् सान्निपातिक एकः। एवं सप्तविधो भेदः। प्रकृतिभिस्ताभिस्ताभिर्भिद्यमानो द्विविध-

त्रिविधश्चतुर्विधः सप्तविधोऽष्टविधः शोथ उपलभ्यते । स पुनश्चैकएवोत्सेधसामान्यात् ॥ ९ ॥

भवन्ति चात्र ।

दूयन्ते यस्य गात्राणि स्वपन्तीव रुजन्ति च ।
पीड़ितान्युन्नमन्त्याशु वातशोथं तमादिशेत् ॥
यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति ।
स्नेहोष्णमर्द्दनाभ्याञ्च प्रणश्येत् स च वातिकः ॥ १० ॥
यः पिपासाज्वरार्त्तस्य दूयतेऽथ विदह्यते ।
स्विद्यते क्लिद्यते गन्धी स पित्तश्वयथुः स्मृतः ॥
यः पीतमुखनेत्रत्वक् पूर्व्वं मध्यात् प्रसूयते ।
तनुत्वक् चातिसारी च पित्तशोथः स उच्यते ॥ ११ ॥
यः शीतलः सक्तगतिः कण्डूमान् पाण्डुरेव च ।
यः पीडितो नोन्नमति श्वयथुः स कफात्मकः ॥
यस्य शस्त्रकुशच्छेदाच्छोणितं न प्रवर्त्तते ।
कृच्छ्रेण पिच्छां स्रवति स चापि कफसम्भवः ॥ १२ ॥
निदानाकृतिसंसर्गात् श्वयथुः स्याद्विदोषजः ।
सर्व्वाकृतिः सन्निपातात् शोथो व्यामिश्रलक्षणः ॥ १३ ॥
यस्तु पादाभिनिर्वृत्तः शोथः सर्व्वाङ्गगो भवेत् ।
जन्तोः स च सुकष्टः स्यात् प्रसृतः स्त्रीमुखाच्च यः ॥ १४ ॥
यश्चापि गुह्यप्रभवः स्त्रिया वा पुरुषस्य वा ।
स च कष्टतमो ज्ञेयो यस्य च स्युरुपद्रवाः ॥ १५ ॥
छर्द्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च ।
सप्तकोऽयं सदौर्ब्बल्यः शोथोपद्रवसंग्रहः ॥ १६ ॥

यस्य श्लेष्मा प्रकुपितो जिह्वामूलेऽवतिष्ठते ।
आशु संजनयेच्छोथं जायतेऽस्योपजिह्विका ॥ १७ ॥
यस्य श्लेष्मा प्रकुपितः काकले व्यवतिष्ठते ।
आशु संजनयेच्छोथं करोति गलशुण्डिकाम् ॥ १८ ॥
यस्य श्लेष्मा प्रकुपितो गले बाह्येऽवतिष्ठते ।
शनैः संजनयेच्छोथं गलगण्डोऽस्य जायते ॥ १९ ॥
यस्य श्लेष्मा प्रकुपितस्तिष्ठत्यन्तर्गले स्थिरः ।
आशु संजनयेच्छोथं जायतेऽस्य गलग्रहः ॥ २० ॥
यस्य पित्तं प्रकुपितं सरक्तं त्वचि सर्पति ।
शोथं सरागं जनयेद् विसर्पस्तस्य जायते ॥ २१ ॥
यस्य पित्तं प्रकुपितं त्वचि रक्तेऽवतिष्ठते ।
शोथं सरागं जनयेत् पिड़का तस्य जायते ॥ २२ ॥
यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति ।
तिलकाः पिप्लवो व्यङ्गो नीलिका तस्य जायते ॥ २३ ॥
यस्य पित्तं प्रकुपितं शङ्खयोरवतिष्ठते ।
श्वयथुः शङ्खको नाम दारुणस्तस्य जायते ॥ २४ ॥
यस्य पित्तं प्रकुपितं कर्णमूलेऽवतिष्ठते ।
ज्वरान्ते दुर्जयोऽन्ताय शोथस्तस्योपजायते ॥ २५ ॥
वातः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति ।
शनैः परितुदन् पार्श्वं प्लीहा तस्याभिवर्द्धते ॥ २६ ॥
यस्य वातः प्रकुपितो गुल्मस्थानेऽवतिष्ठते ।
शोथं सशूलं जनयन् गुल्मस्तस्योपजायते ॥ २७ ॥
यस्य वातः प्रकुपितः शोथशूलकरश्चरन् ।

वङ्क्षणाद्वृषणौ याति वृद्धिस्तस्योपजायते ॥२८॥
यस्य वातः प्रकुपितस्त्वङ्मांसान्तरमाश्रितः।
शोथं संजनयेत् कुक्षावुदरं तस्य जायते ॥ २९ ॥
यस्य वातः प्रकुपितः कुक्षिमावाय्य तिष्ठति।
नाधो व्रजति नाप्यूर्द्ध्वमानाहस्तस्य जायते ॥ ३० ॥
रोगाश्चोत्सेधसामान्यादधिमांसार्व्वुदादयः।
विशिष्टा नामरूपाभ्यां निर्द्देश्याः शोथसंग्रहे ॥ ३१ ॥
वातपित्तकफा यस्य युगपत्कुपितास्त्रयः।
जिह्वामूलेऽवतिष्ठन्ते विदहन्तः समुच्छ्रिताः॥
जनयन्ति भृशं शोथं वेदनाश्च पृथग्विधाः।
तं शीघ्रकारिणं रोगं रोहिणीति विनिर्द्दिशेत् ॥
त्रिरात्रं परमन्त्वास्य जन्तोर्भवति जीवितम्।
कुशलेन त्वनुक्रान्तः क्षिप्रं सम्पद्यते सुखी ॥ ३२ ॥
सन्ति चैवंविधा रोगाः साध्या दारुणसम्मताः।
ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः ॥ ३३ ॥
साध्याश्चैवापरे सन्ति व्याधयो मृदुसम्मताः।
यत्नायत्नकृतं येषु कर्म्म सिध्यत्यसंशयम् ॥ ३४ ॥
असाध्याश्चापरे सन्ति व्याधयो याप्यसंज्ञिताः।
सुसाध्वपि कृतं येषु कर्म्म यात्राकरं भवेत् ॥ ३५ ॥
सन्ति चाप्यपरे रोगा येषु कर्म्म न सिध्यति।
अपि यत्नकृतं वैद्यैर्न तान् विद्वानुपाचरेत् ॥ ३६ ॥
साध्यास्त्वेवाप्यसाध्याश्च व्याधयो द्विविधाः स्मृताः।
मृदुदारुणभेदेन ते भवन्ति चतुर्व्विधाः ॥ ३७ ॥

त एवापरिसंख्येया भिद्यमाना भवन्ति हि।
रुजावर्णसमुत्थानस्थानसंस्थाननामभिः॥
व्यवस्थाकरणं तेषां यथास्थूलेषु संग्रहः।
तथा प्रकृतिसामान्यं विकारेषूपदिश्यते॥
विकारनामाकुशलो न जिह्रीयात् कदाचन।
नहि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥ ३८॥
स एव कुपितो दोषः समुत्थानविशेषतः।
स्थानान्तरगतश्चापि विकारान् कुरुते बहून्॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च।
समुत्थानविशेषांश्च बुद्धा कर्म्म समाचरेत्॥ ३९॥
यो ह्येतत् त्रिविधं ज्ञात्वा कर्म्माण्यारभते भिषक्।
ज्ञानपूर्व्वं यथान्यायं स कर्म्मसु न मुह्यति॥ ४०॥
नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥ ४१॥
उत्साहोच्छ्वासनिश्वासचेष्टा धातुगतिः समा।
समो मोक्षो गतिमतां वायोः कर्म्माविकारजम्॥ ४२॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णादेहमार्द्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्म्माविकारजम्॥ ४३॥
स्नेहो बन्धः स्थिरत्वञ्च गौरवं वृषता बलम्।
क्षमाधृतिरलोभश्च कफकर्म्माविकारजम्॥ ४४॥
वाते पित्ते कफे चैव क्षीणे लक्षणमुच्यते।
कर्म्मणः प्रकृताद्धानिर्व्वृद्धिर्वापि विरोधिनाम्॥ ४५॥
दोषप्रकृतिवैशेष्यं नियतं वृद्धिलक्षणम्।

दोषाणां प्रकृतिर्हानिर्वृद्धिर्वापि परीक्ष्यते ॥ ४६ ॥

तत्र श्लोकाः ।

संख्यानिमित्तरूपाणि शोथानां साध्यता नच ।
तेषां तेषां विकाराणां शोथांस्तांस्तांश्च पूर्व्वजान् ॥
विधिभेदं विकाराणां त्रिविधं बोध्यसंग्रहम् ।
प्राकृतं कर्म्म दोषाणां लक्षणं हानिवृद्धिषु ॥
वीतमोहरजोदोषलोभमानमदस्पृहः ।
व्याख्यातवांस्त्रिशोथीये रोगाध्याये पुनर्व्वसुः ॥ ४७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अष्टादशस्त्रिशोथीयोऽध्यायः ॥ १८ ॥

---

ऊनविंशोऽध्यायः ।

अथातोऽष्टोदरीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

इह खल्वष्टावुदराणि, अष्टौ मूत्राघाताः, अष्टौ क्षीरदोषाः, अष्टौ रेतोदोषाः, सप्त कुष्ठानि, सप्त पिड़काः, सप्त विसर्पाः, षड़तीसाराः, षडुदावर्त्ताः, पञ्च गुल्माः, पञ्च प्लीहदोषाः, पञ्च कासाः, पञ्च श्वासाः, पञ्च हिक्काः, पञ्च तृष्णाः, पञ्च छर्द्दयः, पञ्च भक्तस्यानशनस्थानानि, पञ्च शिरोरोगाः, पञ्च हृद्रोगाः, पञ्च पाण्डुरोगाः, पञ्चोन्मादाः, चत्वारोऽपस्माराः, चत्वारोऽक्षिरोगाः, चत्वारः कर्णरोगाः, चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः,

चत्वारो मूर्च्छाः, चत्वारः शोषाः, चत्वारि क्लैब्यानि, त्रयः शोथाः, त्रीणि किलासानि, त्रिविधं लोहितपित्तं, द्वौ ज्वरौ, द्वौ व्रणौ, द्वावायामौ, द्वे गृध्रस्यौ, द्वे कामले, द्विविधमामं, द्विविधं वातरक्तं, द्विविधान्यर्शांसि। एक ऊरुस्तम्भः, एकः सन्न्यासः, एको महागदः, विंशतिः क्रिमिजातयः, विंशतिः प्रमेहाः, विंशतिर्योनिव्यापदः। इत्यष्टाचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे समुद्दिष्टानि। एतानि यथोद्देशमभिनिर्द्दिश्यन्ते ॥ २ ॥

अष्टावुदराणीति—वातपित्तकफसन्निपातप्लीहबद्धछिद्रोदकोदराणि। अष्टौ मूत्राघाता इति—वातपित्तकफसन्निपाताश्मरीशर्कराशुक्रशोणितजाः। अष्टौ क्षीरदोषा इति—वैवर्ण्यं वैगन्ध्यं वैरस्यं पैच्छिल्यं फेनसंघातं रौक्ष्यं गौरवमतिस्नेहश्च। अष्टौ रेतोदोषा इति—तनु शुष्कं फेनिलमश्वेतं पूत्यतिपिच्छिलमन्यधातूपहितमवसादि च ॥ ३ ॥

सप्त कुष्ठानीति—कापालौडुम्बरमण्डलर्ष्यजिह्वपुण्डरीकसिध्मकाकणानि। सप्त पिडका इति—शराविकाकच्छपिकाजालिनी सर्षप्यलजी विनता विद्रधी च। सप्त विसर्पा इति—वातपित्तकफाग्निकर्द्दमकग्रन्थिसन्निपाताख्याः ॥ ४ ॥

षडतीसारा इति—वातपित्तकफसन्निपातभयशोकजाः। षडुदावर्त्ता इति—वातमूत्रपुरीषशुक्रच्छर्द्दिक्षवथुजाः ॥ ५ ॥

पञ्च गुल्मा इति—वातपित्तकफसन्निपातरक्तजाः। पञ्च प्लीहदोषा इति—गुल्मैर्व्याख्याताः। पञ्च कासा इति—वातपित्तकफक्षतक्षयजाः। पञ्च श्वासा इति—महोर्द्धच्छिन्नतमकक्षुद्राः। पञ्च हिक्का इति—महती गम्भीरा व्यपेता-

क्षुद्रा चान्नजाच । पञ्च तृष्णा इति—वातपित्तामक्षयोपसर्गात्मिकाः । पञ्च छर्द्दय इति—द्विष्टान्नसंयोगजा वातपित्तकफसन्निपातोद्रेकात्मिकाश्च । पञ्च भक्तस्यानशनस्थानानीति—वातपित्तकफद्वेषायासाः । पञ्च शिरोरोगा इति—पूर्व्वोद्देशमभिसमस्य वातपित्तकफसन्निपातक्रिमिजाः । पञ्च हृद्रोगा इति शिरोरोगैर्व्याख्याताः । पञ्च पाण्डुरोगा इति—वातपित्तकफसन्निपातमृज्जाः । पञ्चोन्मादा इति—वातपित्तकफसन्निपातागन्तुनिमित्ताः ॥ ६ ॥

चत्वारोऽपस्मारा इति—वातपित्तकफसन्निपातनिमित्ताः । चत्वारोऽक्षिरोगाः, चत्वारः कर्णरोगाः, चत्वारः प्रतिश्यायाः, चत्वारो मुखरोगाः, चत्वारो ग्रहणीदोषाः, चत्वारो मदाः, चत्वारो मूर्च्छा इति अपस्मारैर्व्याख्याताः । चत्वारः शोषा इति साहससन्धारणक्षयविषमाशनजाः । चत्वारि क्लैव्यानीति—बीजोपघाताद् ध्वजभङ्गाज्जरायाः शुक्रक्षयाच्च ॥ ७ ॥

त्रयः शोथा इति—वातपित्तकफनिमित्ताः । त्रीणि किलासानीति—रक्तताम्रशुक्लानि । त्रिविधं लोहितपित्तमिति—ऊर्द्ध्वभागमधोभागमुभयभागञ्च ॥ ८ ॥

द्वौ ज्वराविति—उष्णाभिप्रायः शीतसमुत्थः शीताभिप्रायश्चोष्णसमुत्थः । द्वौ व्रणाविति—निजश्चागन्तुजश्च । द्वावायामाविति—बाह्यश्चाभ्यन्तरश्च । द्वे गृध्रस्याविति—वाताद्वातकफाच्च । द्वे कामले इति—कोष्ठाश्रया शाखाश्रयाच । द्विविधमाममिति अलसको विसूचिका च । द्विविधं वातरक्तमिति गम्भीरमुत्तानञ्च । द्विविधान्यर्शांसीति—आर्द्राणि शुष्काणि च ॥ ६ ॥

एक ऊरुस्तम्भ इति—आमत्रिदोषसमुत्थः। एकः सन्न्यास इति—त्रिदोषात्मको मनःशरीराधिष्ठानः। एको महागद इति अतत्त्वाभिनिवेशः॥ १०॥

विंशतिः क्रिमिजातय इति—यूकाः पिपीलिकाश्चेति द्विविधा बहिर्मलजाः। केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति षट् शोणितजाः, अन्त्रादा उदरादा हृदयादाश्चुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति सप्त कफजाः, ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति पञ्च पुरीषजाः॥ ११॥

विंशतिः प्रमेहा इति—उदकमेहश्चेक्षुवालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च शनैर्मेहश्च सिकतामेहश्च लालामेहश्चेति दश श्लेष्मनिमित्ताः। क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च मञ्जिष्ठामेहश्च हरिद्रामेहश्चेति षट् पित्तनिमित्ताः। वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति चत्वारो वातनिमित्ता इति विंशतिप्रमेहाः॥ १२॥

विंशतिर्योनिव्यापद इति वातिकी पैत्तिकी श्लैष्मिकी सान्निपातिकी चेति चतस्रो दोषजाः, दुष्यसंसर्गप्रकृतिनिर्देशैरवशिष्टाः षोड़श निर्दिश्यन्ते। तद्यथा—रक्तयोनिश्चारजस्का चाचरणा चातिचरणा च प्राक्चरणा चोपप्लुता च परिप्लुता चोदावर्त्तिनी च कर्णिनी च पुत्रघ्नी चान्तर्मुखी च सूचीमुखी च शुष्का च वामिनी च षण्डयोनिश्च महायोनिश्चेति विंशतिर्योनिव्यापदो भवन्ति, इति केवलश्चायमुद्देशो यथोद्देशमभिनिर्दिष्टो भवति॥ १३

सर्व्वे एव निजा विकारा नान्यत्र वातपित्तकफेभ्योऽतिनिवर्त्तन्ते। यथा हि शकुनिः सर्व्वां दिश अपि परिपतन् स्वां छायां नातिवर्त्तते। तथा स्वधातुवैषम्यनिमित्ताः सर्व्वे विकाराः वातपित्तकफान् नातिवर्त्तन्ते, वातपित्तश्लेष्मणान्तु खलु स्थानसंस्थानप्रकृतिविशेषानभिसमीक्ष्य तदात्मकानपि च सर्व्वविकारांस्तांस्तानेवोपदिशन्ति बुद्धिमन्तः॥ १४॥

भवतश्चात्र।

स्वधातुवैषम्यनिमित्तजा ये विकारसंघा बहवः शरीरे।
न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्त्वेव ततो विशिष्टाः॥
आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमतिप्रवृद्धः।
तत्रानुबन्धं प्रकृतिञ्च सम्यक् ज्ञात्वा ततः कर्म्म समारभेत॥१५

तत्र श्लोकौ।

विंशकांश्चैककांश्चैव त्रिकांश्चोक्तांस्त्रयस्त्रयः।
द्विकांश्चाष्टौ चतुष्कांश्च दशद्वादशपञ्चकाः॥
चत्वारश्चाष्टका वर्गाः षट्कौ द्वौ सप्तकास्त्रयः।
अष्टोदरीये रोगाणामध्याये संप्रकाशिताः॥ १६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अष्टोदरीयो नाम ऊनविंशोऽध्यायः॥ १९॥

अथातो महारोगाध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

चत्वारो रोगा भवन्त्यागन्तुवातपित्तश्लेष्मनिमित्ताः। तेषां चतुर्णामपिच रोगाणां रोगत्वमेकविधं भवति रुक्सामान्यात्। द्विविधा प्रकृतिरेषामागन्तुनिजविभागात्। द्विविधञ्चैषामधिष्ठानं मनःशरीरविशेषात्। विकाराः पुनरपरिसंख्येयाः प्रकृत्यधिष्ठानलिङ्गायतनविकल्पानामपरिसंख्येयत्वात् ॥ २ ॥

मुखानि तु खल्वागन्तोर्नखदशनपतनाभिघाताभिषङ्गाभिचाराभिशापबंधबन्धनव्यधनवेष्टनपीड़नरज्जुदहनशस्त्राशनिभूतोपसर्गादीनि। निजस्य तु खलु मुखं वातपित्तश्लेष्मकं वैषम्यं ॥ ३ ॥

द्वयोस्तु खल्वागन्तुनिजयोः प्रेरणमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति। सर्व्वेऽपि खल्वेते प्रवृद्धाश्चत्वारो रोगाः परस्परमनुबध्नन्ति नचान्योन्येन सह सन्देहमापद्यन्ते॥४

आगन्तुर्हि व्यथापूर्व्वमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति। निजे तु वातपित्तश्लेष्माणः पूर्व्वं वैषम्यमापद्यन्ते जघन्यं व्यथामभिनिर्वर्त्तयन्ति ॥ ५ ॥

तेषां त्रयाणामपि दोषाणां शरीरे स्थानविभागमनुव्याख्यास्यामः। तद्यथा—वस्तिः पुरीषाधानं कटी सक्थिनी पादावस्थीनि वातस्थानानि, तत्रापि पक्वाशयो विशेषेण वातस्थानम्। स्वेदो रसो लसिका रुधिरमामाशयश्चेति पित्तस्थानानि, तत्राप्यामाशयो विशेषेण पित्तस्थानम्। उरः

शिरो ग्रीवा पर्व्वाण्यामाशयो मेदश्च श्लेष्मणः स्थानानि, तत्रापि उरो विशेषेण श्लेष्मणः स्थानम् ॥ ६ ॥

सर्व्वशरीरचरास्तु खलु वातपित्तश्लेष्माणः सर्व्वस्मिन् शरीरे कुपिताकुपिताः शुभाशुभानि कुर्व्वन्ति । प्रकृतिभूतानि शुभानुपचयबलवर्णप्रसादादीन्यशुभानि पुनर्विकृतिमापन्नानि विकारसंज्ञकानि । तत्र विकाराः सामान्यजा नानात्मजाश्च तत्र सामान्यजाः पूर्व्वमष्टोदरीये व्याख्याताः । नानात्मजांस्त्विहाध्यायेऽनुव्याख्यास्यामः ॥ ७ ॥

तद्यथा—अशीतिर्वातविकाराः, चत्वारिंशत् पित्तविकाराः, विंशतिः श्लेष्मविकाराश्च, तत्रादित एव वातविकाराननुव्याख्यास्यामः ॥ ८ ॥

तद्यथा—नखभेदश्च विपादिका च पादशूलञ्च पादभ्रंशश्च पादसुप्तता च वातखुड्डता च गुल्फग्रहश्च पिण्डिकोद्वेष्टनञ्च गृध्रसी च जानुभेदश्च जानुविश्लेषश्चोरुस्तम्भश्चोरुसादश्च पाङ्गुल्यञ्च गुदभ्रंशश्च गुदार्त्तिश्च वृषणोत्क्षेपश्च शेफःस्तम्भश्च वङ्क्षणानाहश्च विड्भेदश्च श्रोणिभेदश्चोदावर्त्तश्च खञ्जत्वञ्च वामनत्वञ्च त्रिकग्रहश्च पृष्ठग्रहश्च पार्श्वावमर्द्दश्चोदरावेष्टश्चोन्मादश्च हृद्द्रवश्च वक्षोघर्षश्च वक्षउपरोधश्च वक्षस्तोदश्च बाहुशोषश्च ग्रीवास्तम्भश्च मन्यास्तम्भश्च कण्ठोद्ध्वंसश्च हनुभेदश्चौष्ठभेदश्चाक्षिभेदश्च दन्तभेदश्च दन्तशैथिल्यञ्च मूकत्वञ्च गद्गदत्वञ्च वाक्सङ्गश्च कषायास्यता च मुखशोषश्चारसज्ञता च कर्णशूलञ्च शब्दाश्रवणञ्चोच्चैःश्रवणञ्च बाधिर्य्यञ्च वर्त्मस्तम्भश्च वर्त्मसङ्कोचश्च तिमिरञ्चाक्षिशूलञ्चाक्षिव्यु-

द्दासश्च भ्रू व्युद्दासश्च शङ्खभेदश्च ललाटभेदश्च शिरोरुक् च केश-
भूमिस्फुटनञ्च अर्द्दितञ्चैकाङ्गरोगश्च सर्व्वाङ्गरोगश्चाक्षेपकश्च
दण्डकश्च तमश्च भ्रमश्च वेपथुश्च जृम्भा च हिक्का च विषादश्च
प्रलापश्च ग्लानिश्च रौक्ष्यञ्च पारुष्यञ्च श्यावारुणावभासता
चास्वप्नश्चानवस्थितचित्तत्वञ्च इत्यशीतिर्वातविकारा वातविका-
राणामपरिसंख्येयानामाविष्कृततमा एव व्याख्याताः। सर्व्वे-
ष्वपि खल्वेतेषु वातविकारेषूक्तेष्वनुक्तेषु चानेयेषु वायोरिद-
मात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणं यदुपलभ्य तत्तदवयवं
वा विमुक्तसन्देहा वातविकारमेवाध्यवस्यन्ति कुशलाः॥ ९॥

तद्यथा—रौक्ष्यं, शैत्यं लाघवं वैशद्यं गतिरमूर्त्तित्वञ्च
वायोरात्मरूपाणि। एवम्विधत्वाच्च वायोः कर्म्मणः स्वलक्षण-
मिदमस्य भवति तं तं शरीरावयवमाविशतः। संसभ्रंशव्यासङ्ग-
भेदहर्षतर्षकम्पावमर्द्दचालतोदव्यथाचेष्टादीनि तथा खरपरुष-
विशदशुषिरारुणकषायविरसमुखशोषसुप्तिसङ्कोचनखञ्जतादीनि
च वायोः कर्म्माणि, तैरन्वितं वातविकारमेवाध्यवस्येत्॥ १०॥

तं मधुराम्ललवणस्निग्धोष्णैरुपक्रमैरुपक्रमेत। स्नेह-
स्वेदास्थापनानुवासननस्तः-कर्म्मभोजनाभ्यङ्गोत्सादनपरिषेका-
दिभिर्वातहरैर्मात्रां कालञ्च प्रमाणीकृत्य। तत्रास्थापनानुवास-
नन्तु खलु सर्व्वोपक्रमेभ्यो वाते प्रधानतमं मन्यन्ते भिषजः॥११

तद्ध्यादित एव पक्वाशयमनुप्रविश्य केवलं वैकारिकं वात-
मूलं छिनत्ति, तत्रावजिते वाते शरीरान्तर्गतवातविकाराः
प्रशान्तिमापद्यन्ते। यथा वनस्पतेर्मूले छिन्ने स्कन्धशाखावरोह-
कुसुमफलपलाशादीनां नियतो विनाशस्तद्वत्॥ १२॥

पित्तविकारांश्चत्वारिंशदत ऊर्द्ध्वमनुव्याख्यास्यामः । तद्-यथा—ओषश्च प्लोषश्च दाहश्च दवथुश्च धूमकश्चाम्लकश्च विदाहश्चान्तर्दाहश्चांसदाह-श्चोष्माधिक्यञ्चातिस्वेदश्चाङ्गगन्धश्चा-ङ्गावदरणञ्च शोणितक्लेदश्च मांसक्लेदश्च त्वग्दाहश्च त्वगवदर-णञ्च चर्म्मदलनञ्च रक्तकोठश्च रक्तविस्फोटश्च रक्तमण्डलञ्च रक्तपित्तञ्च हरितत्वञ्च हारिद्रत्वञ्च नीलिका च कक्षा च कामला च तिक्तास्यता च लोहितगन्धास्यता च पूतिमुखता च तृष्णाधिक्यञ्चातृप्तिश्चास्यपाकश्च गलपाकश्च अक्षिपाकश्च गुदपाकश्च मेढ्रपाकश्च जीवादानञ्च तमःप्रवेशश्च हरितहारिद्र-नेत्रमूत्रवर्चस्त्वञ्च । इति चत्वारिंशत् पित्तविकाराः पित्त-विकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः ॥ १३ ॥

सर्व्वेष्वपितु खल्वेतेषु पित्तविकारेषूक्तेष्वनुक्तेषु चानेशेषु पित्तस्येदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणं यदुपलभ्य तत्तदवयवं वा विमुक्तसन्देहाः पित्तविकारमेवाध्यवस्यन्ति कुशलाः ॥ १४ ॥

तद्यथा—औष्ण्यं तैक्ष्ण्यं द्रवमनतिस्नेहो वर्णश्चाशुक्लो गन्धश्च विस्रो रसौ कटुकाम्लौ सरश्च पित्तस्यात्मरूपाणि । एव-म्विधत्वाच्च कर्म्मणः स्वलक्षणमिदमेतस्य भवति तं तं शरीरा-वयवमाविशतः । दाहौष्ण्यपाकस्वेदक्लेदकोथस्रावरागाः यथास्व-गन्धवर्णरसादिनिर्वर्त्तनं पित्तकर्म्माणि तैरन्वितं पित्तविकार-मेवाध्यवसेयत् ॥ १५ ॥

तं मधुरतिक्तकषायशीतैरुपक्रमैरुपक्रमेत स्नेहविरेक-प्रदेहपरिषेकाभ्यङ्गावगाहादिभिः पित्तहरैर्मात्रां कालञ्च प्रमा-

णीकृत्य, विरेचनन्तु सर्व्वोपक्रमेभ्यः पित्ते प्रधानतमं मन्यन्ते भिषजः ॥ १६ ॥

तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं पित्तमूलमपकर्षति। तत्रावजिते पित्ते शरीरान्तर्गतपित्तविकाराः प्रशान्तिमापद्यन्ते। यथाग्नौ व्यपगते केवलमग्निगृहं शीतीभवति तद्वत् ॥ १७ ॥

श्लेष्मविकारान् विंशतिमत ऊर्द्धं व्याख्यास्यामस्तद्यथा तृप्तिश्च तन्द्रा च निद्राधिक्यञ्च स्तैमित्यञ्च गुरुगात्रताचालस्यञ्च मुखस्रावश्च मुखमाधुर्य्यञ्च श्लेष्मोद्गिरणञ्च बलनाशश्चापक्तिश्च हृदयोपलेपश्च कण्ठोपलेपश्च धमनीप्रतिचयश्च गलगण्डश्चातिस्थौल्यञ्च शीताग्निता चोदर्दश्च श्वेतावभासता च श्वेतमेत्रमूत्रवर्चस्त्वञ्च। इति विंशतिः श्लेष्मविकाराः श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याता भवन्ति ॥ १८ ॥

सर्व्वेष्वपि तु खल्वेतेषूक्तेषु श्लेष्मविकारेषु चाप्यनुक्तेषु श्लेष्मण इदमात्मरूपमपरिणामि कर्म्मणश्च स्वलक्षणं यदुपलभ्य तत्तदवयवं वा विशतो विमुक्तसन्देहाः श्लेष्मविकारमेवाध्यवस्यन्ति कुशलाः ॥ १९ ॥

तद्यथा—श्वैत्यशैत्यगौरवस्नेहमाधुर्य्य-स्थैर्य्यपैच्छिल्यमात्स्नानि श्लेष्मण आत्मरूपाणि। एवंविधत्वाच्च कर्म्मणः स्वलक्षणमिदमस्य भवति तं तं शरीरावयवमाविशतः। श्वैत्यशैत्यकण्डू स्थैर्य्योत्सेध-गौरवस्नेहसुप्तिक्लेदोपदेहबन्धमाधुर्य्यचिरकारित्वादीनि श्लेष्मणः कर्म्माणि तैरन्वितं श्लेष्मविकारमेवाध्यवस्येत् ॥ २० ॥

तं कटुतिक्तकषायतीक्ष्णोष्णरूक्षैरुपक्रमैरुपक्रमेत, स्वेद-वमनशिरोविरेचनव्यायामादिभिश्च श्लेष्महरैर्मात्रां कालञ्च प्रमाणीकृत्य । वमनन्तु सर्व्वोपक्रमेभ्यः श्लेष्मणि प्रधानतमं मन्यन्ते भिषजः ॥ २१ ॥

तद्ध्यादित एवामाशयमनुप्रविश्य केवलं वैकारिकं श्लेष्म-मूलमूर्द्ध्वमुत्क्षिपति । तत्रावजिते श्लेष्मणि शरीरान्तर्गताः श्लेष्मविकाराः प्रशान्तिमापद्यन्ते । यथा भिन्ने केदारसेतौ शालियवषष्टिकादीन्यनभिष्यन्दमानान्यम्भसा प्रशोषमापद्यन्ते तद्वदिति ॥ २२ ॥

भवन्ति चात्र ।

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत् ॥ २३ ॥
यस्तु रोगमविज्ञाय कर्म्माण्यारभते भिषक् ।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥ २४ ॥
यस्तु रोगविशेषज्ञः सर्व्वभैषज्यकोविदः ।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशयम् ॥ २५ ॥

तत्र श्लोकाः ।

संग्रहः प्रकृतिर्देशो विकारो मुखमीरणम् ।
असन्देहोऽनुबन्धश्च रोगाणां सम्प्रकाशितः ॥ २६ ॥
दोषस्थानानि रोगाणां गणा नानात्मजाश्च ये ।
रूपं पृथक् च दोषाणां कर्म्म चापरिणामि यत् ॥ २७

पृथक्त्वेन च दोषाणां निर्दिष्टाः समुपक्रमाः ।
सम्यङ्महति रोगाणामध्याये तत्त्वदर्शिना ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
विंशतितमो महारोगोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ।

अथातोऽष्टौ निन्दितीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

इह खलु शरीरमधिकृत्याष्टौ निन्दिताः पुरुषा भवन्ति । तद्यथा अतिदीर्घश्चातिह्रस्वश्चातिलोमा चालोमा चातिगौरश्चातिकृष्णश्चातिस्थूलश्चातिकृशश्चेति ॥ २ ॥

तत्रातिस्थूलातिकृशयोर्भूय एवापरे निन्दितविशेषा भवन्ति । अतिस्थूलस्य तावदायुषो ह्रासो जरोपरोधः कृच्छ्रव्यवायता दौर्बल्यं दौर्गन्ध्यं स्वेदाबाधः क्षुदतिमात्रं पिपासातियोगश्चेति भवन्त्यष्टौ दोषाः, तदिदमतिस्थौल्यमतिसंपूरणाद्गुरुमधुरशीतस्निग्धोपयोगादव्यायामादव्यवायाद्दिवास्वप्नाद्धर्षनित्यत्वादचिन्तनाद् बीजस्वभावाच्चोपजायते ॥ ३ ॥

तस्य ह्यतिमात्रमेदस्विनो मेद एवोपचीयते न तथेतरे धातवस्तस्मादस्यायुषो ह्रासः । शैथिल्यात् सौकुमार्याद् गुरुत्वाच्च मेदसो जरोपरोधः । शुक्राल्पत्वान्मेदसावृतमार्गत्वाच्चास्य कृच्छ्रव्यवायता । दौर्बल्यमसमत्वाद्धातूनां । दौर्गन्ध्यन्तु मेदोदोषान्मेदसः स्वभावात् स्वेदनाच्च । मेदसः

श्लेष्मसंसर्गाद्विष्यन्दित्वाद् बहुत्वाद् व्यायामासहत्वाद् स्वेदाबाधः। तीक्ष्णाग्नित्वात् प्रभूतवायुत्वाच्च क्षुदतिमात्रं पिपासातियोगश्चेति ॥ ४ ॥

भवन्ति चात्र ।

मेदसावृतमार्गत्वाद् वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥
तस्मात् स शीघ्रं जरयत्याहारञ्चापि काङ्क्षति ।
विकारांश्चाश्नुते घोरान् कांश्चित् कालव्यतिक्रमात् ॥ ५ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ ।
एतौ हि दहतः स्थूलं वनदावो वनं यथा ॥ ६ ॥
मेदस्यतीवसंवृद्धे सहसैवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ७ ॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ८ ॥
इति मेदस्विनो दोषा हेतवो रूपमेवच ।
निर्द्दिष्टं वक्ष्यते वाच्यमतिकार्श्ये त्वतः परम् ॥ ९ ॥
सेवा रूक्षान्नपानानां लङ्घनं प्रमिताशनम्
क्रियातियोगः शोकश्च निद्रावेगविनिग्रहः ।
रूक्षस्योद्वर्त्तनस्नानस्याभ्यासः प्रकृतिर्जरा ।
विकारानुशयः क्रोधः कुर्व्वन्त्यतिकृशं नरम् ॥ १० ॥
व्यायाममतिसौहित्यं क्षुत्पिपासामयौषधम् ।
कृशो न सहते तद्वदतिशीतोष्णमैथुनम् ॥
प्लीहा कासः क्षयः श्वासो गुल्मार्शांस्युदराणि च ।

कृशं प्रायोऽभिधावन्ति रोगाश्च ग्रहणीगताः ॥ ११ ॥
शुष्कस्फिगुदरग्रीवो धमनीजालसंततः ।
त्वगस्थिशेषोऽतिकृशः स्थूलपर्व्वा नरो मतः ॥ १२ ॥
सततं व्याधितावेतावतिस्थूलकृशौ नरौ ।
सततं चोपचर्य्यौ हि कर्षणैर्बृंहणैरपि ॥ १३ ॥
स्थौल्यकार्श्ये वरं कार्श्यं समोपकरणौ हि तौ ।
यदुभौ व्याधिरागच्छेत् स्थूलमेवातिपीड़येत् ॥ १४ ॥
सममांसप्रमाणस्तु समसंहननो नरः ।
दृढ़ेन्द्रियो विकाराणां न बलेनाभिभूयते ॥ १५ ॥
क्षुत्पिपासातपसहः शीतव्यायामसंसहः ।
समपक्ता समजरः सममांसचयो मतः ॥ १६ ॥
गुरु चातर्पणञ्चेष्टं स्थूलानां कर्षणं प्रति ।
कृशानां बृंहणार्थन्तु लघुसन्तर्पणन्तु यत् ॥ १७ ॥
वातघ्नान्यन्नपानानि श्लेष्ममेदोहराणि च ।
रुक्षोष्णा वस्तयस्तीक्ष्णा रुक्षाणुद्वर्त्तनानि च ॥
गुड़ूचीभद्रमुस्तानां प्रयोगस्त्रैफलस्तथा ।
तक्रारिष्टप्रयोगश्च प्रयोगो माक्षिकस्य च ॥
विड़ङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णञ्च प्रयोगः श्रेष्ठ उच्यते ॥
बिल्वादिपञ्चमूलस्य प्रयोगः क्षौद्रसंयुतः ।
शिलाजतुप्रयोगश्च साग्निमन्थरसः परः ॥
प्रसातिका प्रियङ्गुश्च श्यामाका यवका यवाः ।
जूर्णाह्वाः कोद्रवा मुद्गाः कुलत्थाश्च मुकुष्ठकाः ॥

आढकीनाञ्च बीजानि पटोलामलकैः सह ।
भोजनार्थं प्रयोज्यानि पानञ्चानु मधूदकम् ॥
अरिष्टांश्चानुपानार्थे मेदोमांसकफापहान् ।
अतिस्थौल्यविनाशाय प्रविभज्य प्रयोजयेत् ॥ १८ ॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणाभिप्रवर्द्धयेत्॥
स्वप्नो हर्षः सुखा शय्या मनसो निर्वृतिः शमः ।
चिन्ताव्यवायव्यायामविरतिः संप्रहर्षणम् ॥
नवान्नानि नवं मद्यं ग्राम्यानूपौदका रसाः ।
संस्कृतानि च मांसानि दधि सर्पिः पयांसि च ॥
इक्षवः शालयो माषा गोधूमा गुड़वैकृतम् ।
बस्तयः स्निग्धमधुरास्तैलाभ्यङ्गश्च सर्व्वदा ॥
स्निग्धमुद्वर्त्तनं स्नानगन्धमाल्यनिषेवणम् ।
शुक्लं वासो यथाकालं दोषाणामवसेचनम् ॥
रसायनानां वृष्याणां योगानाञ्चोपसेवनम् ।
हत्वातिकार्श्यमाधत्ते नृणामुपचयं परम् ॥ १९ ॥
अचिन्तनाच्च कार्य्याणां ध्रुवं सन्तर्पणेन च ।
स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति ॥ २० ॥
यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः ।
विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः ॥ २१ ॥
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ।
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ २२ ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ।

सुखायुषी नवा कुर्य्यात् कालरात्रिरिवागता ॥
सैव युक्ता पुनर्युङ्क्ते निद्रा देहसुखैरायुषा।
पुरुषं योगिनं सिद्ध्या सत्या बुद्धिरिवागता ॥ २३ ॥
गीताध्ययनमद्यस्त्रीकर्म्मभाराध्वकर्षिताः।
अजीर्णिनः क्षताः क्षीणा वृद्धा बालास्तथाऽबलाः ॥
तृष्णातीसारशूलार्त्ताः श्वासिनो हिक्किनो कृशाः।
पतिताभिहतोन्मत्ताः श्रान्ता यानप्रजागरैः ॥
क्रोधशोकभयक्लान्ता दिवास्वप्नोचिताश्च ये।
सर्व्व एते दिवास्वप्नं सेवेरन् सार्व्वकालिकम् ॥
धातुसाम्यं तथा ह्येषां बलञ्चाप्युपजायते
श्लेष्मा पुष्णाति चाङ्गानि स्थैर्य्यं भवति चायुषः ॥ २४ ॥
ग्रीष्मे त्वादानरूक्षाणां वर्द्धमाने च भास्करे।
रात्रीणां चातिसंक्षेपाद् दिवास्वप्नः प्रशस्यते ॥ २५ ॥
ग्रीष्मवर्ज्जेषु कालेषु दिवास्वप्नात् प्रकुप्यतः।
श्लेष्मपित्ते दिवास्वप्नस्तस्मादन्येषु नेष्यते ॥
मेदस्विनः स्नेहनित्याः श्लेष्मलाः श्लेष्मरोगिणः।
दूषीविषार्त्ताश्च दिवा न शयीरन् कदाचन ॥ २६ ॥
हलीमकं शिरःशूलं स्तैमित्यं गुरुगात्रता।
अङ्गमर्द्दोऽग्निनाशश्च प्रलेपो हृदयस्य च ॥
शोफारोचकहृल्लासपीनसार्द्धावभेदकाः।
कोठारुःपिड़काः कण्डूस्तन्द्रा कासो गलामयः ॥
स्मृतिबुद्धिप्रमोहश्च संरोधः स्रोतसां ज्वरः।
इन्द्रियाणामसामर्थ्यं विषवेगप्रवर्त्तनम् ॥

भवेन्नृणां दिवास्वप्नस्याहितस्य निषेवणात् ।
तस्माद्धिताहितं स्वप्नं बुद्ध्वा सुप्यात् सुखं बुधः ॥ २७ ॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ।
अरूक्षमनभिष्यन्दि त्वासीनंप्रचलायितम् ॥ २८ ॥
देहवृत्तौ यथाहारस्तथा स्वप्नः समो मतः ।
स्वप्नाहारसमुत्थे तु स्थौल्यकार्श्ये विशेषतः ॥ २९ ॥
अभ्यङ्गोत्सादनं स्नानं ग्राम्यानूपौदका रसाः ।
शाल्यन्नं सदधि क्षीरं स्नेहो मद्यं मनःसुखम् ॥
मनसोऽनुगुणा गन्धाः शब्दाः सम्वाहनानि च ।
चक्षुषोस्तर्पणं लेपः शिरसो वदनस्य च ॥
स्वास्तीर्णं शयनं वेश्मसुखं कालस्तथोचितः ।
आनयन्त्यचिरान्निद्रां प्रणष्टा या निमित्ततः ॥ ३०
कायस्य शिरसश्चैव विरेकश्छर्द्दनं भयम् ।
चिन्ता क्रोधस्तथा धूमो व्यायामो रक्तमोक्षणम् ॥
उपवासः सुखा शय्या सत्त्वौदार्य्यं तमोजयः ।
निद्राप्रसङ्गमहितं वारयन्ति समुत्थितम् ॥
एत एवच विज्ञेया निद्रानाशस्य हेतवः ।
कार्य्यं कालो विकारश्च प्रकृतिर्वायुरेव च ॥ ३१ ॥
तमोभवा श्लेष्मसमुद्भवा च मनःशरीरश्रमसम्भवा च ।
आगन्तुकी व्याध्यनुवर्त्तिनी च रात्रिस्वभावप्रभवा च निद्रा ॥
रात्रिस्वभावप्रभवा मता या, तां भूतधात्रीं प्रवदन्ति निद्राम् ।
तमोभवामाहुरघस्य मूलं शेषाः पुनर्व्याधिषु निर्दिशन्ति ॥ ३२ ॥

तत्र श्लोकाः।

निन्दिताः पुरुषास्तेषां यौ विशेषेण निन्दितौ।
निन्दिते कारणं दोषास्तयोर्निन्दितभेषजम्॥
येभ्यो यदा हिता निद्रा येभ्यश्चाप्यहिता यदा।
अतिनिद्रानिद्रयोश्च भेषजं यद्भवाय च॥
या या यथायत्प्रभावा निद्रा तत् सर्व्वमत्रिजः।
अष्टौ निन्दितसंख्याते व्याजहार पुनर्व्वसुः॥ ३३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
एकविंशतितमोऽष्टौनिन्दितीयोऽध्यायः॥ २१॥

## द्वाविंशोऽध्यायः।

अथातो लङ्घनवृंहणीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः॥ १॥

तपःस्वाध्यायनिरतानात्रेयः शिष्यसत्तमान्।
षडग्निवेशप्रमुखानुक्तवान् परिचोदयन्॥
लङ्घनं वृंहणं काले रूक्षणं स्नेहनन्तथा।
स्वेदनं स्तम्भनञ्चैव जानीयात् स भवेत् भिषक्॥ २
तमुक्तवन्तमात्रेयमग्निवेश उवाच ह।
भगवन् लङ्घनं किन्तत् लङ्घनीयाश्च कीदृशाः॥
वृंहणं वृंहणीयाश्च रूक्षणीयाश्च रूक्षणम्।
के स्नेहाः स्नेहनीयाश्च स्वेदाः स्वेद्यांश्च के मताः॥

स्तम्भनं स्तम्भनीयाश्च वक्तुमर्हसि तद्गुरो ।
लङ्घनप्रभृतीनाञ्च षण्णामेषां समासतः ॥
कृताकृतातिवृत्तानां लक्षणं वक्तुमर्हसि ॥ ३ ॥
तदग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।
यत् किञ्चिल्लाघवकरं देहे तल्लङ्घनं स्मृतम् ॥
बृंहत्वं यच्छरीरस्य जनयेत्तच्च बृंहणम् ।
रौक्ष्यं खरत्वं वैशद्यं यत् कुर्य्यात्तद् विरूक्षणम् ॥
स्नेहनं स्नेहविष्यन्दमार्द्दवक्लेदकृन्मतम् ।
स्तम्भगौरवशीतघ्नं स्वेदनं स्वेदकारकम् ।
स्तम्भनं स्तम्भयति यद् गतिमन्तं चलं द्रवम् ॥ ४ ॥
लघुसुतीक्ष्णविशदं रूक्षं सूक्ष्मं सरं खरम् ।
कठिनञ्चैव यद्द्रव्यं प्रायस्तल्लङ्घनं स्मृतम् ॥ ५ ॥
गुरु शीतं मृदु स्निग्धं बहलं स्थूलपिच्छिलम् ।
प्रायो मन्दं स्थिरं श्लक्ष्णं द्रव्यं बृंहणमुच्यते ॥ ६ ॥
रूक्षं लघु खरं तीक्ष्णमुष्णं स्थिरमपिच्छिलम् ।
प्रायशः कठिनञ्चैव यद्द्रव्यं तद्विरूक्षणम् ॥ ७ ॥
द्रवं स्निग्धं सरं स्थूलं पिच्छिलं गुरुशीतलम् ।
प्रायो मन्दं मृदु च यद्द्रव्यं तत् स्नेहनं मतम् ॥ ८ ॥
उष्णं तीक्ष्णं सरं स्निग्धं रूक्षसूक्ष्मद्रवस्थिरम् ।
द्रव्यं गुरुच यत् प्रायस्तद्धि स्वेदनमुच्यते ॥ ९ ॥
शीतं मन्दं मृदु श्लक्ष्णं सूक्ष्मं रूक्षं द्रवं स्थिरम् ।
यद्द्रव्यं लघु चोद्दिष्टं प्रायस्तत् स्तम्भनं स्मृतम् ॥ १० ॥
चतुःप्रकारा संशुद्धिः पिपासामारुतातपैः ।

पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥ ११ ॥
प्रभूतश्लेष्मपित्तास्रमलाः संसृष्टमारुताः।
बृहच्छरीरा बलिनो लङ्घनीया विशुद्धिभिः ॥ १२ ॥
येषां मध्यबला रोगाः कफपित्तसमुत्थिताः।
छर्द्यतीसारहृद्रोगविसूच्यलसकज्वराः ॥
विबन्धगौरवोद्गारहृल्लासारोचकादयः।
पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत् ॥
एतएव यथोद्दिष्टा येषामल्पबला गदाः।
पिपासानिग्रहैस्तेषामुपवासैश्च तान् जयेत् ॥ १३ ॥
रोगान् जयेन्मध्यबलान् व्यायामातपमारुतैः।
बलिनां किं पुनर्येषां रोगाणामवरं बलम् ॥
त्वग्दोषिणां प्रमीढ़ाणां स्निग्धाभिष्यन्दिबृंहिणाम्।
शिशिरे लङ्घनं शस्तमपि वातविकारिणाम् ॥ १४ ॥
अदिग्धविद्धमक्लिष्टं वयःस्थं सात्म्यचारिणाम्।
मृगमत्स्यविहङ्गानां मांसं बृंहणमिष्यते ॥ १५ ॥
क्षीणाः क्षताः कृशा वृद्धा दुर्ब्बला नित्यमध्वगाः।
स्त्रीमद्यनित्या ग्रीष्मे च बृंहणीया नराः स्मृताः ॥
शोषार्शोग्रहणीदोषैर्व्याधिभिः कर्षिताश्च ये।
तेषां क्रव्यादमांसानां बृंहणा लघवो रसाः ॥
स्नानमुत्सादनं स्वप्नो मधुराः स्नेहवस्तयः।
शर्कराक्षीरसर्पींषि सर्व्वेषां विद्धि बृंहणम् ॥ १६ ॥
कटुतिक्तकषायाणां सेवनं स्त्रीष्वहर्षणम्।
खलिपिण्याकतक्राणां मध्वादीनाञ्च वचणम् ॥

अभिष्यन्दा महादोषा मर्म्मस्था व्याधयश्च ये ।
ऊरुस्तम्भप्रभृतयो रूक्षणीया निदर्शिताः ॥ १७ ॥
स्नेह्याः स्नेहयितव्याश्च स्वेद्याः स्वेद्याश्च ये नराः ।
स्नेहाध्याये मयोक्तास्ते स्वेदाख्ये च सविस्तरम् ॥ १८ ॥
द्रवं तनु सरं यावच्छीतीकरणमौषधम् ।
स्वादुतिक्तकषायञ्च स्तम्भनं सर्व्वमेव तत् ॥
पित्तक्षाराग्निदग्धा ये छर्द्यतीसारपीड़िताः ।
विषस्वेदातियोगार्त्ताः स्तम्भनीयास्तथापरे ॥ १९ ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ २० ॥
पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि ।
देहाग्निबलनाशश्च लङ्घनेऽतिकृते भवेत् ॥ २१ ॥
बलं पुष्ट्युपलम्भश्च कार्श्यदोषविवर्ज्जनम् ।
लक्षणं बृंहिते स्थौल्यमति चात्यर्थबृंहिते ॥ २२ ॥
कृतातिकृतचिह्नं यत् लङ्घिते तद्विरूक्षिते ।
स्तम्भितः स्याद् बले लब्धे यथोक्तैश्चामयैर्ज्जितैः ॥ २३ ॥
श्यावतास्तब्धगात्रत्वमुद्वेगो हनुसंग्रहः ।
हृद्वर्च्चोनिग्रहश्च स्यादतिस्तम्भितलक्षणम् ॥
लक्षणञ्चाकृतानां स्यात् षणामेषां समासतः ।

तद्दोषधानां व्याधीनामशमो वृद्धिरेव च ॥
इति षट् सर्व्वरोगाणां प्रोक्ताः सम्यगुपक्रमाः ।
साध्यानां साधने सिद्धा मात्राकालानुरोधिनः ॥ २४॥

भवति चात्र ।

दोषाणां बहुसंसर्गात् सङ्कीर्य्यन्तेऽप्युपक्रमाः ।
षट्त्वन्तु नातिवर्त्तन्ते त्रित्वं वातादयो यथा ॥

तत्र श्लोकः ।

इत्यस्मिन् लङ्घनाध्याये व्याख्याताः षडुपक्रमाः ।
यथाप्रश्नं भगवता चिकित्सायै प्रवर्त्तिताः ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
द्वाविंशतितमो लङ्घनबृंहणीयोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।

अथातः सन्तर्पणीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

सन्तर्पयति यः स्निग्धैर्मधुरैर्गुरुपिच्छिलैः ।
नवान्नैर्नवमद्यैश्च मांसैश्चानूपवारिजैः ॥
गोरसैर्गौडिकैश्चान्नैः पैष्टिकैश्चातिमात्रशः ।
चेष्टाद्वेषी दिवास्वप्नशय्यासनसुखे रतः ॥
रोगास्तस्योपजायन्ते सन्तर्पणनिमित्तजाः ।
प्रमेहपिड़काकोठकण्डूपाण्ड्वामयज्वराः ॥

कुष्ठान्यामप्रदोषाश्च मूत्रकृच्छ्रमरोचकः ।
तन्द्रा क्लैव्यमतिस्थौल्यमालस्यं गुरुगात्रता ॥
इन्द्रियस्रोतसां लेपो बुद्धेर्मोहः प्रमीलकः ।
शोथाश्चैवं विधाश्चान्ये शीघ्रमप्रतिकुर्व्वतः ॥ २ ॥
शस्तमुल्लेखनं तत्र विरेको रक्तमोक्षणम् ।
व्यायामश्चोपवासश्च धूमाश्च स्वेदनानि च ॥
सक्षौद्रश्चाभयाप्राशः प्रायो रूक्षान्नसेवनम् ।
चूर्णप्रदेहा ये प्रोक्ताः कण्डूकोठविनाशनाः ॥ ३ ॥
त्रिफलारग्वधं पाठा सप्तपर्णं सवत्सकम् ।
मुस्तनिम्बं समदनं जलेनोत्क्वथितं पिबेत् ॥
तेन मेहादयो यान्ति नाशमभ्यस्यतो ध्रुवम् ।
मात्राकालप्रयुक्तेन सन्तर्पणसमुत्थिताः ॥ ४ ॥
मुस्तमारग्वधं पाठा त्रिफला देवदारु च ।
श्वदंष्ट्रा खदिरो निम्बो हरिद्रा त्वक् च वत्सकात् ॥
रसमेषां यथादोषं प्रातः प्रातः पिबेन्नरः ।
सन्तर्पणकृतैः सर्व्वैर्व्याधिभिः संप्रमुच्यते ॥
एभिश्चोद्वर्त्तनोद्घर्षस्नानयोगोपयोजितैः ।
त्वग्दोषाः प्रशमं यान्ति तथा स्नेहोपसंहितैः ॥ ५ ॥
कुष्ठं गोमेदको हिङ्गु क्रौञ्चास्थि त्र्यूषणं वचा ।
वृषकौले श्वदंष्ट्रा च खराह्वा चाश्मभेदकः ॥
तक्रेण दधिमण्डेन बदराम्लरसेन वा ।
मूत्रकृच्छ्रं प्रमेहञ्च पीतमेतद् व्यपोहति ॥ ६ ॥
तक्राभयाप्रयोगैश्च त्रिफलायास्तथैव च ।

अरिष्टानां प्रयोगैश्च यान्ति मेहादयः क्षयम् ॥ ७ ॥
दूषणं त्रिफला क्षौद्रं क्रिमिघ्नमजमोदकः।
मन्थोऽयं शक्तवः सर्पिर्हितो लोहोदकाप्लुतः ॥ ८ ॥
व्योषं विडङ्गं शिग्रूणि त्रिफलं कटुरोहिणीम्।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिङ्गुकेवूकमूलानि यमानीधान्यचित्रकान्।
सौवर्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः।
सक्तूनां षोड़शगुणो भागः सन्तर्पणं पिवेत् ॥
प्रयोगादस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ॥
प्लीहा पाण्डामयः शोफो मूत्रकृच्छ्रमरोचकः।
हृद्रोगो राजयक्ष्माच कासः श्वासो गलग्रहः ॥
क्रिमयो ग्रहणीदोषा श्वैत्यं स्थौल्यमतीव च।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ९ ॥
व्यायामनित्यो जीर्णाशी यवगोधूमभोजनः।
सन्तर्पणकृतैर्दोषैः स्थौल्यं मुक्त्वा विमुच्यते ॥ १० ॥
उक्तं सन्तर्पणोत्थानामपतर्पणमौषधम्।
वक्ष्यन्ते सौषधाश्चोर्द्ध्वमपतर्पणजा गदाः ॥ ११ ॥
देहाग्निबलवर्णौजःशुक्रमांसपरिक्षयः।
ज्वरः कासानुबन्धश्च पार्श्वशूलमरोचकः ॥
श्रोत्रदौर्ब्बल्यमुन्मादः प्रलापो हृदयव्यथा।
विण्मूत्रसंग्रहः शूलं जङ्घोरुत्रिकसंश्रयम् ॥

पर्व्वास्थिसन्धिभेदश्च ये चान्ये वातजा गदाः ।
ऊरुस्तम्भादयः सर्व्वे जायन्ते तेऽपतर्पणात् ॥ १२ ॥
तेषां सन्तर्पणं तज्ज्ञैः पुनराख्यातमौषधम् ।
यत्तदर्थं समर्थं स्यादभ्यासे वा तदिष्यते ॥
सद्यः क्षीणो हि सद्यो वै तर्पणेनोपचीयते ।
नर्त्ते सन्तर्पणाभ्यासाच्चिरक्षीणस्तु पुष्यति ॥ १३ ॥
देहाग्निदोषभैषज्यमात्राकालानुवर्त्तिना ।
कार्य्यमत्वरमाणेन भेषजं चिरदुर्ब्बले ॥
हिता मांसरसास्तस्मै पयांसि च घृतानि च ।
स्नानानि वस्तयोऽभ्यङ्गास्तर्पणास्तर्पणाश्च ये ॥ १४ ॥
ज्वरकासप्रसक्तानां कृशानां मूत्रकृच्छ्रिणाम् ।
तृष्यतामूर्द्ध्ववातानां वक्ष्यन्ते तर्पणा हिताः ॥ १५ ॥
शर्क्करापिप्पलीतैलघृतक्षौद्रैः समांशिकैः ।
सक्तुद्विगुणितो वृष्यस्तेषां मन्थः प्रशस्यते ॥ १६ ॥
सक्तवो मदिरा क्षौद्रं शर्क्करा चेति तर्पणम् ।
पिबेत् मारुतविण्मूत्रकफपित्तानुलोमनम् ॥ १७ ॥
फाणितं सक्तवः सर्पिर्दधिमण्डोऽम्लकाञ्जिकम् ।
तर्पणं मूत्रकृच्छ्रघ्नमुदावर्त्तहरं पिबेत् ॥ १८ ॥
मन्थः खर्ज्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १९ ॥
स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव वा ।
सद्यः सन्तर्पणो मन्थः स्थैर्य्यवर्णबलप्रदः ॥ २० ॥

तत्र श्लोकः।

सन्तर्पणोत्था ये रोगा रोगा ये चापतर्पणात्।
सन्तर्पणीये तेऽध्याये सौषधाः परिकीर्त्तिताः ॥ २१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
त्रयोविंशतितमः सन्तर्पणीयोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशतितमोऽध्यायः।

अथातो विधिशोणितीयमध्यायं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

विधिना शोणितं जातं शुद्धं भवति देहिनाम्।
देशकालौकसात्म्यानां विधिर्यः सम्प्रदर्शितः ॥
तद्विशुद्धञ्च रुधिरं बलवर्णसुखायुषा।
युनक्ति प्राणिनां प्राणः शोणितं ह्यनुवर्त्तते ॥ २ ॥
प्रदुष्टबहुतीक्ष्णोष्णैर्मद्यैरन्यैश्च तद्विधैः।
तथातिलवणक्षारैरम्लैः कटुभिरेव च ॥
कुलत्थमाषनिष्पावतिलतैलनिषेवणात्।
पिण्डालुमूलकादीनां हरितानाञ्च सर्व्वशः ॥
जलजानूपवैलानां प्रसहानाञ्च सेवनात्।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च ॥
विरुद्धानामुपक्लिन्नपूतीनां भक्षणेन च।
भुक्त्वा दिवा प्रस्वपतां द्रवस्निग्धगुरूणि च ॥

अत्यादानं तथा क्रोधं भजताञ्चातपानिलौ ।
छर्द्दिवेगप्रतीघातात् काले चानवसेचनात् ॥
श्रमाभिघातात् सन्तापादजीर्णाध्यशनात्तथा ।
शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति ॥ ३ ॥
ततः शोणितजा रोगाः प्रजायन्ते पृथग्विधाः ।
मुखनासाक्षिपाकश्च पूतिघ्राणास्यगन्धता ॥
गुल्मोपकुशवीसर्परक्तपित्तप्रमीलकाः ।
विद्रधी रक्तमेहश्च प्रदरो वातशोणितम् ॥
वैवर्ण्यमग्निनाशश्च पिपासा गुरुगात्रता ।
सन्तापश्चातिदौर्ब्बल्यमरुचिः शिरसोऽतिरुक् ॥
विदाहश्चान्नपानस्य तिक्ताम्लोद्गिरणं क्लमः ।
क्रोधप्रचुरता बुद्धेः संमोहो लवणास्यता ॥
स्वेदः शरीरदौर्गन्ध्यं मदः कम्पः स्वरक्षयः ।
तन्द्रानिद्रातियोगश्च तमसश्चातिदर्शनम् ॥
कण्ड्वरुःकोठपिड़काकुष्ठचर्म्मदलादयः ।
विकाराः सर्व्व एवैते विज्ञेयाः शोणिताश्रयाः ॥ ४ ॥
शीतोष्णस्निग्धरुक्षाद्यैरुपक्रान्ताश्च ये गदाः ।
सम्यक् साध्या न सिध्यन्ति रक्तजांस्तान् विनिर्द्दिशेत् ॥ ५ ॥
कुर्य्यात् शोणितरोगेषु रक्तपित्तहरीं क्रियाम् ।
विरेकमनुवासञ्च स्रावणं शोणितस्य च ॥ ६ ॥
बलदोषप्रमाणाद्वा विशुद्ध्या रुधिरस्य वा ।
रुधिरं स्रावयेज्जन्तोराशयं प्रसमीक्ष्य वा ॥ ७ ॥
अरुणं सम्भवेद् वातात् फेनिलं विशदं तनु ।

पित्तात् पीतासितं रक्तं स्त्यायत्यौष्ण्याच्चिरेण च ॥
ईषत्पाण्डु कफाद् दुष्टं पिच्छिलं तन्तुमद् घनम् ।
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ॥ ८ ॥
तपनीयेन्द्रगोपाभं पद्मालक्तकसन्निभम् ।
गुञ्जाफलसवर्णञ्च विशुद्धं विद्धि शोणितम् ॥ ९ ॥
नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृगग्निर्विशेषेण च रक्षितव्यः ॥ १० ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थमिच्छन्तमव्याहतपक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ ११ ॥
यदा तु रक्तवाहीनि रससंज्ञावहानि च ।
पृथक् पृथक् समस्ता वा स्रोतांसि कुपिता मलाः ।
मलिनाहारशीलस्य रजोमोहावृतात्मनः ।
प्रतिहत्यावतिष्ठन्ते जायन्ते व्याधयस्तदा ॥
मदमूर्च्छायसन्न्यासास्तेषां विद्याद्विचक्षणः ।
यथोत्तरं बलाधिक्यं हेतुलिङ्गोपशान्तिषु ॥ १२ ॥
दुर्बलं चेतसः स्थानं यदा वायुः प्रपद्यते ।
मनो विक्षोभयन् जन्तोः संज्ञां सम्मोहयेत्तदा ॥
पित्तमेवं कफश्चैवं मनो विक्षोभयन् नृणाम् ।
संज्ञां नयत्याकुलतां विशेषश्चात्र कथ्यते ॥ १३ ॥
सक्तानल्पद्रुताभाषं चलस्खलितचेष्टितम् ।
विद्याद् वातमदाविष्टं रूक्षश्यावारुणाकृतिम् ॥
सक्रोधं परुषाभाषं सम्प्रहारकलिप्रियम् ।
विद्यात् पित्तमदाविष्टं रक्तपीतासिताकृतिम् ॥

स्वल्पासम्बद्धवचनं निद्रालस्य-समन्वितम् ।
विद्यात् कफमदाविष्टं पाण्डुं प्रध्यानतत्परम् ॥
सर्व्वाण्येतानि लिङ्गानि सन्निपातकृते मदे ।
जायतेऽशाम्यति क्षिप्रं मदो मद्यमदाकृतिः ॥
यश्च मद्यकृतः प्रोक्तो विषजो रौधिरश्च यः ।
सर्व्वे एते मदा नर्त्ते वातपित्तकफाश्रयात् ॥ १४ ॥
नीलं वा यदि वा कृष्णमाकाशमथवारुणम् ।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ॥
वेपथुश्चाङ्गमर्द्दश्च प्रपीड़ा हृदयस्य च ।
कार्श्यं श्यावारुणाच्छाया मूर्च्छाये वातसम्भवे ॥ १५ ॥
रक्तं हरितवर्णं वा वियत् पीतमथापि वा ।
पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ॥
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः ।
संभिन्नवर्च्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥ १६ ॥
मेघसंकाशमाकाशमावृतं वा तमोघनैः ।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा ।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ १७ ॥
सर्व्वाकृतिः सन्निपातादपस्मार इवागतः ।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १८ ॥
दोषेषु मदमूर्च्छाया गतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥ १९ ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।

संन्यसन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥
स ना सन्न्याससंन्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलाः क्रियाः ॥ २० ॥
दुर्गेऽम्भसि यथा मज्जद् भाजनं त्वरया बुधः ।
गृह्णीयात्तलमप्राप्तं तथा सन्न्यासपीड़ितम् ॥ २१ ॥
अञ्जनान्यवपीड़ाश्च धूमाः प्रधमनानि च ।
सूचिभिस्तोदनं शस्तं दाहः पीड़ा नखान्तरे ॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दंशनमेव च
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने ॥
संमूर्च्छितानि तीक्ष्णानि मद्यानि विविधानि च ।
प्रभूतकटुयुक्तानि तस्यास्ये गालयेन्मुहुः ॥ २२ ॥
मातुलुङ्गरसं तद्वन्महौषधसमायुतम् ।
तद्वत् सौवर्च्चलं दद्याद् युक्तं मद्याम्लकाञ्जिकैः ॥
हिङ्गूषणसमायुक्तं यावत् संज्ञाप्रबोधनम् ।
प्रबुद्धसंज्ञमन्नैश्च लघुभिस्तमुपाचरेत् ॥ २३ ॥
विस्मापनैः संस्मरणैः प्रियश्रुतिभिरेव च ।
पटुभिर्गीतवादित्रैः शब्दैश्चित्रैश्च दर्शनैः ॥
स्रंसनोल्लेखनैर्धूमैरञ्जनैः कवड़ग्रहैः ।
शोणितस्यावसेकैश्च व्यायामोद्घर्षणैस्तथा ॥
प्रबुद्धसंज्ञं मतिमाननुबन्धमुपाचरेत् ।
ततः संरक्षितव्योऽहि मनः प्रलयहेतुतः ॥ २४ ॥
स्नेहस्वेदोपपन्नानां यथादोषं यथाबलम् ।
पञ्चकर्म्माणि कुर्व्वीत मूर्च्छायेषु मदेषु च ॥ २५ ॥

अष्टाविंशत्यौषधस्य तथा तिक्तस्य सर्पिषः ।
प्रयोगः शस्यते तद्वन्महतः षट्पलस्य च ॥
त्रिफलायाः प्रयोगो वा सघृतक्षौद्रशर्करः ।
शिलाजतुप्रयोगो वा प्रयोगः पयसोऽपिवा ॥
पिप्पलीनां प्रयोगो वा पयसां चित्रकस्य वा ।
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥
रक्तावसेकाच्छास्त्राणां सतां सत्ववतामपि ।
सेवनान्मदमूर्च्छायाः प्रशाम्यन्ति शरीरिणाम् ॥ २६ ॥

तत्र श्लोकौ ।

विशुद्धञ्चाविशुद्धञ्च शोणितं तस्य हेतवः ।
रक्तप्रदोषजा रोगास्तेषु रोगेषु चौषधम् ॥
मदमूर्च्छायसन्न्यासा हेतुलक्षणभेषजम् ।
विधिशोणितकेऽध्याये सर्व्वमेतत् प्रकाशितम् ॥ २७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
चतुर्विंशतितमो विधिशोणितीयोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

---

अथातो यज्जःपुरुषीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

पुरा प्रत्यक्षधर्म्माणं भगवन्तं पुनर्व्वसुम् ।
उपासीनाः महर्षयः प्राहुश्चक्रुरिमां कथाम् ॥

आत्मेन्द्रियमनोऽर्थानां योऽयं पुरुषसंज्ञकः।
राशिरस्यामयानाञ्च प्रागुत्पत्तिविनिश्चये ॥ २ ॥
तदन्तरं काशीपतिर्वामको वाक्यमर्थवत्।
व्याजहारर्षिसमितिमभिष्टुत्याभिवाद्य च ॥
किन्नु भोः पुरुषो यज्जस्तज्जास्तस्यामयाः स्मृताः।
नवेत्युक्ते नरेन्द्रेण प्रोवाचर्षीन् पुनर्व्वसुः ॥
सर्व्वे एवामितज्ञानविज्ञानच्छिन्नसंशयाः।
भवन्तश्छेत्तुमर्हन्ति काशीराजस्य संशयम् ॥ ३ ॥
पारीक्षिस्तत् परीक्ष्याग्रे मौद्गल्यो वाक्यमब्रवीत्।
आत्मजः पुरुषो रोगाश्चात्मजाः कारणं हि सः॥
स चिनोत्युपभुङ्क्ते च कर्म्म कर्म्मफलानि च।
नह्यृते चेतनाधातोः प्रवृत्तिः सुखदुःखयोः ॥ ४ ॥
शरलोमा तु नेत्याह न ह्यात्मात्मानमात्मना।
योजयेद् व्याधिभिर्दुःखैर्दुःखद्वेषी कदाचन ॥
रजस्तमोभ्यान्तु मनः परीतं सत्वसंज्ञकम्।
शरीरस्य समुत्पत्तौ विकाराणाञ्च कारणम् ॥ ५ ॥
वार्य्योविदस्तु नेत्याह नह्येकं कारणं मनः।
नर्त्ते शरीराच्छारीररोगाणां मनसः स्थितिः ॥
रसजानि तु भूतानि व्याधयश्च पृथग्विधाः।
आपो हि रसवत्यस्ताः स्मृता निर्वृत्तिहेतवः ॥ ६ ॥
हिरण्याक्षस्तु नेत्याह न ह्यात्मा रसजः स्मृतः।
नातीन्द्रियं मनः सन्ति रोगाः शब्दादिजास्तथा ॥
षड्धातुजस्तु पुरुषो रोगाः षड्धातुजास्तथा।

राशिः षड्धातुजो ह्येष सांख्यैराद्यैः परीक्षितः ॥ ७ ॥
तथाब्रुवाणं कुशिकमाह तन्नेति शौनकः
कस्मान्मातापितृभ्यां हि विना षड्धातुजो भवेत् ॥
पुरुषः पुरुषाद् गौर्गोरश्वादश्वः प्रजायते ।
मातापितृभवाश्चोक्ता रोगास्तावत्र कारणम् ॥ ८ ॥
भद्रकाप्यस्तु नेत्याह न ह्यन्धोऽन्धात् प्रजायते ।
मातापित्रोरपिच ते प्रागुत्पत्तिर्न जायते ॥
कर्म्मजस्तु मतो जन्तुः कर्म्मजास्तस्य चामयाः ।
न ह्यते कर्म्मणो जन्म रोगाणां पुरुषस्य वा ॥ ९ ॥
भरद्वाजस्तु नेत्याह कर्त्ता पूर्व्वं हि कर्म्मणः ।
दृष्टं नचाकृतं कर्म्म यस्य स्यात् पुरुषः फलम् ॥
भावहेतुः स्वभावस्तु व्याधीनां पुरुषस्य च ।
खरद्रवचलोष्णत्वं तेजोऽन्तानां यथैव हि ॥ १० ॥
काङ्कायनस्तु नेत्याह न ह्यारम्भफलं भवेत् ।
भवेत् स्वभावाद् भावानामसिद्धिः सिद्धिरेव वा ॥
स्रष्टात्वमितसंकल्पो ब्रह्मापत्यं प्रजायते ।
चेतनाचेतनस्यायं कारणं सुखदुःखयोः ॥ ११ ॥
तन्नेति भिक्षुरात्रेयो नह्यपत्यं प्रजापतिः ।
प्रजाहितैषी सततं दुःखैर्युञ्ज्यादसाधुवत् ॥
कालजस्त्वेव पुरुषः कालजास्तस्य चामयाः ।
जगत् कालवशं सर्व्वं कालः सर्व्वत्र कारणम् ॥ १२ ॥
तथर्षीणां विवदतामुवाचेदं पुनर्व्वसुः ।
मैवं वोचत तत्त्वं हि दुष्प्रापं पक्षसंश्रयात् ॥

वादान् सप्रतिवादांश्च वदन्तो निश्चितानिव ।
पक्षान्तं नैव गच्छन्ति तिलपीड़कवद्गतौ ॥
मुक्त्वैवं वादसङ्घट्टमध्यात्ममनुचिन्त्यताम् ।
नाविधूते तमस्कन्धे ज्ञेये ज्ञानं प्रवर्त्तते ॥
येषामेवहि भावानां सम्पत् सञ्जनयेन्नरम् ।
तेषामेव व्यापद्व्याधीन् विविधान् समुदीरयेत् ॥ १३ ॥

अथात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि वामकः काशीपतिरुवाच भगवन्तमात्रेयं, भगवन् ! सम्पन्निमित्तस्य पुरुषस्य विपन्निमित्तजानाञ्च रोगाणां किमभिवृद्धिकारणमिति । तमुवाच भगवानात्रेयः । हिताहारोपयोग एक एव पुरुषस्याभिवृद्धिकरो भवति । अहिताहारोपयोगः पुनर्व्याधिनिमित्तमिति ॥ १४ ॥

एवम्वादिनं भगवन्तमात्रेयमग्निवेश उवाच कथमिह भगवन् हिताहितानामाहारजातानां लक्षणमनपवादमभिजानीयाम:, हितसमाख्यातानां चैवाहारजातानामहितसमाख्यातानाञ्च मात्राकालक्रियाभूमिदेहदोषपुरुषावस्थान्तरेषु विपरीतकारित्वमुपलभाम इति ॥ १५ ॥

तमुवाच भगवानात्रेयः । यदाहारजातमग्निवेश समांश्चैव शरीरधातून् प्रकृतौ स्थापयति, विषमांश्च समीकरोतीत्येतद् हितं विद्धि, विपरीतं त्वहितमित्येतद्धिताहितलक्षणमनपवादम् भवति एवं वादिनञ्च भगवन्तमात्रेयमग्निवेश उवाच—भगवन् ! नत्वेतदेवमुपदिष्टं भूयिष्ठकल्पाः सर्व्वभिषजो विज्ञास्यन्ति ॥ १६

तमुवाच भगवानात्रेयः । येषां हि विदितमाहारतत्त्वमग्निवेश

गुणतो द्रव्यतः कर्म्मतः सर्व्वावयवतश्च मात्रादयो भावास्त एत-
देवमुपदिष्टं विज्ञातुमुत्सहेरन्। यथातु खल्वेतदुपदिष्टं भूयिष्ठ-
कल्पाः सर्व्वभिषजो विज्ञास्यन्ति तथैतदुपदेक्ष्यामः। मात्रादीन्
सर्व्वानुदाहरन्तु तेषांहि बहुविधा विकल्पा भवन्ति। आहार-
विधिविशेषांस्तु खलु लक्षणतश्चावयवतश्चानुव्याख्यास्यामः ॥ १७

तद्यथा, आहारत्वमाहारस्यैकविधमर्थाभेदात्। स पुन-
र्द्वियोनिः स्थावरजङ्गमात्मकत्वात्। द्विविधः प्रभावो हिताहितो-
दर्कविशेषात्। चतुर्विधोपयोगः पानाशनभक्ष्यलेह्योपयोगात्।
षडास्वादो रसभेदतः षड्विधत्वात् ॥ १८ ॥

विंशतिगुणा गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिर-
सरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवानुग-
मात् ॥ १९ ॥

अपरिसंख्येयविकल्पो द्रव्यसंयोगसंस्कारादिकरणबाहुल्यात्,
तस्य खलु ये ये विकारावयवा भूयिष्ठमुपकल्प्यन्ते भूयिष्ठकल्प-
नाश्च मनुष्याणां प्रकृत्यैव हिततमाश्चाहिततमाश्च तांस्तान्
यथावदनुव्याख्यास्यामः। तद्यथा—लोहितशालयः शूकधा-
न्यानां पथ्यतमत्वेन श्रेष्ठतमा भवन्ति मुद्गाः शमीधान्यानामा-
न्तरीक्षमुदकानां सैन्धवं लवणानां जीवन्तीशाकं शाकानामैणेयं
मृगमांसानां लावः पक्षिणां गोधा बिलेशयानां रोहितो मत्-
स्यानां गव्यं सर्पिः सर्पिषां गोक्षीरं क्षीराणां तिलतैलं स्थावर-
स्नेहानां वराहवसानूपमृगवसानां चुलुकीवसा मत्स्यवसानां
पाकहंसवसा जलचरविहङ्गवसानां कुक्कुटवसा विष्किर-
शकुनिवसानामजावसा. शाखादमेदसां शृङ्गवेरं कन्दानां

मृद्वीका फलानां शर्करा इक्षुविकाराणां। इति प्रकृत्यैव हिततमानामाहारविकाराणां प्राधान्यतो द्रव्याणि व्याख्यातानि भवन्ति ॥ २० ॥

अहिततमानप्युपदेक्ष्यामः। यवकः शूकधान्यानामपथ्यतमत्वने श्रेष्ठतमा भवन्ति, माषाः शमीधान्यानां वर्षानादेयमुदकानामूषरं लवणानां मार्षपशाकं शाकानां गोमांसं मृगमांसानां काणकपोतः पक्षिणां भेको बिलेशयानां चिलिचिमो मत्स्यानामाविकं सर्पिः सर्पिषामविक्षीरं क्षीराणां कुसुम्भस्नेहः स्थावरस्नेहानां महिषवसानूपमृगवसानां कुम्भीरवसा मत्स्यवसानां काकमद्गुवसा जलचरविहङ्गवसानां चटकवसा विष्किरशकुनिवसानां हस्तिमेदः शाखादमेदसां मूलकं कन्दानां लिकुचं फलानां फाणितमिक्षुविकाराणां। इति प्रकृत्यैवाहिततमानामाहारविकाराणां प्रकृष्टतमानि द्रव्याणि व्याख्यातानि भवन्ति ॥ २१ ॥

इति हिताहितावयवो व्याख्यात आहारविकाराणामथ्यतो भूयः कर्म्मौषधानाञ्च प्राधान्यतः सानुबन्धानि द्रव्याणि नुव्याख्यास्यामः। तद्यथा—अन्नं वृत्तिकराणां श्रेष्ठमुदकमाश्वासकराणां सुरा श्रमहराणां क्षीरं जीवनीयानां मांसं बृंहणीयानां रसस्तर्पणीयानां लवणमन्नद्रव्यरुचिकराणामम्लं हृद्यानां कुक्कुटो बल्यानां नक्ररेतो वृष्याणां मधु श्लेष्मपित्तप्रशमनानां सर्पिर्वातपित्तप्रशमनानां तैलं वातश्लेष्मप्रशमनानां वमनं श्लेष्महराणां विरेचनं पित्तहराणां बस्तिर्वातहराणां स्वेदो मार्दवकराणां व्यायामः स्थैर्य्यकराणां व्यवायः कार्श्य-

कराणां चारः पुंस्त्वोपघातिनां तिन्दुकमनन्नद्रव्यरुचिकराणां, आमकपित्थमकण्ठ्यानां, आविकं सर्पिरहृद्यानां, अजाक्षीरं शोषघ्नस्तन्य-सात्म्य-सांग्राहिकशोणितपित्तप्रशमनानामविक्षीरं श्लेष्मपित्तजननानां महिषीक्षीरं स्वप्नजननानां मन्दकं दध्यभिष्यन्दकराणां गवेधुकान्नं कर्षणीयानां कोद्दालकान्नं विरूक्षणीयानामिक्षुर्मूत्रजननानां यवाः पुरीषजननानां जाम्बवं वातजननानां शष्कुल्यः श्लेष्मपित्तजननानां कुलत्था अम्लपित्तजननानां माषाः श्लेष्मपित्तजननानां मदनफलं वमनास्थापनानुवासनोपयोगिनां त्रिवृत् सुखविरेचनानां चतुरङ्गुलो मृदुविरेचनानां स्नुक्पयस्तीक्ष्णविरेचनानां प्रत्यक्पुष्पी शिरोविरेचनानां विडङ्गः क्रिमिघ्नानां शिरीषो विषघ्नानां खदिरः कुष्ठघ्नानां रास्ना वातहराणामामलकं वयःस्थापनानां हरीतकी पथ्यानामेरण्डमूलं वृष्यवातहराणां पिप्पलीमूलं दीपनीयपाचनीयानाहप्रशमनानां, उदीच्यं निर्वापणीयदीपनीयपाचनीयच्छर्द्यतीसारहराणां कट्वङ्गं सांग्राहिकदीपनीयपाचनीयानामनन्ता सांग्राहिकदीपनीयरक्तपित्तप्रशमनानां चित्रकमूलं दीपनीयपाचनीयगुदशूलशोफहराणां पुष्करमूलं हिक्काश्वासकासपार्श्वशूलहराणां, मुस्तं सांग्राहिकदीपनीयपाचनीयानाममृता सांग्राहिकदीपनीयवातहरश्लेष्मशोणितविबन्धप्रशमनानां बिल्वं सांग्राहिकदीपनीयवातकफप्रशमनानां, अतिविषा दीपनीयपाचनीयसांग्राहिकदोषहराणामुत्पलपद्मकुमुदकिञ्जल्कः सांग्राहिकरक्तपित्तप्रशमनानां, दुरालभा पित्तश्लेष्मप्रशमनानां गन्धप्रियङ्गुः शोणितपित्तातियोगप्रशमनानां कुटज-

त्वक् श्लेष्मपित्तरक्तसांग्राहिकोपशोषणानां, काश्मर्य्यफलं सांग्राहिकशोणितपित्तप्रशमनानां, पृश्निपर्णी सांग्राहिकदीपनीयवातहरवृष्याणां, विदारीगन्धा वृष्यसर्व्वदोषहराणां, बला सांग्राहिकबल्यवातहराणां, गोक्षुरो मूत्रकृच्छ्रानिलहराणां, हिङ्गुनिर्य्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानां, अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणां, यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां, तक्राभ्यासो ग्रहणीदोषशोफार्शोघृतव्यापत्प्रशमनानां क्रव्यादमांसाभ्यासो ग्रहणीदोषशोषार्शोघ्नानां, क्षीरघृताभ्यासो रसायनानां, समघृतशक्तुकाभ्यासो वृष्योदावर्त्तहराणां तैलगण्डूषो दन्तबलरुचिकराणां चन्दनोडुम्बरं दाहनिर्व्वापणालेपनानां रास्नागुरुणी शीतापनयनप्रलेपनानां लामज्जकोशीरं दाहत्वग्दोषस्वेदापनयनप्रलेपनानां कुष्ठं वातहराभ्यङ्गोपनाहयोगिनां मधुकं चक्षुष्यवृष्यकेश्यकण्ठ्यवर्ण्यबल्यविरजनीयरोपणीयानां वायुः प्राणसंज्ञाप्रदानहेतूनां, अग्निरामस्तम्भशीतशूलोद्वेपनप्रशमनानां जलं स्तम्भनीयानां मृद्भृष्टलोष्ट्रनिर्व्वापितमुदकं तृष्णातियोगप्रशमनानामतिमात्राशनमामप्रदोषहेतूनां यथाग्न्यभ्यवहारोऽग्निसन्धुक्षणानां, यथासात्म्यं चेष्टाभ्यवहारो सेव्यानां कालभोजनमारोग्यकराणां तृप्तिराहारगुणानां वेगसन्धारणमनारोग्यकराणां मद्यं सौमनस्यजननानां मद्याक्षेपो धृतिस्मृतिहराणां गुरुभोजनं दुर्व्विपाकानामेकभोजनं सुखपरिणामकराणां स्त्रीष्वतिसङ्गः शोषकराणां शुक्रवेगनिग्रहः षाण्ड्यकराणां, परायतनमघ्राणं घ्राणाजननानामनशनमनायुष्कराणां प्रमिताशनं कर्षणीयानामजी-

णाशनं मद्यगोटूषणानां विषमाशनमग्निवैषम्यकराणां विरुद्ध-वीर्य्याशनं निन्दितव्याधिकराणां प्रशमः पथ्यानां, आयासः सर्व्वापथ्यानां मिथ्यायोगो व्याधिकराणां रजस्वलाभिगमन-मलक्ष्मीमुखानां ब्रह्मचर्य्यमायुष्याणां सङ्कल्पो वृष्याणां दौर्म्मनस्य-मवृष्याणामयथाबलमारम्भः प्राणोपरोधिनां विषादो रोगवर्द्ध-नानां स्नानं श्रमहराणां हर्षः प्रीणनानां शोकः शोषणानां निवृत्तिः पुष्टिकराणां पुष्टिः स्वप्नकराणामतिस्वप्नस्तन्द्राकराणां, सर्व्वरसाभ्यासो बलकराणामेकरसाभ्यासो दौर्ब्बल्यकराणां गर्भशल्यमनाहार्य्याणामजीर्णमुद्धार्य्याणां बालो मृदुभेषजी-यानां वृद्धो याप्यानां गर्भिणी तीक्ष्णौषध-व्यवाय-व्यायाम-वर्ज्जनीयानां सौमनस्यं गर्भधारणानां सन्निपातो दुश्चिकित्स्या-नामामो विषमचिकित्स्यानां ज्वरो रोगाणां कुष्ठं दीर्घरोगाणां राजयक्ष्मा रोगसमूहानां प्रमेहोऽनुषङ्गिनां जलौकसोऽनुशस्त्राणां वस्तिस्तन्त्राणां हिमवानोषधिभूमीनां सोम ओषधीनां मरु-भूमिर्देश आरोग्यदेशानामनूपोऽहितदेशानां निर्द्देशकारित्व-मातुरगुणानां भिषक् चिकित्साङ्गानां नास्तिको वर्ज्ज्यानां लौल्यं क्लेशकराणामनिर्द्देशकारित्वमरिष्टानामनिर्व्वेदो वार्त्तासारलक्ष-णानां योगो वैद्यगुणानां वैद्यसमूहो निःसंशयकराणां विज्ञानमौषधानां शास्त्रसहितस्तर्कः साधनानां सम्प्रतिपत्तिः कालज्ञानप्रयोजनानामव्यवसायः कालातिप्रतिपत्तिहेतूनां दृष्ट-कर्म्मता निःसंशयकराणामसमर्थता भयकराणां, तद्विद्य-सम्भाषा बुद्धिवर्द्धनानां, आचार्य्यः शास्त्राधिगमहेतूनां, आयु-र्व्वेदोऽमृतानां, सद्वचनमनुष्ठेयानां, असम्बन्धवचनमसंग्रहण-सर्व्वाहितानां, सर्व्वसन्न्यासः सुखकराणामिति ॥ २२ ॥

भवन्ति चात्र ।

अग्ग्र्याणां शतमुद्दिष्टं यद्द्विपञ्चाशदुत्तरम् ।
अलमेतद् विकाराणां विघातायोपदिश्यते ॥ २३ ॥
समानकारिणो येऽर्थास्तेषां श्रेष्ठस्य लक्षणम् ।
ज्यायस्त्वं कार्य्यकर्तृत्वेऽवरत्वञ्चाप्यतोऽन्यथा(?)॥ २४ ॥
वातपित्तकफानाञ्च यद्यत् प्रशमने हितम् ।
प्राधान्यतश्च निर्दिष्टं यद्व्याधिहरमुत्तमम् ॥ २५ ॥
एतन्निशम्य निपुणश्चिकित्सां संप्रयोजयेत् ।
एवं कुर्व्वन् सदा वैद्यो धर्म्मकामौ समश्नुते ॥ २६ ॥
पथ्यं पथोऽनपेतञ्च यच्चोक्तं मनसः प्रियम् ।
यच्चाप्रियमपथ्यञ्च नियतं तन्न लक्ष्यते ॥ २७ ॥
मात्राकालक्रियाभूमिदेहदोषगुणान्तरम् ।
प्राप्य तत्तद्धि दृश्यन्ते ते ते भावास्तथा तथा ॥
तस्मात् स्वभावो निर्द्दिष्टस्तथा मात्रादिराश्रयः ।
तदपेक्ष्योभयं कर्म्म प्रयोज्यं सिद्धिमिच्छता ॥ २८ ॥

तदात्रेयस्य भगवतो वचनमनुनिशम्य पुनरपि भगवन्तमात्रेयमग्निवेश उवाच । यथोद्देशमभिनिर्द्दिष्टः केवलोऽयमर्थो भगवता श्रुतस्त्वस्माभिः । आसवद्रव्याणामिदानीमनपवादं लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषाम इति ॥ २९ ॥

तमुवाच भगवानात्रेयो धान्यफलमूलसारपुष्पकाण्डपत्रत्वचो भवन्त्यासवयोनयोऽग्निवेशाष्टौ संग्रहेण शर्करा नवम्यः । तास्वेव द्रव्यसंयोगकरणतोऽपरिसंख्येयासु यथापथ्यतमानामासवानां चतुरशीतिं निबोध ॥ ३० ॥

तद्यथा सुरासौवीरतुषोदकमैरेयमेदकधान्याम्लाः षड् धान्यासवा भवन्ति। मृद्वीकाकाश्मर्य्यखर्ज्जूरधन्वनराजादन-तृणशून्यपरूषकाभयामलकमृगलिण्डिकाजम्बीर-कपित्थ-कुवल-बदरकर्कन्धूपीलुपियालपनसन्यग्रोधाश्वत्थप्लक्षकपीतनोडुम्बरा-जमोदा-शृङ्गाटकशङ्खिनी-फलासवाः षड्विंशतिर्भवन्ति। विदारिगन्धाऽश्वगन्धाकृष्णगन्धाशतावरीश्यामात्रिवृद्दन्तीद्रवन्ती बिल्वोरुबूकचित्रकमूलैरेकादश मूलासवाः भवन्ति। शाल-प्रियकचन्दनस्यन्दनखदिरकदर-सप्तपर्णाश्वकर्णार्ज्जुनाशनारि-मेद-तिन्दुककिणिहीशमीशुक्तिपत्र-शिंशपाशिरीषवञ्जुलधन्वन-मधूकसारासवा विंशतिर्भवन्ति। पद्मोत्पलनलिनकुमुदसौग-न्धिक-पुण्डरीकशतपत्रमधुकप्रियङ्गुधातकीपुष्पैर्दश पुष्पासवा भवन्ति। इक्षुकाण्डेक्षुबालिकापुण्ड्रकचतुर्थाः काण्डा-सवाः पटोलताड़ी पत्रासवौ द्वौ भवतः। तिल्वकलोध्रैलबालुक-क्रमुकचतुर्थास्त्वगासवा भवन्ति, शर्करासव एक एवेति ॥ ३१॥

एषामासवानामासुतत्त्वादासवसंज्ञैवमेषामासवानाञ्चतु-रशीतिः परस्परेणासंसृष्टानामासवद्रव्याणामुपदिष्टा भवन्ति।

द्रव्यसंयोगविभागविस्तरस्त्वेषां बहुविधविकल्पः संस्कारश्च यथास्वं संयोगसंस्कारसंस्कृता ह्यासवाः स्वं कर्म्म कुर्व्वन्ति ॥३२

संयोगसंस्कारादौ देशकालमात्रादयश्च भावास्तेषां तेषा-मासवानां ते ते समुपदिश्यन्ते तत् तत् कार्य्यमभिसमी-क्ष्येति ॥ ३३ ॥

भवति चात्र।

मनःशरीराग्निबलप्रदानामस्वप्नशोकारुचिनाशनानाम्।
संहर्षणानां प्रवरासवानामशीतिरुक्ता चतुरुत्तरैषा ॥ ३४ ॥

तत्र श्लोकः।

शरीररोगप्रकृतौ मतानि तत्त्वेन चाहारविनिश्चयाय।
उवाच यज्ञःपुरुषादिकेऽस्मिन् मुनिस्तथाग्र्याणि वरासवांश्च ॥३५

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
पञ्चविंशतितमो यज्ञःपुरुषीयोऽध्यायः ॥ २५ ॥

षड्विंशोऽध्यायः

अथात आत्रेयभद्रकाप्यीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

आत्रेयो भद्रकाप्यश्च शाकुन्तेयस्तथैव च।
पूर्णाक्षश्चैव मौद्गल्यो हिरण्याक्षश्च कौशिकः॥
यः कुमारशिरानाम भारद्वाजः स चानघः।
श्रीमान् वार्य्योविदश्चैव राजा मतिमतां वरः॥
निमिश्च राजा वैदेहो वड़िशश्च महामतिः।
काङ्कायनश्च वाह्लीको वाह्लीको भिषजां वरः॥
एते श्रुतवयोवृद्धा जितात्मानो महर्षयः।
वने चैत्ररथे रम्ये समीयुर्विजिहीर्षवः॥
तेषां तत्रोपविष्टानामियमर्थवती कथा।
वभूवार्थविदां सम्यग् रसाहारविनिश्चये ॥ २ ॥

एक एव रस इत्युवाच भद्रकाप्यो यं पञ्चानामिन्द्रियार्थानामन्यतमं जिह्वाविषयभावमाचक्षते कुशलाः स पुनरुदकादनन्य इति ॥ ३ ॥

द्वौ रसाविति शाकुन्तेयो ब्राह्मणश्छेदनीय उपशमनीयश्चेति ॥४

त्रयो रसा इति पूर्णाक्षो मौद्गल्यश्छेदनीयोपशमनीयसाधारणाः ॥ ५ ॥

चत्वारो रसा इति हिरण्याक्षः कौशिकः स्वादुर्हितश्च स्वादुरहितश्चास्वादुर्हितश्चास्वादुरहितश्च ॥ ६ ॥

पञ्च रसा इति कुमारशिरा भरद्वाजो भौमोदकाग्नेयवायव्यान्तरीक्षाः ॥ ७ ॥

षड्रसा इति वार्य्योविदो राजर्षिः, गुरुलघुशीतोष्णस्निग्धरूक्षाः ॥ ८ ॥

सप्त रसा इति निमिर्वैदेहः, मधुराम्ललवणकटुतिक्तकषायक्षाराः ॥ ९ ॥

अष्टौ रसा इति बड़िशो धामार्गवो मधुराम्ललवणकटुतिक्तकषायक्षारावक्ताः ॥ १० ॥

अपरिसंख्येया रसा इति काङ्कायनो वाह्लीकभिषगाश्रयगुणकर्म्मसंस्कारविशेषाणामपरिसंख्येयत्वात् ॥ ११ ॥

षडेव रसा इत्युवाच भगवानात्रेयः पुनर्व्वसुः मधुराम्ललवणकटुतिक्तकषायाः । तेषां षणां रसानां योनिरुदकं छेदनीयशमने द्वे कर्म्मणी तयोर्म्मिश्रीभावात् साधारणत्वं । स्वाद्वस्वादुताभक्तिर्द्वौ हिताहितौ च प्रभावौ पञ्चमहाभूतविकारास्त्वाश्रयाः प्रकृतिविकृतिविचारणा देशकालवशाः ॥१२॥

तेषामाश्रयेषु द्रव्यसंज्ञकेषु गुणा गुरुलघुशीतोष्णस्निग्धरूक्षाः ॥ १३ ॥

क्षरणात् क्षारो नासौ रसो द्रव्यं हि तदनेकरससमुत्पन्न-

मनेकरसं कटुलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम् ॥ १४ ॥

अव्यक्तीभावस्तु रसानां प्रकृतौ भवत्यणुरसेऽणुरससमन्विते वा द्रव्ये ॥ १५ ॥

अपरिसंख्येयत्वं पुनर्न तेषामाश्रयादीनां भावानां विशेषापरिसंख्येयत्वाद् युक्तम् ॥ १६ ॥

एकैकोऽपि ह्येषामाश्रयादीनां भावानां विशेषानेवाश्रयते न च तस्मादन्यत्वमुपपद्यते परस्परसंसृष्टभूयिष्ठत्वात् ॥ १७ ॥

नचैषामभिनिर्वृत्तौ गुणप्रकृतीनामपरिसंख्येयत्वं भवति तस्मान्न संसृष्टानां रसानां कर्म्मोपदिशन्ति बुद्धिमन्तः ॥ १८ ॥

तच्चैव कारणमवेक्षमाणाः षण्णां रसानां परस्परेणासंसृष्टानां लक्षणं पृथक्त्वेनोपदेक्ष्यामः। अग्रे तावद् द्रव्यभेदमभिप्रेत्य किञ्चिदभिधास्यामः ॥ १९ ॥

सर्व्वं द्रव्यं पाञ्चभौतिकमित्यस्मिन्नर्थे तच्चेतनावदचेतनञ्च। तस्य गुणाः शब्दादयो गुर्व्वादयश्च द्रवान्ताः। कर्म्म पञ्चविधमुक्तं वमनादि ॥ २० ॥

तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलानि पार्थिवानि तानुपचयसङ्घातगौरवस्थैर्य्यकराणि ॥ २१ ॥

द्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिलरसगुणबहुलान्याप्यानि तानुपक्लेदस्नेहबन्धविष्यन्दमार्द्दवप्रह्लादकराणि॥२२॥

उष्णतीक्ष्णसूक्ष्मलघुरूक्षविशदरूपगुणबहुलान्याग्नेयानि तानि दाहपाकप्रभाप्रकाशवर्णकराणि ॥ २३ ॥

लघुशीतरूक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानि तानि रौक्ष्यग्लानिविचारवैशद्यलाघवकराणि ॥ २४ ॥

मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्याकाशात्मकानि तानि मार्द्दवशौषिर्य्यलाघवकराणि ॥ २५ ॥

अनेनोपदेशेन नानौषधिभूतं जगति किञ्चिद्द्रव्यमुपलक्ष्यते तां तांहि युक्तिमर्थञ्च तं तमभिप्रेत्य। नतु केवलं गुणप्रभावा-देव द्रव्याणि कार्म्मुकाणि स्युः। द्रव्याणि हि द्रव्यप्रभावाद् गुणप्रभा-वाद् द्रव्यगुणप्रभावाच्च तस्मिंस्तस्मिन् काले तत्तदधिकरणमासाद्य तां ताञ्च युक्तिमर्थञ्च तं तमभिप्रेत्य यत् कुर्व्वन्ति तत् कर्म्म येन कुर्व्वन्ति तद्वीर्य्यं यत्र कुर्व्वन्ति तदधिकरणं यदा कुर्व्वन्ति स कालः यथा कुर्व्वन्ति स उपायो यत्तु साधयन्ति तत् फलम् ॥२६॥

भेदश्चैषां त्रिषष्टिविधरसविकल्पो द्रव्यदेशकालप्रभावाद् भवति तमुपदेक्ष्यामः ॥ २७ ॥

स्वादुरम्लादिभिर्योगं शेषैरम्लादयः पृथक् ।
यान्ति पञ्चदशैतानि द्रव्याणि द्विरसानि हि ॥
पृथगम्लादियुक्तस्य योगः शेषैः पृथग् भवेत् ।
मधुरस्य तथाम्लस्य लवणस्य कटोस्तथा ॥
त्रिरसानि यथासंख्यं द्रव्याण्युक्तानि विंशतिः ।
वक्ष्यन्ते च चतुष्केण द्रव्याणि दश पञ्च च ॥
स्वाद्वम्लौ सहितौ युक्तौ लवणाद्यैः पृथग्गतैः ।
योगं शेषैः पृथग् यातश्चतुष्करससंख्यया ॥
सहितौ स्वादुलवणौ तद्वत् कट्वादिभिः पृथक् ।
युक्तौ शेषैः पृथग्योगं यातः स्वादूषणौ तथा ॥

कट्वाद्यैरम्ललवणौ संयुक्तौ सहितौ पृथक् ।
यातः शेषैः पृथग् योगं शेषैरम्लकटू तथा ॥
युज्येते तु कषायेण सतिक्तौ लवणोषणौ ।
षट् तु पञ्चरसान्याहुरेकैकस्यापवर्ज्जनात् ॥
षट् चैवैकरसानि स्युरेकं षड्रसमेव च ।
इति त्रिषष्टिर्द्रव्याणां निर्द्दिष्टा रससंख्यया ॥
त्रिषष्टिः स्यादसंख्येया रसानुरसकल्पनात् ।
रसास्तरतमाभ्यान्तां संख्यामतिपतन्ति हि ॥ २८ ॥
संयोगाः सप्तपञ्चाशत् कल्पना तु त्रिषष्टिधा ।
रसानां तत्र योग्यत्वात् कल्पिता रसचिन्तकैः ॥ २९ ॥
क्वचिदेको रसः कल्प्यः संयुक्ताश्च रसाः क्वचित् ।
दोषौषधादीन् संचिन्त्य भिषजा सिद्धिमिच्छता ॥ ३० ॥
द्रव्याणि द्विरसादीनि संयुक्तांश्च रसान् बुधाः ।
रसानेकैकशो वापि कल्पयन्ति गदान् प्रति ॥ ३१ ॥
यः स्याद्रसविकल्पज्ञः स्याच्च दोषविकल्पवित् ।
न स मुह्येद्विकाराणां हेतुलिङ्गोपशान्तिषु ॥ ३२ ॥
व्यक्तः शुष्कस्य चादौ च रसो द्रव्यस्य लक्ष्यते ।
विपर्य्ययेणानुरसो रसो नास्तीह सप्तमः ॥ ३३ ॥
परापरत्वे युक्तिश्च संख्या संयोग एव च ।
विभागश्च पृथक्त्वञ्च परिमाणमथापि च ॥
संस्कारोऽभ्यास इत्येते गुणा ज्ञेयाः परादयः ।
सिद्ध्युपायाश्चिकित्साया लक्षणैस्तान् प्रचक्ष्महे ॥ ३४ ॥
देशकालवयोमानपाकवीर्य्यरसादिषु ।

परापरत्वे युक्तिस्तु योजना या तु युज्यते ॥ ३५ ॥
संख्या स्याद् गणितं योगः सह संयोग उच्यते ।
द्रव्याणां द्वन्द्वसर्व्वैककर्म्मजोऽनित्य एव च ॥
विभागस्तु विभक्तिः स्याद्वियोगो भागशो ग्रहः ।
पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता ॥
परिमाणं पुनर्मानं संस्कारः करणं मतम् ।
भावाभ्यसनमभ्यासः शीलनं सततक्रिया ॥
इति स्वलक्षणैरुक्ता गुणाः सर्व्वे परादयः ।
चिकित्सा यैरविदितैर्न यथावत् प्रवर्त्तते ॥ ३६ ॥
गुणा गुणाश्रया नोक्तास्तस्माद्रसगुणान् भिषक् ।
विद्याद्द्रव्यगुणान् कर्त्तुरभिप्रायाः पृथग्विधाः ॥
अतश्च प्रकृतिं बुद्ध्वा देशकालान्तराणि च ।
तन्त्रकर्त्तुरभिप्रायानुपायांश्चार्थमादिशेत् ॥ ३७ ॥
षड् विभक्तीः प्रवक्ष्यामि रसानामत उत्तरम् ।
षट् पञ्चभूतप्रभवाः संख्याताश्च यथारसाः ॥ ३८ ॥

सौम्याः खल्वापोऽन्तरीक्षप्रभवाः प्रकृतिशीता लघ्व्यश्चा-व्यक्तरसास्त्वन्तरीक्षाद्भ्रश्यमाना भ्रष्टाश्च पञ्चमहाभूतविकार-गुणसमन्विता जङ्गमस्थावराणां भूतानां मूर्त्तीरभिप्रीणयन्ति तासु च मूर्त्तिषु षड़भिमूर्च्छन्ति रसाः । तेषां षण्णां रसानां सोमगुणातिरेकान्मधुरो रसो भूम्यग्निभूयिष्ठत्वादम्लस्तोयाग्नि-भूयिष्ठत्वाल्लवणो वाय्वग्निभूयिष्ठत्वात् कटुको वाय्वाकाशातिरे-कात् तिक्तकः पवनपृथिव्यतिरेकात् कषायः । एवमेषां रसानां षट्त्वमुपपन्नं न्यूनातिरेकविशेषान्महाभूतानाम्, भूताना-

मिव स्थावरजङ्गमानां नानावर्णाकृतिविशेषः षड्ऋतुकत्वाच्च कालस्योपपन्नो महाभूतानां न्यूनातिरेकविशेषः ॥ ३९ ॥

तत्राग्निमारुतात्मका रसाः प्रायेणोर्द्ध्वभाजो लाघवादुपप्लवनत्वाच्च वायोरूर्द्ध्वज्वलनत्वाच्चाग्नेः। सलिलपृथिव्यात्मकास्तु प्रायेणाधोभागभाजः पृथिव्या गुरुत्वान्निम्नगत्वाच्चोदकस्य। व्यामिश्रात्मकाः पुनरुभयतोभागभाजः ॥ ४० ॥

तेषां षण्णां रसानामेकैकस्य यथाद्रव्यं गुणकर्म्माण्यनुव्याख्यास्यामः। तत्र मधुरो रसः शरीरसात्म्याद्रसरुधिरमांसमेदोऽस्थिमज्जौजःशुक्राभिवर्द्धन आयुष्यः षड़िन्द्रियप्रसादनो बलवर्णकरः पित्तविषमारुतघ्नस्तृष्णाप्रशमनस्त्वच्यः कण्ठ्यो बल्यः केश्यः प्रीणनो जीवनस्तर्पणो वृंहणः स्थैर्यकरः क्षीणक्षतसन्धानकरो घ्राणमुखकण्ठोष्ठजिह्वाप्रसादनो दाहमूर्च्छाप्रशमनः षट्पदपिपीलिकानामिष्टतमः स्निग्धः शीतो गुरुश्च ॥ ४१ ॥

स एवं गुणोऽप्येकएवात्यर्थमुपयुज्यमानः स्थौल्यं मार्द्दवमालस्यमतिस्वप्नं गौरवमनन्नाभिलाषमग्निदौर्ब्बल्यमास्य-कण्ठयोर्मांसाभिवृद्धिं तथा श्वासकासप्रतिश्यायालसकविसूचिकाशीतज्वरानाहास्यमाधुर्य्यवमथुसंज्ञास्वरप्रणाशगलगण्ड-गण्डमालाश्लीपदगलशोथबस्तिधमनीगलोपलेपाक्ष्यामयाभिष्यन्दानित्येवं प्रभृतीन् कफजान् व्याधीनापादयति ॥ ४२ ॥

अम्लो रसो भक्तं रोचयत्यग्निं दीपयति देहं वृंहयत्यूर्ज्जयति मनो बोधयतीन्द्रियाणि दृढ़ीकरोति बलञ्च वर्द्धयति वातमनुलोमयति हृदयं तर्पयत्यास्यमास्रावयति भुक्तमपकर्ष-

यति क्लेदयति जरयति प्रीणयति लघुरुष्णः स्निग्धश्च ॥ ४३ ॥

स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानो दन्तान् हर्षयति तर्पयति संमीलयत्यक्षिणी संवीजयति रोमाणि कफं विलाययति पित्तमभिवर्द्धयति रक्तं दूषयति मांसं विदहति कायं शिथिलीकरोति क्षीणक्षतकृशदुर्ब्बलानां श्वयथुमापादयति । अपिच क्षताभिहतदष्टदग्धभग्नशूनप्रच्युतावमूत्रितपरिसर्पितच्छिन्नभिन्नविश्लिष्टोद्विद्धोत्पिष्टादीनि पाचयत्याग्नेयस्वभावात् परिदहति कण्ठमुरो हृदयञ्च ॥ ४४ ॥

लवणो रसः पाचनः क्लेदनो दीपनश्च्यावनश्छेदनो भेदनस्तीक्ष्णः सरो विकाश्यवस्रंस्यवकाशकरो वातहरः स्तम्भबन्धसंङ्घातविधमनः सर्व्वरसप्रत्यनीकभूतः, आस्यमास्रावयति कफं विष्यन्दयति मार्गान् विशोधयति सर्व्वशरीरावयवान् मृदूकरोति रोचयत्याहारमाहारयोगी नात्यर्थं गुरुः स्निग्ध उष्णश्च ॥ ४५ ॥

स एवं गुणोऽप्येकएवात्यर्थमुपयुज्यमानः पित्तं कोपयति, रक्तं वर्द्धयति, तर्षयति, मूर्च्छयति, मोहयति, तापयति, दारयति, कुष्णाति मांसानि, प्रगलयति, कुष्ठानि, विषञ्च वर्द्धयति, शोफान्, स्फोटयति, दन्तांश्च्यावयति, पुंस्त्वमुपहन्ति, इन्द्रियाण्युपरुणद्धि, वलीपलितखालित्यमापादयति, अपिच लोहितपित्ताम्लपित्तविसर्पवातरक्तविचर्च्चिकेन्द्रलुप्तप्रभृतीन् विकारानुपजनयति ॥ ४६ ॥

कटुको रसो वक्त्रं शोधयति, अग्निं दीपयति, भुक्तं शोषयति, घ्राणमास्रावयति, चक्षुर्विरेचयति, स्फुटीकरोतीन्द्रियाणि, अलसकश्वयथूपचयोदर्दाभिष्यन्दस्नेहस्वेदक्लेदमलानुपहन्ति,

रोचयत्यशनम्, कण्डूं विलालयति, व्रणानवसादयति, क्रिमीन् हिनस्ति, मांसं विलेखयति, शोणितसङ्घातं भिनत्ति, बन्धांश्छिनत्ति, मार्गान् विवृणोति, श्लेष्माणं शमयति, लघुरुष्णो रूक्षश्च ॥ ४७ ॥

स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानो विपाकप्रभावात् पुंस्त्वमुपहन्ति, रसवीर्य्यप्रभावान्मोहयति ग्लपयति सादयति कर्षयति मूर्च्छयति नमयति तमयति भ्रमयति कण्ठं परिदहति शरीरतापमुपजनयति बलं क्षिणोति तृष्णाञ्चोपजनयति, अपिच वाय्वग्निगुणबाहुल्याद् भ्रममदवमथुकम्पतोदभेदैश्चरणभुजपीलुपृष्ठपार्श्वप्रभृतिषु मारुतजान् विकारान् उपजनयति ॥ ४८ ॥

तिक्तो रसः स्वयमरोचिष्णु ररोचकघ्नो विषघ्नः क्रिमिघ्नो मूर्च्छादाहकण्डूकुष्ठतृष्णाप्रशमनः, त्वङ्मांसयोः स्थिरीकरणो ज्वरघ्नो दीपनः पाचनः स्तन्यशोधनो लेखनः क्लेदमेदोवसालसीकापूयस्वेदमूत्रपुरीषपित्तश्लेष्मोपशोषणो रूक्षः शीतो लघुश्च ॥ ४९ ॥

स एवं गुणोऽप्येक एवात्यर्थमुपयुज्यमानो रौक्ष्यखरविशदस्वभावाच्च रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्युपशोषयति, स्रोतसां खरत्वमुपपादयति, बलमादत्ते, कर्षयति ग्लपयति मोहयति भ्रमयति वदनमुपशोषयति, अन्यांश्च वातजान् विकारानुपजनयति ॥ ५० ॥

कषायो रसः संशमनः संग्राही सन्धारणः पीड़नो रोपणः शोषणः स्तम्भनः श्लेष्मपित्तरक्तशमनः शरीरक्लेदस्योपयोक्ता रूक्षः शीतो गुरुश्च ॥ ५१ ॥

स एवंगुणोऽप्येक एवात्यर्थमुपयुज्यमान आस्यं शोषयति, हृदयं पीडयत्युदरमाध्मापयति, वाचं निगृह्णाति, स्रोतांस्यवबध्नाति, श्यावत्वमुपपादयति, पुंस्त्वमुपहन्ति, विष्टभ्य जरयति, वातमूत्ररेतःपुरीषाण्यवगृह्णाति, कर्षयति, ग्लापयति, तर्षयति स्तम्भयति, खरविशदरूक्षत्वात् पक्षवधग्रहापतानकार्दितप्रभृतींश्च वातजान् विकारानुपजनयति ॥ ५२ ॥

एवमेते षड्रसाः पृथक्त्वेनैकत्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकारका भवन्त्यध्यात्मलोकस्य। अपकारकाः पुनरन्यथा भवन्त्युपयुज्यमानास्तान् विद्वानुपकारार्थमेव मात्रशः सम्यगुपयोजयेदिति ॥ ५३ ॥

भवन्ति चात्र ।

शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः ।
तयोरम्लं यदुष्णञ्च यच्चोक्तं कटुकं तयोः ॥
तेषां रसोपदेशेन निर्द्देश्यो गुणसंग्रहः ।
वीर्यतो विपरीतानां पाकतश्चोपदेक्ष्यते ॥
यथापयो यथासर्पिर्यथा वा चव्यचित्रकौ ।
एवमादीनि चान्यानि निर्द्दिशेद्रसतो भिषक् ॥ ५४ ॥
मधुरं किञ्चिदुष्णं स्यात् कषायं तिक्तमेव च ।
यथा महत् पञ्चमूलं यथावानूपमामिषम् ॥
लवणं सैन्धवं नोष्णमम्लमामलकं तथा ।
अर्कागुरुगुडूचीनां तिक्तानामौष्ण्यमुच्यते ॥ ५५ ॥
किञ्चिदम्लं हि संग्राहि किञ्चिदम्लं भिनत्ति च ।
यथा कपित्थं संग्राहि भेदि चामलकं तथा ॥

पिप्पली नागरं वृष्यं कटु चावृष्यमुच्यते ।
कषायःस्तम्भनः शीतः सोऽभयायामतोऽन्यथा ॥ ५६ ॥
तस्माद्रसोपदेशेन न सर्व्वं द्रव्यमादिशेत् ।
दृष्टं तुल्यरसेऽप्येवं द्रव्ये द्रव्ये गुणान्तरम् ॥ ५७ ॥
रौक्ष्यात् कषायो रुक्षाणामुत्तमो मध्यमः कटुः ।
तिक्तोऽवरस्तथोष्णाणामुष्णत्वाल्लवणः परः ॥
मध्योऽम्लः कटुकश्चान्त्यः स्निग्धानां मधुरः परः ।
मध्योऽम्लो लवणश्चान्त्यो रसः स्नेहान्निरुच्यते ॥
तिक्तात् कषायो मधुरः शीताच्छीततरः परः ।
स्वादुर्गुरुत्वादधिकः कषायाल्लवणो वरः ॥
अम्लात् कटुस्ततस्तिक्तो लघुत्वादुत्तमोत्तमः ।
केचिल्लघूनामवरमिच्छन्ति लवणं रसम् ॥
गौरवे लाघवे चैव सोऽवरस्तूभयोरपि ॥ ५८ ॥
परञ्चातो विपाकानां लक्षणं संप्रवक्ष्यते ।
कटुतिक्तकषायाणां विपाकः प्रायशः कटुः ॥
अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा ॥ ५९ ॥
मधुरो लवणाम्लौ च स्निग्धभावात् त्रयो रसाः ।
वातमूत्रपुरीषाणां प्रायो मोक्षे सुखा मताः ॥
कटुतिक्तकषायाश्च रुक्षभावात् त्रयो रसाः ।
दुःखाय मोक्षे दृश्यन्ते वातविण्मूत्ररेतसाम् ॥ ६० ॥
शुक्रहा बद्धविण्मूत्रो विपाको वातलः कटुः ।
मधुरः सृष्टविण्मूत्रो विपाकः कफशुक्रलः ॥
पित्तकृत् सृष्टविण्मूत्रः पाकोऽम्लः शुक्रनाशनः ।

तेषां गुरुः स्यान्मधुरः कटुकाम्लावतोऽन्यथा ॥
विपाकलक्षणस्याल्पमध्यभूयिष्ठतां प्रति ।
द्रव्याणां गुणवैशेष्यात्तत्र तत्रोपलक्षयेत् ॥ ६१ ॥
मृदुतीक्ष्णगुरुलघु स्निग्धरूक्षोष्णशीतलम् ।
वीर्य्यमष्टविधं केचित् केचित् द्विविधमास्थिताः ॥
शीतोष्णमिति वीर्य्यन्तु क्रियते येन या क्रिया ।
नावीर्य्यं कुरुते किञ्चित् सर्व्वा वीर्य्यकृता क्रिया ॥
रसो निपाते द्रव्याणां विपाकः कर्म्मनिष्ठया ।
वीर्य्यं यावदधीवासान्निपाताच्चोपलभ्यते ॥ ६२ ॥
रसवीर्य्यविपाकानां सामान्यं यत्र लक्ष्यते ।
विशेषः कर्म्मणाञ्चैव प्रभावस्तस्य स स्मृतः ॥
कटुकः कटुकः पाके वीर्य्योष्णश्चित्रको मतः ।
तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम् ॥
विषं विषघ्नमुक्तं यत् प्रभावस्तत्र कारणम् ।
ऊर्द्ध्वानुलोमिकं यच्च तत् प्रभावप्रभावितम् ॥
मणीनां धारणीयानां कर्म्म यद् विविधात्मकम् ।
तत् प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते ॥ ६३ ॥
किञ्चिद्रसेन कुरुते कर्म्म वीर्य्येण चापरम् ।
द्रव्यं गुणेन पाकेन प्रभावेन च किञ्चन ॥
रसं विपाकस्तौ वीर्य्यं प्रभावस्तान्यपोहति ।
गुणसामेऽ रसादीनामिति नैसर्गिकं बलम् ॥
सम्यग्विपाकवीर्य्याणि प्रभावश्चाप्युदाहृतः ॥ ६४ ॥
षण्णां रसानां विज्ञानमुपदेक्ष्याम्यतः परम् ।

स्नेहनप्रीणनाह्लादमार्दवैरुपलभ्यते।
मुखस्थो मधुरश्चास्यं व्याप्नुवँल्लिम्पतीव च॥
दन्तहर्षान्मुखास्रावात् स्वेदनान्मुखबोधनात्।
प्राशैरवाम्लरसं विद्याद् विदाहाच्चास्यकण्ठयोः॥
प्रीणयन् क्लेदविष्यन्दमार्दवं कुरुते मुखे।
यः शीघ्रं लवणो ज्ञेयः स विदाहान्मुखस्य च॥
संवेजयेद् यो रसनं निपाते मुद्गतीव च।
विदहन् मुखनासाचिसंस्रावी कटुकः स्मृतः॥
प्रतिहन्ति निपाते यो रसनं स्वदते न च।
स तिक्तो मुखवैशद्यशोषाप्रह्लादकारकः॥
वैशद्यस्तम्भजाड्यैर्यो रसनं योजयेद्रसः।
बध्नातीव च यः कण्ठं कषायः स विकास्यथ॥ ६५॥

एवमुक्तवन्तं भगवन्तमात्रेयं पुनरग्निवेश उवाच भगवन्! श्रुतमेतदवितथमर्थसम्पद्युक्तं भगवतो यथावद्द्रव्यगुणकर्म्माधिकारेवचः। परन्त्वाहारविकाराणां वैरोधिकानां लक्षणमनतिसंक्षेपेणोपदिश्यमानं शुश्रूषाम इति॥ ६६॥

तमुवाच भगवानात्रेयो देहधातुप्रत्यनीकभूतानि द्रव्याणि देहधातुभिर्विरोधमापद्यन्ते। परस्परगुणविरुद्धानि कानिचित् संयोगात् संस्कारादपराणि देशकालमात्रादिभिश्चापराणि तथा स्वभावादपराणि द्रव्याणि। तत्र यान्याहारमधिकृत्य भूयिष्ठमुपयुज्यन्ते तेषामेकदेशं वैरोधिकमधिकृत्योपदेच्यामः॥ ६७॥

न मत्स्यान् पयसा सहाभ्यवहरेदुभयं ह्येतन्मधुरं, मधुरविपाकान्महाभिष्यन्दि, शीतोष्णत्वाद्विरुद्धवीर्य्यं, विरुद्धवीर्य्य-

त्वात् शोणितदूषणाय, महाभिष्यन्दित्वात् मार्गोपरोधाय चेति ॥ ६८ ॥

तदनन्तरमात्रेयवचनमनुनिशम्य भद्रकाप्योऽग्निवेशमुवाच सर्व्वानेव मत्स्यान् पयसा सहाभ्यवहरेत्, अन्यत्रैकस्मात् चिलिचिमात् । स पुनः शकली सर्व्वतो रोहितराजी रोहितप्रकारः प्रायो भूमौ चरति । तच्चेत् पयसा सहाभ्यवहरेत्, निःसंशयं शोणितजानां विबन्धानाञ्च व्याधीनामन्यतममथवा मरणमवाप्नुयात् ॥ ६९ ॥

नेत्यात्रेयः, सर्व्वानेव मत्स्यान् न पयसा सहाभ्यवहरेत् विशेषतस्तु चिलिचिमम् । स हि महाभिष्यन्दित्वात् स्थूललक्षणभवानेतान् व्याधीनुपजनयति, आमविषमुदीरयति च । ग्राम्यानूपौदकानि पिशितानि च मधुगुडतिलपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्यमद्यात् । तन्मूलं हि बाधिर्य्यान्ध्यजाड्यविकलमूकतामैन्मिन्त्यमथवा मरणमवाप्नोतीति । न पौष्करं रोहिणीकं वा शाकं न कपोतान् सर्षपतैलभृष्टान् मधुपयोभ्यां सहाभ्यवहरेत् । तन्मूलं हि शोणिताभिष्यन्द-धमनीप्रविचयापस्मार-शङ्खक-गलगण्डरोहिणीनामन्यतमं प्राप्नोत्यथवा मरणं । तथा न मूलकलशुनकृष्णगन्धार्जकसुमुखसुरसादीनि भक्षयित्वा पयः सेव्यं कुष्ठाबाधभयात् । न जातुशाकं न च निकुचं पक्वं मधुपयोभ्यां संयोज्यं । एतद्धि मरणायाथवा बलवर्णतेजोवीर्य्योपरोधाय अलंघुव्याधये षाण्ढ्यायचेति । तद्वेव निकुचं पक्वं न माषसूपगुडसर्पिर्भिः सहोपयोज्यं वैरोधिकत्वात् । तथाम्रात्रातकमातुलुङ्गनिकुचकरमर्द्ददन्तशठबदरकोषाम्रभव्य-

जाम्बव कपित्थतिन्तिड़ीपारावताक्षोड़पनसनारिकेलदाड़िमाम-लकान्येवंप्रकाराणि चान्यानि सर्व्वञ्चाम्लं द्रवमद्रवञ्च पयसा सह विरुद्धम्। तथा कङ्गुवरकमुकुष्टककुलत्थमाषनिष्पावाः पयसा सह विरुद्धाः ॥ ७० ॥

पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं विरुद्धं वातञ्चातिकोपयति । हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तञ्चा-तिकोपयति । पायसो मन्थानुपानो विरुद्धः श्लेष्माणञ्चाति-कोपयति । उपोदिका तिलकल्कसिद्धा हेतुरतिसारस्य। बलाका वारुण्या सह कुल्माषैरपि विरुद्धाः, सैव शूकरवसाभृष्टा सद्यो व्यापादयति । भासरमांसमेरण्डाग्निप्लुष्टमेरण्डतैलयुक्तं सद्यो व्यापादयति। हारीतकमांसं हरिद्राग्निप्लुष्टं सद्यो व्यापादयति, तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं मरणाय । मत्स्यनिष्टानन-सिद्धाः पिप्पल्यः, तथाच काकमाची मधुच मरणाय । मधु-चोष्णमुष्णार्त्तस्य च मधु मरणाय, मधुसर्पिषी समघृते, मधु वारि चान्तरीक्षं समघृतं, मधु पुष्करबीजं, मधु पीत्वोष्णोदकम्, तक्रसिद्धः कम्पिल्लकः, पर्य्युषिता काकमाची, अङ्गारशूल्यो भास-श्चेति विरुद्धानि । इत्येतद् यथाप्रश्नमभिनिर्द्दिष्टम् ॥ ७१ ॥

भवन्ति चात्र।

यत् किञ्चित् दोषमुत्क्लेश्य न निर्हरति कायतः ।
आहारजातं तत् सर्व्वमहितायोपदिश्यते ॥
पाण्ड्वाम्यावीसर्पदकोदराणां विस्फोटकोन्मादभगन्दराणाम्।
मूर्च्छामदाध्मानगलग्रहाणाम् पाण्ड्वामयस्यामविषस्य चैव ॥
किलासकुष्ठग्रहणीगदानां शोफाम्लपित्तज्वरपीनसानाम् ।

सन्तानदोषस्य तथैव मृत्योर्विरुद्धमन्नं प्रवदन्ति हेतुम् ॥७२॥

एषां खल्वपरेषाञ्च वैरोधिकनिमित्तानां व्याधीनामिमे भावाः प्रतीघातकरा भवन्ति। तद्यथा वमनं विरेचनं तद्विरोधिनाञ्च द्रव्याणां संशमनार्थमुपयोगस्तथाविधैश्च द्रव्यैः पूर्व्वमभिसंस्कारः शरीरस्येति ॥ ७३ ॥

भवति चात्र।

विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम्।
वमनं शमनञ्चैव पूर्व्वं वा हितसेवनम् ॥ ७२ ॥

तत्र श्लोकाः।

मतिरासीन्महर्षीणां या या रसविनिश्चये।
द्रव्याणि गुणकर्म्मभ्यां द्रव्यसंख्या रसाश्रया ॥
कारणं रससंख्याया रसानुरसलक्षणम्।
परादीनां गुणानाञ्च लक्षणानि पृथक् पृथक् ॥
पञ्चात्मकानां षट्त्वञ्च रसानां येन हेतुना।
ऊर्द्धानुलोमभाजश्च यद्गुणातिशयाद्रसाः ॥
षण्णां रसानां षट्त्वे च अतिभुक्तविभक्तयः।
उद्देशश्चापवादश्च द्रव्याणां गुणकर्म्मणि ॥
प्रवरावरमध्यत्वं रसानां गौरवादिषु।
पाकप्रभावयोर्लिङ्गं वीर्य्यसंख्याविनिश्चयः ॥
षण्णामास्वाद्यमानानां रसानां यत् स्वलक्षणम्।
यद् यद् विरुध्यते यस्मात् येन यत्कारि चैव यत् ॥
वैरोधिकनिमित्तानां व्याधीनामौषधञ्च यत्।
आत्रेयभद्रकाप्येऽस्मिंस्तत् सर्व्वमवदन्मुनिः ॥ ७३ ॥

इत्यग्निवेशकृते, तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने षड्विंशतमः आत्रेयभद्रकाप्यीयोऽध्यायः ॥ २६ ॥

अथातोऽन्नपानविधिमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

इष्टवर्णगन्धरसस्पर्शं विधिविहितमन्नपानं प्राणिनां प्राणि-संज्ञकानां प्राणमाचक्षते कुशलाः। प्रत्यक्षफलदर्शनात् तदिन्ध-नात् ह्यन्तरग्नेः स्थितिः। तत् सत्त्वमूर्ज्जयति, तच्छरीरधातु-व्यूहबलवर्णेन्द्रियप्रसादकरम् यथोक्तमुपसेव्यमानं। विपरीत-महिताय सम्पद्यते। तस्माद्धिताहितावबोधनार्थमन्नपानविधि-मखिलेनोपदेक्ष्यामोऽग्निवेश ! ॥ २ ॥

तत् स्वभावादुदकं क्लेदयति, लवणं विष्यन्दयति, क्षारः पाचयति, मधु सन्दधाति, सर्पिः स्नेहयति, क्षीरं जीवयति, मांसं वृंहयति, रसः प्रीणयति, सुरा जर्ज्जरीकरोति, सीधुरव-धमति, द्राक्षासवो दीपयति, फाणितमाचिनोति, दधि शोफं जन-यति, पिण्याको ग्लपयति। प्रभूतान्तर्मलो माषसूपः, दृष्टि-शुक्रघ्नः क्षारः। प्रायः पित्तलमम्लमन्यत्र दाडिमामलकात्। प्रायः श्लेष्मलं मधुरमन्यत्र मधुनः, पुराणाद् यवगोधूमाच्च। प्रायस्तिक्तकं वातलमवृष्यञ्च, अन्यत्र वेत्राग्रपटोलपत्रात्। प्रायः कटुकं वातलमवृष्यञ्च, अन्यत्र पिप्पलीविश्वभेषजात् ॥ ३ ॥

परमतो वर्गसंग्रहेणाहारद्रव्याण्यनुव्याख्यास्यामः।

शूकधान्यशमीधान्यमांसशाकफलाश्रयान्।
वर्गान् हरितमद्याम्बुगोरसेक्षुविकारकान् ॥
दश द्वौ चापरौ वर्गौ कृतान्नाहारयोगिनाम्।
रसवीर्य्यविपाकैश्च प्रभावैश्चोपदेक्ष्यते ॥ ४ ॥

अथ शूकधान्यवर्गः ।

रक्तशालिर्महाशालिः कलमः शकुनाहृतः ।
तूर्णको दीर्घशूकश्च गौरः पाण्डुकलाङ्गुलौ ॥
सुगन्धका लोहवालाः शालिकाख्याः प्रमोदकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥
शीता रसे विपाके च मधुराः स्वल्पमारुताः ।
बद्धाल्पवर्च्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः ॥
रक्तशालिर्वरस्तेषां तृष्णाघ्नस्त्रिमलापहः ।
महांस्तस्यानु कलमस्तस्याप्यनु ततः परे ॥
यवका हायनाः पांशुवाप्यनैषधकादयः ।
शालीनां शालयः कुर्व्वन्त्यनुकारं गुणागुणैः ॥ ५ ॥
शीतः स्निग्धो गुरुः स्वादुस्त्रिदोषघ्नः स्थिरात्मकः ।
षष्टिकः प्रवरो गौरः कृष्णगौरस्ततोऽनु च ॥
वरकोद्दालकौ चीनशारदोज्ज्वलदर्द्दुराः ।
गन्धलाः कुरुविन्दाश्च षष्टिकाल्पान्तरा गुणैः ॥
मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ ६ ॥
सकोरदूषः श्यामाकः कषायमधुरो लघुः ।
वातलः श्लेष्मपित्तघ्नः शीतः संग्राहिशोषणः ॥
हस्तिश्यामाकनीवारतोयपर्णीगवेधुकाः ।
प्रशातिकाम्भःश्यामाकलौहित्याणुप्रियङ्गवः ॥
मुकुन्दो झिण्टिगर्म्मूटी वरुका वरकास्तथा ।
शिविरेतुकटजूर्णाख्याः श्यामाकसदृशा गुणैः ॥ ७ ॥

यवः शीतो गुरुः स्वादुर्बहुवातशकृद्यवः।
स्थैर्यकृत् सकषायश्च बल्यः श्लेष्मविकारजित् ॥
रूक्षः कषायानुरसो मधुरः कफपित्तहा।
मेदःक्रिमिविषघ्नश्च बल्यो वेणुयवो मतः ॥ ८ ॥
सन्धानकृद् वातहरो गोधूमः स्वादुशीतलः।
जीवनो वृंहणो वृष्यः स्निग्धः स्थैर्यकरो गुरुः ॥
नान्दीमुखी मधूलीच मधुरस्निग्धशीतले।
इत्ययं शूकधान्यानां पूर्व्वो वर्गः समाप्यते ॥ ९ ॥

इति शूकधान्यवर्गः।

## अथ शमीधान्यवर्गः।

कषायमधुरो रूक्षः शीतः पाके कटुर्लघुः।
श्लेष्मपित्तप्रशमनो मुद्गः सूप्योत्तमो मतः ॥
वृष्यः परं वातहरः स्निग्धोष्णमधुरो गुरुः।
बल्यो बहुमलः पुंस्त्वं माषः शीघ्रं ददाति च ॥
राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत्।
स्वादुश्च वातलो रूक्षः कषायो विशदो गुरुः ॥
उष्णाः कषायाः पाकेऽम्लाः कफशुक्रानिलापहाः।
कुलत्था ग्राहिणः कासहिक्काश्वासार्शसां हिताः ॥
मधुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः।
मुकुष्टकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ॥
चणकाश्च मसूराश्च खण्डीकाः सहरेणवः।
लघवः शीतमधुराः सकषाया विरूक्षणाः ॥

पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ।
तेषां मसूरः संग्राही कलायो वातलः परः ॥
स्निग्धोष्णो मधुरस्तिक्तः कषायः कटुकस्तिलः ।
त्वच्यः केश्यश्च बल्यश्च वातघ्नः कफपित्तकृत् ॥
मधुराः शीतला गुर्व्यो बलघ्नी रूक्षणात्मिकाः ।
सस्नेहा बलिभिर्भक्ष्या विविधाः शिम्बिजातयः ॥
शिम्बी रूक्षा कषाया च कोष्ठवातप्रकोपिणी ।
न च वृष्या न चक्षुष्या विष्टभ्य च विपच्यते ॥
आढकी कफपित्तघ्नी वातला कफवातनुत् ।
अवल्गुजः सैड़गजो निष्पावा वातपित्तलाः ॥
काकाण्डोमात्मगुप्तानां माषवत् फलमादिशेत् ।
द्वितीयोऽयं शमीधान्यवर्गः प्रोक्तो महर्षिणा ॥ १० ॥

इति शमीधान्यवर्गः ।

## अथ मांसवर्गः ।

गोखराश्वतरोष्ट्राश्च द्वीपिसिंहर्क्षवानराः ।
वृकव्याघ्रौ तरक्षुश्च बभ्रुमार्ज्जारमूषिकाः ॥
लोपाको जम्बुकः श्येनो वान्तादश्चाषवायसौ ।
शशघ्नीमधुहाभासगृध्रोलूककुलिङ्गकाः ॥
धूमिका कुररश्चेति प्रसहा मृगपक्षिणः ॥ ११ ॥
श्वेतश्यामश्चित्रपृष्ठः कालकः काकुलीमृगः ।
कूचिकाचिल्लिटो भेको गोधा शल्लकगण्डको ।
कदलीनकुलः श्वाविदिति भूमिशयाः स्मृताः ॥ १२ ॥

सृमरश्चमरः खड्गो महिषो गवयो गजः ।
न्यङ्कुर्वराहश्चानूपा मृगाः सर्व्वे रुरुस्तथा ॥ १३ ॥
कूर्म्मः कर्कटको मत्स्यः शिशुमारस्तिमिङ्गिलः ।
शुक्तिशङ्खोद्रकुम्भीरचुलुकीमकरादयः ।
इति वारिशयाः प्रोक्ता वक्ष्यन्ते वारिचारिणः ॥ १४ ॥
हंसः क्रौञ्चो बलाका च बकः कारण्डवः प्लवः ।
शरारी पुष्कराह्वश्च केशरी मणितुण्डकः ॥
मृणालकण्ठो मद्गुश्च कादम्बः काकतुण्डकः ।
उत्क्रोशः पुण्डरीकाक्षो मेघरावोऽम्बुकुक्कुटी ॥
आरा नन्दीमुखी वाटी सुमुखाः सहचारिणः ।
रोहिणी कामकाली च सारसो रक्तशीर्षकः ।
चक्रवाकस्तथाचान्ये खगाः सन्त्यम्बुचारिणः ॥ १५ ॥
पृषतः शरभो रामः श्वदंष्ट्रो मृगमातृकः ।
शशोरणौ कुरङ्गश्च गोकर्णः कोट्टकारकः ॥
चारुष्को हरिणैणौच सम्बरः कालपुच्छकः ।
ऋष्यश्च वरपोतश्च विज्ञेया जाङ्गला मृगाः ॥ १६ ॥
लावो वर्त्तीरकश्चैव वार्त्तीकः सकपिञ्जलः ।
चकोरश्चोपचक्रश्च कुक्कुभो रक्तवर्त्तकः ॥
लावाद्या विष्किरास्त्वेते वक्ष्यन्ते वर्त्तकादयः ॥ १७ ॥
वर्त्तको वर्त्तिकाचैव वर्ही तित्तिरिकुक्कुटौ ।
कङ्कशारपदेन्द्राभगोनर्द्दगिरिवर्त्तकाः ।
क्रकरोऽवकरश्चैव वारड़ाश्चेति विष्किराः ॥ १८ ॥
शतपत्रो भृङ्गराजः कोयष्टिर्जीवजीवकः ।

कैरातः कोकिलोऽत्यूहो गोपपुत्रः प्रियात्मजः ॥
लट्टालट्टषकोबभ्रू वटहा डिण्डिमानकः ।
जटीदुन्दुभिधाङ्कारलोहपृष्ठकुलिङ्गकाः ॥
कपोतशुकशारङ्गाश्चिरिटीकङ्कुयष्टिका ।
शारिकाः कलविङ्कश्च चटकोऽङ्गारचूडकः ॥
पारावतः पाण्डविक इत्युक्ताः प्रतुदा द्विजाः ॥ १९ ॥
प्रसह्य भक्षयन्तीति प्रसहास्तेन संज्ञिताः ।
भूशया बिलशायित्वादानूपोऽनूपसंश्रयात् ॥
जले निवासाज्जलजा जलेचर्य्याज्जलेचराः ।
स्थलजा जाङ्गलाः प्रोक्ता मृगा जङ्गलचारिणः ॥
विकीर्य्य विष्किराश्चैव प्रतुद्य प्रतुदास्तथा ।
योनिरष्टविधा त्वेषां मांसानां परिकीर्त्तिता ॥ २० ॥
प्रसहा भूशयानूपवारिजा वारिचारिणः ।
गुरूष्णास्निग्धमधुरा बलोपचयवर्द्धनाः ॥
वृष्याः परं वातहराः कफपित्तविवर्द्धनाः ।
हिता व्यायामनित्येभ्यो नरा दीप्ताग्नयश्च ये ॥
प्रसहानां विशेषेण मांसं मांसाशिनां भिषक् ।
जीर्णार्शोग्रहणीदोषशोषार्त्तानां प्रयोजयेत् ॥ २१ ॥
लावाद्यो वैष्किरो वर्गः प्रतुदा जाङ्गला मृगाः ।
लघवः शीतमधुराः सकषाया हिता नृणाम् ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ २२ ॥
विष्किरा वर्त्तकाद्यास्तु प्रसहाल्पान्तरा गुणैः ।
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ॥

शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।
मांसं मधुरशीतत्वाद् गुरुबृंहणमाविकम् ॥
योनावजावीव्यामिश्रगोचरत्वादनिश्चितौ ।
सामान्येनोपदिष्टानां मांसानां स्वगुणैः पृथक् ॥ २३ ॥
केषाञ्चिद् गुणवैशेष्याद् विशेष उपदेक्ष्यते ।
दर्शनश्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ।
बर्ही हिततमो बल्यो वातघ्नो मांसशुक्रलः ॥
गुरूष्णास्निग्धमधुराः स्वरवर्णबलप्रदाः ।
बृंहणाः शुक्रलाश्चोक्ता हंसा मारुतनाशनाः ॥
स्निग्धाश्चोष्णाश्च वृष्याश्च बृंहणाः स्वरबोधनाः ।
बल्याः परं वातहराः स्वेदनाश्चरणायुधाः ॥
गुरूष्णो मधुरो नाति धन्वानूपनिषेवणात् ।
तित्तिरिः स जयेच्छीघ्रं त्रिदोषाननिलोल्बणान् ॥
पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ।
मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात् ॥
लावाः कषायमधुरा लघवोऽग्निविवर्द्धनाः ।
सन्निपातप्रशमनाः कटुकाश्च विपाकतः ॥ २४ ॥
गोधा विपाके मधुरा कषायकटुका रसे ।
वातपित्तप्रशमनी बृंहणी बलवर्द्धनी ॥
शल्लको मधुराम्लश्च विपाके कटुकः स्मृतः ।
वातपित्तकफघ्नश्च श्वासकासहरस्तथा ॥
कषायमधुराः शीता रक्तपित्तनिबर्हणाः ।
विपाके मधुराश्चैव कपोता गृहवासिनः ॥

तेभ्यो लघुतराः किञ्चित् कपोता वनवासिनः ।
शीताः संग्राहिणश्चैव स्वल्पं मूत्रकराश्च ते ॥
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ।
शोषकासक्षयहितं संग्राहि लघु दीपनम् ॥
चटका मधुराः स्निग्धाः बलशुक्राभिवर्द्धनाः ।
सन्निपातप्रशमनाः शमना मारुतस्य च ॥
कषायो विशदो रूक्षः शीतः पाके कटुर्लघुः ।
शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलावरे ॥
मधुरा मधुराः पाके त्रिदोषशमनाः शिवाः ।
लघवो बद्धविण्मूत्राः शीताश्चैणाः प्रकीर्त्तिताः ॥
गव्यं केवलवातेषु पीनसे विषमज्वरे ।
शुष्ककासश्रमात्यग्निमांसक्षयहितञ्च तत् ॥
गुरूष्णा मधुरा बल्या वृंहणाः पवनापहाः ।
मत्स्याः स्निग्धाश्च वृष्याश्च बहुदोषाः प्रकीर्त्तिताः ॥
वर्णौ वातहरो वृष्यश्चक्षुष्यो बलवर्द्धनः ।
मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म्म उच्यते ॥
स्नेहनं वृंहणं वृष्यं श्रमघ्नमनिलापहम् ।
वाराहं पिशितं बल्यं रोचनं स्वेदनं गुरु ॥
स्निग्धोष्णं मधुरं वृष्यं माहिषं गुरु तर्पणम् ।
दार्ढ्यं वृंहत्वमुत्साहं स्वप्नञ्च जनयत्यपि ॥
धार्त्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि ।
चटकानाञ्च यानि स्युरण्डानि च हितानि च ॥
रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च ।

मधुराण्यविदाहीनि सद्यो बलकराणि च ॥
शरीरबृंहणे नान्यद्खाद्यं मांसाद्विशिष्यते ।
इतिवर्गस्तृतीयोऽयं मांसानां परिकीर्त्तितः ॥ २५ ॥

इति मांसवर्गः ।

अथ शाकवर्गः ।

पाठाशुषाशटीशाकं वास्तुकं सुनिषस्नकम् ।
विद्याद् ग्राहि त्रिदोषघ्नं वर्च्चोभेदि च वास्तुकम् ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ।
नात्युष्णशीतवीर्य्या च भेदिनी कुष्ठनाशिनी ॥
राजक्षवकशाकन्तु त्रिदोषशमनं लघु ।
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥
कालशाकञ्च कटुकं दीपनं गरशोफजित् ।
लघूष्णं वातलं रूक्षं कालायं शाकमुच्यते ॥
दीपनी चोष्णवीर्य्याच ग्राहिणी कफमारुते ।
प्रशस्यतेऽम्लचाङ्गेरी ग्रहण्यर्शोहिता च सा ॥
मधुरा मधुरा पाके भेदिनी श्लेष्मवर्द्धिनी ।
वृष्या स्निग्धा च शीता च मदघ्नी चाप्युपोदिका ॥
रूक्षो मदविषघ्नश्च प्रशस्तो रक्तपित्तिनाम् ।
मधुरो मधुरः पाके शीतलस्तण्डुलीयकः ॥
मण्डूकपर्णी वेत्राग्रं कुचेला वनतिक्तकम् ।
कर्क्कोटकावल्गुजकौ पटोलं शकुलादनी ॥
वृषपुष्पाणि शार्ङ्गेष्टा केवूकं सकठिल्लकम् ।

नाड़ीकलायं गोजिह्वा वार्त्ताकी तिलपर्णिका ॥
कौलकं कार्कशं नैम्बं शाकं पार्प्पटकञ्च यत् ।
कफपित्तहरं तिक्तं शीतं कटु विपच्यते ॥
सर्व्वाणि सूप्यशाकानि फञ्जी चिल्लीकतुम्बुकः ।
आलुकानि च सर्व्वाणि सपत्राणि कठिञ्जरः ॥
शणशाल्मलिपुष्पाणि कर्व्वुदारः सुवर्च्चला ।
निष्पावः कोविदारश्च पत्तूरश्चुच्चुपर्णिका ॥
कुमारजीवो लोट्टाकः पालङ्को मारिषस्तथा ।
कलम्बीनालिकासूर्य्यः कुसुम्भवृकधूमकौ ॥
लक्ष्मणाम्र प्रपुन्नाड़ो नलिनीका * कुठेरकः ।
लोणिका यवशाकञ्च कुष्माण्डकमवल्गुजम् ॥
यातुकः शालकल्याणी त्रिपर्णी पीलुपर्णिका ।
शाकं गुरुच रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति ॥
मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ।
स्विन्नं निष्पीड़ितरसं स्नेहाढ्यं तत् प्रशस्यते ॥ २६ ॥
शणस्य कोविदारस्य कर्व्वुदारस्य शाल्मलेः ।
पुष्पं ग्राहि प्रशस्तञ्च रक्तपित्ते विशेषतः ॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ।
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ॥
वायुं वत्सादनी हन्यात् कफं गण्डीरचित्रकौ ।
श्रेयसी बिल्वपर्णी च बिल्वपत्रञ्च वातनुत् ॥
भण्डी शतावरीशाकं बला जीवन्तिकञ्च यत् ।

---

* नीलिनीकेति इति पाठान्तरम् ।

पर्व्वण्याः पर्व्वपुष्प्याश्च वातपित्तहरं स्मृतम् ॥
लघु भिन्नशकृत् तिक्तं लाङ्गलिकुरुवकयोः।
तिलवेतसशाकञ्च शाकं पञ्चाङ्गुलस्य च ॥
वातलं कटुतिक्ताम्लमधोमार्गप्रवर्त्तनम्।
रुक्षाम्लमुष्णं कौसुम्भं कफघ्नं पित्तवर्द्धनम्॥ २७ ॥
त्रपुषैर्वारुके स्वादुगुरुविष्टम्भिशीतले।
मुखप्रियञ्च रुक्षञ्च मूत्रलं त्रपुषन्त्विति ॥
एर्व्वारुकञ्च संपक्वं दाहतृष्णाक्लमार्त्तिनुत्।
वर्च्चोभेदीन्यलावूनि रुक्षशीतगुरूणि च ॥
चिर्भिटैर्व्वारुके तद्वद्वर्च्चोभेदहिते तु ते।
कुष्माण्डपक्वं सक्षारं मधुराम्लं तथा लघु ॥
सृष्टमूत्रपुरीषञ्च सर्व्वदोषनिवर्हणम्।
केलूटञ्च कदम्बञ्च नदीमाषकमैन्दुकम् ॥
विशदं गुरु शीतञ्च समभिष्यन्दि चोच्यते ॥ २८ ॥
उत्पलानि कषायाणि पित्तरक्तहराणि च।
तथा तालप्रलम्बञ्च उरःक्षतरुजापहम् ॥
खर्ज्जूरं तालशस्यञ्च रक्तपित्तक्षयापहम्।
तरूटं विसशालूकं क्रौञ्चादनकसेरुकम् ॥
शृङ्गाटकाङ्कलोड्यञ्च गुरु विष्टम्भि शीतलम्।
कुमुदोत्पलनालाश्च सपुष्पाः सफलाः स्मृताः ॥
शीताः स्वादुकषायाश्च कफमारुतकोपनाः
कषायमीषद्विष्टम्भि रक्तपित्तहरं स्मृतम् ॥
पौष्करन्तु भवेद्वीजं मधुरं रसपाकयोः।

बल्यः शीतो गुरुः स्निग्धस्तर्पणो वृंहणात्मकः।
वातपित्तहरः स्वादुर्वृष्यो मुञ्जातकः परः ॥
जीवनो वृंहणो वृष्यः कण्ठ्यः शस्तो रसायने ।
विदारीकन्दो बल्यश्च मूत्रलः स्वादुशीतलः ॥
अम्लीकायाः स्मृतः कन्दो ग्रहण्यर्शोहितो लघुः ।
नात्युष्णः कफवातघ्नो ग्राही शस्तो मदात्यये ॥
त्रिदोषं बद्धविण्मूत्रं सार्षपं शाकमुच्यते ।
तद्वत् पिण्डालुकं विद्यात् कन्दत्वाच्च मुखप्रियम् ॥
सर्पच्छत्रकवर्ज्यास्तु बह्व्योऽन्याश्छत्रजातयः ।
शीताः पीनसकर्त्र्यश्च मधुरा गुर्व्य एव च ॥
चतुर्थः शाकवर्गोऽयं पत्रकन्दफलाश्रयः ॥ २८ ॥

इति शाकवर्गः ।

अथ फलवर्गः ।

तृष्णादाहज्वरश्वासरक्तपित्तक्षतक्षयान् ।
वातपित्तमुदावर्त्तं स्वरभेदं मदात्ययम् ॥
तिक्तास्यतामास्यशोषं कासञ्चाशु व्यपोहति ।
मृद्वीका वृंहणी वृष्या मधुरा स्निग्धशीतला ॥
मधुरं वृंहणं वृष्यं खर्ज्जूरं गुरु शीतलम् ।
क्षयेऽभिघाते दाहे च वातपित्ते च तद्धितम् ॥
तर्पणं वृंहणं फल्गु गुरु विष्टम्भि शीतलम् ।
परूषकं मधूकञ्च वातपित्ते च शस्यते ॥
मधुरं वृंहणं वृष्यमाम्रातं तर्पणं गुरु ।

सक्लेदं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्य्यति ॥
तालशस्यानि सिद्धानि नारिकेलफलानि च ।
बृंहणस्निग्धशीतानि बल्यानि मधुराणि च ॥
मधुराम्लकषायञ्च विष्टम्भि गुरुशीतलम् ।
श्लेष्मपित्तकरं भव्यं ग्राहि वक्त्रविशोधनम् ॥
अम्लं परुषकं द्राक्षा बदराण्यारुकाणि च ।
पित्तश्लेष्मप्रकोपीणि कर्कन्धुनिकुचानि च ॥
नात्युष्णं गुरु संपक्वं स्वादुप्रायं मुखप्रियम् ।
संबृंहणं शीघ्रजरं नातिदोषलमारुकम् ॥
द्विविधं शीतमुष्णञ्च मधुरं चाम्लमेव च ।
गुरु पारावतं ज्ञेयमरुच्यत्यग्निनाशनम् ॥
भव्यादल्पान्तरगुणं काश्मर्य्यफलमुच्यते ।
तथैवाल्पान्तरगुणं तूदमम्लं परूषकात् ॥
कषायं मधुरं टङ्कं वातलं गुरु शीतलम् ।
कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि शीतलम् ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ।
तदेव सिद्धं दोषघ्नं विषघ्नं ग्राहि गुर्व्वपि ॥
बिल्वन्तु दुर्ज्जरं सिद्धं दोषलं पूतिमारुतम् ।
स्निग्धोष्णतीक्ष्णं तद्बालं दीपनं कफवातजित् ॥
रक्तपित्तकरं बालमापूर्णं पित्तवर्द्धनम् ।
पक्वमाम्रं जयेद्वायुं मांसशुक्रबलप्रदम् ॥
कषायमधुरप्रायं गुरु विष्टम्भि शीतलम् ।
जाम्बवं कफपित्तघ्नं ग्राहि वातकरं परम् ॥

मधुरं बदरं स्निग्धं भेदनं वातपित्तजित् ।
तच्छुष्कं कफवातघ्नं पित्तेन च विरुध्यते ॥
कषायमधुरं शीतं ग्राहि सिम्बितिकाफलम् ॥ ३० ॥
गाङ्गेरुकी करीरञ्च विम्बी तोदनधन्वनम् ।
मधुरं सकषायञ्च शीतं पित्तकफापहम् ॥
संपक्वं पनसं मोचं राजादनफलानि च ।
स्वादूनि सकषायाणि स्निग्धशीतगुरूणि च ॥
कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
अवदंशक्षमं हृद्यं वातलं लवलीफलम् ॥
नीपं सभार्गकं पीलु तृणशून्यं विकङ्कतम् ।
प्राचीनामलकञ्चैव दोषघ्नं गरहारि च ॥
ऐङ्गुदं तिक्तमधुरं स्निग्धोष्णं कफवातजित् ।
तिन्दुकं कफपित्तघ्नं कषायं मधुरं लघु ॥
विद्यादामलके सर्व्वान् रसाँल्लवणवर्ज्जितान् ॥
रुक्षं स्वादुकषायाम्लं कफपित्तहरं परम् ।
रसासृङ्मांसमेदोजान् दोषान् हन्ति विभीतकम् ॥
स्वरभेदःकफोत्क्लेदपित्तरोगविनाशनम् ।
अम्लं कषायमधुरं वातघ्नं ग्राहि दीपनम् ॥
स्निग्धोष्णं दाड़िमं हृद्यं कफपित्ताविरोधि च ।
रुक्षाम्लं ग्राहि वृक्षोस्यं वातश्लेष्मणि शस्यते ॥
अम्लीकायाः फलं पक्वं तस्माच्चाल्पान्तरं गुणैः ।
गुणैस्तैरेव संयुक्तं भेदनं त्वम्लवेतसम् ॥
शूलेऽरुचौ विबन्धे च मन्देऽग्नौ मद्यविप्लवे ।

हिक्काश्वासे च कासे च छर्द्दिवर्च्चोगदेषु च ॥
वातश्लेष्मसमुत्थेषु सर्व्वेष्वेवोपदिश्यते ।
केशरं मातुलुङ्गस्य लघु शेषमतोऽन्यथा ॥
रोचनो दीपनो हृद्यः सुगन्धिस्त्वग्विवर्ज्जितः ।
कर्च्चूरः कफवातघ्नः श्वासहिक्कार्शसां हितः ॥
सुगन्धि मधुरं साम्लं विशदं भक्तरोचनम् ।
दुर्ज्जरं वातशमनं नागरङ्गफलं गुरु ॥
वातामाभिषुकाक्षोड़मुकूलकनिकोचकाः ।
गुरूष्णास्निग्धमधुराः सोरुमाला बलप्रदाः ॥
वातघ्ना वृंहणा वृष्याः कफपित्ताभिवर्द्धनाः ।
प्रियालमेषां सदृशं विद्यादौष्ण्यं विना गुणैः ॥
श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ।
श्लेष्मलं गुरु विष्टम्भि चाङ्कोठफलमग्निजित् ॥
गुरूष्णं मधुरं रूक्षं केशघ्नञ्च शमीफलम् ।
विष्टम्भयति कारञ्जं पित्तश्लेष्माविरोधि च ॥
आम्रातकं दन्तशठमम्लं सकरमर्द्दकम् ।
रक्तपित्तकरं विद्यादैरावतकमेव च ॥
वातघ्नं दीपनञ्चैव वार्त्ताकं कटु तिक्तकम् ।
वातलं कफपित्तघ्नं विद्यात् पर्कटकीफलम् ॥
पित्तश्लेष्मघ्नमम्लञ्च वातलं चाक्षिकीफलम् ।
मधुराण्यम्लपाकीनि पित्तश्लेष्महराणि च ॥
अश्वत्थोडुम्बरप्लक्षन्यग्रोधानां फलानि च ॥ ३१ ।
कषायमधुराम्लानि वातलानि गुरूणि च ।

भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ।
पञ्चमः फलवर्गोऽयमुक्तः प्रायोपयोगिकः ॥ ३२ ॥

इति फलवर्गः ।

### अथ हरितवर्गः ।

रोचनं दीपनं वृष्यमार्द्रकं विश्वभेषजम् ।
वातश्लेष्मविबन्धेषु रसस्तस्योपदिश्यते ॥
रोचनो दीपनस्तीक्ष्णः सुगन्धिर्मुखबोधनः ।
जम्बीरः कफवातघ्नः क्रिमिहा भक्तपाचनः ॥
बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् ।
स्निग्धस्विन्नं विशुष्कञ्च मूलकं कफवातजित् ॥
हिक्काकासविषश्वासपार्श्वशूलविनाशनः ।
पित्तकृत् कफवातघ्नः सुरसः पूतिगन्धनुत् ॥
यमानी चार्जकश्चैव शिग्रु शालेयमृष्टकम् ।
हृद्यान्यास्वादनीयानि पित्तमुत्क्लेशयन्ति तु ॥
जलपिप्पल्गिण्डीरसुमुखकस्तुम्बुरु ।
तीक्ष्णोष्णकटुरूक्षाणि कफवातहराणि च ॥
पुंस्त्वघ्नः कटुरूक्षोष्णो भूस्तृणो रक्तशोधनः ।
खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ॥
धान्यकञ्चाजगन्धा च सुमुखश्चेति रोचनाः ।
सुगन्धा नातिकटुका दोषानुत्क्लेदयन्ति च ॥
ग्राही गृञ्जनकस्तीक्ष्णो वातश्लेष्मार्शसां हितः ।
स्वेदनेऽभ्यवहारे च योजयेत्तमपित्तिनाम् ॥

स्वेधुलो मारुतघ्नश्च पलाण्डुर्नच पित्तकृत्।
आहारयोगबल्यश्च गुरुर्व्वृष्योऽथ रोचनः॥
कृमिकुष्ठकिलासघ्नो वातघ्नो गुल्मनाशनः।
स्निग्धश्चोष्णश्च वृष्यश्च लशुनः कटुको गुरुः॥
शुष्काणि कफवातघ्नान्येतान्येषां फलानि च।
हरितानामयञ्चैषां षष्ठो वर्गः समाप्यते॥ ३३॥

इति हरितवर्गः।

अथ मद्यवर्गः

प्रकृत्या मद्यमस्लोष्णमम्लं चोक्तं विपाकतः।
सर्व्वं सामान्यतस्तस्य विशेष उपदेक्ष्यते॥
कृशानां सक्तमूत्राणां ग्रहण्यर्शोविकारिणाम्।
सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च॥
हिक्काश्वासप्रतिश्यायकासवर्चोग्रहारुचौ।
छर्द्यानाहविबन्धेषु वातघ्नी मदिरा हिता॥
शूलप्रवाहिकाटोपकफवातार्शसां हितः।
जगलो ग्राही रुक्षोष्णः शोथघ्नो भुक्तपाचनः॥
शोषार्शोग्रहणीदोषपाण्डुरोगारुचिज्वरान्।
हन्त्यरिष्टः कफकृतान् रोगान् दीपनपाचनः॥
मुखप्रियः सुखमदः सुगन्धिर्वस्तिदोषनुत्।
जरणीयः परिणतो हृद्यो वर्ण्यश्च शार्करः॥
रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः।
स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः॥

जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ।
कर्षणः शीतरसिको हितः शोफोदरार्शसाम् ॥
सृष्टभिन्नशकृद्वातो गौड़स्तर्पणदीपनः ।
पाण्डुरोगव्रणहिता दीपनी चाक्षिकी मता ॥
सुरासवस्तीव्रमदो वातघ्नो वदनप्रियः ।
छेदी मध्वासवस्तीक्ष्णो मैरेयो मधुरो गुरुः ॥
धानक्यभिषुतो रूक्षो हृद्यो रोचनदीपनः ।
माद्वींकवन्नचात्युष्णो मृद्वीकेक्षुरसासवः ॥
रोचनं दीपनं हृद्यं बल्यं पित्ताविरोधि च ।
विबन्धघ्नं कफघ्नञ्च मधु लघ्वल्पमारुतम् ॥
सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला ।
गुर्वी जीर्य्यति विष्टभ्य श्लेष्मला तु मधूलिका ॥
दीपनं जरणीयञ्च हृत्पाण्डुक्रिमिरोगनुत् ।
ग्रहण्यर्शोहितं भेदि सौवीरकतुषोदकम् ॥
दाहज्वरापहं स्पर्शात् पानाद्वातकफापहम् ।
विबन्धघ्नमवस्रंसि दीपनं चाम्लकाञ्जिकम् ॥
प्रायशोऽभिनवं मद्यं गुरु दोषसमीरणम् ।
स्रोतसां शोधनं जीर्णं दीपनं लघु रोचनम् ॥
हर्षणं प्रीणनं वर्ण्यं भयशोकश्रमापहम् ।
प्रागल्भ्यवीर्य्यप्रतिभातुष्टिपुष्टिबलप्रदम् ॥
सात्त्विकैर्विधिवद् युक्त्या पीतं स्यादमृतं यथा ।
वर्गोऽयं सप्तमो मद्यमधिकृत्य प्रकीर्त्तितः ॥ ३४ ॥

इति मद्यवर्गः ।

अथ जलवर्गः ।

जलमेकविधं सर्व्वं पतत्यैन्द्रं नभस्तलात् ।
तत् पतत् पतितञ्चैव देशकालावपेक्षते ॥
खात् पतत् सोमवाय्वर्कैः स्पृष्टं कालानुवर्त्तिभिः ।
शीतोष्णस्निग्धरूक्षाद्यैर्यथासन्नं महीगुणैः ॥
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या दिव्यमुदकं भ्रष्टं पात्रमपेक्षते ॥
श्वेते कषायं भवति पाण्डुरे स्यात्तु तिक्तकम् ।
कपिले क्षारसंसृष्टमूषरे लवणान्वितम् ॥
कटु पर्व्वतविस्तारे मधुरं कृष्णमृत्तिके ।
एतत् षड्गुणमाख्यातं महीस्थस्य जलस्य तु ॥ ३५ ॥
तथाव्यक्तरसं विद्यादैन्द्रं कारं हिमञ्च यत् ।
यदन्तरीक्षात् पततीन्द्रसृष्टं चोक्तैश्च पात्रैः परिगृह्यतेऽम्भः ॥
तदैन्द्रमित्येव वदन्ति धीरा नरेन्द्रपेयं सलिलप्रधानम् ।३६।
इत्येतावतविख्याताः सर्व्वे एवाम्भसां गुणाः ॥
ईषत् कषायमधुरं सुसूक्ष्मं विशदं लघु ।
अरूक्षमनभिष्यन्दि सर्व्वं पानीयमुत्तमम् ॥
गुर्व्वभिष्यन्दि पानीयं वार्षिकं मधुरं नवम् ।
तनु लघ्वनभिष्यन्दि प्रायः शरदि वर्षति ॥
तत्तु ये सुकुमाराः स्युः स्निग्धभूयिष्ठभोजनाः ।
तेषां भक्ष्ये च भोज्ये च लेह्ये पेये च शस्यते ॥
हेमन्ते सलिलं स्निग्धं वृष्यं बलहितं गुरु ।
किञ्चित्ततो लघुतरं शिशिरे कफवातजित् ॥

कषायमधुरं रूक्षं विद्याद् वासन्तिकं जलम् ।
ग्रैष्मिकं त्वनभिष्यन्दि जलमित्येव निश्चयः ॥
विभ्रान्तेष्वृतुकालेषु यत् प्रयच्छन्ति तोयदाः ।
सलिलं तत्तु दोषाय युज्यते नात्र संशयः ॥
राजभी राजमात्रैर्वा सुकुमारैश्च मानवैः ॥
सुगृहीताः शरद्यापः प्रयोक्तव्या विशेषतः । ३७ ॥
नद्यः पाषाणविच्छिन्नविक्षुब्धविमलोदकाः ।
हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः ॥
नद्यः पाषाणसिकतावाहिन्यो विमलोदकाः ।
मलयप्रभवा याश्च जलं तास्वमृतोपमम् ॥
पश्चिमाभिमुखा याश्च पथ्यास्ता निर्म्मलोदकाः ।
प्रायो मृदुवहा गुर्व्वो याश्च पूर्व्वसमुद्रगाः ॥
पारिपात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ।
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥
वहुधाकीटसर्पाखुमलसंदूषितोदकाः ।
वर्षाजलवहा नद्यः सर्व्वदोषसमीरणाः ॥ ३८ ॥
वापीकूपतडागोत्स सरःप्रस्रवणादिषु ।
आनूपधन्वशैलानां गुणदोषैर्विभावयेत् ॥
पिच्छिलं क्रिमिलं क्लिन्नं पर्णशैवालकर्द्दमैः ।
विवर्णं विरसं सान्द्रं दुर्गन्धि न हितं जलम् ॥
विस्रं त्रिदोषं लवणमम्बु यद् वारुणालयम् ।
इत्यम्बुवर्गः प्रोक्तोऽयमष्टमः सुविनिश्चितः ॥ ३९ ॥

इति जलवर्गः ।

---

## अथ दुग्धवर्गः।

स्वादु शीतं मृदु स्निग्धं बहलं श्लक्ष्णपिच्छिलम्।
गुरु मन्दं प्रसन्नञ्च गव्यं दशगुणं पयः॥
तदेवंगुणमेवौजः सामान्यादभिवर्द्धयेत्।
प्रवरं जीवनीयानां चीरमुक्तं रसायनम्॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः।
स्नेहान्यूनमनिद्राय हितमत्यग्नये च तत्॥
रूक्षोष्णं चीरमुष्ट्रीणामीषत् सलवणं लघु।
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम्॥
बल्यं स्थैर्य्यकरं सर्व्वमुष्णमेकशफं पयः।
साम्लं सलवणं रूक्षं शाखावातहरं लघु॥
छागं कषायमधुरं शीतं ग्राहि पयो लघु।
रक्तपित्तातिसारघ्नं चयकासज्वरापहम्॥
हिक्काश्वासकरं तूष्णं पित्तश्लेष्मलमाविकम्।
हस्तिनीनां पयो बल्यं गुरु स्थैर्य्यकरं परम्॥
जीवनं वृंहणं सात्म्यं स्नेहनं मानुषं पयः।
नावनं रक्तपित्ते च तर्पणं चाक्षिशूलिनाम्॥ ४० ॥
रोचनं दीपनं वृष्यं स्नेहनं बलवर्द्धनम्।
पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं वृंहणं दधि॥
पीनसे चातिसारे च शीतके विषमज्वरे।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम्।
रक्तपित्तकफोत्थेषु विकारेष्वहितञ्च तत्॥

त्रिदोषं मन्दकं जातं वातघ्नं दधि शुक्रलम् ।
सरः पित्तानिलघ्नस्तु मस्तु स्रोतोविशोधनम् ॥ ४१ ॥
शोफार्शोग्रहणीदोषमूत्रग्रहोदरारुचौ ।
स्नेहव्यापदि पाण्डुत्वे तक्रं दद्याद् गरेषु च ॥ ४२ ॥
संग्राहि दीपनं हृद्यं नवनीतं नवोद्धृतम् ।
ग्रहण्यर्शोविकारघ्नमर्दितारुचिनाशनम् ॥ ४३ ॥
स्मृतिबुद्ध्यग्निशुक्रौजःकफमेदोविवर्द्धनम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥
सर्व्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः ।
सहस्रवीर्य्यं विधिवद् घृतं कर्म्मसहस्रकृत् ॥
मदापस्मारमूर्च्छायशोषोन्मादगरज्वरान् ।
योनिकर्णशिरःशूलं घृतं जीर्णमपोहति ॥
सर्पींष्यजाविमहिषीक्षीरवत् स्वानि निर्द्दिशेत् ॥ ४४ ॥
पीयूषो मोरटश्चैव किलाटा विविधाश्च ये ।
दीप्ताग्नीनामनिद्रानां सर्व्वे एव सुखप्रदाः ।
गुरवस्तर्पणा वृष्या बृंहणाः पवनापहाः ॥
विशदा गुरवो रुक्षा ग्राहिणस्तक्रपिण्डकाः ।
गोरसानामयं वर्गो नवमः परिकीर्त्तितः ॥ ४५ ॥

इति गोरसवर्गः ।

अथेक्षुवर्गः ।

वृष्यः शीतः सरः स्निग्धो बृंहणो मधुरो रसः ।
श्लेष्मलो भक्षितस्त्वैक्षवो यान्त्रिकस्तु विदह्यते ॥

शैत्यात् प्रसादान्माधुर्य्यात् पौण्ड्रकाद् वंशकोवरः ॥ ४६ ॥
प्रभूतकृमिमज्जासृङ्मेदोमांसकरो गुड़ः।
क्षुद्रो गुड़श्चतुर्भागत्रिभागार्द्धावशेषितः॥
रसो गुरुर्यथा पूर्व्वं धौतस्त्वल्पमलो गुड़ः॥ ४७ ॥
ततो मत्स्यण्डिका खण्डः शर्करा विमला परम् ॥
यथायथैषां वैमल्यं भवेत् शैत्यं तथा तथा।
वृष्या क्षीणक्षतहिता सस्नेहा गुड़शर्करा॥
कषायमधुरा शीता सतिक्ता यासशर्करा।
रुक्षा छर्द्द्यतिसारघ्नी छेदनी मधुशर्करा।
तृष्णासृक्पित्तदाहेषु प्रशस्ताः सर्व्वशर्कराः॥ ४८ ॥
माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः।
माक्षिकं प्रवरन्त्वेषां विशेषाद् भ्रामरं गुरु॥
माक्षिकं तैलवर्णं स्याद् घृतवर्णन्तु पौत्तिकम्।
क्षौद्रन्तु कपिलं वर्णं श्वेतं भ्रामरमुच्यते॥
वातलं गुरु शीतञ्च रक्तपित्तकफापहम्।
सन्धानं छेदनं रुक्षं कषायं मधुरं मधु॥
हन्यान्मधूष्णमुष्णार्त्तमथवा सविषान्वयात्।
गुरुरुक्षकषायत्वाच्छैत्याच्चाल्पहितं मधु॥
नातः कष्टतमं किञ्चिन्मध्वामं तद्धि मानवम्।
उपक्रमविरोधित्वात् सद्यो हन्याद् यथा विषम्॥
नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु।
इतीक्षुविकृतिप्रायो वर्गोऽयं दशमो मतः॥ ४६ ॥

इतीक्षुवर्गः।

अथ कृतान्नवर्गः ।

[क्षुत्तृष्णाग्लानिदौर्ब्बल्य-कुक्षिरोगज्वरापहा ।
[स्वेदाग्निजननी पेया वातवर्च्चोऽनुलोमिनी ॥
तर्पणी ग्राहिणी लघ्वी हृद्या चापि विलेपिका ।
मण्डस्तु दीपयत्यग्निं वातञ्चाप्यनुलोमयेत् ॥
मृदूकरोति स्रोतांसि स्वेदं संजनयत्यपि ।
लङ्घितानां विरिक्तानां जीर्णे स्नेहे च तृष्यताम् ॥
दीपनत्वाल्लघुत्वाच्च मण्डः स्यात् प्राणधारणः ।
तृष्णातिसारशमनो धातुसाम्यकरः शिवः ॥
लाजमण्डोऽग्निजननो दाहमूर्च्छानिवारणः ।
मन्दाग्निविषमाग्नीनां बालस्थविरयोषिताम् ॥
देयः स्यात् सुकुमाराणां लाजमण्डः सुसंस्कृतः ।
क्षुत्पिपासापहः पथ्यः शुद्धानान्तु मलापहः ॥
शृतः पिप्पलीशुण्ठीभ्यां युक्तो लाजोऽम्लदाडिमैः ।
सुधौतप्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः ॥
भृष्टतण्डुलमिच्छन्ति गरश्लेष्मामयेष्वपि ।
अधौतोऽप्रस्रुतोऽस्विन्नः शीतश्चाप्योदनो गुरुः ॥ ५० ॥
मांसशाकवसातैलघृतमज्जफलौदनाः ।
बल्याः सन्तर्पणा हृद्या गुरवो बृंहयन्ति च ॥
तद्वन्माषतिलक्षीरमुद्गसंयोगसाधिताः ।
कुल्माषा गुरवो रूक्षा वातला भिन्नवर्च्चसः ॥
स्विन्नभक्ष्यास्तु ये केचित् सौप्यगौधूमयाविकाः ।
भिषक् तेषां यथाद्रव्यमादिशेद् गुरुलाघवम् ॥

अकृतं कृतयूषञ्च तनु संस्कारिकं रसम् ।
सूपमम्लमनम्लञ्च गुरु विद्यात् यथोत्तरम् ॥ ५१ ॥
शक्तवो वातला रुक्षा बहुवर्च्चोऽनुलोमिनः ।
तर्पयन्ति नरं शीघ्रं पीताः सद्योबलाश्च ते ॥
मधुरा लघवः शीताः शक्तवः शालिसम्भवाः ।
ग्राहिणो रक्तपित्तघ्ना तृष्णाच्छर्द्दिज्वरापहाः ॥
हन्त्याश्वाधीन् यवापूपा यावको वाट्य एव च ।
उदावर्त्तप्रतिश्यायकासमेहगलग्रहान् ॥
धानासंज्ञाश्च ये भक्ष्याः प्रायस्ते लेखनात्मकाः ।
शुष्कत्वात्तर्पणाश्चैव विष्टम्भित्वाच्च दुर्ज्जराः ॥
विरूढधानाः शष्कुली मधुक्रोड़ाः सपिण्डकाः ।
पूपाः पूपलिकाद्याश्च गुरवः पैष्टिकाः परम् ॥
फलमांसवसाशाकपललक्षौद्रसंस्कृताः ।
भक्ष्या वृष्याश्च मध्याश्च गुरवो वृंहणात्मकाः ॥
वेशवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ।
गुरवस्तर्पणा वृष्याः क्षीरेक्षुरसपूपकाः ॥
सगुड़ाः सतिलाश्चैव सक्षीरक्षौद्रशर्कराः ।
भक्ष्या वृष्याश्च बल्याश्च परन्तु गुरवः स्मृताः ॥
सस्नेहाः स्नेहसिद्धाश्च भक्ष्या विविधलक्षणाः ।
गुरवस्तर्पणा वृष्या हृद्या गौधूमिका मताः ॥
संस्कारात्लघवः सन्ति भक्ष्या गौधमपैष्टिकाः ।
धानापर्पटपूपाद्यास्तान् बुद्धा निर्दिशेत्तथा ॥ ५२ ॥
पृथुका गुरवो भृष्टान् भक्षयेदल्पशस्तु तान् ।

यावा विष्टभ्य जीर्य्यन्ति सरसा भिन्नवर्च्चसः ॥
सूप्यान्नविकृता भक्ष्या वातला रूक्षशीतलाः ।
सकटुस्नेहलवणान् भक्षयेदल्पशस्तु तान् ॥
मृदुपाकाश्च ये भक्ष्याः स्थूलाश्च कठिनाश्च ये ।
गुरवस्ते व्यतिक्रान्तपाकाः पुष्टिबलप्रदाः ॥
द्रव्यसंयोगसंस्कारं द्रव्यमानं पृथक् तथा ।
भक्ष्याणामादिशेद् बुद्धा यथास्वं गुरुलाघवम् ॥
नानाद्रव्यसमायुक्तः पक्वा वह्निषु भर्ज्जितः ।
विमर्द्दको गुरुर्हृद्यो वृष्यो बलवतां हितः ॥ ५३ ॥
रसाला वृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।
स्नेहनं तर्पणं हृद्यं वातघ्नं सगुड़ं दधि ॥
द्राक्षाखर्ज्जूरकोलानां गुरु विष्टम्भि पानकम् ।
परूषकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति ॥
तेषां कट्वम्लसंयोगात् पानकानां पृथक् पृथक् ।
द्रव्यं मानञ्च विज्ञाय गुणकर्म्माणि निर्द्दिशेत ॥ ५४ ॥
कट्वम्लस्वादुलवणा लघवो रागषाड़वाः ।
मुखप्रियाश्च हृद्याश्च दीपना भक्तरोचनाः ॥
आम्रामलकलेहाश्च वृंहणा बलवर्द्धनाः ।
रोचनास्तर्पणाश्चोक्ताः स्नेहमाधुर्य्यगौरवात् ॥
बुद्धा संयोगसंस्कारान् द्रव्यमानञ्च तत् स्मृतम् ।
गुणकर्म्माणि लेह्यानां तेषां तेषां तथा वदेत् ॥ ५५ ॥
रक्तपित्तकफोत्क्लेदि शुष्कं वातानुलोमनम् ।
कन्दमूलफलाद्यञ्च तद्वद्विद्यात् तदासुतम् ॥

पिण्डाकौं चासुतञ्चान्यत् कालाम्लं रोचनं लघु ।
विद्याद्वर्गं कृतान्नानामेकादशमिमं भिषक् ॥ ५६ ॥

इति कृतान्नवर्गः ।

अथाहारयोगिवर्गः ।

कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ।
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्द्धनम् ॥
वातघ्नमुत्तमं बल्यं त्वच्यं मेधाग्निवर्द्धनम् ।
तैलं संयोगसंस्कारात् सर्व्वरोगापहं मतम् ॥
तैलप्रयोगादजरा निर्व्विकारा जितश्रमाः ।
आसन्नतिबलाः संख्ये दैत्याधिपतयः पुरा ॥ ५७ ॥
एरण्डतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।
वातासृग्गुल्महृद्रोगजीर्णज्वरहरं परम् ॥
कटूष्णं सार्षपं तैलं रक्तपित्तप्रदूषणम् ।
कफशुक्रानिलहरं कण्डूकोठनिवारणम् ॥
आतस्यं मधुराम्लन्तु विपाके कटुकं तथा ।
उष्णवीर्य्यं हितं वाते रक्तपित्तप्रकोपणम् ॥
कुसुम्भतैलमुष्णञ्च विपाके कटुकं गुरु ।
विदाहि च विशेषेण सर्व्वरोगप्रकोपणम् ॥
पियालतैलं मधुरं गुरु श्लेष्माभिवर्द्धनम् ।
हितमिच्छन्ति नात्यौष्ण्यात् संयोगे वातपित्तयोः ॥
फलानां यानि चान्यानि तैलान्याहारसन्निधौ ।
युज्यन्ते गुणकर्म्मभ्यां तानि ब्रूयाद् यथाफलम् ॥ ५८ ॥

मधुरो बृंहणो वृष्यो बल्यो मज्जा तथा वसा ।
यथासत्वन्तु शैत्योष्ण्ये वसामज्ज्ञोर्विनिर्द्दिशेत् ॥ ५९ ॥
स्नेहनं दीपनं वृष्यमुष्णं वातकफापहम् ।
विपाके मधुरं हृद्यं रोचनं विश्वभेषजम् ॥
श्लेष्मला मधुरा चार्द्रा गुर्व्वी स्निग्धा च पिप्पली ।
सा शुष्का कफवातघ्नी कटूष्णा वृष्यसम्मता ॥
नात्यर्थमुष्णं मरिचमवृष्यं लघु रोचनम् ।
छेदित्वाच्छोषणत्वाच्च दीपनं कफवातजित् ॥
वातश्लेष्मविबन्धघ्नं कटूष्णं दीपनं लघु ।
हिङ्गु शूलप्रशमनं विद्यात् पाचनरोचनम् ॥ ६० ॥
दीपनं रोचनं वृष्यं चक्षुष्यमविदाहि च ।
त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम् ॥
सौक्ष्म्यादौष्ण्याल्लघुत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ।
सौवर्च्चलं विबन्धघ्नं हृद्यमुद्गारशोधि च ॥
तैक्ष्ण्यादौष्ण्याद्व्यवायित्वाद्दीपनं शूलनाशनम् ।
ऊर्द्ध्वञ्चाधश्च वातानामानुलोम्यकरं विड़म् ॥
सतिक्तकटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
न काललवणे गन्धः सौवर्च्चलगुणाश्च ते ।
सामुद्रकं समधुरं सतिक्तं कटु पांशुजम् ।
रोचनं लवणं सर्व्वं पाकि स्रंस्यनिलापहम् ॥ ६१ ॥
हृत्पाण्डुग्रहणीरोगप्लीहानाहगलग्रहान् ।
कासं कफजमर्शांसि यावशूको व्यपोहति ॥
तीक्ष्णोष्णो लघुरूक्षश्च क्लेदी पक्ता विदारणः ।

दहनो दीपनश्छेत्ता सर्व्वक्षारोऽग्निसन्निभः ॥
कारव्यः कुञ्चिकाजाजी यमानी धान्यतुम्बुरुः।
रोचनं दीपनं वातकफदौर्गन्ध्यनाशनम् ॥
आहारयोगिनां भक्तिनिश्चयो नतु विद्यते।
पूर्य्यते द्वादशश्चायं वर्ग आहारयोगिनाम् ॥ ६२ ॥

इत्याहारयोगिवर्गः।

शूकधान्यं शमीधान्यं समातीतं प्रशस्यते।
पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु ॥
यद्यदागच्छति क्षिप्रं तत्तल्लघुतरं स्मृतम्।
निस्तुषं युक्तिभृष्टञ्च सूप्यं लघु विपच्यते ॥ ६३ ॥
मृतं कृशममेध्यञ्च वृद्धं बालं विषैर्हतम्।
अगोचरभृतं व्याड़सूदितं मांसमुत्सृजेत् ॥
ततोऽन्यथा हितं मांसं वृंहणं बलवर्द्धनम्।
प्रीणनः सर्व्वधातूनां हृद्यो मांसरसः परः ॥
शुष्यतां व्याधियुक्तानां कृशानां क्षीणरेतसाम्।
बलवर्णार्थिनाञ्चैव रसं विद्यात् यथामृतम् ॥
सर्व्वरोगप्रशमनं यथास्वं विहितं रसम्।
विद्यात् स्वर्य्यं बलकरं वयोबुद्धीन्द्रियायुषाम् ॥
व्यायामनित्याः स्त्रीनित्या मद्यनित्याश्च ये नराः।
नित्यं मांसरसाहारा नातुराः स्युर्न दुर्ब्बलाः ॥ ६४ ॥
क्रिमिवातातपहतं शुष्कं जीर्णमनार्त्तवम्।
शाकं निःस्नेहसिद्धञ्च वर्ज्यं यच्चापरिस्रुतम् ॥
पुराणमामं संक्लिष्टं क्रिमिव्याड़हिमातपैः।

अदेशकालजं क्लिन्नं जह्यात् फलमसाधु तत् ॥
हरितानां यथाशाकं निर्द्देशः साधनादृते ।
मद्याम्बुगोरसादीनां स्वे स्वे वर्गे विनिश्चयः ॥ ६५ ॥
यदाहारगुणैः पानं विपरीतं तदिष्यते ।
अन्नानुपानं धातूनां दृष्टं यन्न विरोधि च ॥
आसवानां समुद्दिष्टामशीतिञ्चतुरुत्तराम् ।
जलं पेयमपेयञ्च परीक्ष्यानुपिवेद्धितम् ॥
स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ।
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसः परम् ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्म्मभिः ।
क्लान्तानामनुपानार्थं पयः पथ्यं यथामृतम् ॥
सुरा कृशानां पुष्ट्यर्थमनुपानं विधीयते ।
कार्श्यार्थं स्थूलदेहानामनु शस्तं मधूदकम् ॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ।
मद्यमांसोचितानान्तु मद्यमेवानु शस्यते ॥ ६६ ॥

अथानुपानकर्म्म प्रवक्ष्यामि । अनुपानं तर्पयति, प्रीणयति, ऊर्ज्जयति, पर्य्याप्तिमभिनिर्व्वर्त्तयति, भुक्तमवसादयति, अन्नसंघातं भिनत्ति, मार्द्दवमापादयति, क्लेदयति, जरयति, सुखपरिणामितामाशुव्यवायिताञ्चाहारस्य जनयतीति ॥ ६७ ॥

भवन्ति चात्र ।

अनुपानं हितं युक्तं तर्पयत्याशु मानवम् ।
सुखं पचति चाहारमायुषे च बलाय च ॥
नोर्द्ध्वाङ्गमारुताविष्टा न हिक्काश्वासकासिनः ।

न शीतभाष्याध्ययनप्रसक्ता नोरसि क्षताः ॥
पिबेयुरुदकं भुक्त्वा तद्धि कण्ठोरसि स्थितम् ।
स्नेहमाहारजं हत्वा भूयो दोषाय कल्पते ॥
अनुपानेष्वतो देशोऽयमुक्तः प्रायोपयोगिकः ॥ ६८ ॥
द्रव्यन्तु नहि निर्द्दिष्टं शक्यं कार्त्स्न्येन नामभिः ।
यथानामौषधं किञ्चिद्देशजानां वचो यथा ।
द्रव्यं तत्तत्तथा वाच्यमनुक्तमिह यद्भवेत् ॥ ६९ ॥
चराः शरीरावयवाः स्वभावो धातवः क्रिया ।
लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥
चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः ।
जलजानूपजाश्चैव जलानूपचराश्च ये ॥
गुरुभक्ष्याश्च ये सत्वाः सर्व्वे ते गुरवः स्मृताः ।
लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः ॥
शरीरावयवाः सक्थिशिरस्कन्धादयस्तथा ।
सक्थिमांसाद् गुरुतरं स्कन्धक्रोड़शिरस्पदम् ॥
वृषणौ चर्म्म मेढ्रञ्च श्रोणीवृक्के यकृद्गुदम् ।
मांसाद् गुरुतरं विद्याद् यथास्वं मध्यमस्थि च ॥ ७० ॥
स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः ।
स्वभावाद्गुरवो माषा वराहमहिषास्तथा ॥
धातूनां शोणितादीनां गुरुं विद्याद् यथोत्तरम्
अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः ॥
गौरवं लिङ्गसामान्ये पुंसां स्त्रीणान्तु लाघवम् ।
महाप्रमाणा गुरवः स्वजातौ लघवोऽन्यथा ॥

गुरूणां लाघवं विद्यात् संस्कारात् सविपर्य्ययम् ।
व्रीहेर्लाजा यथा च स्युः सक्तूनां सिद्धपिण्डकाः ॥ ७१ ॥
अल्पादाने गुरूणाञ्च लघूनाञ्चातिसेवने ।
मात्राकारणमुद्दिष्टं द्रव्याणां गुरुलाघवे ॥
गुरूनामल्पमादेयं लघूनां तृप्तिरिष्यते ।
मात्रामपेक्षते द्रव्यं मात्राचाग्निमपेक्षते ॥
बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः ।
अन्नपानेन्धनैश्चाग्निर्दीप्यते शाम्यतेऽन्यथा ॥
गुरुलाघवचिन्तेयं प्रायेणाल्पबलान् प्रति ।
मन्दक्रियाननारोग्यान् सुकुमारान् सुखोचितान् ॥
दीप्ताग्नयः खराहाराः कर्म्मनित्या महोदराः ।
ये नराः प्रति तांश्चिन्त्यं नावश्यं गुरुलाघवम् ॥ ७२ ॥
हिताभिर्जुहुयान्नित्यमन्तरग्निं समाहितः ।
अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन् ॥
आहिताग्निः सदा पथ्यान्यन्तरग्नौ जुहोति यः
दिवसे दिवसे ब्रह्म जपत्यथ ददाति च ॥
नरं निःश्रेयसे युक्तं सात्म्यज्ञं पानभोजनैः ।
भजन्ते नामयाः केचिद् भाविनोऽप्यन्तराद्दते ॥
षड्‌त्रिंशच्च सहस्राणि रात्रीणां हितभोजनः ।
जीवत्यनातुरो जन्तुर्जितात्मा सम्मतः सताम् ॥ ७३ ॥

भवतश्चात्र ।

प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ॥
वर्णप्रसादः सौस्वर्य्यं जीवितं प्रतिभा सुखम् ।

तुष्टिः पुष्टिर्बलं मेधा सर्व्वमन्ने प्रतिष्ठितम् ॥
लौकिकं कर्म्म यद्वृत्तौ स्वर्गवृत्तं यच्च वैदिकम्।
कर्म्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ ७४ ॥

तत्र श्लोकौ।

अन्नपानगुणाः साग्र्या वर्गा द्वादशनिश्चिताः।
सगुणान्यन्नपानानि गुरुलाघवसंग्रहः ॥
अन्नपानविधावुक्तं तत्परीक्ष्यं विशेषतः ॥ ७५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽन्नपानचतुष्केऽन्नपानविधिर्नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः।

अथातो विविधाशितपीतीयमध्यायं व्याख्यास्याम— इति ह स्माह भगवानात्रेयः ॥ १ ॥

विविधमशितं पीतं लीढं खादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग् विपच्यमानं कालवदनवस्थितसर्व्वधातुपाकमनुपहतसर्व्वधातूष्ममारुतस्रोतः केवलं शरीरमुपचयबलवर्णसुखायुषा योजयति धातूनूर्जयति। धातवो हि धात्वाहाराः प्रकृतिमनुवर्त्तन्ते। तत्राहारः प्रसादाख्यं रसं किट्टञ्च मलाख्यमभिनिर्व्वर्त्तयति। किट्टात् स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाक्षिनासास्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चावयवाः पुष्यन्ति। पुष्यन्ति त्वाहाररसाद्रसरुधिरमांसमेदोऽस्थिमज्जशुक्रौजांसि पञ्चेन्द्रियद्रव्याणि धातु-

प्रसादसंज्ञकानि । शरीरसन्धि-बन्धन-पिच्छादयश्चावयवाः । ते सर्व्वे एव धातवो मलाख्याः प्रसादाख्याश्च रसमलाभ्यां पुष्यन्तः स्वं मानमनुवर्त्तन्ते यथावयः शरीरम् । एवं रसमलौ स्वप्रमाणा-वस्थितावाश्रयस्य समधातोर्धातुसाम्यमनुवर्त्तयतः ॥ २ ॥

निमित्ततस्तु क्षीणाभिवृद्धानां प्रसादाख्यानां वृद्धिक्षयाभ्या-माहारमूलाभ्यां रसः साम्यमुत्पादयत्यारोग्याय किट्टञ्च मला-नामेव । स्वमानातिरिक्ताः पुनरुत्सर्गिणः शीतोष्णपर्य्याय-गुणैश्चोपचर्य्यमाणा मलाः शरीरधातुसाम्यकराः समुपलभ्यन्ते । तेषां मलप्रसादाख्यानां धातूनां स्रोतांस्ययनमुखानि तानि यथाविभागेन यथास्वं धातूनापूरयन्ति । एवमिदं शरीरमशित-लीढ़पीतखादितप्रभवमशितखादित पीतलीढ़ प्रभवाश्च शरीरेऽ-स्मिन् व्याधयो भवन्ति । हिताहितोपयोगविशेषास्तत्र शुभा-शुभकरा भवन्तीति ॥ ३ ॥

एवं वादिनं भगवन्तमात्रेयमग्निवेश उवाच,—दृश्यन्ते हि भगवन् हितसमाख्यातमप्याहारमुपयुञ्जाना व्याधिमन्त-श्चैवागदास्तथैवाहितंसमाख्यातं । एवं दृष्टे कथं हिताहितो-पयोगविशेषात्मकं शुभाशुभविशेषमुपलभामह इति ॥ ४ ॥

तमुवाच भगवानात्रेयः,न हिताहारोपयोगिनामग्निवेश ! तन्निमित्ता व्याधयो हि जायन्ते । न च केवलं हिताहारो-पयोगादेव सर्व्वव्याधिभयमतिक्रान्तं भवति । सन्ति ह्यृतेऽपि आहारोपयोगादन्या रोगप्रकृतयः, तद्यथा कालविपर्य्ययः परि-णामः प्रज्ञापराधः शब्दस्पर्शरूपरसगन्धाश्चासात्म्याः। इत्येता रोगप्रकृतयो रसान् सम्यगुपयुञ्जानमपि पुरुषमशुभेन व्याधिना

उपपादयन्ति । तस्मात् हिताहारोपयोगिनोऽपि दृश्यन्ते च व्याधिमन्तः । अहिताहारोपयोगिनां पुनः कारणविशेषात् न सद्यो दोषवान् भवत्यपचारः । न हि सर्व्वाण्यपथ्यानि तुल्य-दोषाणि, न च सर्व्वे दोषास्तुल्यबलाः, सर्व्वाणि शरीराणि न व्याधिक्षमत्वे समर्थानि भवन्ति । तदेव ह्यपथ्यञ्च देशकाल-संयोगवीर्य्यप्रमाणातियोगाद् भूयस्तरमपथ्यं सम्पद्यते । स एव दोषः संसृष्टयोनिर्विरुद्धोपक्रमो गम्भीरानुगतश्चिरस्थितः प्राणायतनसमुत्थो मर्म्मोपघाती भूयान् कष्टतमः क्षिप्रकारि-तमश्च सम्पद्यते । शरीराणि चातिस्थूलान्यतिकृशान्यनिविष्ट-मांसशोणितादीनि, दुर्ब्बलान्यसात्म्याहारोपचितान्यल्पाहारा-ण्यल्पसत्वानि वा भवन्ति व्याध्यसहानि, विपरीतानि पुन-र्व्याधिसहानि । एभ्यश्चैवापथ्याहारदोषशरीरविशेषेभ्यो व्याधयो मृदवो दारुणाः क्षिप्रसमुत्थाश्चिरकारिणो भवन्ति । अतएव वातपित्तश्लेष्माणः स्थानविशेषे प्रकुपिता व्याधिविशेषानभि-निर्व्वर्त्तयन्त्यग्निवेश ! तत्र रसादिषु स्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयः सम्भवन्ति तांस्तान् व्याधीन् यथावदनुव्याख्यास्यामः ॥ ५ ॥

अश्रद्धा चारुचिश्चास्यवैरस्यमरसज्ञता ।
अङ्गमर्द्दो ज्वरस्तन्द्रा हृल्लासो गौरवं तमः ॥
पाण्डुत्वं स्रोतसां रोधः क्लैव्यं सादः कृशाङ्गता ।
नाशोऽग्नेरयथाकालं बलयः पलितानि च ॥
रसप्रदोषजा रोगा वक्ष्यन्ते रक्तदोषजाः ।
कुष्ठवीसर्पपिड़का रक्तपित्तमसृग्दरः ॥

गुदमेढ्रास्यपाकाश्च प्लीहा गुल्मोऽथ विद्रधी।
नीलिका कामला व्यङ्गाः पिप्लवस्तिलकालकाः॥
दद्रुश्चर्म्मदलं श्वित्रं पामा कोठास्रमण्डलम्।
रक्तप्रदोषाज्जायन्ते शृणु मांसप्रकोपजान्॥
अधिमांसार्व्बुदं कीलं गलशालूकशुण्डिका।
पूतिमांसालजीगण्डगण्डमालोपजिह्विकाः॥
विद्यान्मांसाश्रयान्मेदःसंश्रयांस्तु प्रवक्ष्यति।
निन्दितानि प्रमेहाणां पूर्व्वरूपाणि यानि च॥
अध्यस्थिदन्तदन्तास्थिभेदशूलं विवर्णता।
केशलोमनखश्मश्रुदोषाश्चास्थिप्रकोपजाः॥
मूर्च्छाभ्रमोऽसतमसो दर्शनं पर्व्वणाञ्च रुक्।
अरुषां स्थूलमूलानां पर्व्वजानाञ्च दर्शनम्॥
मज्जप्रदोषाच्छुक्रस्य दोषात् क्लैव्यमहर्षणम्।
रोगिणं क्लीवमल्पायुर्विरूपं वा प्रजायते॥
न चास्य जायते गर्भः पतति प्रस्रवत्यपि।
शुक्रं हि दुष्टं सापत्यं सदारं बाधते नरम्॥ ६॥
इन्द्रियाणि समाश्रित्य प्रकुप्यन्ति यदा मलाः।
उपतापोपघाताभ्यां योजयन्तीन्द्रियाणि तु॥
स्नायुसिराकण्डराभ्यो दुष्टाः क्लिश्नन्ति मानवम्।
स्तम्भसङ्कोचखल्लीभिर्ग्रन्थिस्फुरणसुप्तिभिः॥
मलानाश्रित्य कुपिता भेदशोषप्रदूषणम्।
दोषा मलानां कुर्व्वन्ति सङ्गोत्सर्गावतीव च॥ ७॥
विविधादशितात् पीतादहिताल्लीढखादितात्।

भवन्तेऽते मनुष्याणां विकारा य उदाहृताः ॥
तेषामिच्छन्ननुत्पत्तिं सेवेत मतिमान् सदा ।
हितान्येवाशितादीनि न स्युस्तज्जास्तथामयाः ॥ ८ ॥
रसजानां विकाराणां सर्व्वं लङ्घनमौषधम् ।
विधिशोणितिकेऽध्याये रक्तजानां भिषग्जितम् ॥
मांसजानान्तु संशुद्धिः शस्त्रक्षाराग्निकर्म्म च ।
अष्टौनिन्दितसंख्याते मेदोजानां चिकित्सितम् ॥
अस्थ्याश्रयाणां व्याधीनां पञ्चकर्म्माणि भेषजम् ।
वस्तयः क्षीरसर्पींषि तिक्तकोपहितानि च ॥
मज्जशुक्रसमुत्थानामौषधं स्वादुतिक्तकम् ।
अन्नं व्यवायव्यायामौ शुद्धिः काले च मात्रया ॥
शान्तिरिन्द्रियजानान्तु त्रिमर्म्मीये प्रवक्ष्यते ।
स्नाय्वादिजानां प्रशमो वक्ष्यते वातरोगिके ॥
न वेगान् धारणाध्याये चिकित्सासंग्रहः कृतः ।
मलजानां विकाराणां सिद्धिश्चोक्ता क्वचित् क्वचित् ॥ ९ ॥
व्यायामादुष्मणस्तैक्ष्ण्याद्धितस्यानवचारणात् ।
कोष्ठाच्छाखां मला यान्ति द्रुतत्वान्मारुतस्य च ॥
तत्रस्थाश्च विलम्बन्ते कदाचिन्न समीरिताः ।
नादेशकाले कुप्यन्ति भूयो हेतुप्रतीक्षिणः ॥
वृद्ध्या विष्यन्दनात् पाकात् स्रोतोमुखविशोधनात् ।
शाखां मुक्त्वा मलाः कोष्ठं यान्ति वायोश्च निग्रहात् ॥ १०॥
अजातानामनुत्पत्तौ जातानां विनिवृत्तये ।
रोगाणां यो विधिर्दृष्टः सुखार्थी तं समाचरेत् ॥

सुखार्थाः सर्व्वभूतानां मताः सर्व्वाः प्रवृत्तयः ।
ज्ञानाज्ञानविशेषात्तु मार्गामार्गप्रवृत्तयः ॥
हितमेवानुरुध्यन्ते प्रपरीक्ष्य परीक्षकाः ।
रजोमोहवृतात्मानः प्रियमेव तु लौकिकाः ॥
श्रुतिर्बुद्धिः स्मृतिर्दाक्ष्यं धृतिर्हितनिषेवणम् ।
वाग्विशुद्धिः शमो धैर्य्यमाश्रयन्ति परीक्षकम् ॥
लौकिकं नाश्रयन्त्येते गुणा मोहरजःश्रितम् ।
तन्मूला बहवस्त्वेव रोगाः शारीरमानसाः ॥
प्रज्ञापराधाद्ध्यहितानर्थान् पञ्च निषेवते ।
संधारयति वेगांश्च सेवते साहसानि च ॥
तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ।
रज्यते नतु विज्ञाता विज्ञाने ह्यमलीकृते ॥
न रागान्नाप्यविज्ञानादाहारानुपयोजयेत् ।
परीक्ष्य हितमश्नीयाद्देहो ह्याहारसम्भवः ॥
आहारस्य विधावष्टौ विशेषा हेतुसंज्ञकाः ।
शुभाशुभसमुत्पत्तौ तान् परीक्ष्य प्रयोजयेत् ॥
परिहार्य्याण्यपथ्यानि सदा परिहरन्नरः ।
भवत्यनृणतां प्राप्तः साधूनामिह पण्डितः ॥
यत्तु रोगसमुत्थानमशक्यमिह केनचित् ।
परिहर्त्तुं न तत् प्राप्य शोचितव्यं मनीषिभिः ॥

तत्र श्लोकाः ।

आहारप्रभवं वस्तु रोगाश्चाहारसम्भवाः ।
हिताहितविशेषाच्च विशेषः सुखदुःखयोः ॥

महत्त्वं चामहत्त्वञ्च दुःखानां देहसत्त्वयोः।
विशेषो रोगसंघाश्च धातुजा ये पृथक् पृथक्॥
तेषाञ्चैव प्रशमनं कोष्ठाच्छाखामुपेत्य च।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेत्य च॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितञ्च यत्।
विविधाशितपीतीये तत् सर्व्वं संप्रकाशितम्॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टाविंशतितमो
अन्नपानचतुष्कोविविधाशितपीतीयोऽध्यायः॥ २८॥

---

## एकोनत्रिंशोऽध्यायः।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः॥ १॥

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः।
शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयान्।
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते॥

द्विविधाः खलु भिषजो भवन्त्यग्निवेश! प्राणानामेकेऽभिसरा हन्तारो रोगाणाम्, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति॥ २॥

एवम्वादिनं भगवन्तमात्रेयमग्निवेश उवाच,—भगवंस्ते कथमस्माभिर्वेदितव्या इति॥ ३॥

भगवानुवाच,—य इमे कुलीनाः पर्य्यवदाताः परिदृष्ट-कर्म्माणो दक्षाश्च शुचयो जितहस्ता जितात्मानः सर्व्वोपकरण-वन्तः सर्व्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञाः, ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणाम् । तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः, सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषज्ञाने व्यपगतसन्देहाः, त्रिविधस्यायुर्व्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः, पञ्चत्रिंशतो मूलफलानां चतुर्णाञ्च महास्नेहानां पञ्चानाञ्च लवणानामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां क्षीरत्वग्वृक्षाणाञ्च षण्णां शिरोविरेचनादेश्च पञ्चकर्म्माश्रय-स्यौषधगणस्य अष्टाविंशतेश्च यवागूनां द्वात्रिंशतश्चूर्णप्रदेहानां षण्णाञ्च विरेचनशतानां पञ्चानाञ्च पञ्चकानाम्, स्वस्थवृत्ता-वपि च भोजनपाननियमस्थानचंक्रमणशयनासनमात्राद्रव्या-ञ्जनधूमनावनाभ्यञ्जनपरिमार्ज्जनवेगावधारणव्यायाम-सात्म्येन्द्रियपरीक्षणोपक्रमणसद्वृत्तकुशलाः, चतुष्पादोपगृहीते च भेषजे षोड़शकुले सविनिश्चये सविपर्य्ययणे सवातकलाकल-ज्ञाने व्यपगतसन्देहाः, चतुर्व्विधस्य च स्नेहस्य चतुर्व्विंशत्युपनयनस्योपकल्पनीयस्य चतुःषष्टिपर्य्यन्तस्य व्यवस्थापयितारः, बहुविधविधानयुक्तानाञ्च स्नेह्यस्वेद्यवम्यविरेच्यविविधौषधोपचाराणाञ्च कुशलाः, शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य संक्षयपिड़काविद्रधेस्त्रयाणाञ्च शोफानां बहु-विधशोथानुबन्धानामष्टाचत्वारिंशतश्च रोगाधिकरणानां चत्वा-

महत्वं चासहत्वं च दुःखानां देहसत्वयोः।
विशेषो रोगसंघाश्च धातुजा ये पृथक् पृथक्॥
तेषाञ्चैव प्रशमनं कोष्ठाच्छाखामुपेत्य च।
दोषा यथा प्रकुप्यन्ति शाखाभ्यः कोष्ठमेत्य च॥
प्राज्ञाज्ञयोर्विशेषश्च स्वस्थातुरहितञ्च यत्।
विविधाशितपीतीये तत् सर्व्वं संप्रकाशितम्॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थानेऽष्टाविंशतितमो
अन्नपानचतुष्कोविविधाशितपीतीयोऽध्यायः॥ २८॥

## एकोनत्रिंशोऽध्यायः।

अथातो दशप्राणायतनीयमध्यायं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः॥ १॥

दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः।
शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम्॥
तानीन्द्रियाणि विज्ञानं चेतनाहेतुमामयान्।
जानीते यः स वै विद्वान् प्राणाभिसर उच्यते॥

द्विविधाः खलु भिषजो भवन्त्यग्निवेश! प्राणानामेकेऽभिसरा हन्तारो रोगाणाम्, रोगाणामेकेऽभिसरा हन्तारः प्राणानामिति॥ २॥

एवम्वादिनं भगवन्तमात्रेयमग्निवेश उवाच,—भगवंस्ते कथमस्माभिर्वेदितव्या इति॥ ३॥

भगवानुवाच,—य इमे कुलीनाः पर्य्यवदाताः परिदृष्ट-कर्म्माणो दक्षाश्च शुचयो जितहस्ता जितात्मानः सर्व्वोपकरण-वन्तः सर्व्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञाः, ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणाम् । तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्तिज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः, सुखसाध्यकृच्छ्रसाध्ययाप्यप्रत्याख्येयानाञ्च रोगाणां समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषज्ञाने व्यपगतसन्देहाः, त्रिविधस्यायुर्व्वेदसूत्रस्य ससंग्रहव्याकरणस्य सत्रिविधौषधग्रामस्य प्रवक्तारः, पञ्चत्रिंशतो मूलफलानां चतुर्णाञ्च महास्नेहानां पञ्चानाञ्च लवणानामष्टानाञ्च मूत्राणामष्टानाञ्च क्षीराणां क्षीरत्वगवृक्षाणाञ्च षण्णां शिरोविरेचनादेश्च पञ्चकर्म्माश्रय-स्यौषधगणस्य अष्टाविंशतेश्च यवागूनां द्वात्रिंशतश्चूर्णप्रदेहानां षण्णाञ्च विरेचनशतानां पञ्चानाञ्च पञ्चकानाम्, स्वस्थवृत्ता-वपि च भोजनपाननियमस्थानचंक्रमणशयनासनमात्राद्रव्या-ञ्जनधूमनावनाभ्यञ्जनपरिमार्ज्जनवेगावधारणव्यायाम-सात्म्येन्द्रियपरीक्षणोपक्रमणसद्वृत्तकुशलाः, चतुष्पादोपगृहीते च भेषजे षोड़शकुले सविनिश्चये सत्रिपर्य्येषणे सवातकलाकल-ज्ञाने व्यपगतसन्देहाः, चतुर्विधस्य च स्नेहस्य चतुर्विंशत्युपनयनस्योपकल्पनीयस्य चतुःषष्टिपर्य्यन्तस्य व्यवस्थापयितारः, बहुविधविधानयुक्तानाञ्च स्नेह्यस्वेद्यवम्यविरेच्यविविधौषधोपचाराणाञ्च कुशलाः, शिरोरोगादेश्च दोषांशविकल्पजस्य व्याधिसंग्रहस्य संक्षयपिड़काविद्रधेस्त्रयाणाञ्च शोफानां बहुविधशोथानुबन्धानामष्टाचत्वारिंशतश्च रोगाधिकरणानां चत्वा-

रिंशदुत्तरस्य नानात्मकस्य व्याधिशतस्य तथा विगर्हितातिस्थूलकृशानां सहेतुलक्षणोपक्रमाणां स्वप्नस्य च हिताहितस्या-स्वप्नातिस्वप्नस्य च सहेतूपक्रमस्य षण्णाञ्च लङ्घनादीनामुपक्रमाणां सन्तर्पणापतर्पणजानाञ्च रोगाणां स्वरूपप्रशमनानाञ्च शोणितजानाञ्च व्याधीनां मदमूर्च्छायसन्न्यासानाञ्च सकारणरूपौषधानाञ्च कुशलाः, कुशलाश्चाहारविधिविनिश्चयस्य प्रकृत्या हिताहितानामाहारविकाराणां सायग्रसंग्रहस्य आसवानाञ्च चतुरशीतेर्द्रव्यगुणविनिश्चयस्य रसाणुरससंश्रयस्य सविकल्पिकवैरोधिकस्य द्वादशवर्गाश्रयस्य चान्नपानगणस्य सगुणप्रभावस्य सानुपानगुणस्य विविधस्यार्थसंग्रहस्य आहारगतेश्च हिताहितोपयोगविशेषात्मकस्य च शुभाशुभविशेषस्य धात्वाश्रयानाञ्च रोगाणां सौषधसंग्रहाणां दशानाञ्च प्राणायतनानां यञ्च वक्ष्यमाणार्थैर्दशमहामूलीयं त्रिंशत्तममध्यायं, तत्र च कृत्स्नस्य तन्त्रोद्देशलक्षणस्य ग्रहणधारणविज्ञानप्रयोगकर्म्मकार्य्यकालकर्त्तृकरणकुशलाः, कुशलाश्च स्मृतिमतिशास्त्रयुक्तिज्ञानस्यात्मनः शीलगुणैरविसंवादनेन सम्पादने च सर्व्वप्राणिषु चेतसो मैत्रस्य मातृपितृभ्रातृबन्धुवत्, एवं युक्ता भवन्त्यग्निवेश प्राणाभिसरा हन्तारो रोगाणां॥ ४॥

अतो विपर्य्ययेण अभिसरा रोगाणाञ्च हन्तारः प्राणानाम्। भिषक्छद्मसुप्रतिच्छन्नाः कण्टकभूता लोकस्य प्रतिरूपेणेतुराकृधर्म्माणो राज्ञां प्रमादादेव चरन्ति राष्ट्राणि। तेषामिदं विशेषविज्ञानं भवति,—अत्यर्थं वैद्यवेशेन श्लाघमाना विशिखान्तरमनुचरन्ति कर्म्मलोभात्, श्रुत्वा च कस्यचि-

द्वातुर्य्यमभितः परिपतन्ति, संश्रवणे चास्यात्मनो वैद्यगुणानुच्चै-र्वदन्ति। ते च यस्य प्रतिकर्म्म कुर्व्वन्ति तस्य च दोषान् मुहुर्मुहुरुदाहरन्ति, आतुरमित्राणि प्रहर्षणोपजल्पोपसेवा-दिभिरिच्छन्ति आत्मीकर्त्तुं, अल्पेच्छुताञ्चात्मनः ख्यापयन्ति, कर्म्मचासाद्य मुहुर्मुहुरवलोकयन्ति, दाक्ष्येणाज्ञानमात्मनः प्रच्छादयितुकामाः; व्याधिञ्चापावर्त्तयितुमशक्नुवन्तो व्याधितमेव अनुपकरणमपचारिकमनात्मवन्तमुद्दिशन्ति, अन्तं गतञ्चैन-मभिसमीक्ष्य अन्यमाश्रयन्ति देशमपदेशमात्मनः कृत्वा, प्राकृत-जनसन्निपाते चात्मनः कौशलमकुशलवदुन्नयन्ति, अधीरवच्च धैर्य्यमपवदन्ति धीराणां, विद्वज्जनसन्निपातं प्रतिभयमिव कान्तारमध्वगाः परिहरन्ति दूरात्। यश्चैषां क्वचित् सूत्रा-वयवे भवत्युपयुक्तस्तमप्रकृते प्रकृतान्तरे वा सततमुदाहरन्ति, नचानुयोगमिच्छन्ति अनुयोक्तुं वा, मृत्योरिव अनुयोगादुद्वि-जन्ते। नचैषामाचार्य्यः शिष्यः ब्रह्मचारी वैदिकोवापि कश्चित् प्रज्ञायते ॥ ५ ॥

भवन्ति चात्र।

भिषक्छद्मप्रविश्यैवं व्याधितांस्तर्कयन्ति ये।
वितंसमिव संश्रित्य वने शाकुनिका द्विजान् ॥
श्रुतदृष्टक्रियाकालमात्राज्ञानबहिष्कृताः।
वर्ज्जनीया हि मृत्योस्ते चरन्त्यनुचरा भुवि ॥
वृत्तिहेतोर्भिषङ्मानपूर्णान् मूर्खविशारदान्।
वर्ज्जयेदातुरो विद्वान् सर्पास्ते पीतमारुताः ॥
ये तु शास्त्रविदो दक्षाः शुचयः कर्म्मकोविदाः।

जितहस्ता जितात्मान स्तेभ्योनित्यं कृतं नमः ॥ ६ ॥

तत्र श्लोकः ।

दशप्राणायतनिके श्लोकस्थानार्थसंग्रहः ।
द्विविधा भिषजश्लोक्ताः प्राणस्यायतनानि च ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
एकोनत्रिंशद्दशप्राणायतनीयोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ।

अथातोऽर्थे दशमहामूलीयमध्यायं व्याख्यास्यामः
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अर्थे दश महामूलाः सिराः सक्ता महाफलाः ।
महच्चार्थश्च हृदयं पर्य्यायैरुच्यते बुधैः ॥
षडङ्गमङ्गं विज्ञानमिन्द्रियाण्यर्थपञ्चकम् ।
आत्मा च सगुणश्चेतश्चिन्त्यञ्च हृदि संश्रितम् ॥
प्रतिष्ठार्थं हि भावानामेषां हृदयमिष्यते ।
गोपानसीनामागारकर्णिकेवार्थचिन्तकैः ॥
तस्योपघातान्मूर्च्छायान् भेदान्मरणमृच्छति ।
यद्धि तत्स्पर्शविज्ञानं धारि तत् तत्र संस्थितम् ॥
तत् परस्यौजसः स्थानं तत्र चैतन्यसंग्रहः ।
हृदयं महदर्थश्च तस्मादुक्तं चिकित्सितैः ॥
तेन मूलेन महता महामूला मता दश ।
ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः ॥ २ ॥

येनौजसा वर्त्तयन्ति प्रीणिताः सर्व्वजन्तवः।
यद्दृते सर्व्वभूतानां जीवितं नावतिष्ठते॥
यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः।
संवर्द्धमानं हृदयं समाविशति यत् पुरा॥
यस्यानाशान्न नाशोऽस्ति धारि यत् हृदयाश्रितम्।
यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः॥
तत्फला बहुधा वा ताः फलन्तीति महाफलाः।
ध्मानाद्धमन्यः स्रवणात् स्रोतांसि सरणात्सिराः॥ ३॥
तन्महत् ता महामूला तच्चौजः परिरक्षता।
परिहार्य्या विशेषेण मनसो दुःखहेतवः॥
हृद्यं यत् स्यात् यदौजस्यं स्रोतसां यत् प्रसादनम्।
तत्तत् सेव्यं प्रयत्नेन प्रशमज्ञानमेवच॥ ४॥

अथ खल्वेकं प्राणवर्द्धनानामुत्कृष्टतमं, एकं बलवर्द्धनानां, एकं बृंहणानां, एकं नन्दनानां, एकं हर्षणानां, एकमयनानामिति। तत्राहिंसा प्राणिनां प्राणवर्द्धनानामुत्कृष्टतमा, वीर्य्यं बलवर्द्धनानां, विद्या बृंहणानां, इन्द्रियजयो नन्दनानां, तत्त्वावबोधो हर्षणानां, ब्रह्मचर्य्यमयनानामितीवमायुर्व्वेदविदो मन्यन्ते॥५॥

तत्रायुर्व्वेदविदस्तन्त्रस्थानाध्यायप्रश्नानां पृथक्त्वेन वाक्यशो वाक्यार्थशो अर्थावयवशश्च प्रवक्तारो मन्तव्याः॥ ६॥

तत्राह कथं तन्त्रादीनि वाक्यशो वाक्यार्थशोऽर्थावयवशश्चोक्तानि भवन्ति? इत्यत्रोच्यते, तन्त्रमार्षं कार्त्स्न्येन यथाम्नायमुच्यमानं वाक्यशो भवत्युक्तम्। बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं वाग्भिर्व्याससमासप्रतिज्ञाहेतूदाहरणैर युक्ताभि-

त्रिविधपुरुषाणां बुद्धेरवगम्याभिरुच्यमानं वाक्यार्थशो भवत्युपक्रम्। तन्त्रनियतार्थानामर्थदुर्गाणां पुनर्विभावनैरुक्तमेवार्थावयवशो भवत्युपक्रम् ॥ ७ ॥

तत्र चेत् प्रष्टारः स्युश्चतुर्णामृक्सामयजुरथर्व्ववेदानां कं वेदमुपदिशन्त्यायुर्व्वेदविदः, किमायुश्च, कस्मादायुर्व्वेदः, किमर्थमायुर्व्वेदः, शाश्वतोऽशाश्वतो वा, कति चास्याङ्गानि, कैश्चायमध्येतव्यः, कैः किमर्थमिति ॥ ८ ।

अत्र भिषजा पृष्टेनैवमुच्यते,—चतुर्णामृक्सामयजुरथर्व्ववेदानामात्मनोऽथर्व्ववेदेऽभक्तिः। वेदो ह्याथर्व्वा दानस्वस्त्ययनबलिमङ्गलहोमनियमप्रायश्चित्तोपवासमन्त्रादि-परिग्रहाच्चिकित्सां प्राह। चिकित्सा चायुषो हितायोपदिश्यते। वेदञ्चादिश्यायुर्वाच्यम्। तत्रायुश्चेतनानुवृत्तिर्जीवितमनुबन्धो धारि चेत्येकोऽर्थः। तत्रायुर्वेदयतीत्यायुर्व्वेदः। कथमिति चेदुच्यते तत्र च वाच्यं,—स्वलक्षणतः सुखासुखतो हिताहिततः प्रमाणाप्रमाणतः। यतश्चायुष्याण्यनायुष्याणि च द्रव्यगुणकर्म्माणि वेदयत्यतोऽप्यायुर्व्वेदः ॥ ६ ॥

तत्रायुष्याण्यनायुष्याणि च द्रव्यगुणकर्म्माणि केवलेनोपदेक्ष्यन्ते तन्त्रेण। तत्रायुरुक्तं स्वलक्षणतो यथा यदिहैव पूर्व्वाध्याये। यच्च सुखादिंतस्तत्र शारीरमानसाभ्यां रोगाभ्यामनभिद्रुतस्यानभिभूतस्य च, विशेषेण यौवनवतः, समर्थानुगतबलवीर्य्ययशःपौरुषपराक्रमस्य, ज्ञानविज्ञानेन्द्रियार्थबलसमुदये वर्त्तमानस्य, परमर्द्धिरुचिरविविधोपभोगस्य, समृद्धसर्व्वारम्भस्य, यथेष्टविचारिणः सुखमायुरुच्यते। असुखमतो विपर्य्ययेण ॥१०॥

हितैषिणः पुनर्भूतानां, परस्वादुपरतस्य, सत्यवादिनः, शमपरस्य, समीक्ष्यकारिणः, अप्रमत्तस्य, त्रिवर्गं परस्परेणानुपहतमुपसेव्य पूजार्हपूजकस्य, ज्ञानविज्ञानोपशमशीलस्य, वृद्धोपसेविनः, सुनियतरागेर्ष्यामदमानवेगस्य, सततं विविधप्रदानपरस्य, तपोज्ञानप्रशमनित्यस्य, अध्यात्मविदः, तत्परस्य, लोकमिमञ्चावेक्षमाणस्य, स्मृतिमतिमतो हितमायुरुच्यते। अहितमतोविपर्ययेण ॥ ११ ॥

प्रमाणमायुषस्त्वर्थेन्द्रियमनोबुद्धिचेष्टादीनां स्वेनाभिभूतस्य विकृतिलक्षणैरुपलभ्यते त्वनिमित्तैः। अयमस्मात् क्षणमुहूर्त्ताद् द्दिवसात्त्रिपञ्चदशद्वादशाहात् पक्षान्मासात् संवत्सराद्वा स्वभाव मापत्स्यते। तत्र स्वभावः प्रवृत्तेरुपरमो मरणमनित्यता निरोध इत्येकोऽर्थः। इत्यायुषः प्रमाणं। अतोविपरीतमप्रमाण मरिष्टाधिकारे देहप्रकृतिलक्षणमधिकृत्य चोपदिष्टमायुषः प्रमाणाप्रमाणमायुर्व्वेदे ॥ १२ ॥

प्रयोजनञ्चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनम् ॥ १३ ॥

सोऽयमायुर्वेदः शाश्वतो निर्द्दिश्यतेऽनादित्वात्, स्वभावसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च। नहि नैवाभूत् कदाचिदायुषः सन्तानो बुद्धिसन्तानो वा शाश्वतश्चायुषो वेदिता। अनादिमच्च सुखदुःखं सद्रव्यहेतुलक्षणमपरापरयोगात्। एष चात्मसंग्रहो विभाव्यते। आयुर्व्वेदलक्षणमिति तु यत् तत् पुनर्गुरुलघुशीतोष्णस्निग्धरूक्षादीनाञ्च द्रव्याणां सामान्यविशेषाभ्याञ्च वृद्धिह्रासौ यथोक्तम्। गुरुभिरभ्यस्य-

मानैर्गुरूणामुपचयो भवत्यपचयो लघूनामेवमितरेषामिति। एष भावस्वभावो नित्यः, स्वलक्षणञ्च द्रव्याणां पृथिव्यादीनां। सन्ति तु द्रव्याणि गुणाश्च नित्यानित्याः। नह्यायुर्व्वेदस्याभूतोत्पत्तिरुपलभ्यतेऽन्यत्रावबोधोपदेशाभ्यां। एतच्च द्वयमधिकृत्योत्पत्तिमुपदिशन्त्येके। स्वाभाविकञ्चास्य लक्षणमकृतकं, यदुक्तमिहाद्येऽध्याये। यथाग्नेरौष्ण्यमपां द्रवत्वं भावस्वभावनित्यत्वमपिचास्य यथोक्तं गुरुभिरभ्यस्यमानैर्गुरूणामुपचयोऽपचयो लघूनामिति॥ १४॥

तस्यायुर्व्वेदस्याङ्गान्यष्टौ, तद्यथा कायचिकित्सा शालाक्यं शल्यापहर्त्तृकं विषगरवैरोधिकप्रशमनं भूतविद्या कौमारभृत्यं रसायनानि वाजीकरणमिति॥ १५॥

स चाध्येतव्यो ब्राह्मणराजन्यवैश्यैः। तत्रानुग्रहार्थं प्रजानां ब्राह्मणैः, आत्मरक्षार्थं राजन्यैः, वृत्त्यर्थं वैश्यैः, सामान्यतो वा धर्म्मार्थकामपरिग्रहार्थं सर्व्वैः। तत्र यदध्यात्मविदां धर्म्मपथस्थानां धर्म्मप्रकाशिनां वा मातृपितृभ्रातृबन्धुगुरुजनस्य वा विकारप्रशमने यः प्रयत्नवान् भवति, यच्चायुर्वेदोक्तमध्यात्ममनुध्यायति वेदयत्यनुविधीयते वा सोऽस्य परो धर्म्मः। या पुनरीश्वराणां वसुमतां वा सकाशात् सुखोपहारनिमित्ता भवत्यर्थावाप्तिरात्मरक्षणञ्च, या च स्वपरिगृहीतानां प्राणिनामातुर्य्यादात्मरक्षा सोऽस्यार्थः। यत् पुनरस्य च विद्वद्ग्रहणं, यशः, शरणत्वञ्च, याच सम्मानशुश्रूषा, यच्चेष्टानां विषयाणामारोग्यमाधत्ते सोऽस्यकाम इति यथाप्रश्नमुक्तमशेषेण॥ १६॥

अथ स भिषगादित एव प्रष्टव्यो भिषजाष्टविधं भवति, तन्त्रं,

तन्त्रार्थान्, स्थानं, स्थानार्थान्, अध्यायं, अध्यायार्थान्, प्रश्नं, प्रश्नार्थांश्चेति। पृष्टेन चैतद्वक्तव्यमशेषेण, वाक्यशो वाक्यार्थशोऽर्थावयवशश्चेति। तत्रायुर्वेदः शाखाविद्या सूत्रज्ञानं शास्त्रलक्षणं तन्त्रमित्यनर्थान्तरं। तन्त्रार्थः पुनः स्वलक्षणैरुपदिष्टः, स चार्थः प्रकरणैर्विभाव्यमानो भूय एव शरीरवृत्तिहेतुव्याधिकर्म्मकालकार्यकर्त्तृकरणविधिविनिश्चयाद् दशप्रकरणः। तानि च प्रकरणानि केवलेनोपदेक्ष्यन्ते तन्त्रेण॥ १७॥

तन्त्रस्याष्टौ स्थानानि, तद्यथा—श्लोकनिदानविमानशारीरेन्द्रियचिकित्सितकल्पसिद्धिस्थानानि। तत्र त्रिंशदध्यायं श्लोकस्थानं, अष्टाष्टाध्यायकानि निदानविमानशारीरस्थानानि; द्वादशकमिन्द्रियाणां, त्रिंशकं चिकित्सितानां, द्वादशके कल्पसिद्धिस्थाने भवतः॥ १८॥

भवन्ति चात्र।

द्वे त्रिंशके द्वादशकं त्रयञ्च त्रीण्यष्टकान्येषु समाप्तिरुक्ता।
श्लोकौषधारिष्टविकल्पसिद्धिनिदानमानाश्रयसंज्ञकेषु॥ १९॥

स्वे स्वे स्थाने यथास्वञ्च स्थानार्थ उपदेक्ष्यते।
सविंशमध्यायशतं शृणु नाम क्रमागतम्॥ २०॥

दीर्घंजीवोऽपामार्गतण्डुलारग्वधादिको।
षड्विरेकाश्रयश्चेति चतुष्को भेषजाश्रयः॥
मात्रातस्याशितीयौ च नवेगान् धारणांस्तथा।
इन्द्रियोपक्रमश्चेति चत्वारः स्वास्थ्यवृत्तिकाः॥
खुड्डाकश्च चतुष्पादो महांस्तिस्रैषणास्तथा।
सह वातकलाख्येन विद्यान्नैर्द्देशिकान् बुधः॥

स्नेहनस्वेदनाध्यायावुभौ यश्चोपकल्पनः ।
चिकित्साप्राभृतश्चैव सर्व्वं एव प्रकल्पनाः ॥
कियन्तः शिरसीयश्च त्रिशोफाष्टोदरादिकौ ।
रोगाध्यायो महांश्चैव रोगाध्यायचतुष्टयम् ॥
अष्टौ निन्दितसंख्यातस्तथा लङ्घनतर्पणौ ।
विधिशोणितिकश्चैव व्याख्यातास्तत्र योजनाः ॥
यज्जः पुरुषसंख्यातो भद्रकाप्योऽन्नपानिकौ ।
विविधाशितपीतीयश्चत्वारोऽन्नविनिश्चयाः ॥
दशप्राणायतनिकास्तथार्थेदशमूलिकः ।
द्वावेतौ प्राणदेहार्थौ स्रोतोवैद्यगुणाश्रयौ ॥
औषधस्वस्थनिर्द्देशकल्पनारोगयोजनाः ।
चतुष्काः षट्क्रमेणोक्ताः सप्तमश्चानुपानिकः ॥
द्वौ चान्त्यौ संग्रहाध्यायाविति त्रिंशकमर्थवत् ।
श्लोकस्थानं समुद्दिष्टं तन्त्रस्यास्य शिरः शुभम् ॥
चतुष्काणां महार्थानां स्थानेऽस्मिन् संग्रहः कृतः ।
श्लोकार्थः संग्रहार्थश्च श्लोकस्थानमतः स्मृतम् ॥ २१ ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषोन्मादे निदाने च स्यादपस्मारिणाञ्च यत् ॥
इत्यध्यायाष्टकमिदं निदानस्थानमुच्यते ॥ २३ ॥
रसेषु त्रिविधे कुक्षौ ध्वंसे जनपदस्य च ।
विविधे रोगविज्ञाने स्रोतःस्वपि च वर्त्तने ॥
रोगानीके व्याधिरूपे रोगाणाञ्च भिषग्जिते ।
अष्टौ विमानान्युक्तानि मानार्थानि महर्षिणा ॥ २२ ॥

कतिधापुरुषीयञ्च गोत्रेणातुल्यमेव च ।
खुड्डीका महतीचैव गर्भावक्रान्ति रुच्यते ॥
पुरुषस्य शरीरस्य विचयो द्वौ विनिश्चितौ ।
शरीरसंख्या सूत्रञ्च जाते रष्टम उच्यते ॥
इत्युद्दिष्टानि मुनिना शारीराण्यत्रिसूनुना ॥ २३ ॥
वर्णस्वरीयः पुष्पाख्य स्तृतीयः परिमर्षणः ।
तथाचैवेन्द्रियानीकः पन्नरूपक एवच ॥
कतमानि शरीरीयः पूर्व्वरूपोऽप्यवाक्शिराः ।
यस्य श्यावनिमित्तश्च सद्योमरण एव च ॥
अणुज्योतिरितिख्यातस्तथा गोमयचूर्णवान् ।
द्वादशाध्यायकं स्थानमिन्द्रियाणामिदं स्मृतम् ॥ २४ ॥
अभयामलकीयञ्च प्राणकामीयमेव च ।
करप्रचितकं वेदसमुत्थानं रसायनम् ॥
संयोगशरमूलीयमासिक्तक्षीरकं तथा ।
माषपर्णभृतीयञ्च पुमान् जातबलादिकम् ॥
चतुष्कद्वयमप्येतदध्यायद्वयमुच्यते ।
रसायनमिति ज्ञेयं वाजीकरणमेव च ॥
ज्वराणां रक्तपित्तस्य गुल्मानां मेहकुष्ठयोः ।
शोषोन्मादेऽप्यपस्मारे क्षते शोफोदरार्शसाम् ॥
ग्रहणीपाण्डुरोगाणां श्वासकासातिसारिणाम् ।
छर्द्दिवीसर्पतृष्णानां विषमद्यविकारयोः ॥
द्विव्रणीयं त्रिमर्म्मीयमूरुस्तम्भिकमेव च ।
वातरोगे वातरक्ते योनिव्यापदि चैव यत् ॥

विंशत्त्रिकित्सितान्युक्तान्यतः कल्पान् परं शृणु ॥ २५ ॥
फलजीमूतकेक्ष्वाकूकल्पो धामार्गवस्य च ।
पञ्चमो वत्सकस्योक्तः षष्ठश्च कृतवेधने ॥
श्यामात्रिवृतयोः कल्पस्तथैव चतुरङ्गुले ।
तिल्वकस्य सुधायाश्च सप्तलाशङ्खिनीषु च ।
दन्तीद्रव्यन्त्योः कल्पश्च द्वादशोऽयं समाप्यते ॥ २६ ॥
कल्पना पञ्चकर्म्माख्या वस्तिसूत्री तथैव च ।
स्नेहव्यापद्दिकी सिद्धिर्नेत्रव्यापद्दिकी तथा ॥
सिद्धिः शोधनयोश्चैव वस्तिसिद्धिस्तथैव च ।
प्रसृती मर्म्मसंख्याता सिद्धिर्वस्त्याश्रया च या॥
फलमात्रा तथा सिद्धिः सिद्धिश्चोत्तरसंज्ञिता ।
सिद्धयो द्वादशैवैतास्तन्त्रञ्चासु समाप्यते ॥ २७ ॥
स्वे स्वे स्थाने तथाध्याये चाध्यायार्थः प्रवक्ष्यते ।
तं ब्रूयात् सर्व्वतः सर्व्वं यथार्थाद्ध्यनुसंग्रहात् ॥ २८ ॥
पृच्छा तन्त्राद् यथाम्नायं विधिना प्रश्न उच्यते ।
प्रश्नार्थो युक्तिमांस्तस्य तन्त्रेणैवार्थनिर्णयः ॥ २९ ॥
निबद्धं तन्त्रणात्तन्त्रं स्थानमर्थप्रतिष्ठया ।
अधिकृत्यार्थमध्यायो नाम संज्ञा प्रतिष्ठिता ॥
इति सर्व्वं यथाप्रश्नमष्टकं संप्रकाशितम्।
कार्त्स्न्येन चोक्तं तन्त्रञ्च संग्रहः सुविनिश्चितः ॥ ३० ॥
सन्ति पक्षविकोपेताः संक्षोभं जनयन्ति ये ।
वर्त्तिकानामिवोत्पाताः सहसैव विभाविताः ॥
तस्मात्तु पूर्व्वकं जल्पं सर्व्वंवाष्टकमादिशेत् ।

परापरपरीक्षार्थमत्र शास्त्रविदाम्वरः ॥
शब्दमात्रेण तन्त्रस्य केवलस्यैकदेशिकाः ।
भ्रमन्त्यल्पबलास्तन्त्रे ज्यानल्पेनैवं वर्त्तकाः ॥
पशुः पशूनां दौर्ब्बल्यात् कश्चिच्चापि वृकायते ।
स सत्यं वृकमासाद्य प्रकृतिं भजते पशुः ॥
तद्वद्ज्ञोऽज्ञमध्यस्थः कश्चिन्मौखर्य्यसाधनः ।
स्थापयत्याप्तमात्मानमाप्तमासाद्य भिद्यते ॥
बभ्रुर्गूढ़ इवोर्णाभिरबुद्धिरबहुश्रुतः ।
किं वै वक्ष्यति संजल्पे कुण्डभेदी जड़ोयथा ॥
सद्वृत्तैर्न्न विगृह्णीयात् भिषगल्पश्रुतैरपि ।
हन्यात् प्रश्नाष्टकेनादावितरान् ये प्रमादिनः ॥
दम्भिनो मुखरा ह्यज्ञाः प्रभूतबहुभाषिणः ।
प्रायः प्रायेण सुमुखाः सन्तो युक्ताल्पभाषिणः ॥
तत्त्वज्ञानप्रकाशार्थमहङ्कारमनाश्रिताः ।
स्वल्पाधाराज्ञमुखरान् मर्षयेन्न विवादिनः ॥ ३१ ॥
परोभूतेष्वनुक्रोशस्तत्त्वज्ञानपरा दया ।
येषां तेषामसद्वादनिग्रहे निरता मतिः ॥
असत्पक्षाः क्षणित्वाद्दि दम्भपारुष्यसाधनाः ।
भवन्त्यनाप्ताः स्वे तन्त्रे प्रायः परविकत्थनाः ॥
तान् कालदेशसदृशान् वर्ज्जयेत् शरबद्रूपकान् ।
सेवेत समभिज्ञानज्ञानपूर्व्वान् भिषक्तमान् ॥ ३२ ॥
समग्रदुःखमायत्तमविज्ञाने द्वयाश्रयम् ।
सुखं समग्रं विज्ञाने विमले च प्रतिष्ठितम् ॥

इदमेवमुदाहार्थमज्ञानार्थप्रणाशकम्।
शास्त्रं दृष्टिप्रनष्टानां यथैवादित्यमण्डलम्॥ ३३॥

तत्र श्लोकाः।

अर्थे दशमहामूलाः संज्ञाश्चैषां यथा कृताः।
अयनान्ताः षडग्र्याश्च रूपं वेदविदाञ्च यत्॥
सप्तकश्चाष्टकश्चैव परिप्रश्नः सनिर्णयः।
यथा वाच्यं यदर्थञ्च षड्विधाश्चैकदेशिकाः॥
अर्थे दशमहामूले सर्व्वमेतत् प्रकाशितम्।
संग्रहश्चायमध्यायस्तन्त्रस्यास्यैव केवलः॥
यथा सुमनसां सूत्रं संग्रहार्थं विधीयते।
संग्रहार्थं तथार्थानामृषिणा संग्रहः कृतः॥ ३४॥
अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।
इयताऽवधिना सर्व्वं सूत्रस्थानं समाप्यते॥ ३५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते श्लोकस्थाने
अर्थेदशमहामूलीयस्त्रिंशोऽध्यायः॥ ३०॥

सूत्रस्थानं समाप्तम्

# चरक-संहिता।



## निदान-स्थानम्।

### प्रथमोऽध्यायः।

(ज्वरनिदानम्।)

अथातोज्वरनिदानं व्याख्यास्यामः इति
ह स्माह भगवानात्रेयः॥ १॥

इह खलु हेतुर्निमित्तमायतनं कर्त्ता कारणं प्रत्ययः समुत्थानं निदानमित्यनर्थान्तरम्। तत्त्रिविधमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति। अतस्त्रिधा व्याधयः प्रादुर्भवन्त्याग्नेयाः सौम्या वायव्याश्च. द्विविधाश्चापरे राजसास्तामसाश्च॥ २॥

तत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकारोरोग इत्यनर्थान्तरम्॥ ३॥

तस्योपलब्धिर्निदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तितश्च। तत्र निदानं कारणमित्युक्तमग्रे, पूर्व्वरूपं प्रागुत्पत्तिलक्षणं व्याधेः। प्रादुर्भूतलक्षणं पुनर्लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरमित्यस्मिन्नर्थे। उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणां चौषधाहारविहाराणां उपयोगः सुखानुबन्धः। सम्प्राप्तिरागतिर्जातिरित्यनर्थान्तरं व्याधेः ॥ ४ ॥

सा सङ्ख्याप्राधान्य-विधिविकल्पबलकालविशेषै-र्भिद्यते। सङ्ख्या तावदष्टौ ज्वराः, पञ्च गुल्माः, सप्त कुष्ठानीत्येवमादि। प्राधान्यं पुनर्दोषाणां तरतमाभ्यामुपलभ्यते तत्र द्वयोस्तरस्त्रिषु तमः। विधिर्नाम द्विविधा व्याधयो निजागन्तुभेदेन, त्रिविधास्त्रिदोषभेदेन चतुर्व्विधा साध्यासाध्यमृदुदारुणभेदेन। पृथक् समवेतानां पुनर्दोषाणामंशांशबलविकल्पो विकल्पोऽस्मिन्नर्थे। बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहारकालविधिविनियतो भवति ॥ ५ ॥

तस्माद्व्याधीन् भिषगनुपहतसत्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत। इत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टो भवति। तं विस्तरेणोपदिशन्तो भूयस्तरमतोऽनुव्याख्यास्यामः ॥ ६ ॥

तत्र प्रथमत एव तावदादाय्ज्ञाँ भातिद्रोहकोपप्रभवानष्टौ व्याधीन् निदानपूर्व्वेण क्रमेणानुव्याख्यास्यामः तथा सूत्रसंग्रहमात्रं चिकित्सायाञ्चिकित्सिते चोत्तरकालं यथोद्दिष्टं विकाराणाम् ॥ ७ ॥

इह खलु ज्वर एवादौ विकाराणामुपदिश्यते तत्प्रथमत्वाच्छारीराणाम् ॥ ८ ॥

अथ खल्वष्टाभ्यः कारणेभ्यो ज्वरः सञ्जायते मनुष्याणाम् । तद्यथा वातात् पित्तात् कफाद्वातपित्ताभ्यां वातकफाभ्यां पित्तश्लेष्मभ्यां वातपित्तश्लेष्मभ्य आगन्तोरष्टमात् कारणात् ॥ ९ ॥

तस्य निदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तिविशेषाननुव्याख्यास्यामः ॥ १० ॥ तद् यथा—

रुक्षलघुशीतवमनविरेचनास्थापनशिरोविरेचनातियोगव्यायामवेगसन्धारणानशनाभिघातव्यवायोद्वेगशोकशोणितातिषेकजागरणविषमशरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते । स यदा प्रकुपितः प्रविश्यामाशयमुष्मणः स्थानमुष्मणा सह मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादुष्माणं वहिर्निरस्य केवलं शरीरमनुपद्यते, तदा ज्वरमभिनिवर्त्तयति । तस्येमानि लिङ्गानि भवन्ति । तद्यथा—

विषमारम्भविसर्गित्वमुष्मणो वैषम्यं तीव्रतनुभावानवस्थानानि ज्वरस्य, ज्वरणान्ते दिवसान्ते निशान्ते घर्म्मान्ते वा ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थं रूक्षीभावश्च । अनेकविधोपमाश्चलाचलाश्च वेदनास्तेषां तेषामङ्गावयवानाम् तद्यथा—

पादयोः सुप्तता पिण्डिकयोरुद्वेष्टनं जानुनोः केवलानाञ्च सन्धीनां विश्लेषणमुर्व्वोः सादः, कटीपार्श्वपृष्ठस्कन्धवाहंसोरसाञ्च भग्नरुग्नमृदितमथितचटितावपीडितावतुन्नत्वमिव, हन्वोश्चाप्रसिद्धिः स्वनश्च कर्णयोः शङ्खयोर्निस्तोदः कषायास्यतास्यवैरस्यं वा, मुखतालुकण्ठशोषः पिपासा हृदयग्रहः शुष्क-

च्छर्द्दिः शुष्ककासः क्षवथूद्गारविनिग्रहोऽन्नरसखेदः प्रसेकारोचकाविपाकाविषादजृम्भाविनामवेपथुश्रमभ्रमप्रलापप्रजागरण-रोमहर्षदन्तहर्षास्तथोष्णाभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति वातज्वरलिङ्गानि भवन्ति ॥ १२ ॥

उष्णाम्ललवणक्षारकटुकाजीर्णभोजनेभ्योऽतिसेवितेभ्यस्तथातीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारेभ्यश्च पित्तं प्रकोपमापद्यते। तद् यदा प्रकुपितमामाशयं प्रविशदेवोष्माणमुपसृजदाद्यमाहारपरिणामधातुम् रसनामानमन्ववेत्य रसस्वेद-वहानि स्रोतांसि पिधाय द्रवत्वादग्निमुपहत्य पक्तिस्थानादुष्माणं वहिर्द्धारं निरस्य प्रपीड़यत् केवलं शरीरमनुप्रपद्यते तदा ज्वरमभिनिर्व्वर्त्तयति। तस्येमानि लिङ्गानि भवन्ति, तद्यथा युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा भुक्तस्य विदाहकाले मध्यन्दिनेऽर्द्धरात्रे शरदि वा विशेषेण, कटुकास्यता घ्राणमुखकण्ठोष्ठतालुपाकस्तृष्णा मदोभ्रमो मूर्च्छा पित्तच्छर्द्दनमतीसारोऽन्नद्वेषः सदनं स्वेदः प्रलापो रक्तकोठाभिनिर्वृत्तिः शरीरे। हरितहारिद्रत्वं नखनयनवदनमूत्रपुरीषत्वचामत्यर्थमुष्मणस्तीव्रभावोऽतिमात्रं दाहः शीताभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति पित्तज्वरलिङ्गानि भवन्ति॥ १३॥

स्निग्धगुरुमधुरपिच्छिलशीताम्ललवणदिवास्वप्नहर्षाव्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मा प्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमुष्मणा सह मिश्रीभूयाद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानात् उष्माणं वहिर्निरस्य प्रपीड़यन् केवलं

शरीरमनुप्रपद्यते तदा ज्वरमभिनिर्व्वर्त्तयति। तस्येमानि लिङ्गानि भवन्ति, तद्यथा युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा भुक्तमात्रे पूर्व्वाह्णे पूर्व्वरात्रे वसन्तकाले वा विशेषेण गुरुगात्रत्वमनन्नाभिलाषः श्लेष्मप्रसेको मुखमाधुर्य्यं हृल्लासो हृदयोपलेपः स्तिमितत्वम् छर्द्दिर्मृदग्निता निद्राधिक्यं स्तम्भस्तन्द्रा कासः श्वासः प्रतिश्यायः शैत्यं श्वैत्यञ्च नखनयनवदनमूत्रपुरीषत्वचामत्यर्थञ्च शीतपिड़काश्च भृशमुत्तिष्ठन्ति उष्णाभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति श्लेष्मज्वरलिङ्गानि भवन्ति॥ १४॥

विषमाशनादनशनादन्नस्यापरिवर्त्तादृत्व्यापत्तेरसात्म्यगन्धोपघ्राणाद् विषोपहतस्य चोदकस्योपयोगाद् गरेभ्यो गिरीणाञ्चोपश्लेषात् स्नेहस्वेदवमनविरेचनास्थापनानुवासनशिरोविरेचनाना मयथावत् प्रयोगात्, मिथ्यासंसर्जनाद्वा स्त्रीणाञ्च विषमप्रजननात् प्रजातानाञ्च मिथ्योपचारात् यथोक्तानाञ्च हेतूनां मिश्रीभावात्, यथानिदानं द्वन्द्वानामन्यतमः सर्व्वे वा त्रयोदोषा युगपत् प्रकोपमापद्यन्ते। ते प्रकुपितास्तयैवानुपूर्व्व्या ज्वरमभिनिर्व्वर्त्तयन्ति। तत्र यथोक्तानां ज्वरलिङ्गानां मिश्रीभावविशेषदर्शनात् द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यात्॥ १५॥

अभिघाताभिषङ्गाभिचाराभिशापेभ्य आगन्तुर्हि व्यथा पूर्व्वोऽष्टमो ज्वरो भवति। स किञ्चित्कालमागन्तुः केवलो भूत्वा पश्चान्निजैर्दोषैरनुबध्यते। तत्राभिघातजो वायुना दुष्टशोणिताधिष्ठानेन, अभिषङ्गजः पुनर्वातपित्ताभ्यां, अभिचाराभि-

शापजौ तु सन्निपातेनानुबध्यते। स सप्तविधाज्ज्वराद्विशिष्टलिङ्गोपक्रमसमुत्थानत्वाद्विशिष्टो वेदितव्यः। कर्म्मणा साधारणेन चोपक्रम्यत इत्यष्टविधा ज्वरप्रकृतिरुक्ता ॥ १६ ॥

ज्वरस्त्वेक एव सन्तापलक्षणः, तमेवाभिप्रायविशेषाद् द्विविधमाचक्षते निजागन्तुविशेषाच्च। तत्र निजं द्विविधं चतुर्विधं पञ्चविधं सप्तविधञ्च जगुर्भिषजो वातादि-विकल्पात् ॥ १७ ॥

तस्येमानि पूर्व्वरूपाणि भवन्ति, तद्यथा, मुखवैरस्यं गुरुगात्रत्वमनन्नाभिलाषश्चक्षुषोराकुलत्वमश्रागमनं निद्राधिक्यमरतिर्जृम्भा विनामो वेपथुः श्रमभ्रमप्रलापजागरणरोमहर्षदन्तहर्षाः, शब्दशीतवातातपसहत्वासहत्वमरोचकाविपाकौ दौर्ब्बल्यमङ्गमर्द्दः सदनमल्पप्राणता दीर्घसूत्रतालस्यमुचितस्य कर्म्मणो हानिः प्रतीपता स्वकार्य्येषु गुरूणां वाक्येष्वभ्यसूया, बालेभ्यः प्रद्वेषः स्वधर्म्मेष्वचिन्ता, माल्यानुलेपनभोजनक्लेशनं मधुरेभ्यश्च भक्ष्येभ्यः प्रद्वेषः, उष्णाम्ललवणकटुप्रियता चेति ज्वरस्य पूर्व्वरूपाणि भवन्ति। प्राक्सन्तापादपि चैनं सन्तापार्त्तमनुबध्नन्ति ॥ १८ ॥

इत्येतान्येकैकशश्च ज्वरलिङ्गानि व्याख्यातानि भवन्ति विस्तरसमासाभ्यां ॥ १९ ॥

ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्व्वप्राणिनां प्राणहरः, देहेन्द्रियमनसान्तापकरः, प्रज्ञाबलवर्णहर्षोत्साहह्रासकरः, श्रमक्लमममोहाहारोपरोधसंजननः। ज्वरयति शरीराणीति ज्वरः। नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्स्याश्च

यथायम् । स सर्व्वरोगाधिपति र्नानातिर्य्यग्योनिषु च बहुविधैः शब्दैरभिधीयते । सर्व्वप्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते । स महामोहः, तेनाभिभूताः प्राग्दैहिकं देहिनः किञ्चिदपि न स्मरन्ति सर्व्वप्राणिनाञ्च ज्वर एवान्ते प्राणानादत्ते ॥ २० ॥

तत्र पूर्व्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणं वा ज्वरस्यामाशयसमुत्थत्वात् । ततः कषायपानाभ्यङ्गस्नेहस्वेदप्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनोपशमननस्तःकर्म्मधूपधूमपानाञ्जन-क्षीरभोजनविधानञ्च यथास्वं युक्त्या प्रयोज्यम् ॥ २१ ॥

जीर्णज्वरेषु तु सर्व्वेष्वेव सर्पिषः पानं प्रशस्यते यथास्वौषधसिद्धस्य । सर्पिर्हि स्नेहाद्वातं शमयति संस्कारात् कफं शैत्यात् पित्तमूष्माणञ्चोपशमयति । तस्मात् जीर्णज्वरेषु सर्व्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येष्विति ॥ २२ ॥

भवन्ति चात्र ।

यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा ।
नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम् ॥
स्नेहाद्वातं शमयति शैत्यात् पित्तं नियच्छति ।
घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम् ॥
नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते ।
यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतम् ॥
पूर्व्वोक्तोयः पुनः पदैरर्थैः समनुगीयते ।
तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते ॥ २३ ।

तत्र श्लोकाः।

विविधं नामपर्य्यायैर्हेतुं पञ्चविधं गदम्।
गदलक्षणपर्य्यायान् व्याधेः पञ्चविधं ग्रहम्॥
ज्वरमष्टविधं तस्य प्रकृष्टासन्नकारणम्।
पूर्व्वरूपञ्च रूपञ्च भेषजं संग्रहेण च॥
व्याजहार ज्वरस्याग्रे निदाने विगतज्वरः।
भगवानग्निवेशाय प्रणताय पुनर्व्वसुरिति॥ २४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
ज्वरनिदानं प्रथमोऽध्यायः॥ १॥

## द्वितीयोध्यायः

( रक्तपित्त-निदानम्। )

अथातोरक्तपित्तनिदानं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः॥ १॥

पित्तं यथाभूतं लोहितपित्तमिति संज्ञां लभते तथानुव्याख्यास्यामः। यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते, भृशोष्णातीक्ष्णमपिचान्यदन्नजातं निष्पावमाषकुलत्थसूपक्षारोपहितम्, दधिदधिमण्डोदश्वित्कट्वाम्लकाञ्जिकोपसेकं वा, वाराहमाहिषाविकमात्स्यगव्यपिशितं पिण्याकपिण्डालुशुष्कशाकोपहितम्, मूलकसर्षपलसुनकरञ्जशिग्रुमधु-

शिगुखरयूषभूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालकपर्णास-
चवकफणिजभ्भकोपदंशं, सुरासौवीरकतुषोदकमैरेयकमेदक-
मधूलकशुक्तकुवलबदराम्लप्रायान्नपानम्, पिष्टान्नोत्तरभूयिष्ठ-
मुष्णाभितप्तोवातिमात्रमतिवेलं वा पयसा समश्नाति, रोहि-
णीकं काणकपोतं वा सार्षपतैलक्षारसिद्धं, कुलत्थमाषपिण्या-
कजाम्बवनिकुचपक्वैः शौक्तिकैरामक्षीरमतिमात्रमथवा पिवत्युष्णा-
भितप्तः, तस्यैवमाचरतः पित्तं प्रकोपमापद्यते, लोहित-
ञ्चाशु प्रमाणमतिवर्त्तते । तस्मिन् प्रमाणातिवृत्ते पित्तं प्रकुपितं
शरीरमनुसर्पद् यदैव यकृत्प्लीहप्रभवाणां लोहितवहानां च
स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिपद्यते;
तदैव लोहितं प्रदूषयति, तल्लोहितसंसर्गाल्लोहितप्रदूषणाल्लो-
हितवर्णगन्धानुविधानाच्च पित्तं लोहितपित्तमाचक्षते ॥ २ ॥

तस्येमानि पूर्व्वरूपाणि भवन्ति । तद्यथा, अनन्नाभि-
लाषो भुक्तस्य विदाहः शुक्ताम्लगन्धरस उद्गारश्छर्द्देरभीक्ष्णा-
गमनं छर्द्दितस्य वीभत्सता स्वरभेदो गात्राणां सदनं परि-
दाहो मुखाद् धूमागमं इव लोहलोहितमत्स्यामगन्धित्वमिव
चास्यस्य, रक्तहरितहारिद्रत्वमङ्गावयवशकृन्मूत्रस्वेदलाला-
सिङ्घाणकास्यकर्णमलपिच्चडिकापिडकानां, अङ्गवेदना लोहित-
नीलपीतश्यावानामर्च्चिष्मतां दृष्टानाञ्च रूपाणां स्वप्ने सन्दर्शन-
मभीक्ष्णमिति लोहितपित्तपूर्व्वरूपाणि भवन्ति ॥ ३ ॥

उपद्रवास्तु खलु नियता दौर्ब्बल्यारोचकाविपाकश्वास-
कासज्वरातिसारशोषशोथपाण्डुरोगाः स्वरभेदश्च ॥ ४ ॥

मार्गौ पुनरस्य द्वावूर्द्धञ्चाधश्च । तद्बहुश्लेष्मणि शरीरे

श्लेष्मसंसर्गादूर्द्धं प्रतिपद्यमानं कर्णनासानेत्रास्यभ्यः प्रच्यवते। बहुवाते तु शरीरे वातसंसर्गादधः प्रपद्यमानं मूत्रपुरीषमार्गाभ्यां प्रच्यवते। बहुश्लेष्मवाते तु शरीरे श्लेष्मवातसंसर्गाद्द्वावपि मार्गौ प्रतिपद्यते। तौ मार्गौ प्रतिपद्यमानं सर्व्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य। तत्र यदूर्द्धभागं तत् साध्यं, विरेचनोपक्रमणीयत्वाद्बह्वौषधत्वाच्च। यदधोभागं तद्याप्यं, वमनोपक्रमणीयत्वादल्पौषधत्वाच्च। यदुभयभागं तदसाध्यं, वमनविरेचनायोगित्वादनौषधत्वाच्च ॥ ५ ॥

रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञध्वंसे रुद्रकोपामर्षप्रभवाग्निना प्राणिनां परिगतशरीरप्राणानामभूज्ज्वरमनु ॥ ६ ॥

तस्याशुकारिणो दावाग्नेरिवापतितस्यात्ययिकस्याशु प्रशान्तौ प्रयतितव्यं, मात्रां देशं कालञ्चाभिसमीक्ष्य सन्तर्पणेनापतर्पणेन वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्य्यैः प्रदेहपरिषेकावगाहसंस्पर्शैर्वमनाद्यैर्व्वा तत्रावहितेनेति ॥ ७ ॥

भवन्ति चात्र।

साध्यं लोहितपित्तं तद् यदूर्द्धं प्रतिपद्यते।
विरेचनस्य योगित्वाद्बहुत्वाद्भेषजस्य च ॥
विरेचनं हि पित्तस्य जयार्थे परमौषधम्।
यश्च तत्रानुगः श्लेष्मा तस्यचानधमं स्मृतम् ॥
भवेद्योगावहं तत्र कषायं तिक्तमेवच।
तस्मात् साध्यतमं रक्तं यदूर्द्धं प्रतिपद्यते ॥ ८ ॥
रक्तन्तु यदधोभागं तद्याप्यमिति निश्चयः।
वमनस्याल्पयोगित्वादल्पत्वाद् भेषजस्य ॥

वमनं हि न पित्तस्य ज्याथैं परमौषधम् ।
यश्च तत्रानुगो वायुस्तच्छान्तौ चावरं स्मृतम् ॥
स्याच्च योगावहं तत्र मधुरश्चैव भेषजम् ।
तस्माद् याप्यं समाख्यातं यदुक्तमनुलोमगम् ॥ ६ ॥
रक्तपित्तन्तु यन्मार्गौ द्वावपि प्रतिपद्यते ।
असाध्यमिति तज्ज्ञेयं पूर्व्वोक्तादेव कारणात् ॥
न हि संशोधनं किञ्चिदस्यास्ति प्रतिमार्गगम् ।
प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते ॥
एवमेवोपशमनं सर्व्वशो नास्य विद्यते ।
संसृष्टेषु हि दोषेषु सर्व्वजित् शमनं मतम् ॥
इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः ॥ १० ॥
एभ्यस्तु खलु हेतुभ्यः किञ्चित् साध्यं न सिध्यति ।
प्रेष्योपकरणाभावाद् दौरात्म्याद् वैद्यदोषतः ॥
अकर्म्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्त्तते ।
तत्रासाध्यत्वमेकं स्यात् साध्ययाप्यपरिक्रमात् ॥
रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते ।
यत् कृष्णमथवा नीलं यद्वा शक्रधनुःप्रभम् ।
रक्तपित्तमसाध्यं स्याद्वाससो रञ्जनं च यत् ॥
भृशं पूत्यतिमात्रं च सर्व्वोपद्रववच्च यत् ।
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत् ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद् दृश्यं वियच्चापि तच्चासाध्यं न संशयः ॥
तत्रासाध्यं परित्यज्य याप्यं यत्नेन यापयेत् ।

साध्यञ्चावहितः सिद्धैर्भेषजैः साधयेद् भिषक् ॥ ११ ॥

तत्र श्लोकौ।

कारणं नाम निर्वृत्तिं पूर्व्वरूपाण्युपद्रवान्।
मार्गौ दोषानुबन्धञ्च साध्यत्वं न च हेतुमत् ॥
निदाने रक्तपित्तस्य व्याजहार पुनर्व्वसुः।
वीतमोहरजोदोषलोभमानमदस्पृहः ॥ १२ ॥

इत्याग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
रक्तपित्तनिदानं द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः।

### ( गुल्मनिदानम्। )

अथातो गुल्मनिदानं व्याख्यास्याम इति
ह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु पञ्च गुल्मा भवन्ति। तद्यथा वातगुल्मः पित्तगुल्मः श्लेष्मगुल्मो निचयगुल्मः शोणितगुल्मश्चेति।

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच, कथमिह भगवन् पञ्चानां गुल्मानां विशेषमभिजानीमहे, नह्यविशेषविद्रोगाणामौषधविदपि भिषक् प्रशमनसमर्थो भवतीति। तमुवाच भगवानात्रेयः, समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषेभ्यो विशेषविज्ञानं गुल्मानां भवति अनेकशाञ्च रोगाणामग्निवेश! तत्र तावद् गुल्मेषूच्यमानं निबोध ॥ २ ॥

यदा पुरुषो वातलो विशेषेण ज्वरवमनविरेचनातिसारा-न्यतमकर्षणेन कर्षितो वातलमाहारमाहरेत् शीतं वा विशेषेणातिमात्रमस्नेहपूर्व्वं वा वमनविरेचने पिवत्यनुदीर्णां वा च्छर्द्दिमुदीरयत्युदीर्णान् वातमूत्रपुरीषवेगान् रुणद्धि, अत्यशितो वा पिवति नवोदकमतिमात्रमतिसंक्षोभिणा वा यानेन याति, अतिव्यवायव्यायाममद्यशोकरुचिर्वाभिघातमृच्छति वा, विषमाशनशयनासनस्थानचंक्रमणसेवी वा भवति। अन्यद्वा-किञ्चिदेवंविधमतिमात्रं व्यायामजातमारभते तस्यापचाराद् वायुः प्रकोपमापद्यते। स प्रकुपितो वायुर्महास्रोतोऽनुप्रविश्य रौक्ष्यात् कठिनीभूतमाप्लुत्य पिण्डितोऽवस्थानं कुरुते। हृदि वस्तौ पार्श्वयोर्नाभ्यां वा स शूलमुपजनयति ग्रन्थींश्चानेकविधान्, पिण्डितश्चावतिष्ठते, स पिण्डितत्वाद् गुल्म इत्यभिधीयते ॥ ५॥

स मुहुराध्माति, मुहुरल्पत्वमापद्यतेऽनियतविपुलाणुवेदनश्च भवति। चलत्वाद्वायोश्च मुहुः पिपीलिका संप्रचार इवाङ्गेषु, तोदभेदस्फुरणायामसङ्कोचसुप्तिहर्षप्रलयोदय-बहुलः, तदातुरश्च सूच्येव शङ्कुनेवातिसंविद्धमात्मानं मन्यते। अपिच दिवसान्ते जर्य्यते, शुष्यति चास्यास्यमुच्छ्वासश्चोपरुध्यते हृष्यन्ति चास्य रोमाणि। वेदनायाश्च प्रादुर्भावे प्लीहाटोपान्त्रकूजना-विपाकोदावर्त्ताङ्गमर्द्द-मन्याशिरः-शङ्खशूलव्रध्नरोगाश्चैनमुपद्रवन्ति। कृष्णारुणपरुषत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति। निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरते इति वातगुल्मः ॥ ६ ॥

तैरेवतु कर्षणैः कर्शितस्याम्ललवणकटुक्षारोष्णतीक्ष्णशुक्त-

व्यापन्नमद्यहरितफलाम्लानां विदाहिनाञ्च शाकधान्यमांसा-दीनामुपयोगादजीर्णाध्यशनात् रौक्ष्यानुगते चामाशये वमन-विरेचनमतिवेलं सन्धारणाम् वातातपौ चातिसेवमानस्य पित्तं सह मारुतेन प्रकोपमापद्यते। तत् प्रकुपितं मारुत आमाशयै-कदेशे संवर्त्त्य तानेव वेदनाप्रकारानुपजनयति य उक्ता वात-गुल्मे। पित्तं त्वेनं विदहति, कुक्षौ हृदुरसि कण्ठे वा विद-ह्यमानः सधूममिवोद्गारमुद्गिरत्यम्लान्वितम्। गुल्मावकाश-श्चास्य दह्यते दूयते धूप्यतृष्मायते स्विद्यति क्लिद्यति मृदुशिथिल इवस्पर्शासहोऽल्परोमाञ्चो भवति। ज्वरभ्रमदवथुपिपासा-गलतालुमुखशोषप्रमोहविड्भेदाश्चैनमुपद्रवन्ति। हरितहारि-द्रत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति। निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति पित्तगुल्मः॥ ७॥

तैरेवतु कर्षणैः कर्षितस्यात्यशनादतिस्निग्धगुरुमधुरशीता-शनात् पिष्टेक्षुक्षीरतिलमाषगुड़विकृतिसेवनात् मद्याति-पानाद्धरितकातिप्रणयनात् आनूपौदकग्राम्यमांसातिभक्षणात् सन्धारणादतिसुहितस्य चातिप्रगाढ़मुदकपानात् संक्षोभाद्वा शरीरस्य श्लेष्मा सह मारुतेन प्रकोपमापद्यते। तं प्रकुपितं मारुत आमाशयैकदेशे सम्वर्त्त्य तानेव वेदनाप्रकारानुपजनयति य उक्ता वातगुल्मे। श्लेष्मात्वस्य शीतज्वरारोचकाविपाकाङ्ग-मर्दहर्षहृद्रोगच्छर्द्दिनिद्रालस्यस्तैमित्यगौरवशिरोऽभितापानुप-जनयति। अपिच गुल्मस्य स्थैर्य्यगौरवकाठिन्यावगाढ़सुप्तताश्च। तथा कासश्वासप्रतिश्यायान् राजयक्ष्माणञ्चातिवृद्धः श्वैत्यञ्च त्वङ्नखनयनवदनमूत्रपुरीषेषूपजनयति, निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरते इति श्लेष्मगुल्मः॥ ८॥

त्रिदोषहेतुलिङ्गसन्निपाते तु सान्निपातिकं गुल्ममुपदिशन्ति कुशलाः। स विरुद्धोपक्रमत्वात् असाध्यो निचयगुल्मः॥ ९॥

शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य, गर्भकोष्ठार्त्तवागमनवैशेष्यात्। पारतन्त्र्याद्वैशारद्यात् सततमुपचारानुरोधाद् वेगानुदीर्णानुपरुन्धन्त्याः, आमगर्भे वाप्यचिरपतिते अथाप्यचिरप्रजाताया ऋतौ वा वातप्रकोपणान्यासेवमानायाः, क्षिप्रं वातः प्रकोपमापद्यते। स प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि। मासे मासे तदार्त्तवमुपरुध्यमानं कुक्षिमभिवर्द्धयति, तस्याः शूलकासातिसारच्छर्द्यरोचकाविपाकाङ्गमर्द्दनिद्रालस्यस्तैमित्यकफप्रसेकाः समुपजायन्ते स्तनयोश्च स्तन्यं, ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं, अत्यर्थं ग्लानिश्चक्षुषोर्मूर्च्छा हृल्लासो दोहदः, श्वयथुश्च पादयोः, ईषच्चोद्गमो रोमराज्या योन्याश्चाटालत्वमपि च योन्या दौर्गन्ध्यास्रावश्चोपजायते। केवलश्चास्या गुल्मः पिण्डित एव स्पन्दते तामगर्भां गर्भिणीमित्याहुर्मूढाः॥ १०॥

एषान्तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि पूर्व्वरूपाणि। तद् यथा—अनन्नाभिलषणमरोचकाविपाकवह्निवैषम्यं विदाहो भुक्तस्य पाककाले चायुक्त्या छर्द्द्युद्गारौ, वातमूत्रपुरीषवेगानां प्रादुर्भावः प्रादुर्भूतानाञ्चाप्रवृत्तिरीषदागमनं वा, शूलाटोपान्त्रकूजनपरिहर्षणातिवृत्तपुरीषताः, अबुभुक्षा दौर्व्वल्यं सौहित्यस्य चासहत्वमिति गुल्मपूर्व्वरूपाणि भवन्ति॥ ११॥

सर्व्वेषु खल्वेतेषु गुल्मेषु कश्चिन्न वातादृते भवति गुल्मः।

तेषां सान्निपातिकमसाध्यं ज्ञात्वा नैवोपक्रमेत। एकदोषजेतु यथास्वमारम्भं प्रणयेत् संसृष्टांस्तु साधारणेन कर्म्मणोपचरेत्। यच्चान्यदप्यविरुद्धं मन्येत, तदप्यवचारयेद् विभज्य गुरुलाघव-मुपद्रवाणां, समीक्ष्य गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेत्, जघन्य-मितरां त्वरमाणश्च। विशेषमनुपलभमानो गुल्मेष्वात्ययिके कर्म्मणि वातचिकित्सितं प्रणयेत्। स्नेहस्वेदौ वातहरौ स्नेहोपसंहितञ्च मृदुविरेचनं वस्तींश्चाम्ललवणमधुरांश्च रसान् युक्त्यावचारयेत्। मारुते ह्युपशान्ते स्वल्पेनापि यत्नेन शक्योऽन्योपि दोषोनियन्तुं गुल्मेष्विति॥ १२॥

भवति चात्र।

गुल्मिनामनिलशान्तिरुपायैः सर्व्वशो विधिवदाचरितव्या।<br>मारुतेह्यवजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म्म निहन्यात्॥१३॥

संख्या निमित्तं रूपाणि पूर्व्वरूपमथापिच।<br>दृष्टं निदाने गुल्मानामेकदेशश्च कर्म्मणामिति॥ १४॥

तत्र श्लोकः।

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने

गुल्मनिदानं तृतीयोऽध्यायः॥ ३॥

## चतुर्थोऽध्यायः ।

### ( प्रमेहनिदानम् । )

अथातः प्रमेहनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा भवन्ति, विकाराश्चापरेऽपरिसङ्ख्याः । तत्र यथा त्रिदोषप्रकोपस्तु प्रमेहानभिनिर्वर्त्तयति तथानुव्याख्यास्यामः ॥ २ ॥

इह खलु निदानदोषदूष्यविशेषेभ्योविकाराणां विघातभावाभावभावप्रतिविशेषा भवन्ति । यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्ति न तदा विकाराभिनिर्वृत्तिर्भवति । अथाप्रकर्षाद्दबलीयांसोवानुबध्नन्ति, न तदा विकाराभिनिर्वृत्तिर्भवति, चिराद्वाप्यभिनिर्व्वर्त्तन्ते, तनवो वा भवन्त्यथवाऽयथोक्तसर्व्वलिङ्गाः, विपर्य्यये विपरीताः । इति सर्व्वविकारविघातभावाभावभावप्रतिविशेषाभिनिर्वृत्तिहेतुर्भवत्युक्तः ॥३॥

तत्रेमे त्रयो निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणामाश्वभिनिर्वृत्तिकरा भवन्ति, तद् यथा हायनकयवकचीनकोद्दालकनैषधेत्कटमुकुन्दक-महाव्रीहिप्रमोदक-सुगन्धकानां नवान्नानामतिवेलमतिप्रमाणेन चोपयोगः, तथा सर्पिष्मतां नवहरेणुमाषसूप्यानां ग्राम्यानूपौदकानाञ्च मांसानां शाकतिलपललपिष्टान्नपायसकृशरविलेपीक्षुविकाराणां क्षीरमन्दकदधिद्रवमधुरतरुणप्रायाणामप्युपयोगः । मृजाव्यायामवर्ज्जनं स्वप्नशयनासनप्रसङ्गो यः, कश्चिद्विधिरन्योऽपि श्लेष्ममेदोमूत्र-

जननः स सर्व्वो निदानविशेषः। बहुद्रवः श्लेष्मा दोषविशेषो, बहुबद्धं मेदो मांसं शरीरजक्लेदः शुक्रम् शोणितं वसा मज्जा लसीका रसश्चौज इति संख्याता दूष्यविशेषाः॥ ४॥

त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते प्रागतिभूयस्त्वात्। स प्रकुपितः क्षिप्रमेव शरीरविसृप्तिं लभते शरीरशैथिल्यात्। स विसर्पन् सर्व्वशरीरे मेदसैवादितो मिश्रीभावं गच्छति मेदसोबहुबद्धत्वात् मेदसश्च गुणैः समानगुणभूयिष्ठत्वात्। स मेदसा मिश्रीभवन् सन्दूषयतेऽनदू विकृतत्वात्। स विकृतो दुष्टेन मेदसोपहृतशरीरक्लेदमांसाभ्यां संसर्गं गच्छति क्लेदमांसयोरतिप्रमाणाभिवृद्धत्वात्। स मांसे मांसप्रदोषात्। पूतिमांसपिड़काः शराविकाकच्छपिकाद्याः संजनयत्यप्रकृतिभूतत्वात्। शरीरक्लेदं पुनर्दूषयन् मूत्रत्वेन परिणामयति। मूत्रवहानाञ्च स्रोतसां वंक्षणवस्तिप्रभवानां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यते। ततश्च तेषां स्थैर्य्यमसाध्यतां वा जनयति प्रकृतिविकृतिभूतत्वात्। शरीरक्लेदस्तु श्लेष्ममेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः श्लैष्मिकैरेभिर्दशभिर्गुणैरुपसृज्यते वैषम्ययुक्तैः, तद्यथा श्वेतशीतमूर्त्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमन्दैः। तत्र येन येन गुणेनैकेनानेकेन वा भूयसा समुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति। तेतु खल्विमे दश प्रमेहा नामविशेषेण भवन्ति। तद्यथा उदकमेहश्चेक्षुवालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च शीतमेहश्च सिकतामेहश्च शने-

मेहश्चालालामेहश्चेति । ते दश प्रमेहाः साध्याः । समानगुण-मेदःस्थानकत्वात्, कफस्य प्राधान्यात्, समक्रियत्वाच्च ॥ ५ ॥

तत्र श्लोकाः श्लेष्मप्रमेहविशेष विज्ञानार्था भवन्ति ।

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।
श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥
अत्यर्थमधुरं शीतमीषत् पिच्छिलमाविलम् ।
काण्डेक्षुरससङ्काशं श्लेष्मकोपात् प्रमेहति ॥
यस्य पर्युषितं मूत्रं सान्द्रीभवति भाजने ।
पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम् ॥
यस्य संहन्यते मूत्रं किञ्चित् किञ्चित् प्रसीदति ।
सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः ॥
शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति ।
पुरुषं कफकोपेन तमाहुः शुक्लमेहिनम् ॥
शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति योनरः ।
शुक्रमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥
अत्यर्थमधुरं शीतं मूत्रं मेहति यो भृशम् ।
शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥
मूर्त्तान् मूत्रगतान् दोषानणून् मेहति योनरः ।
सिकतामेहिनं विद्यात् तं नरं श्लेष्मकोपतः ॥
मन्दं मन्दमवेगन्तु कृच्छ्रं यो मूत्रयेच्छनैः ।
शनैर्मेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः ॥
तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति ।
आलालमेहिनं विद्यात्तं नरं श्लेष्मकोपतः ॥

इतेऽते दश प्रमेहाः श्लेष्मप्रकोपनिमित्ताः व्याख्याता भवन्ति ॥ ६ ॥

उष्णाम्ललवणक्षारकटुकाजीर्ण-भोजनोपसेविनः, तथातितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारोपसेविनश्च, तथाविधशरीरस्यैव पित्तमाशु प्रकोपमापद्यते। तत् प्रकुपितं तयैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्व्वर्त्तयति। तेषामपि च खलु पित्तगुणविशेषेणैव नामविशेषा भवन्ति। तद्यथा क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च माञ्जिष्ठमेहश्च हारिद्रमेहश्चेति। ते षड्भिरेतैः क्षाराम्ललवणकटुविस्रोष्णैः पित्तगुणैः पूर्व्ववत् समन्विता भवन्ति। ते सर्व्वे एवच याप्याः ज्ञेयाः, संसृष्टदोषमेदःस्थानकत्वात् विरुद्धोपक्रमत्वाच्चेति ॥ ७ ॥

तत्र श्लोकाः पित्तप्रमेहविशेषविज्ञानार्था भवन्ति।

गन्धवर्णरसस्पर्शैर्यथाक्षार स्तथाविधम्।
पित्तकोपान्नरोमूत्रं क्षारमेही प्रमेहति ॥
मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति।
पित्तस्य परिकोपेण तं विद्यात् कालमेहिनम् ॥
चाषपक्षनिभं मूत्रमम्लं मेहति योनरः।
पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥
विस्रं लवणमुष्णञ्च रक्तं मेहति योनरः।
पित्तस्य परिकोपेण तं विद्याद्रक्तमेहिनम् ॥
मञ्जिष्ठोदकसङ्काशं भृशं विस्रं प्रमेहति।
पित्तस्य परिकोपात्तं विद्यान्माञ्जिष्ठमेहिनम् ॥

हरिद्रोदकसङ्काशं कटुकं यः प्रमेहति।
पित्तस्य परिकोपात्तं विद्याद्धारिद्रमेहिनम्॥

इत्येते षट् प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याता भवन्ति॥८॥

कषायकटुतिक्तरूक्षलघुशीतव्यवायव्यायामवमनविरेचनास्थापनशिरोविरेचनातियोगसन्धारणानशनाभिघातातपोद्वेग-शोक-शोणितातिषेकजागरण-विषमशरीरन्यासानुपसेवमानस्य तथाविधशरीरस्यैव क्षिप्रं वातः प्रकोपमापद्यते। स प्रकुपितस्तथाविधशरीरे विसर्पन् यदा वसामादाय मूत्रवहानि स्रोतांसि प्रतिपद्यते, तदा वसामेहमभिनिर्वर्त्तयति। यदा पुनर्मज्जानं मूत्रस्थानवस्तावाकर्षति तदा मज्जमेहमभिनिर्वर्त्तयति। यदा तु लसीकां मूत्राशयेऽभिवहन् मूत्रमनुबन्धं श्च्योतयति लसीकातिबहुत्वात् विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसङ्गं करोति, तदा स मत्तइव गजः क्षरत्यजस्रं मूत्रमवेगं, तं हस्तिमेहिनमित्याचक्षते। ओजः पुनर्मधुरस्वभावं तद्रौक्ष्याद्वायुश्च कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहन् मधुमेहं करोति। इमांश्चतुरः प्रमेहान् वातजानसाध्यानाचक्षते भिषजोमहात्ययिकत्वात् विरुद्धोपक्रमत्वाच्चेति। तेषामपि वातगुणविशेषेणैव नामविशेषा भवन्ति। तद्यथा वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति॥ ९॥

तत्र श्लोकाः वातप्रमेहविशेषविज्ञानार्था भवन्ति।

वसामिश्रं वसाभञ्च मुहुर्मेहति योनरः।
वसामेहिनमाहुस्तमसाध्यं वातकोपतः॥
मज्जानं सह मूत्रेण मुहुर्मेहति यो नरः।

मज्जमेहिनमाहुस्तमसाध्यं वातकोपतः ॥
हस्ती मत्तइवाजस्रं मूत्रं चरति योनरः।
हस्तिमेहिनमाहुस्तंमसाध्यं वातकोपतः ॥
कषायमधुरं पाण्डु रुचं मेहति योनरः।
वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम् ॥

इत्येते चत्वारः प्रमेहा वातप्रकोपनिमित्ता व्याख्याता भवन्ति। एवं त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा व्याख्याता भवन्ति ॥ १० ॥

त्रयस्तु खलु दोषाः प्रकुपिताः प्रमेहानभिनिर्व्वर्त्तयिष्यन्त इमानि पूर्व्वरूपाणि दर्शयन्ति। तद्यथा जटिलीभावं केशेषु, माधुर्य्यमास्यस्य, करपादयोः सुप्ततादाहौ, मुखतालुकण्ठशोषं, पिपासामालस्यं, मलञ्च काये, कायच्छिद्रेषु चोपदेहं, परिदाहं सुप्ततां चाङ्गेषु, षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणं, मूत्रेच मूत्रदोषान्, विस्रञ्च शरीरगन्धं, निद्रां तन्द्राञ्च सर्व्व-कालमिति ॥ ११ ॥

उपद्रवास्तु खलु प्रमेहिनां तृष्णाज्वरातिसारदाहदौर्ब्बल्या-रोचकाविपाकाः, पूतिमांसपिड़कालजीविद्रध्यादयश्च तत्प्रस-ङ्गाद्भवन्ति ॥ १२ ॥

तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथार्हमुपपादयन् चिकित्सेदिति ॥ १३ ॥

भवन्ति चात्र।

गृद्धमभ्यवहार्य्येषु स्नानचंक्रमणाद्विषम्।
प्रमेहः चिप्रमभ्येति नीड़द्रुममिवाण्डजः ॥

मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम् ।
मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति ॥
यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः ।
सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते ॥ १४ ॥

तत्र श्लोकाः ।

हेतुर्व्याधिविशेषाणां प्रमेहानाञ्च कारणम् ।
दोषधातुसमायोगो रूपं विविधमेव च ॥
दश श्लेष्मकृता यस्मात् प्रमेहाः षट् च पित्तजाः ।
यथाच वायुश्चतुरः प्रमेहान् कुरुते बली ॥
साध्यासाध्यविशेषाश्च पूर्व्वरूपाण्युपद्रवाः ।
प्रमेहानां निदानेऽस्मिन् क्रियासूत्रञ्च भाषितम् ॥ १५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
प्रमेहनिदानं चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

( कुष्ठनिदानम् । )

अथातः कुष्ठनिदानं व्याख्यास्याम इति
ह स्माह भगवानात्रेयः ॥ १ ॥

सप्त द्रव्याणि कुष्ठानां प्रकृतिविकृतिमापन्नानि भवन्ति । तद्यथा त्रयादोषा वातपित्तश्लेष्माणः प्रकोपणविकृताः, दूष्याश्शरीरधातवस्त्वङ्मांसशोणितलसीकाश्चतुर्धा दोषोपघात-

विकृताः। इतोऽतत् सप्तधातुकमेवंगतमाजननं कुष्ठानामतः प्रभवादभिनिर्व्वर्त्तमानानि केवलं शरीरमुपतपन्ति ॥ २ ॥

न च किञ्चिदस्ति कुष्ठमेकदोषप्रकोपनिमित्तमस्तितु खलु समानप्रकृतीनामपि कुष्ठानाम् दोषांशांशविकल्पानुबन्धस्थान-विभागेन वेदनावर्णसंस्थानप्रभावनामचिकित्सितविशेषः ॥ ३ ॥

स सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा भवति। दोषा हि विकल्पने विकल्प्यमाना विकल्पयन्ति विकारानन्यत्रा-साध्यभावात्। तेषां विकल्पविकारसंख्यानेऽतिप्रसङ्गमभि-समीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः ॥ ४ ॥

इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयत्सु वातेऽधिकतरे कपालकुष्ठमभिनिर्व्वर्त्तते, पित्ते त्वौडुम्बरं, श्लेष्मणि मण्डलं कुष्ठं, वातपित्तयो ऋष्यजिह्वं, पित्तश्लेष्मणोः पुण्डरीकं, श्लेष्ममारुतयोः सिध्म, सर्व्वदोषाभिनिर्वृत्तौ काकण-मभिनिर्व्वर्त्तते। एवमेष सप्तविधः कुष्ठविशेषो भवति। स एवं खलु भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां भूयसीं विकारविकल्पसंख्यामापद्यते ॥ ५ ॥

तत्रेदं सर्व्वकुष्ठनिदानं पुनः समासेनोपदेक्ष्यामः। शीतोष्णव्यत्यासं मत्वानुपूर्व्व्योपसेवमानस्य तथा सन्तर्पणा-पतर्पणाभ्यवहार्य्यव्यत्यासं च, मधुफाणितमत्स्यमूलककाक-माचीः सततमतिमात्रमजीर्णे समश्नतश्चिलिचिमञ्च पयसा, हायनकयवकचीनकोद्दालकोरदूषप्रायाणि चान्नानि क्षीरदधि-तक्रकोलकुलत्थमाषातसीकुसुम्भपरूषस्नेहवन्ति, एतैरेवाति-मात्रं सुहितस्य च व्यवायव्यायामसन्तापानत्युपसेवमानस्य,

भयश्रमसन्तापोपहतश्च च सहसा शीतोदकमवतरतो, विदग्धं चाहारजातमनुल्लिख्य विदाहीन्यभ्यवहरतश्छर्द्दिञ्च प्रतिघ्नतः, स्नेहांश्चातिचरतो युगपत् त्रयो दोषाः प्रकोपमापद्यन्ते। त्वगादयश्चत्वारः शैथिल्यमापद्यन्ते। तेषु शिथिलेषु दोषाः प्रकुपिताः स्थानमधिगम्य सन्तिष्ठमानास्तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभिनिर्व्वर्त्तयन्ति॥ ६॥

तेषां कुष्ठानामिमानि खलु पूर्व्वरूपाणि भवन्ति, तद्यथा अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो रोमहर्षश्च खरत्वं उष्मायणं गौरवं श्वयथुर्विसर्पागमनमभीक्ष्णं कायच्छिद्रेषु चोपदेहः पक्वदग्धदष्टक्षतोपस्खलितेष्वतिमात्रं वेदना स्वल्पानामपि च व्रणानां दुष्टिरसंरोहणञ्चेति कुष्ठपूर्व्वरूपाणि भवन्ति॥ ७॥

तेभ्योऽनन्तरं कुष्ठान्यभिनिर्व्वर्त्तन्ते। तेषामिदं वेदनावर्णसंस्थाननामप्रभावविशेषविज्ञानं भवति। तद्यथा रूक्षारुणपरुषाणि विषमविसृतानि तनून्युद्वृत्तबहिस्तनूनि सुप्तसुप्तानि हृषितलोमाचितानि निस्तोदबहुलान्यल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानानि, आशुभेदीनि जन्तुमन्ति कृष्णारुणकपालवर्णानि च कपालकुष्ठानीति विद्यात्॥ ८॥

ताम्राणि ताम्ररोमराजिभिरवनद्धानि बहलानि बहुबहलपूयरक्तलसीकानि कण्डूक्लेदकोथपाकदाहवन्त्याशुगतिसमुत्थानभेदीनि ससन्तापक्रिमीण्युडुम्बरफलपक्ववर्णान्युडुम्बरकुष्ठानीति विद्यात्॥ ९॥

स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीनपर्यन्तानि

शुक्लरक्तावभासानि शुक्लराजीसन्तानानि बहुबहलशुक्लरक्त-पिच्छिलास्रावीणि बहुकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि मण्डलकुष्ठानीति विद्यात्‌ ॥ १० ॥

परुषाण्यरुणवर्णानि वहिरन्तःश्यावानि नीलपीतताम्राव-भासान्याशुगतिसमुत्थानान्यल्पकण्डूक्लेदक्रिमीणि दाहभेद-निस्तोदबहुलानि शूकोपहतोपमवेदनानि उत्सन्नमध्यानि तनुपर्य्यन्तानि दीर्घपरिमण्डलानि कर्कशपिड़काचितान्यृष्य जिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात्‌ ॥ ११ ॥

शुक्लरक्तावभासानि रक्तपर्य्यन्तानि, रक्तराजीसन्ततानि उत्सेधवन्ति बहुबहलरक्तपूयलसीकानि कण्डूक्रिमिदाहपाक-वन्ति, आशुगतिसमुत्थानभेदीनि पुण्डरीकपलाशसङ्काशानि पुण्डरीकानीति विद्यात्‌ ॥ १२ ॥

परुषारुणविशीर्णवहिस्तनून्यन्तःस्निग्धानि शुक्लरक्ताव-भासानि बहून्यल्पवेदनान्यल्पकण्डूदाहपूयलसीकानि लघु-समुत्थानान्यल्पभेदक्रिमीन्यलावुपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात्‌ ॥ १३ ॥

काकणन्तिकावर्णान्यादौ पश्चात्तु सर्व्वकुष्ठलिङ्गसमन्वि-तानि पापीयांसि सर्व्वकुष्ठलिङ्गसम्भवेनानेकवर्णानि काकणा-नीति विद्यात्‌ ॥ १४ ॥

तान्यसाध्यानि, साध्यानि पुनरितराणि भवन्ति। तत्र यदसाध्यं तदसाध्यतां नातिवर्त्तते। साध्यं पुनः किञ्चित्‌ साध्यतामतिवर्त्तते कदाचिदपचारात्‌। साध्यानि हि षट्‌ काकणवर्ज्यान्यचिकित्स्यमानानि अपचारतो वा दोषैरभि-

ष्यन्दमानान्यसाध्यतामुपयान्ति। साध्यानामपि ह्युपेक्ष्यमाणानामेषां त्वङ्मांसशोणितलसीकाकोथक्लेदसंस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति। ते भक्षयन्तस्त्वगादीन्, दोषान् पुनर्दूषयन्त इमान् उपद्रवान् पृथक् पृथगुत्पादयन्ति। तत्र वातः श्यावारुणवर्णं परुषतामपिच रौक्ष्यशूलशोषतोदवेपथुसङ्कोचहर्षायासस्तम्भसुप्तिभेदभङ्गान्, पित्तं पुनर्दाहस्वेदक्लेदकोथस्रावपाकरागान्, श्लेष्मा त्वस्य शैत्यश्वैत्यकण्डूस्थैर्यगौरवोत्सेधस्नेहोपलेपान्। क्रिमयस्तु त्वगादींश्चतुरः सिराः स्नायुंश्चास्थीन्यपिच तरुणानि खादन्ति। अस्यामेवावस्थायां कुष्ठिनमुपद्रवाः स्पृशन्ति। तद्यथा प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां तृष्णाज्वरातिसारदाहदौर्ब्बल्यारोचकाविपाकाश्च तथाविधमसाध्यं विद्यादिति ॥ १५ ॥

भवन्ति चात्र।

साध्योऽयमिति यः पूर्व्वं नरो रोगमुपेक्षते।
स किञ्चित् कालमासाद्य मृत एवावबुध्यते ॥
यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा।
भेषजं कुरुते सम्यक् स चिरं सुखमश्नुते ॥
यथा ह्यल्पेन यत्नेन छिद्यते तरुणस्तरुः।
स एवातिप्रवृद्धस्तु यत्नात् कृच्छ्रेण छिद्यते ॥
एवमेव विकारोऽपि तरुणः साध्यते सुखम्।
विवृद्धः साध्यते कृच्छ्रादसाध्यो वापि जायते ॥ १६ ॥

तत्र श्लोकः ।

संख्या द्रव्याणि दोषाश्च हेतवः पूर्व्वलक्षणम् ।
रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथगिति ॥ १७ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
कुष्ठनिदानं पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

( शोषनिदानम् । )

अथातः शोषनिदानं व्याख्यास्याम इति
ह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु चत्वारि शोषस्यायतनानि भवन्ति, तद्यथा साहसं सन्धारणं क्षयोविषमाशनमिति ॥ २ ॥

तत्र साहसं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषो दुर्व्वलः सन् वलवता सह विगृह्णाति, महता वा धनुषा व्यायच्छति, जल्पतिवाप्यतिमात्रं, अतिमात्रं वा भारमुद्वहत्यप्सु वा प्लवते चातिदूरमुत्सादनपदाघातने वातिप्रगाढ़मुपसेवते, अतिविप्रकृष्टं वाध्वानं द्रुतमभिपतत्यभिहन्यते वान्यद्वा किञ्चिदेवंविधं विषममतिमात्रं वा व्यायामजातमारभते, तस्यातिमात्रेण कर्म्मणोरः क्षण्यते। तस्योरःक्षतमुपप्लवते वायुः। स तत्रावस्थितः श्लेष्माणमुरःस्थमुपसंगृह्य पित्तञ्च दूषयन् विहरत्यूर्द्ध्वमधस्तिर्य्यगनूष । तस्य योऽशः शरीर-

सञ्चौनाविशति तेनास्य जृम्भाङ्गमर्द्दौ ज्वरश्चोपजायते। यस्त्वामाशयमभ्युपैति तेनास्य च वर्च्चोभिद्यते। यस्तु हृदयमाविशति तेन रोगा भवन्त्युरस्याः। यो रसनां तेनास्यारोचकश्च। यः कण्ठमभिप्रपद्यते कण्ठस्तेनोद्ध्वंस्यते स्वरश्चावसीदति। यः प्राणवहानि स्रोतांस्यन्वेति तेन श्वासः प्रतिश्यायश्च जायते। यः शिरस्यवतिष्ठते शिरस्तेनोपहन्यते। ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्य चोद्ध्वंसनात्, कासः सततमस्य संजायते। स कासप्रसङ्गादुरसि क्षते सशोणितं निष्ठीवति शोणितगमनाच्चास्य दौर्ब्बल्यमुपजायते। एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति, ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरेवोपशुष्यति। तस्मात् पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि सर्व्वकर्म्माण्यारभेत कर्त्तुम्। बलसमाधानं हि शरीरं शरीरमूलश्च पुरुष इति ॥ ३ ॥

भवन्ति चात्र।

साहसं वर्ज्जयेत् कर्म्म रक्षन् जीवितमात्मनः।
जीवन् हि पुरुषस्त्विष्टं कर्म्मणः फलमश्नुते॥ ४ ॥

अथ सन्धारणं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषो राजसमीपे भर्त्तुः समीपे वा गुरोर्वा पादमूलेऽन्यतमं सतां वा समाजं स्त्रीमध्यं वानुप्रविश्य, यानैर्वाप्युच्चावचैर्गच्छन् भयात् प्रसङ्गात् ह्रीमत्त्वाद् घृणित्वाद्वा निरुणद्ध्यागतान् वातमूत्रपुरीषवेगान्; ततस्तस्य सन्धारणाद् वायुः प्रकोपमापद्यते। स प्रकुपितः पित्तश्लेष्माणौ समुदीर्य्योर्द्ध्वमधस्तिर्य्यक् च विहरति। ततश्चांशविशेषेण पूर्व्ववत्

शरीरावयवविशेषं प्रविश्य शूलं जनयति, भिनत्ति पुरीषमुच्छोषयति वा, पार्श्वे चातिरुजत्य'सावमृद्गाति, कण्ठमुरश्चावधमति, शिरश्चोपहन्ति, कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायं चोपजनयति। ततः स उपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरेष्वेव योगक्षेमकरेषु प्रयतेत विशेषेण। शरीरं ह्यस्य मूलं, शरीरमूलश्च पुरुषो भवतीति॥ ५॥

भवति चात्र।

सर्व्वमन्यत् परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्व्वाभावः शरीरिणाम्॥ ६॥

क्षयः शोषस्यायतनमिति यदुक्त' तदनुव्याख्यास्यामः। यदा पुरुषोऽतिमात्रं शोकचिन्तापरिगतहृदयो भवतीर्षोत्कण्ठाभयक्रोधादिभिर्वा समाविश्यते, कृशो वा सन् रुक्षान्नपानसेवी भवति, दुर्ब्बलप्रकृतिरनाहारो वाप्यल्पाहारो वा भवति, तदा तस्य हृदयस्थायी रसः क्षयमुपैति, स तस्योपक्षयात् शोषं प्राप्नोति, अप्रतीकाराच्चानुबध्यते यक्ष्मणा यथोपदेक्ष्यमानेन। यदा वा पुरुषोऽतिप्रहर्षादतिप्रसक्तभावात् स्त्रीष्वतिप्रसङ्गमारभते, तस्यातिप्रसङ्गाद्रेतः क्षयमेति, क्षयमपि चोपगच्छति रेतसि मनःस्त्रीभ्योनैवास्य निवर्त्तते, तस्य चातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य न शुक्रं प्रवर्त्तते अतिमात्रोपक्षीणरेतस्त्वात्। तथास्य वायुर्व्यायच्छमानस्यैव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति, तच्छुक्रक्षयादस्य पुनः शुक्रमार्गेण शोणितं प्रवर्त्तते वातानुसृतलिङ्गम्।

अथास्य शुक्रक्षयात् शोणितप्रवर्त्तनाच्च सन्धयः शिथिलीभवन्ति, रौक्ष्यमपि चास्योपजायते, भूयः शरीरं दौर्ब्बल्यमाविशतीति वायुः प्रकोपमापद्यते। स प्रकुपितोऽरसिकं शरीरमनुसर्पन् उदीर्य्य श्लेष्मपित्ते, परिशोषयति मांसशोणिते, प्रच्यावयति श्लेष्मपित्ते, संरुजति पार्श्वे चावगृह्णात्यंसौ, कण्ठमुद्ध्वंसयति, शिरः श्लेष्माणमुपक्लिष्य परिपूरयति श्लेष्मणा, सन्धींश्च प्रपीड़यन् करोत्यङ्गमर्द्दारोचकाविपाकान्, पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं श्वासं स्वरभेदं प्रतिश्यायं चोपजनयति। स कासप्रसङ्गादुरसि क्षते शोणितं निष्ठीवति शोणितगमनाच्चास्य दौर्ब्बल्यमुपजायते। ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षन् शुक्रमनुरक्षेत्। परा ह्येषा फलनिर्व्वृत्तिराहारस्येति ॥ ७ ॥

भवति चात्र।

आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः।
क्षयोह्यस्य बहून् रोगान् मरणं वा नियच्छति ॥ ८ ॥

विषमाशनं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृतिकरणराशिसंयोगदेशकालोपयोगसंस्थोपशयविषमानुपसेवते, तदा तस्य तेभ्यो वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते। ते विषमाः शरीरमनुसृत्य यदा स्रोतसां मुखानि प्रतिवार्य्यावतिष्ठन्ते, तदा जन्तुर्यद् यदाहारजातमाहरति तत् तन्मूत्रपुरीषमेवोपजायते भूयिष्ठं, नान्यस्तथा शरीरधातुः, स पुरीषोपष्टम्भाद्वर्त्तयति।

तस्माच्छुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथान्येषामतिकृशदुर्ब्बलानां। तस्यानाप्याय्यमानस्य विषमाशनोपचितदोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तोभूयः शरीरमुपशोषयन्ति॥ ६ ॥

तत्र वातोऽस्य शिरःशूलमङ्गमर्द्दं कण्ठोद्‌ध्वंसनं पार्श्वसंरोजनमंसावमर्द्दं स्वरभेदं प्रतिश्यायं चोपजनयति। पित्तं पुनर्ज्वरमतिसारमन्तर्दाहञ्च। श्लेष्मा तु प्रतिश्यायं शिरसोगुरुत्वमरोचकं कासञ्च। स कासप्रसङ्गादुरसि क्षते शोणितं निष्ठीवति शोणितगमनाच्चास्य दौर्ब्बल्यमुपजायते। एवमेते विषमाशनोपचितास्त्रयो दोषा राजयक्ष्माणमभिनिर्व्वर्त्तयन्ति। स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैः शुष्यति। तस्मात् पुरुषोमतिमान् प्रकृतिकरणराशिसंयोगदेशकालोपयोगसंस्थोपशयाद्विषममाहारमाहरेदिति ॥ १० ॥

भवति चात्र।

हिताशी स्यान्मिताशी स्यात् कालभोजी जितेन्द्रियः।
पश्यन् रोगान् बहून् कष्टान् बुद्धिमान् विषमाशनात् ॥ ११ ॥

एवमेतैश्चतुर्भिः शोषस्यायतनैरुपसेवितैर्जन्तोर्वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते। ते प्रकुपिता नानाविधोपद्रवैः शरीरमुपशोषयन्ति। तं सर्व्वरोगाणां कष्टतमत्वात् राजयक्ष्माणमाचक्षते भिषजः। यस्माद्वा पूर्व्वमासीद् भगवतः सोमस्योडुराजस्य तस्माद्राजयक्ष्मेति ॥ १२ ॥

अस्येमानि पूर्व्वरूपाणि भवन्ति। तद्यथा प्रतिश्यायः क्षवथुरभीक्ष्णं श्लेष्मप्रसेको मुखमाधुर्य्यमनन्नाभिलाषः, अन्नकाले चायासो दोषदर्शनञ्चादोषेष्वल्पदोषेषु वा भावेषु पात्रोदकान्नसूपापूपोपदंशपरिवेशकेषु; भुक्तवतोऽप्यस्य हृल्लास-

स्तयोरुल्लेखनमप्याहारस्यान्तरान्तरा, मुखस्य पादयोश्च शोथः, पाण्योश्चावेक्षणमत्यर्थमक्ष्णोः श्वेतावभासता चातिमात्रं बाह्वोश्च प्रमाणजिज्ञासा, स्त्रीकामता, निर्घृणित्वं, वीभत्सदर्शनता चास्य काये। स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां, शून्यानाञ्च ग्रामनगरनिगमजनपदानाम्, शुष्कदग्धभग्नानाञ्च वनानां, कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः स्पर्शनमधिरोहणं वा वराहोष्ट्रखरैः, केशास्थिभस्मतुषाङ्गारराशीनाञ्चाधिरोहणमिति शोषपूर्व्वरूपाणि भवन्ति ॥ १३ ॥

अत ऊर्द्ध्वं एकादश रूपाणि तस्य भवन्ति। तद्यथा शिरसः प्रतिपूर्णत्वं, कासः श्वासः स्वरभेदः श्लेष्मणश्छर्द्दनं शोणितष्ठीवनं पार्श्वसंरोजनमंसावमर्द्दो ज्वरोऽतिसारोऽरोचकश्चेत्येकादश रूपाणि भवन्ति ॥ १४ ॥

तत्रापरिक्षीणमांसशोणितो बलवानजातारिष्टः सर्व्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयः। बलवानुपचितो हि सहत्वाद् व्याध्यौषधबलस्य कामं सुबहुलिङ्गोऽपि स्वल्पलिङ्ग एव मन्तव्यः। दुर्व्वलन्त्वतिक्षीणबलमांसशोणितमल्पलिङ्गमजातारिष्टमपि बहुलिङ्गं जातारिष्टञ्च विद्यादसहत्वाद् व्याध्यौषधबलस्य, तं परिवर्ज्जयेत्, क्षणेनैव हि प्रादुर्भवन्त्यरिष्टान्यनिमित्ततश्चास्यारिष्टप्रादुर्भाव इति ॥ १५ ॥

तत्र श्लोकः।

समुत्थानञ्च लिङ्गञ्च यः शोषस्यावबुध्यते।
पूर्व्वरूपञ्च तत्वेन स राज्ञः कर्त्तुमर्हतीति ॥ १६ ॥

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
शोषनिदानं षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः ।

## ( उन्माद-निदानम् । )

अथात उन्मादनिदानं व्याख्यास्याम इति ह

स्माह भगवानात्रेयः ॥ १ ॥

इह खलु पञ्चोन्मादा भवन्ति । तद्यथा वातपित्तकफ-सन्निपातागन्तुनिमित्ताः ॥ २ ॥

तत्र दोषनिमित्ताश्चत्वारः पुरुषाणामेवंविधानां क्षिप्रमभि-निर्व्वर्त्तन्ते । तद्यथा भीरूणामुपक्लिष्टसत्वानामुत्सन्नदोषाणां समलविकृतोपहितान्यनुचितान्याहारजातानि वैषम्ययुक्ते-नोपयोगविधिनोपयुञ्जानानां, तन्त्रप्रयोगमपि विषममाचरता-मन्याश्च शरीरचेष्टा विषमाः समाचरताम्, अत्युपक्षीणदेहानां व्याधिवेगसमुद्भ्रामितोपहतमनसां वा, कामरागक्रोधलोभ-हर्षभयमोहायासशोकचिन्तोद्वेगादिभिर्भूयोऽभिघाताभ्याहतानां वाऽमनस्युपहते बुद्धौ च प्रचलितायाम्, अत्युदीर्णत्वाद्दोषाः प्रकुपिता हृदयमुपसंसृत्य मनोवहानि स्रोतांस्यावृत्य जनयन्त्यु-न्मादम् । उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशीलचेष्टा-चारविभ्रंशं विद्यात् ॥ ३ ॥

तस्येमानि पूर्व्वरूपाणि भवन्ति । तद्यथा—शिरसः शून्यता चक्षुषोराकुलता स्वनश्च कर्णयोरुच्छ्वासाधिक्यमास्य-संस्रवणम्, अनन्नाभिलाषारोचकाविपाकाश्च हृद्ग्रहो ध्याना-यासंसम्मोहोद्वेगाश्चास्थाने, सततञ्च लोमहर्षो ज्वरश्चाभीक्ष्ण-

मभीक्ष्णमुन्मत्तचित्तत्वमहृताकृतिकरणमुन्मर्हितञ्च व्याधेः, स्वप्ने चाभीक्ष्णं दर्शनं भ्रान्तचलितानवस्थितानाञ्च रूपाणामप्रशस्तानाम्, तिलपीड़कचक्राधिरोहणं, वातकुण्डलिकाभिश्चोन्मथनं, मज्जनञ्च कलुषाम्भसामावर्त्ते, चक्षुषोश्चापसर्पणमिति दोषनिमित्तानामुन्मादानां पूर्व्वरूपाणि भवन्ति ॥ ४ ॥

ततोऽनन्तरमुन्मादाभिनिर्वृत्तिरेव । तत्रेदमुन्मादविशेषविज्ञानं भवति । तद्यथा परिसरणमजस्रमक्षिभ्रुवोष्ठांसहन्वग्रहस्तपादाङ्गविक्षेपश्चाकस्मात्, सततमनियतानाञ्च गिरामुत्सर्गः फेनागमश्चास्यात्; अभीक्ष्णं स्मितहसितनृत्यगीतवादित्रसंप्रयोगाश्चास्थाने, वीणावंश शङ्खशम्यतालशब्दानुकरणमसाम्ना, यानञ्चायानैरलङ्करणञ्चानलङ्कारिकैर्द्रव्यैः, लोभश्चाभ्यवहार्य्येष्वलब्धेषु लब्धेषु चावमानः । तीव्रत्वं मात्सर्य्यं कार्श्यं पारुष्यमुत्पिण्डतारुणाक्षता वातोपशयविपर्य्यासादनुपशयता चेति वातोन्मादलिङ्गानि भवन्ति ॥ ५ ॥

अमर्षः क्रोधः संरम्भश्चास्थाने, शस्त्रलोष्टकषाकाष्ठमुष्टिभिश्चाभिहननं स्वेषां परेषां वा, अभिद्रवणं, प्रच्छायशीतोदकान्नाभिलाषश्च, सन्तापश्चातिवेलं, ताम्रहरितहारिद्रस्तब्धाक्षता, पित्तोपशयविपर्य्यासादनुपशयता चेति पित्तोन्मादलिङ्गानि भवन्ति ॥ ६ ॥

स्थानमेकदेशे, तूष्णीम्भावोऽल्पशश्च क्रमणं, लालासिंघाणस्रवणमनन्नाभिलाषोरहःकामता च, वीभत्सत्वं शौचद्वेषः स्वप्ननित्यता श्वयथुश्चानने शुक्लस्तिमितमलोपदिग्धाक्षत्वं श्लेष्मोपशयविपर्य्यासादनुपशयता चेति श्लेष्मोन्मादलिङ्गानि भवन्ति ॥ ७ ॥

त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात् तमसाध्यमित्याचक्षते कुशलाः ॥ ८ ॥

साध्यानान्तु त्रयाणां साधनानि स्नेहस्वेदवमनविरेचनास्थापनानुवासननस्तःकर्म्मधूमधूपनाञ्जनावपीड़प्रधमनाभ्यञ्जन-प्रदेह-परिषेकानुलेपन-बधबन्धनावरोधन-वित्रासन-विस्मापन-विस्मारणापतर्पणसिराव्यधनानि। भोजनविधानञ्च यथास्वं युक्त्या। यच्चान्यदपि किञ्चिन्निदानविपरीतमौषधं कार्य्यं तत् स्यादिति ॥ ९ ॥

भवति चात्र।

उन्मादान् दोषजान् साध्यान् साधयेद्भिषगुत्तमः।
अनेन विधियुक्तेन कर्म्मणा यत् प्रकीर्त्तितमिति ॥ १० ॥

यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्व्वरूपलिङ्ग-वेदनोपशयविशेषसमन्वितो भवत्युन्मादः, तमागन्तुकमाचक्षते। केचित् पुनः पूर्व्वकृतं कर्म्माप्रशस्तमिच्छन्ति तस्य निमित्तं, तत्र च हेतुः प्रज्ञापराध एवेति भगवान् पुनर्व्वसुरात्रेय उवाच। प्रज्ञापराधाद्ध्ययं देवर्षिपितृगन्धर्व्वयक्षराक्षसपिशाचगुरुवृद्ध-सिद्धाचार्य्यपूज्यानवमत्याहितान्याचरति, अन्यद्वा किञ्चिदेवं-विधं कर्म्माप्रशस्तमारभते। तमात्मनोपहतमुपघ्नन्तो देवादयः कुर्व्वन्त्युन्मत्तं ॥ ११ ॥

तत्र देवादिप्रकोपनिमित्तेनागन्तुकोन्मादेन पुरस्कृतस्येमानि पूर्व्वरूपाणि भवन्ति। तद्यथा देवगोब्राह्मणतपस्विनां हिंसा-रुचित्वं कोपनत्वं नृशंसाभिप्रायतारतिरोजोवर्णच्छायाबल-वपुषाञ्चोपतप्तिः। स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्त्तनञ्चे-

त्यागन्तुनिमित्तस्योन्मादस्य पूर्व्वरूपाणि भवन्ति। ततोऽनन्तर-मुन्मादाभिनिर्वृत्तिः ॥ १२ ॥

तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषो भवति । तद्यथा—अवलोकयन्तो देवा जनयन्त्युन्मादं, गुरु-वृद्धसिद्धमहर्षयोऽभिशपन्तः, पितरस्तु धर्षयन्तः, स्पृशन्तो गन्धर्व्वाः, प्रविशन्तो यक्षाः, राक्षसास्त्वात्मगन्धमाघ्रापयन्तः, पिशाचाः पुनरारुह्य वाहयन्तः ॥ १३ ॥

तस्येमानि रूपाणि भवन्ति । तद्यथा अमर्त्त्यबलवीर्य्य-पौरुषपराक्रमग्रहणधारणस्मरणवचनज्ञान-विज्ञानान्यनियत-श्चोन्मादकालः ॥ १४ ॥

उन्मादयिष्यतामपि तु खलु देवर्षिपितृगन्धर्व्वयक्षराक्षस-पिशाचानां गुरुवृद्धसिद्धानां वा एष्वन्तरेष्वभिगमनीयाः पुरुषा भवन्ति । तद्यथा पापस्य कर्म्मणः समारम्भे, पूर्व्वकृतस्य कर्म्मणः परिणामकाले, एकस्य वा शून्यगृहवासे, चतुष्पथा-धिष्ठाने, सन्ध्यावेलायां, अप्रयतभावे, पर्व्वसन्धिषु वा मिथुनी-भावे रजस्वलाभिगमने वा, विगुणे वाध्ययनबलिमङ्गलहोम-प्रयोगे, नियमव्रतब्रह्मचर्य्यभङ्गे वा, महाहवे वा, देशकुल-पुरविनाशे वा, महाग्रहोपगमने वा, स्त्रिया वा प्रजननकाले, विविधभूताशुभाशुचिसंस्पर्शने वा, वमनविरेचनरुधिरस्रावे वा, अशुचेरप्रयतस्य वा चैत्यदेवायतनाभिगमने वा, मांसमधुतिल-गुड़मद्योच्छिष्टे वा, दिग्वाससि वा, निशि नगरनिगमचतु-ष्पथोपवनश्मशानायतनाभिगमने वा, द्विजगुरुसुरपूज्याभिधर्षणे वा, धर्म्माख्यानव्यतिक्रमे वा, अन्यस्य वा कर्म्मणोऽप्रशस्तस्यारम्भे इत्यभिघातकाला व्याख्याता भवन्ति ॥ १५ ॥

एके भवन्त्यदृश्याः। वर्णस्तेषां ताम्रः। नामानि केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति। प्रभावः केशश्मश्रुलोमपक्ष्मापध्वंसो व्रणगतानाञ्च हर्षकण्डू-तोदसंसर्पणानि, अतिप्रवृद्धानाञ्च त्वक्सिरास्नायुमांस-तरुणास्थिभक्षणमिति। चिकित्सितमप्येषां कुष्ठैः समानं तदुत्तरकालमुपदेक्ष्यामः॥ ६॥

श्लेष्मजाः क्षीरगुड़तिलमत्स्यानूपमांसपिष्टान्नपरमान्न-कुसुम्भस्नेहाजीर्णपूतिक्लिन्न-संकीर्ण-विरुद्धासात्म्यभोजनसमु-त्थानाः। तेषामामाशयः स्थानं। ते प्रवर्द्धमानास्तूर्द्धमधोवा विसर्पन्त्युभयतो वा। संस्थानवर्णविशेषास्तु श्वेताः पृथुब्रध्न-संस्थानाः केचित्, केचिद्वृत्तपरिणाहा गण्डूपदाकृतयः श्वेता-स्ताम्रावभासाश्च, केचिदणवो दीर्घास्तन्त्वाकृतयः श्वेताः। तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि, अन्त्रादा उद-रादा हृदयादाश्चुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति। प्रभावो हृल्लास आस्यसंस्रवणमरोचकाविपाकौ ज्वरो मूर्च्छा जृम्भा क्षवथुरानाहोऽङ्गमर्दश्छर्द्दिः कार्श्यं पारुष्यमिति॥ ७॥

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैः। तेषां पक्वाशय एव स्थानम्। प्रवर्द्धमानास्त्वधो ते विसर्पन्ति, यस्य पुनरामाशयो-न्मुखाः स्युः, तदनन्तरं तस्योद्गारनिःश्वासाः पुरीषगन्धिनः स्युः। संस्थानवर्णविशेषास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घोर्णांशुसङ्काशाः केचित्, केचित् पुनः स्थूलवृत्तपरीणाहाः श्यावनीलहरितपीताः। तेषां नामानि ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति। प्रभावः पुरीषभेदः

कार्श्यं पारुष्यं रोमहर्षाभिनिर्वर्त्तनञ्च। त एवचास्य गुद-मुखं परितुदन्तः कण्डूञ्चोपजनयन्तो गुदमुखं पर्य्यासते, ते जातहर्षा गुदनिष्क्रमणमतिवेलं कुर्व्वन्ति। इत्येवमेष श्लेष्म-जानां पुरीषजानाञ्च समुत्थानादिविशेषः॥ ८॥

चिकित्सितन्तु खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेणोपदे-क्ष्यामः। तत्र क्रिमीणामपकर्षणमेवादितः कर्त्तव्यं ततः प्रकृति-विघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनमिति। तत्रापकर्षणं हस्तेनाभिसंगृह्य विमृश्योपकरणवता वाप्यप-नयनमनुपकरणवता वा। स्थानगतानान्तु क्रिमीणां भेष-जेनापकर्षणं न्यायतस्तच्चतुर्विधं, यद्यथा—शिरोविरेचनं वमनं विरेचनमास्थापनमित्यपकर्षणविधिः। प्रकृतिविघात-स्त्वेषां कटुकतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगः, यच्चान्य-दपि किञ्चित् श्लेष्मपुरीषप्रत्यनीकभूतं तत् स्यादिति प्रकृति-विघातः। अनन्तरं निदानोक्तानां भावानामनुपसेवनं, यदुक्तं निदानविधौ तस्य वर्ज्जनं तथाप्रायाणाञ्चापरेषां द्रव्याणाम्। इति लक्षणतश्चिकित्सितमनुव्याख्यातमेतदेव पुनर्विस्तरेणोप-देक्ष्यते॥ ९॥

अथैनं क्रिमिकोष्ठमग्रे षड्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्या-मुपपाद्य श्वोभूते एनं संशोधनं पाययिताऽस्मीति। क्षीरगुड़-दधितिल-मत्स्यानूपमांस-पिष्टान्नपरमान्न-कुसुम्भस्नेहसंप्रयुक्तै-र्भोज्यैः सायं प्रातश्चोपपादयेत्, समुदीरणार्थञ्च क्रिमीणां कोष्ठाभिसरणार्थञ्च भिषक्। अथ व्युष्टायां रात्र्यां सुखोषितं सुप्रजीर्णभुक्तञ्च विज्ञाय, आस्थापनवमनविरेचनैस्तदहरेवोप-

पादयेत्, उपपादनीयश्चेत् स्यात्, सर्व्वान् परीक्ष्य विशेषान् समीक्ष्य सम्यक् ॥ १० ॥

अथाहरेति ब्रूयात् मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रु-खरपुष्पा-भूस्तृणसुमुख-सुरसकुठेरक-गण्डीर-कालमालपर्णास-क्षवकफणिजझ्झकानि, सर्व्वाण्यथवा यथालाभं। तान्याहृता-न्यभिसमीक्ष्य खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन, सुप्रक्षालितायां स्थाल्यां समावाप्य गोमूत्रेणार्द्धोदकेनाभिषिच्य साधयेत्, सततमवघट्टयन् दर्व्व्या। तमुपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमवतार्य्य सुपरिपूतं कषायं सुखोष्णं मदनफलपिप्पलीविड़ङ्गकल्कतैलोपहितं स्वर्ज्जिकालवणितमभ्यासिच्य वस्तौ विधिवदास्थापयेदेनम्। तथार्कालर्ककुटजाढ़कीकुष्ठकैटर्य्यकषायेण वा, तथा शिग्रुपीलुकुस्तुम्बुरुकटुकासर्षपकषायेण, तथामलकशृङ्गवेरदारुहरिद्रापिचुमर्द्दकषायेण मदनफलादिसंयोगयोजितेन त्रिरात्रं सप्तरात्रंवास्थापयेत्। प्रत्यागतेच पश्चिमे वस्तौ प्रत्याश्वस्तं तदहरेवोभयतोभागहरं संशोधनं पाययेद् युक्त्या। तत्र विधिरुपदेक्ष्यते, मदनफलपिप्पलीकषायस्यार्द्धाञ्जलिमात्रेण त्रिवृत्कल्काक्षमात्रमालोड्यानुपातुमस्मै प्रयच्छेत्-तदस्य दोषमुभयतो निर्हरति साधु। एवमेव कल्पोक्तानि वमनविरेचनानि प्रतिसंसृज्य पाययेदेनं बुद्ध्या सर्व्वविशेषानवेक्षमाणो भिषक् ॥ ११ ॥

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत्। तेन चैव कषायेण बाह्याभ्यन्तरान् सर्व्वोदकार्थान् कारयेच्छश्वत्। तदभावे कटुतिक्तकषायाणा-

मौषधानां क्काथैर्मूत्रक्षारैर्वा परिषेचयेत् । परिषिक्तञ्चैनं निर्व्वातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरैः सह सिद्धेन यवाग्वादिना क्रमेणोपचरेत् । विलेपीक्रममागतञ्चैनमनुवासयेद्विड़ङ्गतैलेनैकान्तरं द्विस्त्रिर्व्वा । यदि पुनरस्यातिवृद्धान् शीर्षादान् क्रिमीन् मन्येत शिरस्येवाभिसर्पतः कदाचित्, ततः स्नेहस्वेदाभ्यां शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ॥ १२ ॥

यस्त्वभ्यवहार्य्यो विधिः प्रकृतिविघातायोक्तः क्रिमीणामथ तमनुव्याख्यास्यामः । मूषिकपर्णीं समूलाग्रप्रतानामाहृत्य खण्डशश्छेदयित्वोदूखले क्षोदयित्वा पाणिभ्यां पीड़यित्वा रसं गृह्णीयात्, तेन रसेन लोहितशालितण्डुलपिष्टमालोड्य पूपलिकां कृत्वा विधूमेष्वङ्गारेषु विपाच्य विड़ङ्गतैललवणोपहितां क्रिमिकोष्ठाय भक्षितुं प्रयच्छेत् । तदनन्तरञ्चाम्लकाञ्जिकमुदश्वित् पिप्पल्यादिपञ्चवर्गसंसृष्टं सलवणमनुपाययेत् । अनेन खल्वेतेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डीसुमुखसुरसकुठेरक-गण्डीरकालमाल-पर्णासक्षवकफणिज्झक-वकुलकुटजसुवर्णक्षीरीस्वरसानामन्यतमे कारयेत् । तथा किणिहीकिराततिक्तसुवहामलकहरीतकीविभीतकस्वरसेषु कारयेत् पूपलिकाः । स्वरसांश्चैषामेकैकशो द्वन्द्वशः सर्व्वशो वा मधुविलुलितान् प्रातरनन्नाय पातुं प्रयच्छेत् ॥ १३ ॥

अथाश्वशकृदाहृत्य महति किलिञ्जके प्रस्तीर्य्यातपे शोषयित्वोदूखले क्षोदयित्वा दृषदि पुनः सूक्ष्मचूर्णानि कारयित्वा विड़ङ्गकषायेण त्रिफलाकषायेण वा अष्टकृत्वो दशकृत्वोवातपे

भावितानि दृषदि पुनः सूक्ष्मचूर्णानि कारयित्वा नवे कलसे समावाप्यानुगुप्तं निधापयेत्। तेषान्तु खलु चूर्णानां पाणि-तलं चूर्णं यावद्वा साधु मन्येत तत् क्षौद्रेण संसृज्य क्रिमि-कोष्ठिने लेढ़ुं प्रयच्छेत्। तथा भल्लातकास्थीन्याहृत्य कलस-प्रमाणेन चापोथ्य स्नेहभाविते दृढ़े कलसे सूक्ष्मानेकच्छिद्रब्रध्ने मृदावलिप्ते समावाप्योडुपेन पिधाय भूमावाकण्ठं निखातस्य स्नेहभावितस्यैवान्यस्य दृढ़स्य कुम्भस्योपरि समारोप्य सम-न्ताद्गोमयैरुपचित्य दाहयेत्। स यदा जानीयात् साधु दग्धानि गोमयानि, गलितस्नेहानि भल्लातकास्थीनि, ततस्तं कुम्भमुद्धरेत्। अथ तस्माद्द्वितीयादेव कुम्भात्तं स्नेहमादाय विड़ङ्गतण्डुलचूर्णैः स्नेहार्द्धमात्रैः प्रतिसंसृज्यातपे सर्व्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत् पानाय। तेन साधु विरिच्यते विरिक्तस्य चानु-पूर्व्वी यथोक्ता। एवमेव भद्रदारुसरलकाष्ठस्नेहानुपकल्प्य पातुं प्रयच्छेत्॥ १४॥

अनुवासयेच्चैनमनुवासनकाले। अथाहरेति ब्रूयात् शार-दान् नवांस्तिलान् सम्पदुपेतान्। आहृत्य सुनिष्पूतान् शोधयित्वा विड़ङ्गकषाये सुखोष्णे प्रक्षिप्य निर्व्वापयेदादोष-गमनात्। गतदोषानभिसमीक्ष्य सुप्रलूनान् प्रलूच्य पुनरेव निष्पूतान् शोधयित्वा विड़ङ्गकषायेण त्रिःसप्तकृत्वः सुभाविता-नातपे शोषयित्वोदूखले संक्षुद्य दृषदि पुनः श्लक्ष्णपिष्टान् कारयित्वा द्रोण्यामभ्यवधाय विड़ङ्गकषायेण मुहुर्मुहुरवसिञ्चन् पाणिमर्द्दमेव मर्द्दयेत्। तस्मिंस्तु खलु प्रपीड्यमाने यत्तैलमु-दीयात् तत् पाणिभ्यां पर्य्यादाय शुचौ दृढ़े कलसे न्यस्यानुगुप्तं

निधापयेत् । अथाश्वरेति ब्रूयात् तिल्वकोद्दालकयोर्द्वौ बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विडङ्गकषायेण, तदर्द्धमात्रौ श्यामात्रिवृतयोस्ततोऽर्द्धमात्रौ दन्तीद्रवन्त्योस्ततोऽर्द्धमात्रौ चव्यचित्रकयोरित्येतत् सम्भारं विडङ्गकषायस्याढकमात्रेण प्रतिसंसृज्य, तत्तैलप्रस्थं समावाप्य सर्व्वमालोड्य महति पर्य्योगे समासिच्याग्नावधिश्रित्यासने सुखोपविष्टः सर्व्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेद् दर्व्व्या सततमवघट्टयन् । स यदा जानीयाद् विरमति शब्दः प्रशाम्यति च फेनः प्रसादमापद्यते स्नेहो यथास्वञ्च गन्धवर्णरसोत्पत्तिः संवर्त्तते च भैषज्यमङ्गुलीभ्यां मृद्यमानमनतिमृद्वनतिदारुणमनङ्गुलिग्राहि चेति स कालस्तस्यावतारणाय । ततस्तमवहृत्य शीतीभूतमहतेन वाससा परिपूय शुचौ दृढ़े कलसे समासिच्य पिधानेन पिधाय शुक्लेन वस्त्रपट्टेनाच्छाद्य सूत्रेण सुबद्धं सुनिगुप्तं निधापयेत् । ततोऽस्मै मात्रां प्रयच्छेत् पानाय, तेन साधु विरिच्यते । सम्यगपहृतदोषस्य चानुपूर्व्वी यथोक्ता ततश्चैनमनुवासयेत्तु काले । एतेनैव च पाकविधिना सर्षपातसीकरञ्जकोषातकीस्नेहानुपकल्प्य पाययेत् सर्व्वविशेषानवेक्षमाणस्तेनागदो भवति । इत्येवं हयानां श्लेष्मपुरीषसम्भवानां क्रिमीणां समुत्थानसंस्थानस्थानवर्णनामप्रभावचिकित्सितविशेषा व्याख्याताः सामान्यतः । विशेषतस्तु खल्वल्पमात्रमास्थापनानुवासनानुलोमहरणभूयिष्ठं तेष्वौषधेषु क्रिमीणां पुरीषसम्भवानां चिकित्सितं कार्य्यं । मात्राधिकं पुनः शिरोविरेचनवमनोपशमनभूयिष्ठं तेष्वौषधेषु क्रिमीणां श्लेष्मजानां चिकित्सितं कार्य्यं । इत्येष क्रिमिघ्नो

भेषजविधिरनुव्याख्यातो भवति, तमनुतिष्ठता यथास्वं हेतु-वर्ज्जने प्रयतितव्यम्। यथोद्देशमेवमिदं क्रिमिकोष्ठचिकित्सितं यथावदनुव्याख्यातं भवति ॥ १५ ॥

भवन्ति चात्र।

अपकर्षणमेवादौ क्रिमीणां भेषजं भवेत्।
ततो विघातः प्रकृतेर्निदानस्य च वर्ज्जनम् ॥
एष एव विकाराणां सर्व्वेषामपि निग्रहे।
विधिर्दृष्टस्त्रिधा योऽयं क्रिमीनुद्दिश्य कीर्त्तितः ॥
संशोधनं संशमनं निदानस्य च वर्ज्जनम्।
एतावद्भिषजा कार्य्यं रोगे रोगे यथाविधि ॥ २६ ॥

तत्र श्लोकौ।

व्याधितौ पुरुषौ ज्ञाज्ञौ भिषजौ सप्रयोजनौ।
विंशतिः क्रिमयस्तेषां हेत्वादिः सप्तको गणः ॥
उक्तो व्याधितरूपीये विमाने परमर्षिणा।
शिष्यसम्बोधनार्थाय व्याधिप्रशमनाय च ॥२७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने व्याधित-रूपीयं विमानं नाम सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः ।

( रोगभिषगजितीयं विमानम् । )

अथातो रोगभिषग्जितीयं विमानं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

बुद्धिमानात्मनः कार्य्यगुरुलाघवे कर्म्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाद् भिषग्बुभूषुः शास्त्रमेवादितः परीक्षेत । विविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोकेषु । तत्र यन्मन्येत महद्यशस्विधीरपुरुषासेवितमर्थबहुलमाप्तजनपूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीतसूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दं पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वविनिश्चयप्रधानं सङ्गतार्थमसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम् । शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्व्वम् ॥ २ ॥

ततोऽनन्तरमाचार्य्यं परीक्षेत । तद्यथा—पर्य्यवदातश्रुतं परिदृष्टकर्म्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्व्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमनुपस्कृतविद्यमनहङ्कृतमनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं ज्ञापनसमर्थञ्च, इत्येवंगुणो ह्याचार्य्यः सुक्षेत्रमार्त्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु वैद्यगुणैः सम्पादयति । तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्त्तृवच्चाप्रमत्तः । ततस्तत्प्रसादात् कृत्स्नं शास्त्रमवगम्य शास्त्रस्य दृढ़-

तायामभिधानस्य सौष्ठवेऽर्थविज्ञाने वचनशक्तौ च भूयोभूयः प्रयतेत सम्यक् ॥ ३ ॥

तत्रोपायाननुव्याख्यास्यामः। अध्ययनमध्यापनं तद्विद्यसम्भाषेत्युपायाः ॥ ४ ॥

तत्रायमध्ययनविधिः। कल्यकृतक्षणः प्रातरुत्थायोपव्युषं वा कृत्वावश्यकमुपस्पृश्योदकं देवर्षिगोब्राह्मणगुरुवृद्धसिद्धाचार्य्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरःसराभिर्वाग्भिः सूत्रमनुक्रामन् पुनःपुनरावर्त्तयेद् बुद्ध्या सम्यगनुप्रविश्यार्थतत्त्वं स्वदोषपरिहाराय परदोषप्रमाणार्थमेवं मध्यन्दिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येदित्यध्ययनविधिः ॥ ५ ॥

अथाध्यापनविधिः। अध्यापने कृतबुद्धिराचार्य्यः शिष्यमेवादितः परीक्षेत। तद्यथा,—प्रशान्तमार्य्यप्रकृतिकमक्षुद्रकर्म्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठममिन्मिनं धृतिमन्तमनहङ्कृतं मेधाविनं वितर्कस्मृतिसम्पन्नमुदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतमर्थतत्त्वभावकमकोपनमव्यसनिनं शील-शौचाचारानुराग-दाक्ष्य-प्रदक्षिण्योपपन्नमध्ययनाभिकाममर्थविज्ञाने कर्म्मदर्शने चानन्यकार्य्यमलुब्धमनलसं सर्व्वभूतहितैषिणमाचार्य्यसर्व्वानुशिष्टिप्रतिपत्तिकरमनुरक्तमेवंगुणसमुदितमध्याप्यमाहुः। एवंगुणसमुदितमध्ययनार्थिनमुपस्थितमारिराधयिषुमाचार्य्योऽनुभाषेत ॥ ६ ॥

उदगयने शुक्लपक्षे प्रशस्तेऽहनि तिष्यहस्तश्रवणाश्वयुजा-

मन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे कल्याणे च करणे मैत्रे मुहूर्त्ते मुण्डः कृतोपवासः स्नातः कषायवस्त्रसंवीतः समिधोऽग्निमाज्यमुपलेपनमुदकुम्भांश्च सुगन्धिहस्तो माल्यदामदीपहिरण्यरजतमणिमुक्ताविद्रुमक्षौमपरिधींश्च कुशलाजसर्षपाक्षतांश्च शुक्लाश्च सुमनसो ग्रथिताग्रथिता मेध्यांश्च भक्ष्यान् गन्धांश्च घृष्टानादायोपतिष्ठस्वेति । अथ स तथा कुर्य्यात् ॥ ७ ॥

तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे उदक्प्रवणे वा चतुष्किष्कुमात्रं चतुरस्रं स्थण्डिलं गोमयोदकेनोपलिप्तं कुशास्तीर्णं सुपरिहितं परिधिभिश्चतुर्द्दिशं यथोक्तचन्दनोदकुम्भक्षौमहेमरजतमणिमुक्ताविद्रुमालङ्कृतं मेध्यभक्ष्यगन्धशुक्लपुष्पलाजसर्षपाक्षतोपशोभितं कृत्वा तत्र पालाशीभिरैङ्गुदीभिरौडुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयादग्निम्, आशीःसंप्रयुक्तैर्मन्त्रैर्ब्रह्माणमग्निं धन्वन्तरिं प्रजापतिमश्विनौ इन्द्रमृषींश्च सूत्रकारानभिमन्त्रयमाणः पूर्व्वं स्वाहेति शिष्यश्चैनमन्वारभेत । हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत । परिक्रम्य ब्राह्मणान् स्वस्ति वाचयेत् । भिषजश्चाभिपूजयेत् ॥ ८ ॥

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चानुशिष्यात् । ब्रह्मचारिणा श्मश्रुधारिणा सत्यवादिना अमांसादेन मेध्यसेविना निर्म्मत्सरेणाशस्त्रधारिणा भवितव्यम् । न च ते मद्वचनात् किञ्चिदकार्य्यं स्यादन्यत्र राजद्विष्टात् प्राणहराद्विपुलादधर्म्मादनर्थसंप्रयुक्ताद्वाप्यर्थात् । मदर्पणेन मत्प्रधानेन

मदधीनेन मत्प्रियहितानुवर्त्तिना च त्वया शश्वद्भवितव्यम्।
पुत्रवद्दासवदर्थिवच्चोपचरतानुसर्त्तव्योऽहम्। अनुत्सुकेनावहि-
तेनानन्यमनसा विनीतेनावेक्ष्यावेक्ष्यकारिणानसूयकेन चाभ्य-
नुज्ञातेन प्रविचरितव्यम्। अनुज्ञातेन चाननुज्ञातेन च
प्रविचरता पूर्व्वं गुर्व्वर्थोपाहरणे यथाशक्ति प्रयतितव्यं।
कर्म्मसिद्धिमर्थसिद्धिं यशोलाभञ्च प्रेत्य च स्वर्गमिच्छता भिषजा
त्वया गोब्राह्मणमादौ कृत्वा सर्व्वप्राणभृतां शर्म्माशासितव्यम्,
अहरहरुत्तिष्ठता चोपविशता च सर्व्वात्मना चातुराणामारोग्य
प्रयतितव्यम्। जीवितहेतोरपि चातुरेभ्यो नाभिद्रोग्धव्यम्।
मनसापि च परस्त्रियो नाभिगमनीयाः, तथा सर्व्वमेव
परस्वम्। निभृतवेशपरिच्छदेन भवितव्यम्, अशौण्डेनापापे-
नापापसहायेन च, श्लक्ष्णशुक्लधर्म्म्यशर्म्म्यधन्यसत्यहितमित-
वचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरण-
सम्पत्सु नित्यं यत्नवता। न च कदाचिद्राजद्विष्टानां राज-
द्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वा औषधमनु-
विधातव्यम्। एवं सर्व्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारो-
पचाराणामनपवादप्रतिकारादीनां मुमूर्षताञ्च तथैवासन्नि-
हितेश्वराणां स्त्रीणामनध्यक्षाणां वा। न च कदाचित् स्त्रीद-
त्तमामिषमादातव्यमननुज्ञातं भर्त्राथवाध्यक्षेण। आतुर-
कुलञ्चानुप्रविशता विदितेनानुमतप्रवेशिना सार्द्धं पुरुषेण
सुसंवीतेनावाक्शिरसा स्मृतिमता स्तिमितेनावेक्ष्यावेक्ष्य मनसा
सर्व्वमाचरता सम्यगनुप्रवेष्टव्यम्। अनुप्रविश्य च वाङ्मनो-
बुद्धीन्द्रियाणि न क्वचित् प्रणिधातव्यानि, अन्यत्रातुरादातु-

रोपकारार्थाद् वातुरगतेष्वनेषु वा भावेषु। न चातुरकुल-प्रवृत्तयो बहिर्निश्चारयितव्याः। ह्रसितञ्चायुषः प्रमाणमातुरस्य जानतापि न त्वया खलु वर्णयितव्यं यत्रोच्यमानमातुरस्यान्यस्य वाप्युपघाताय सम्पद्यते। ज्ञानवतापि च नात्यर्थमात्मनो ज्ञानेन विकत्थितव्यम्। आप्तादपि हि विकत्थमानादत्यर्थ-मुद्विजन्त्यनेके ॥ ९ ॥

न चैव हि अस्त्यायुर्वेदस्य पारं, तस्मादप्रमत्तः शश्वद-भियोगमस्मिन् गच्छेत्। एतच्चैवं कार्यमेवं भूयः प्रवृत्तस्य सौष्ठवमनसूयतापरेभ्यो वाप्यागमयितव्यम्। कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः शत्रुश्चाबुद्धिमतामतश्चाभिसमीक्ष्य बुद्धिमता अमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यञ्चेति ॥ १० ॥

अतःपरमिदं ब्रूयात्। देवताग्निद्विजगुरुवृद्धसिद्धाचार्य्येषु ते नित्यं सम्यग्वर्त्तितव्यम्। तेषु ते सम्यग्वर्त्तमानस्यायमग्निः सर्व्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युरतो-ऽन्यथा वर्त्तमानस्याशिवायेति। इत्येवं ब्रुवति चाचार्य्ये शिष्यस्तथेति ब्रूयात्। यथोपदेशञ्च कुर्व्वन्नध्याप्योऽतोऽन्यथा त्वनध्याप्यः। अध्याप्यमध्यापयन् ह्याचार्य्यो यथोक्तैश्चाध्यापन-फलैर्योगमवाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानञ्च युनक्ति। इत्यध्यापनविधिरुक्तः ॥ ११ ॥

सम्भाषाविधिमत ऊर्द्ध्वं व्याख्यास्यामः। भिषग् भिषजा सह संभाषेत। तद्विद्यसम्भाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशारद्यमपि चाभिनिवर्त्तयति, वचनशक्तिमपि

चाधत्ते, यशश्चाभिदीपयति पूर्व्वश्रुते च सन्देहवतः पुनः श्रवणात् श्रुतसंशयमपकर्षति, श्रुते चासन्देहवतो भूयोऽध्यवसायमभिनिर्व्वर्त्तयति, अश्रुतमपि च कञ्चिदर्थं श्रोत्रविषयमापादयति, यच्चाचार्य्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातम्, तत् परस्परेण सह जल्पन् पराडेन विजिगीषुराह संहर्षात्। तस्मात् तद्विद्यसम्भाषामभिप्रशंसन्ति कुशलाः॥ १२॥

द्विविधा तु खलु तद्विद्यसम्भाषा भवति। सन्धाय सम्भाषा विगृह्य सम्भाषा च। तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नेनाकोपनेनानुपस्कृत-विद्येनानसूयकेनानुनेयेनानुनय-कोविदेन क्लेशक्षमेण प्रियसम्भाषणेन च सह सन्धाय सम्भाषा विधीयते। तथाविधेन सह संकथयन् विश्रब्धः कथयेत् पृच्छेदपि च विश्रब्धः पृच्छते चास्मै विश्रब्धाय विशदमर्थजातं ब्रूयात्। न च निग्रहभयादुद्विजेत्। निगृह्य चैनं न हृष्येत्, न च परेषु विकत्थेत। न च मोहादेकान्तग्राही स्यात्, न चानुविदितमर्थमनुवर्णयेत्। सम्यक् चानुनयेनानुनीयेत, अनुनयाच्च परं तत्र चावहितः स्यादित्यनुलोमसम्भाषाविधिः॥ १३॥

अत ऊर्द्ध्वमितरेण सह विगृह्य सम्भाषेत श्रेयसा योगमात्मनः पश्यन्। प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं परिषद्विशेषांश्च परीक्षेत सम्यक्। सम्यक् परीक्षा हि बुद्धिमतां कार्य्यप्रवृत्तिनिवृत्तिकालौ शंसति। तस्मात् परीक्षामभिप्रशंसन्ति कुशलाः। परीक्ष्यमाणस्तु खलु परावरान्तरमिमान् जल्पकगुणान् श्रेयस्करान् दोषवतश्च परीक्षेत सम्यक्।

तद्यथा,—श्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्तिरित्येतान् गुणान् श्रेयस्करानाहुः। इमान् पुनर्दोषवतः, तद्यथा—कोपनत्वमवैशारद्यं भीरुत्वमधारणत्वमनवहितत्वमिति। एतान् द्वयानपि गुणान् गुरुलाघवतः परस्य चैवात्मनश्च तुलयेत्॥ १४॥

तत्र त्रिविधः परः सम्पद्यते, प्रवरः प्रत्यवरः समो वा गुणविनिक्षेपतो नत्वेवं कार्त्स्न्येन॥ १५॥

परिषत्तु खलु द्विविधा, ज्ञानवती मूढा परिषच्च सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति॥ १६॥

तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नायां मूढायां वा न कथञ्चित् केनचित् सह जल्पो विधीयते। मूढायान्तु सुहृत्परिषदि उदासीनायां वा ज्ञानविज्ञानवचनप्रतिवचनशक्तीरन्तरेणापि दीप्तयशोमहजनविद्विष्टेनापि सह जल्पो विधीयते। तद्विधेन च सह कथयता त्वाविद्धदीर्घसूत्रसङ्कुलैर्वाक्यदण्डकैः कथयितव्यम्। अतिहृष्टं मुहुर्मुहुरुपहसता परं निरूपयता च परिषदमाकारैर्ब्रुवतश्चास्य वाक्यावकाशो न देयः। कष्टं शब्दञ्च ब्रुवता वक्तव्यो नोच्यते। अथवा पुनर्हीना ते प्रतिज्ञेति पुनश्चाह्वयमानः प्रतिवक्तव्यः। परिसंवत्सरो भवान् शिक्षतां तावद् गुरुमुपासितो नूनं। अथवा पर्य्याप्तमेतावत् ते। सकृदेव हि परिक्षेपिकं निहतं निहतमाहुरिति न्यासयोगः कर्त्तव्यः कथञ्चित्। अप्येवं श्रेयसा

सह विगृह्य वक्तव्यमित्याहुरेके। न त्वेवं ज्यायसा सह विग्रहं प्रशंसन्ति कुशलाः॥ १७॥

प्रत्यवरेण तु सह समानाभिमतेन वा विगृह्य जल्पता सुहृत्परिषदि कथयितव्यम्। अथवाप्युदासीनपरिषदि अव-धानश्रवणज्ञानविज्ञानोपधारण-वचनप्रतिवचन-शक्तिसम्पन्नायां कथयता चावहितेन परस्परसादृगुणदोषबलमवेक्षितव्यम्। समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत नास्य तत्र जल्पं योजयेद-नाविष्कृतमयोगं कुर्व्वन्। यत्र त्वेनमवरं मन्येत तत्रैवेनमाशु निगृह्णीयात्॥ १८॥

तत्र खल्विमे प्रत्यवराणामाशुनिग्रहे भवन्त्युपायाः। तद्यथा—श्रुतहीनं महता सूत्रपाठेनाभिभवेत्, विज्ञानहीनं पुनः कष्टशब्देन वाक्येन, वाक्यधारणाहीनमाविद्धदीर्घसूत्र-सङ्कुलैर्वाक्यदण्डकैः, प्रतिभाहीनं पुनर्वचनेनानेकविधेनानेकार्थ-वाचिना, वचनशक्तिहीनमर्द्धोक्तस्य वाक्यस्य क्षेपणेन, अविशा-रदमपत्रपणेन, कोपनमायासेन, भीरुं वित्रासनेन, अनवहितं नियमनेनेति। एवमेतैरुपायैरवरमभिभवेत्॥ १९॥

तत्र श्लोकौ।

विगृह्य कथयेद् युक्त्या युक्तञ्च न निवारयेत्।
विगृह्य भाषा तीव्रं हि केषाञ्चिद्द्रोहमावहेत्॥
नाकार्य्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते।
कुशला नाभिनन्दन्ति कलहं समितौ सताम्॥ २०॥

एवं प्रवृत्ते तु वादे प्रागेव कार्य्याद् वादात् तावदिदं कर्त्तुं यतेत। सन्धाय परिषदाऽयनभूतमात्मनः प्रकरणमादेश-

यितव्यम् । यथा परस्य भृशदुर्गं स्यात् पक्षम् परस्य वा भृशं विमुखमानयेत् । परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुं, एषैव ते परिषद् यथेष्टं यथायोगं यथाभिप्रायं वादं वादमर्य्यादाञ्च स्थापयिष्यतीत्युक्त्वा तूष्णीमासीत ॥ २१ ॥

तत्रेदं वादमर्य्यादालक्षणं भवति। इदं वाच्यमिदमवाच्यमेवं सति पराजितो भवतीति इमानि खलु पदानि भिषग्भिर्वादमार्गज्ञानार्थमधिगम्यानि भवन्ति । तद्यथा—वादो, द्रव्यं, गुणाः, कर्म्म, सामान्यं, विशेषः, समवायः, प्रतिज्ञा, स्थापना, प्रतिष्ठापना, हेतुः, दृष्टान्तः, उपनयः, निगमनम्, उत्तरम्, सिद्धान्तः, शब्दः, प्रत्यक्षम्, अनुमानम्, ऐतिह्यम्, औपम्यम्, संशयः, प्रयोजनं, सव्यभिचारम्, जिज्ञासा, व्यवसायः, अर्थप्राप्तिः, सम्भवः, अनुयोज्यम् अननुयोज्यम्, अनुयोगः, प्रत्यनुयोगः, वाक्यदोषः, वाक्यप्रशंसा, छलम्, हेतुः, अतीतकालम्, उपालम्भः, परिहारः, प्रतिज्ञाहानिः, अभ्यनुज्ञा, हेत्वन्तरम्, अर्थान्तरं, निग्रहस्थानमिति ॥ २२ ॥

तत्र तु वादो नाम स यत् परः परेण सह शास्त्रपूर्व्वकम् विगृह्य कथयति। स च द्विविधः संग्रहेण जल्पो वितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः । जल्पविपर्य्ययो वितण्डा । यथैकस्य पक्षः पुनर्भवोऽस्तीति नास्तीत्यपरस्य । तौ च स्वस्वपक्षहेतुभिः स्वस्वपक्षं स्थापयतः परपक्षमुद्भावयतः, एष जल्पो, जल्पविपर्य्ययो वितण्डा । वितण्डा नाम परपक्षदोषवचनमात्रमेव॥ २३ ॥

द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः खल्वर्थाः श्लोकस्थाने पूर्व्वमुक्ताः ॥ २४ ॥

अथ प्रतिज्ञा। प्रतिज्ञा नाम साध्यवचनं, यथा नित्यः पुरुष इति ॥ २५ ॥

अथ स्थापना। स्थापना नाम तस्या एव प्रतिज्ञाया-हेतुदृष्टान्तोपनयनिगमनैः स्थापना, पूर्व्वं हि प्रतिज्ञा, पश्चात् स्थापना, किं ह्यप्रतिज्ञातं स्थापयिष्यति? यथानित्यः पुरुष-इति प्रतिज्ञा, हेतुरकृतकत्वादिति, दृष्टान्तो यथाकाशमिति, उपनयो यथा चाकृतकमाकाशं तथा पुरुष इति, निगमनं तस्मान्नित्य इति॥ २६ ॥

अथ प्रतिष्ठापना। प्रतिष्ठापना नाम या तस्या एव प्रतिज्ञायाः प्रति विपरीतार्थस्थापना। यथा अनित्यः पुरुष-इति विपरीतार्थप्रतिज्ञा, हेतुरैन्द्रियकत्वादिति, दृष्टान्तो यथा घट इति, उपनयो यथा घट ऐन्द्रियकः स चानित्यस्तथा चाय-मिति, निगमनं तस्मादनित्य इति॥ २७ ॥

अथ हेतुः। हेतुर्नामोपलब्धिकारणं तत् प्रत्यक्षमनुमान-मैतिह्यमुपमानमित्येभिर्हेतुभिर्यदुपलभ्यते तत् तत्त्वम् ॥ २८॥

अथ दृष्टान्तः। दृष्टान्तो नाम स यत्र मूर्खविदुषां बुद्धि-साम्यं, तेनैव यद् वर्ण्यं वर्णयतीति, यथाग्निरुष्णो द्रवमुदकं स्थिरा पृथिवी आदित्यः प्रकाशक इति यथा आदित्यः प्रका-शकस्तथा साङ्ख्यज्ञानं प्रकाशकमिति ॥ २९ ॥

उपनयो निगमनञ्चोक्तं स्थापनाप्रतिष्ठापनाव्याख्यायाम् ॥३०॥

अथ उत्तरं। उत्तरं नाम साधर्म्म्योपदिष्टे हेतौ वैधर्म्म्य-

वचनं वैधर्म्म्योपदिष्टे वा हेतौ साधर्म्म्यवचनं। यथा हेतु-सधर्म्माणो विकाराः, शीतकस्य हि व्याधेर्हेतुभिः साधर्म्म्यं हिमशिशिरवातसंस्पर्शा इति ब्रुवतः परो ब्रूयाद् हेतुविधर्म्माणो विकाराः, यथा शरीरावयवानां दाहौष्ण्यकोथप्रपचने हेतुभि-र्वैधर्म्म्यं हिमशिशिरवातसंस्पर्शा इति। एतत् सविपर्य्ययमुत्तरम् ॥ ३१ ॥

अथ सिद्धान्तः। सिद्धान्तो नाम स यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते निर्णयः। स चतुर्विधः सर्व्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युप-गमसिद्धान्त इति ॥ ३२ ॥

तत्र सर्व्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन् सर्व्वस्मिंस्तन्त्रे तत्प्रसिद्धं, सन्ति निदानानि, सन्ति व्याधयः, सन्ति सिद्धा-पायाः साध्यानां व्याधीनामिति। प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन्नेकैकस्मिंस्तन्त्रे तत्तत् प्रसिद्धं, यथान्यत्राष्टौ रसाः षड़त्र रसाः, पञ्चेन्द्रियाणात्र षड़िन्द्रियाण्यन्यत्र तन्त्रे, वातादि-कृताः सर्व्वे विकारा यथान्यत्र, अत्र वातादिकृता भूतकृताश्च प्रसिद्धाः। अधिकरणसिद्धान्तो नाम स यस्मिन्नधिकरणे प्रस्तूय-माने सिद्धान्यन्यान्यपि अधिकरणानि भवन्ति, यथा न मुक्तः कर्म्मानुबन्धिकं कुरुते निस्पृहत्वादिति प्रस्तुते सिद्धाः कर्म्मफल-मोक्षपुरुषप्रेत्यभावाः स्युः। अभ्युपगमसिद्धान्तो नाम स यमर्थ-मसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः। तद्यथा द्रव्यं प्रधानमिति कृत्वा वक्ष्यामः, गुणाः प्रधानमिति कृत्वा वक्ष्यामः, कर्म्म प्रधानमिति कृत्वा वक्ष्याम-इत्येवमादिश्चतुर्व्विधः सिद्धान्तः ॥ ३३ ॥

अथ शब्दः। शब्दो नाम वर्णसमाम्नायः। स चतुर्विधो दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति। तत्र दृष्टार्थो नाम त्रिभि-र्हेतुभिर्दोषाः प्रकुप्यन्ति षड्भिरुपक्रमैश्च प्रशाम्यन्ति, सति श्रोत्रादिसद्भावे शब्दादिग्रहणमिति। अदृष्टार्थः पुनरस्ति प्रेत्य-भावोऽस्ति मोक्ष इति। सत्यो नाम यथार्थभूतः, सन्त्यायु-र्वेदोपदेशाः, सन्ति सिद्ध्युपायाः साध्यानाम् व्याधीनाम् सन्त्यारम्भफलानीति। सत्यविपर्य्ययाच्चानृतः॥ ३४॥

अथ प्रत्यक्षम्। प्रत्यक्षं नाम तद्यदात्मना चेन्द्रियैश्च स्वयमुपलभ्यते। तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः, शब्दा-दयस्त्विन्द्रियप्रत्यक्षाः॥ ३४॥

अथानुमानं। अनुमानं नाम तर्को युक्त्यपेक्षः, यथा—अग्निं जरणशक्त्या बलं व्यायामशक्त्या श्रोत्रादीनि शब्दादिग्रहणे-नेत्येवमादिः॥ ३५॥

ऐतिह्यम्। ऐतिह्यं नाम आप्तोपदेशो वेदादिः॥ ३६॥

अथ औपम्यम्। औपम्यं नाम तद्यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनं, यथा दण्डेन दण्डकस्य, धनुषा धनुस्तम्भस्य ष्वामिनारोगदस्येति॥ ३७॥

अथ संशयः। संशयो नाम सन्दिग्धेष्वर्थेष्वनिश्चयः। यथा किमकालमृत्युरस्ति नास्तीति। दृष्टाश्चायुष्मल्लक्षणैरुपे-ताश्चानुपेताश्च तथाऽक्रियाः सक्रियाश्च पुरुषाः शीघ्रभङ्गाश्चिर-जीविनश्च, तदुभयदृष्टत्वात् संशयः किमस्ति खल्वकालमृत्युरुत नास्तीति॥ ३८॥

अथ प्रयोजनम्। प्रयोजनं नाम यदर्थमारभ्यन्ते आरम्भाः,

तद्यथा यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्याम्यनायुष्याणि च परिहरिष्यामि कथं मामकालमृत्युः प्रसहेतेति प्रयोजनम् ॥ ३९ ॥

अथ सव्यभिचारम् । सव्यभिचारं नाम यद्व्यभिचरणं, यथा भवेदिदमौषधं तस्मिन् व्याधौ यौगिकमथवा नेति ॥४०॥

अथ जिज्ञासा । जिज्ञासा नाम परीक्षा, यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते ॥ ४१ ॥

अथ व्यवसायः । व्यवसायो नाम निश्चयः, यथा वातिक एवायं व्याधिरिदमेवात्र भेषजञ्च ॥ ४२ ॥

अथार्थप्राप्तिः । अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्यार्थस्यानुक्तस्य च सिद्धिः । यथा नायं सन्तर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति । नानेन दिवाभोक्तव्यमित्युक्ते भवत्यर्थप्राप्तिर्निशि भोक्तव्यमिति ॥ ४३ ॥

अथ सम्भवः । सम्भवो नाम यो यतः सम्भवति स तस्य सम्भवः । यथा षड् धातवो गर्भस्य, व्याधेरहितं, हितमारोग्यस्येति ॥ ४४ ॥

अथानुयोज्यम् । अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमुच्यते । सामान्यव्याहृतेष्वर्थेषु वा विशेषग्रहणार्थं तद्वाक्यमनुयोज्यम् । यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्योऽयं किं विरेचनसाध्य इत्यनुयुज्यते ॥ ४५ ॥

अथाननुयोज्यम् । अननुयोज्यं नामातो विपर्य्ययेण यथायमसाध्यः ॥ ४६ ॥

अथानुयोगः । अनुयोगो नाम स यत् तद्विद्यानां तद्वि-

रेव सार्वं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञान-विज्ञानवचनप्रतिवचनपरीक्षार्थमादिश्यते । अथवा नित्यः पुरुष इति प्रतिज्ञाते यत् परः को हेतुरित्याह सोऽनुयोगः ॥ ४७ ॥

अथ प्रत्यनुयोगः । प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः । यथा अस्यानुयोगस्य पुनः को हेतुरिति ॥ ४८ ॥

अथ वाक्यदोषः । वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धञ्चेति । नैतानि विना प्रकृतोऽर्थः प्रणश्येत् ॥ ४९ ॥

तत्र न्यूनम् । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं भवति, यद्वा बहूपदिष्टहेतुकमेकेन हेतुना साध्यते तच्च न्यूनम् ॥ ५० ॥

अथाधिकम् । अधिकं नाम न्यूनविपरीतं यद्वायुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा यत् किञ्चिदप्रतिसम्बद्धार्थमुच्यते यद्वा सम्बद्धार्थमपि द्विरभिधीयते, तत् पुनरुक्तत्वादधिकं । तच्च पुनरुक्तं द्विविधम्, अर्थपुनरुक्तं शब्दपुनरुक्तञ्च । तत्रार्थपुनरुक्तं यथा भेषजमौषधं साधनमिति, शब्दपुनरुक्तञ्च भेषजं भेषजमिति ॥ ५१ ॥

अथानर्थकं । अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्नचार्थतो गृह्यते ॥ ५२ ॥

अथापार्थकं । अपार्थकं नाम यदर्थवच्च परस्परेणासंयुज्यमानार्थकं, यथा चक्रनक्रवंशवज्रनिशाकरा इति ॥ ५३ ॥

अथ विरुद्धं । विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं । तत्र पूर्वं दृष्टान्तसिद्धान्तावुक्तौ । समयः पुनस्त्रिधा भवति

यथायुर्वैदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिकसमय इति ।
तत्रायुर्वैदिकसमयश्चतुष्पादं भेषजमिति । याज्ञिकसमयः
आलभ्या यजमानैः पशव इति । मोक्षशास्त्रिकसमयः सर्व्वभूते-
ष्वहिंसेति । तत्र स्वसमयविपरीतमुच्यमानं विरुद्धमिति वाक्य-
दोषाः ॥ ५४ ॥

अथ वाक्यप्रशंसा । वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे
त्वनूनमनधिकमर्थवदनपार्थकमविरुद्धमधिगतपदार्थञ्च, इति
यत्‌ तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ५५ ॥

अथ छलं। छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तु-
मात्रमेव । तद्द्विविधं वाक्‌छलं सामान्यच्छलञ्च । तत्र वाक्‌-
छलं नाम यथा कश्चिद्‌ ब्रूयान्‌ नवतन्त्रोऽयं भिषगिति, अथ
भिषग्‌ ब्रूयात्‌ नाहं नवतन्त्र एकतन्त्रोऽहमिति । परो ब्रूयात्‌
नाहं ब्रवीमि नवतन्त्राणि तवेति, अपितु नवाभ्यस्तं ते तन्त्र-
मिति, भिषग्‌ ब्रूयात्‌ न मया नवाभ्यस्तं तन्त्रम्‌, अनेकधाभ्यस्तं
मया तन्त्रमिति वाक्‌छलम्‌। सामान्यच्छलं नाम यथा
व्याधिप्रशमनायौषधमित्युक्ते परो ब्रूयात्‌ सत्‌ सत्प्रश-
मनायेति किन्नु भवानाह? सद्रोगः सदौषधं यदि च
सत्‌ सत्प्रशमनाय भवति तत्र सत्कासः सत्क्षयः सत्सा-
मान्यात्‌ कासः क्षयप्रशमनाय भविष्यतीति, एतत्‌ सामान्य-
च्छलम्‌ ॥ ५६ ॥

अथाहेतुः । अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसम-
इति । तत्र प्रकरणसमो नामाहेतुर्यथान्यः शरीरादात्मा नित्य
इति, परो ब्रूयात्‌ यस्मादन्यः शरीरादात्मा तस्मान्नित्यः, शरीरं

ह्यनित्यमतो विभक्तिधानेन च भवितव्यमित्येष चाहेतुर्न हि य एव पक्षः स एव हेतुरिति। संशयसमो नामाहेतुर्य एव संशयहेतुः स एव संशयच्छेदहेतुर्यथा अयमायुर्व्वेदैकदेशमाह किन्वयं चिकित्सकः स्यान्नवेति संशये परो ब्रूयादयस्मादय-मायुर्व्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति। न च संशय-च्छेदहेतुं विशेषयतीऽष चाहेतुः। न हि य एव संशयहेतुः स एव संशयच्छेदहेतुर्भवति। वर्ण्यसमो नामाहेतुर्यो हेतु-र्वर्ण्याविशिष्टः, यथा कश्चिद् ब्रूयादस्पर्शत्वाद् बुद्धिरनित्या शब्दवदिति, तत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या, तदुभयवर्ण्या-विशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः॥ ५७॥

अथातीतकालम्। अतीतकालं नाम यत् पूर्व्वं वाच्यं तत् पश्चादुच्यते तत् कालातीतत्वादग्राह्यं भवतीति, परं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृह्णीते तत् तस्यातीतकालत्वान्निग्रहवचनमसमर्थं भवतीति॥ ५८॥

अथोपालम्भः। उपालम्भो नाम हेतोर्दोषवचनं यथा पूर्व्व-महेतवो हेत्वाभासा व्याख्याताः॥ ५९॥

अथ परिहारः। परिहारो नाम तस्यैव दोषवचनस्य परिहरणं, यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते तस्य चापगमान्नोपलभ्यन्ते तस्मादन्यः शरीरादात्मा नित्य-श्चेति॥ ६०॥

अथ प्रतिज्ञाहानिः। प्रतिज्ञाहानिर्नाम सा पूर्व्वपरिगृहीतां प्रतिज्ञां पर्य्यनुयुक्तो यत् परित्यजति, यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति पर्य्यनुयुक्तस्त्वाहानित्य इति॥ ६१॥

अथाभ्यनुज्ञा । अभ्यनुज्ञा नाम सा य इष्टानिष्टाभ्युपगमः ॥ ६२ ॥

अथ हेत्वन्तरं । हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये यद्विकृतहेतुमाह ॥ ६३ ॥

अथार्थान्तरं । अर्थान्तरं नाम एकस्मिन् वक्तव्येऽपरं यदाह । यथा ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥ ६४ ॥

अथ निग्रहस्थानं । निग्रहस्थानं नाम पराजयप्राप्तिस्तच्च त्रिरभिहितस्य वाक्यस्याविज्ञानं परिषदि विज्ञानवत्याम् । यद्वा अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः। प्रतिज्ञाहानिरभ्यनुज्ञा कालातीतवचनमहेतुर्न्यूनमधिकं व्यर्थमनर्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति वादमर्य्यादापदानि यथोद्देशमभिनिर्द्दिष्टानि भवन्ति ॥ ६५ ॥

वादस्तु खलु भिषजां वर्त्तमानो वर्त्तेतायुर्व्वेद एव नान्यत्र ॥ ६६ ॥

तत्र हि वाक्यप्रतिवाक्यविस्ताराः केवलाश्चोपपत्तयश्च सर्व्वाधिकरणेषु ताः सर्व्वाः सम्यगवेक्ष्यावेक्ष्य सर्व्वं वाक्यं ब्रूयात्, नाप्रकृतिकमशास्त्रमपरीक्षितमसाधकमाकुलमव्यापकं वा । सर्व्वञ्च हेतुमद्ब्रूयाद् हेतुमन्तो ह्यकलुषाः सर्व्व एव वाद्विग्रहाश्चिकित्सिते कारणभूताः । प्रशस्तबुद्धिवर्द्धकत्वात् सर्व्वारम्भसिद्धिं ह्यावहत्यनुपहता बुद्धिः ॥ ६७ ॥

इमानि खलु तावदिह कानिचित् प्रकरणानि भिषजां ज्ञानार्थमुपदेक्ष्यामः। ज्ञानपूर्व्वकं कर्म्मणां समारम्भं प्रशंसन्ति कुशलाः ॥ ६८ ॥

ज्ञात्वा हि कारणकरणकार्य्ययोनिकार्य्यकार्य्यफलानुबन्धदेशकालप्रवृत्त्युपायान् सम्यगभिनिर्व्वर्त्तयमानः कार्य्याभिनिर्व्वृत्ताविष्टफलानुबन्धं कार्य्यमभिनिर्व्वर्त्तयत्यनतिमहता प्रयत्नेन कर्त्ता ॥ ६९ ॥

तत्र कारणं नाम तद् यः करोति स एव हेतुः स कर्त्ता। करणं पुनस्तद् यदुपकरणायोपकल्पते कर्त्तुः कार्य्याभिनिर्व्वृत्तौ प्रयतमानस्य। कार्य्ययोनिस्तु सा या विक्रियमाणा कार्य्यत्वमापद्यते। कार्य्यन्तु तद् यस्याभिनिर्व्वृत्तिमभिसन्धाय कर्त्ता प्रवर्त्तते। कार्य्यफलं पुनस्तद् यत् प्रयोजना कार्य्याभिनिर्व्वृत्तिरिष्यते। अनुबन्धः खलु स यः कर्त्तारमवश्यमनुबध्नाति कार्य्यादुत्तरकालं कार्य्यनिमित्तः शुभो वाप्यशुभो वा भावः। देशस्त्वधिष्ठानम्। कालः पुनः परिणामः। प्रवृत्तिस्तु खलु चेष्टा कार्य्यार्था सैव क्रिया कर्म्म यत्नः कार्य्यसमारम्भश्च। उपायः पुनस्त्रयाणां कारणादीनां सौष्ठवमभिसन्धानञ्च सम्यक्। कार्य्यकार्य्यफलानुबन्धवर्ज्यानां तेषां तद्धि कार्य्याणामभिनिर्व्वर्त्तकमित्यतस्तूपायः। 'कृते नोपायार्थोऽस्ति न च विद्यते तदात्वे कृताच्चोत्तरकालं फलं फलाच्चानुबन्ध इति। एतद् दशविधमग्रे परीक्ष्यं, ततोऽनन्तरं कार्य्यार्था प्रवृत्तिरिष्टा, तस्माद्भिषक् कार्य्यं चिकीर्षुः प्राक् कार्य्यसमारम्भात् परीक्षया केवलं परीक्ष्यं परीक्ष्य कर्म्म समारभेत कर्त्तुम् ॥ ७० ॥

तत्र चेद्भिषगभिषग्वा भिषजं कश्चिदेवं पृच्छेद् वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यं, कश्चात्र परीक्ष-

विशेषः, कथञ्च परीक्षितव्यं, किं प्रयोजना च परीक्षा, क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः, प्रवृत्तिनिवृत्तिसंयोगे च किं नैष्ठिकं, कानि च वमनादीनां भेषजद्रव्याणि उपयोगं गच्छन्तीति। स एवं पृष्टो यदि मोहयितुमिच्छेद् ब्रूयादेनं बहुविधा हि परीक्षा तथा परीक्ष्यविधिभेदः। कतमेन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्ष्य केन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदाग्रं वा पृच्छति भवान्? आख्यायमानं वेदानीं भवतोऽनेन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया अनेन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुमहमनेन परीक्षाविधिभेदेनानेन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यं भित्त्वार्थमाचक्षाण इच्छां पूरयेयमिति। स यदुत्तरं ब्रूयात् तत् परीक्ष्योत्तरं वाच्यं स्याद् यथोक्तञ्च प्रतिवचनविधिमवेक्ष्य सम्यक्। यदि तु न चैनं मोहयितुमिच्छेत् प्राप्तन्तु वचनकालं मन्येत काममस्मै ब्रूयादाप्तमेव निखिलेन ॥ ७१ ॥

द्विविधा खलु परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च। एतत् तु द्वयमुपदेशश्च परीक्षा स्यात्। एवमेषा द्विविधा परीक्षा त्रिविधा वा सहोपदेशेन। दशविधन्तु परीक्ष्यं कारणादि यदुक्तमग्रे, तदिह भिषगादिषु संधार्य्य सन्दर्शयिष्यामः। इह कार्य्यप्राप्तौ कारणं भिषक्, करणं पुनर्भेषजं, कार्य्ययोनिर्धातुवैषम्यं, कार्य्यं धातुसाम्यं, कार्य्यफलं सुखावाप्तिः, अनुबन्धस्त्वायुः, देशो भूमिरातुरश्च, कालः संवत्सरश्चातुरावस्था च। प्रवृत्तिः प्रतिकर्म्मसमारम्भः, उपायो भिषगादीनां सौष्ठवम्

अभिसन्धानञ्च सम्यक्। इहाप्यस्योपायस्य विषयः पूर्व्वमे-वोपायविशेषेण व्याख्यात इति कारणादीनि दश भिषगादिषु संसार्य्य सन्दर्शितानि, तथैवानुपूर्व्व्या एतद्दशविधं परीक्ष्य-मुक्तञ्च॥ ७२॥

तत्र यो यः परीक्षाविशेषो यथा यथा च परीक्षितव्यः स स तथा तथा च व्याख्यास्यते। कारणं भिषगित्युक्तमग्रे तस्य परीक्षा भिषग् नाम स यो भिषजति यः सूत्रार्थप्रयोगकुशलो यस्य चायुः सर्व्वथा विदितम्। यथावत् स च सर्व्वधातुसाम्यं चिकीर्षन्नात्मानमेवादितः परीक्षेत, तद्यथा—गुणिषु गुणतः कार्य्याभिनिर्व्वृत्तिं पश्यन् कच्चिदहमस्य कार्य्यस्याभिनिर्व्वर्त्तने समर्थोऽस्मि न वेति। तत्रेमे भिषग्गुणा यैरुपपन्नो भिषग् धातुसाम्याभिनिर्व्वर्त्तने समर्थो भवति तद्यथा—पर्य्यवदात-श्रुतता परिदृष्टकर्म्मता दाक्ष्यं शौचं जितहस्तता उपकरण-वत्ता सर्व्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्तिज्ञता चेति॥ ७३

करणं पुनर्भेषजम्। भेषजं नाम तद्यदुपकरणायोप-कल्प्यते भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य विशे-षतश्चोपायान्तेभ्यः। तद्द्विविधं व्यपाश्रयभेदात्। दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्चेति। तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलबल्यु-पहारहोमनियमप्रायश्चित्तोपवास-स्वस्त्ययन-प्रणिपातगम-नादि। युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः, एतच्चैव भेषजमङ्गभेदादपि द्विविधं, अद्रव्यभूतं द्रव्यभूतञ्चेति, तत्र यदद्रव्यभूतं तदुपायाभिप्लुतम्। उपायो नाम भयदर्शन-विस्मापनक्षोभणहर्षणभर्त्सनबन्धनस्वप्नसंवाहनादिरमूर्त्तो भाव-

विशेषो यथोक्ताः क्षिप्रापायाश्च। यत्तु द्रव्यभूतं तदमनादिषु योगमुपैति, तत्रापीयं परीक्षा। इदमेवं प्रकृत्यैवं गुणमेवं प्रभावमस्मिन् देशे जातमस्मिन्नृतावेवं गृहीतमेवं निहितमेवमुपस्कृतमनया च मात्रया युक्तमस्मिन् व्याधावेवंविधस्य पुरुषस्यैतावन्तं दोषमपकर्षत्युपशमयति वा। यदन्यदपि चैवंविधं भेषजं भवेत् तच्चानेनानेन वा विशेषेण युक्तमिति ॥७४॥

कार्य्ययोनिर्धातुवैषम्यं, तस्य लक्षणं विकारागमः। परीक्षा त्वस्य विकारप्रकृतेश्चैवोनातिरिक्तलिङ्गविशेषावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति ॥ ७५ ॥

कार्यं धातुसाम्यं, तस्य लक्षणं विकारोपशमः। परीक्षा त्वस्य रुगुपशमनं स्वरवर्णयोगः शरीरोपचयो बलवृद्धिरभ्यवहार्य्याभिलाषो रुचिराहारकाले। अभ्यवहृतस्य चाहारस्य काले सम्यग्जरणं, निद्रालाभो यथाकालं, वैकारिकाणां स्वप्नानामदर्शनं सुखेन च प्रतिबोधनं, वातमूत्रपुरीषरेतसां मुक्तिः, सर्व्वाकारैर्मनोबुद्धीन्द्रियाणाञ्चाव्यापत्तिरिति ॥ ७६ ॥

कार्य्यफलं सुखावाप्तिस्तस्य लक्षणं मनोबुद्धीन्द्रियशरीरतुष्टिः ॥ ७७ ॥

अनुबन्धस्तु खल्वायुस्तस्य लक्षणं प्राणैः सह संयोगः ॥७८॥

देशो भूमिरातुरश्च, तत्र भूमिपरीक्षा आतुरस्य परिज्ञानहेतोर्वा स्यादौषधपरिज्ञानहेतोर्वा। तत्र तावदियमातुरपरिज्ञानहेतोः। तद्यथा—अयं कस्मिंश्च भूमिदेशे जातः संवृद्धो व्याधितो वा तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमिदमाचारजातमेतावच्च बलमेवंविधं सत्त्वमेवं-

विधं सात्म्यमेवंविधो दोषो भक्तिरियमिमे व्याधयो हितमिद-मह्तिमिदमिति। औषधपरिज्ञानहेतोस्तु कल्पेषु भूमि-परीक्षा वक्ष्यते ॥ ७६ ॥

आतुरस्तु खलु कार्य्यदेशस्तस्य परीक्षा आयुषः प्रमाण-ज्ञानहेतोर्वा भवति बलदोषप्रमाणज्ञानहेतोर्वा। तत्र ताव-दियं बलदोषप्रमाणज्ञानहेतोः, दोषप्रमाणानुरूपो हि भैषज्य-प्रमाणविशेषो बलप्रमाणविशेषापेक्षो भवति। सहसा ह्यति-बलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमतिपातयेत्, न ह्यति-बलान्याग्नेयसौम्यवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्म्माणि वा शक्यन्तेऽल्पबलैः सोढ़ुमसह्यातितीक्ष्णवेगित्वाद्धि सद्यःप्राण-हराणि स्युः। एतच्चैव कारणमवेक्ष्यमाणा हीनबलमातुरम-विषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकै-श्चोपचरन्त्यौषधैर्विशेषतश्च नारीः। ता ह्यनवस्थितमृदु-विवृतविक्लवहृदयाः प्रायः सुकुमारा अबलाः परसंस्तभ्याश्च। तथा बलवति बलवद्व्याधिपरिगते स्वल्पबलमौषधमपरीक्षक-प्रयुक्तमसाधकमेव भवति, तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च सारतश्च संहननतश्च प्रमाणतश्च सात्म्यतश्च सत्त्वतश्चाहारशक्तितश्च व्यायामशक्तितश्च वयस्तश्चेति ॥ ८० ॥

बलप्रमाणविशेषग्रहणहेतोः तत्रेमे प्रकृत्यादयो भावाः। तद्यथा—शुक्रशोणितप्रकृतिं कालगर्भाशयप्रकृतिमातुराहार-विहारप्रकृतिं महाभूतविकारप्रकृतिञ्च गर्भशरीरमपेक्षते। एता हि येन येन दोषेणाधिकेन समेन वा समनुबध्यन्ते तेन तेन दोषेण गर्भोऽनुबध्यते। ततः सा सा दोषप्रकृतिरुच्यते

मनुष्याणां गर्भादिप्रवृत्ता । तस्मात् श्लेष्मलाः प्रकृत्या केचित् पित्तलाः केचिद् वातलाः केचित् संसृष्टाः केचित् समधातवः केचिद् भवन्ति । तेषां लक्षणानि व्याख्यास्यामः ॥ ८१ ॥

श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमित-गुरुशीतविज्जलाच्छः । तस्य स्नेहात् श्लेष्मलाः स्निग्धाङ्गाः, श्लक्ष्णत्वात् श्लक्ष्णाङ्गाः, मृदुत्वाद्दृष्टिसुखसुकुमारावदात-शरीराः, माधुर्य्यात् प्रभूतशुक्रव्यवायापत्याः, सारत्वात् सारसंहत-स्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्व्वाङ्गाः, मन्दत्वान्मन्द-चेष्टाहारविहाराः, स्तैमित्यादशीघ्रारम्भक्षोभविकाराः, गुरु-त्वात् साराधिष्ठितगतयः, शैत्यादल्पक्षुत्तृष्णासन्तापस्वेददोषाः, विज्जलत्वात् सुश्लिष्टसारसन्धिबन्धनाः, तथाच्छत्वात् प्रसन्न-दर्शनाननाः प्रसन्नस्निग्धवर्णस्वराश्च भवन्ति । त एवंगुणयोगात् श्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता-आयुष्मन्तश्च भवन्ति ॥ ८२ ॥

पित्तमुष्णं तीक्ष्णं द्रवं विस्रमम्लं कटुकञ्च । तस्यौष्ण्यात् पित्तला भवन्त्युष्णासहाः शुष्कसुकुमारावदातगात्राः प्रभूत-पिप्लुव्यङ्गतिलपिड़काः क्षुत्पिपासावन्तः क्षिप्रवलिपलित-खालित्यदोषाः प्रायो मृद्वल्पकपिलश्मश्रुलोमकेशाः, तैक्ष्ण्यात् तीक्ष्णपराक्रमास्तीक्ष्णाग्नयः प्रभूताशनपानाः क्लेशासहि-ष्णवो दन्दशूकाः, द्रवत्वाच्छिथिलमृदुसन्धिबन्धमांसाः प्रभूत-सृष्टस्वेदमूत्रपुरीषाः, विस्रत्वात् प्रभूतपूतिकक्षास्यशिरःशरीर-गन्धाः, कट्वम्लत्वादल्पशुक्रव्यवा यापत्याः । त एवंगुणयोगात्

पित्तला मध्यबला मध्यायुषो मध्यज्ञानविज्ञानवित्तोपकरण-वन्तश्च भवन्ति॥ ८३ ॥

वातस्तु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदः। तस्य रौक्ष्याद्वातला रूक्षापचिताल्पशरीराः प्रततरूक्षक्षामभिन्नसक्तजर्ज्जर-स्वरा जागरूकाश्च, लघुत्वाल्लघुचपलगतिचेष्टाहारविहाराः, चलत्वादनवस्थित-सन्ध्यक्षिभ्रूहन्वोष्ठ-जिह्वाशिरःस्कन्ध-पाणि-पादाः, बहुत्वाद्बहुप्रलापकण्डराशिराप्रतानाः, शीघ्रत्वात् शीघ्र-समारम्भक्षोभविकाराः शीघ्रत्रासरागविरागाः श्रुतग्राहिणोऽल्प-स्मृतयश्च, शीतत्वात् शीतासहिष्णवः प्रततशीतकोद्वेपकस्तम्भाः, पारुष्यात् परुषकेशश्मश्रुरोमनखदशनवदनपाणिपादाः, वैश-द्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनश्च। त एवं गुणयोगाद् वातलाः प्रायेणाल्पबलाश्चाल्पायुषश्चाल्पापत्याश्चा-ल्पसाधनाश्चाल्पधनाश्च भवन्ति॥ ८४ ॥

संसर्गात् संसृष्टलक्षणाः। सर्व्वगुणसमुदितास्तु सम-धातवः। इत्येवं प्रकृतितः परीक्षेत॥ ८५ ॥

विकृतितश्चेति। विकृतिरुच्यते विकारः। तत्र विकारं हेतुदूष्यदोषप्रकृतिदेशकालबलविशेषैर्लिङ्गतश्च परीक्षेत। न ह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः। यस्य हि व्याधेर्दोषदूष्यप्रकृतिदेशकालसाम्यं भवति महच्च हेतुबल-लिङ्गं स व्याधिर्बलवांस्तद्विपर्य्ययाच्चाल्पबलो मध्यबलस्तु दूष्या-दीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते॥ ८६ ॥

सारतश्चेति। साराण्यष्टौ पुरुषाणां बलमानविशेषज्ञाना-र्थमुपदिश्यन्ते त्वग्रक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानीति। तत्र

स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक् त्वक्साराणाम्। सा सारता सुखसौभाग्यैश्वर्य्योपभोगबुद्धिविद्यारोग्यप्रहर्षणान्यायुष्यत्वञ्चाचष्टे ॥ ८७ ॥

कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादतलनखललाटमेहनं स्निग्धरक्तवर्णं श्रीमद् भ्राजिष्णु रक्तसाराणाम्। सा सारता सुखमुद्धतां मेधां मनस्वित्वं सौकुमार्य्यमनतिबलमक्षमासहिष्णुत्वञ्चाचष्टे ॥ ८८ ॥

शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदरकक्षवक्षःपाणिपादसन्धयस्तु स्थिरगुरुशुभमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्ज्जवमारोग्यं बलमायुश्च दीर्घमाचष्टे ॥ ८९ ॥

वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहो मेदःसाराणाम्। सा सारता वित्तैश्वर्य्यसुखोपभोगप्रदानान्यार्ज्जवं सुकुमारोपचारताञ्चाचष्टे ॥ ९० ॥

पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्व्वस्थूलाः स्थूलास्थिनखदन्तास्त्वास्थिसाराः। ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च ॥ ९१ ॥

मृद्वङ्गा बलवन्तः स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जसारास्ते दीर्घायुषो बलवन्तः श्रुतविज्ञानवित्तापत्यसम्मानभाजश्च भवन्ति ॥ ९२ ॥

सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरिदशनाः प्रसन्नस्निग्धवर्णस्वराभ्राजिष्णवो महास्फिचश्च शुक्रसाराः, ते स्त्रीप्रियाः प्रियोपभोगा-

बलवन्तः सुखैश्वर्य्यारोग्यवित्तसम्मानापत्यभाजश्च भवन्ति ॥९३॥

स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनस्त्यक्तविषादाः सुव्यवस्थितगतिगम्भीरबुद्धिचेष्टाः कल्याणाभिनिवेशिनश्च सत्त्वसाराः. तेषां स्वलक्षणैरेव गुणा व्याख्याताः ॥ ९४ ॥

तत्र सर्व्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परमसुखयुक्ताः क्लेशसहाः सर्व्वारम्भेष्वात्मनि जातप्रत्ययाः कल्याणाभिनिवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनादस्निग्धगम्भीरमहानिस्वनाः सुखैश्वर्य्यवित्तोपभोगसम्मानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिरजीविनश्च ॥ ९५ ॥

अतो विपरीतास्त्वसाराः। मध्यानां मध्यैः सारविशेषैर्गुणविशेषा व्याख्याताः। इति साराण्यष्टौ पुरुषाणां बलप्रमाणविशेषज्ञानार्थमुपदिष्टानि भवन्ति ॥ ९६ ॥

कथं नु शरीरमात्रदर्शनादेव भिषग् मुह्येदयमुपचितत्वाद्बलवानयमल्पबलः कृशत्वात् महाबलवानयं महाशरीरत्वादयमल्पशरीरत्वादल्पबल इति। दृश्यन्ते ह्यल्पशरीराः कृशाश्चैके बलवन्तस्तत्र पिपीलिकाभारवहनवत् सिद्धिः। अतश्च सारतः परीक्षा इत्युक्तम् ॥ ९७ ॥

संहननतश्चेति। संहननं संहतिः संयोजनमित्येकोऽर्थः। तत्र समसुविभक्तास्थिसुबद्धसन्धिसुनिविष्टमांसशोणितं सुसंहतं शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तो विपर्य्ययेणाल्पबलाः प्रवरावरमध्यत्वात् संहननस्य मध्यबला भवन्ति ॥ ९८ ॥

प्रमाणतश्चेति। शरीरप्रमाणं पुनर्यथास्वेनाङ्गुलिप्रमाणेनोपदिश्यते, उत्सेधविस्तारायामैर्यथाक्रमम्। तत्र पादौ चतुर्द्दशाङ्गुलौ, जङ्घे त्वष्टादशाङ्गुले षोड़शाङ्गुलिपरिक्षेपेच, जानुनी चतुरङ्गुले षोड़शाङ्गुलिपरिक्षेपे, त्रिंशदङ्गुलिपरिक्षेपावष्टादशाङ्गुलावूरू, षड़ङ्गुलिदीर्घौ वृषणावष्टाङ्गुलिपरिणाहौ, शेफः षड़ङ्गुलिदीर्घं पञ्चाङ्गुलिपरिणाहं, द्वादशाङ्गुलिपरिणाहो भगः, षोड़शाङ्गुलिविस्तारा कटी, दशाङ्गुलं वस्तिशिरः, द्वादशाङ्गुलमुदरं दशाङ्गुलिविस्तीर्णञ्च दशाङ्गुलिविस्तीर्णे द्वादशाङ्गुलायामे पार्श्वे, द्वादशाङ्गुलं स्तनान्तरं, द्व्यङ्गुलं स्तनपर्य्यन्तं, चतुर्व्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुरः, त्र्यङ्गुलं * हृदयम्, अष्टाङ्गुलौ स्कन्धौ, षड़ङ्गुलावंसौ, षोड़शाङ्गुलौ बाहू, पञ्चदशाङ्गुलौ पाणी, हस्तौ द्वादशाङ्गुलौ, कक्षावष्टाङ्गुलौ, त्रिकं द्वादशाङ्गुलोत्सेधम्, अष्टादशाङ्गुलोत्सेधं पृष्ठं, चतुरङ्गुलोत्सेधा द्वाविंशत्यङ्गुलपरिणाहा शिरोधरा, द्वादशाङ्गुलोत्सेधं चतुर्व्विंशत्यङ्गुलिपरिणाहमाननं, पञ्चाङ्गुलमास्यं, चिवुकौष्ठकर्णाक्षिमध्यनासिकाललाटं चतुरङ्गुलं, षड़ङ्गुलोत्सेधं द्वाविंशदङ्गुलपरिणाहं शिरः। इति पृथक्त्वेनाङ्गावयवानां मानमुक्तं। केवलं पुनः शरीरमङ्गुलिपर्व्वाणि चतुरशीतिस्तद्दायामविस्तारसममुच्यते। तत्रायुर्बलमोजःसुखमैश्वर्य्यं वित्तमिष्टाश्चापरे भावा भवन्त्यायत्ताः प्रमाणवति शरीरे विपर्य्ययस्त्वतो हीनेऽधिके वा॥ ९९॥

सात्म्यतश्चेति। सात्म्यं नाम तद् यत् सातत्येनोप-

* द्व्यङ्गुलमिति पाठान्तरम्।

युज्यमानमुपशेते। तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्व्व-रससात्म्याश्च ते बलवन्तः क्लेशसहाश्चिरजीविनश्च भवन्ति। रूक्षसात्म्याः पुनरेकरससात्म्याश्च ये ते प्रायेणाल्पबलाश्चाल्प-क्लेशसहाश्चाल्पायुषश्चाल्पसाधनाश्च भवन्ति। व्यामिश्रसात्म्यास्तु ये ते मध्यबलाः सात्म्यनिमित्ततो भवन्ति॥ १००॥

सत्त्वतश्चेति। सत्त्वमुच्यते मनस्तच्छरीरस्य तन्त्रक-मात्मसंयोगात्, तत् त्रिविधं बलभेदेन प्रवरं मध्यमवरमिति। अतश्च प्रवरमध्यावरसत्त्वाः पुरुषा भवन्ति। तत्र प्रवरसत्त्वाः सत्त्वसाराः सारेषूपदिष्टाः, स्वल्पशरीरा ह्यपि ते निजागन्तु-निमित्तासु महतीष्वपि पीड़ास्वव्यथा दृश्यन्ते सत्त्वगुणवैशे-ष्यात्। मध्यसत्त्वास्त्वपरानात्मन्युपनिधाय संस्तम्भयन्त्यात्म-नात्मानं परैर्व्वापि संस्तभ्यन्ते। हीनसत्त्वास्तु नात्मना न च परैः सत्त्वबलं शक्यन्ते उपष्टम्भयितुं, महाशरीरा ह्यपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते सन्निहितभयशोकलोभ-मोहमाना रौद्रभैरवद्विष्टबीभत्सविकृतसङ्कथास्वपि च पशु-पुरुषमांसशोणितानि चावेक्ष्य विषादवैवर्ण्यमूर्च्छोन्मादभ्रम-प्रपतनानामन्यतममाप्नुवन्त्यथवा मरणमिति॥ १०१॥

आहारशक्तितश्चेति। आहारशक्तिरभ्यवहरणशक्त्या जरणशक्त्या च परीक्ष्या, बलायुषी ह्याहारायत्ते॥ १०२॥

व्यायामशक्तितश्चेति। व्यायामशक्तिरपि कर्म्मशक्त्या परीक्ष्या, कर्म्मशक्त्या ह्यनुमीयते बलं त्रिविधम्॥ १०३॥

वयस्तश्चेति। कालप्रमाणापेक्षिणी हि शरीरावस्था वयोऽ-भिधीयते। तद्वयो यथावस्थानभेदेन त्रिविधं बालं मध्यं जीर्ण-

मिति । तत्र बालमपरिपक्वधातुमजातव्यञ्जनं सुकुमारमक्लेश-सहमसम्पूर्णबलं श्लेष्मधातुप्रायमाषोड़शवर्षम् विवर्द्धमान-धातुगुणं पुनः प्रायेणानवस्थितसत्त्वमात्रिंशद्वर्षमुपदिष्टम् । मध्यं पुनः समत्वागतबलवीर्य्यपौरुषपराक्रमग्रहणधारण-स्मरणवचनविज्ञानसर्व्वधातुगुणं बलस्थितमवस्थितसत्वमवि-शीर्य्यमाणधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुद्दिष्टम् । अतःपरं परिहीयमानधात्विन्द्रिय-बलवीर्य्य पौरुषपराक्रम-ग्रहण-धारण-स्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वातधातुप्रायं क्रमेण जीर्णमुच्यते आवर्षशतम् । वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले। सन्ति चाधिकोनवर्षशतजीविनो मनुष्याः । तेषां विकृतिवर्ज्ज्यैः प्रकृत्यादिबलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयसस्त्रित्वं विभजेत्। एवं प्रकृत्यादीनां विकृतिवर्ज्ज्यानां भावानां प्रवरमध्यावरविभागेन बलविशेषं विभजेत् । विकृतिबलत्रैवि-ध्येन तु दोषबलं त्रिविधमनुमीयते । ततो भैषज्यस्य तीक्ष्ण-मृदुमध्यविभागेन त्रैविध्यमेव विभज्य यथादोषं भैषज्यमव-चारयेत् । आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियस्थाने जाति-सूत्रीये च लक्षणान्युपदेक्ष्यन्ते ॥ १०४ ॥

कालः पुनः संवत्सरश्चातुरावस्था च । तत्र संवत्सरो द्विधा त्रिधा षोढ़ा द्वादशधा । भूयश्चातः प्रविभज्यते तत्तत् कार्य्य-मभिसमीक्ष्य । तत्र खलु तावत् षोढ़ा प्रविभज्य कार्य्य-मुपदेक्ष्यते । हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय-ऋतवो भवन्ति। तेषामन्तरेष्वितरे साधारणलक्षणास्त्रय ऋतवः प्रावृट्शरद्वसन्ता इति । ' प्रावृड़िति प्रथमः प्रवृष्टेः कालस्तस्या-

नुबन्धौ वर्षा। एवमेते संशोधनमभिकृत्य षड् विभज्यन्ते ऋतवः। तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते निवृत्तिरितरेषु। साधारणलक्षणा हि मन्दशीतोष्णवर्षत्वात् सुखतमाश्च भवन्त्यविकल्पकाश्च शरीरौषधानाम्, इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद् दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम् ॥ १०५ ॥

तत्र हेमन्ते ह्यतिमात्रशीतोपहतत्वात् शरीरमसुखोपपन्नं भवत्यतिशीतवाताध्मातमतिदारुणीभूतमवबद्धदोषञ्च। भेषजं पुनः संशोधनार्थमुष्णस्वभावमतिशीतोपहतत्वान्मन्दवीर्य्यत्वमापद्यते। तस्मात् तयोः संयोगे संशोधनमयोगायोपपद्यते शरीरमपिच वातोपद्रवाय ॥ १०६ ॥

ग्रीष्मे पुनर्भृशोष्णोपहतत्वात् शरीरमसुखोपपन्नं भवत्युष्णवातातपाध्मातमतिशिथिलमत्यर्थप्रविलीनदोषं। भेषजं पुनः संशोधनार्थमुष्णस्वभावमेवातुष्णानुगमनात् तीक्ष्णतरत्वमापद्यते। तस्मात् तयोः संयोगे संशोधनमतियोगायोपपद्यते, शरीरमपि पिपासोपद्रवाय ॥ १०७ ॥

वर्षासु तु मेघजालावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्कजलपटलसंवृतायामत्यर्थोपक्लिन्नशरीरेषु भूतेषु विहतस्वभावेषु च केवलेष्वौषधग्रामेषु तोयतोयदानुगतमारुतसंसर्गोपहतेषु संसर्गाद् गुरुप्रवृत्तानि वमनादीनि भवन्ति गुरुसमुत्थानतमानि च शरीराणि। तस्माद्वमनादीनां निवृत्तिर्विधीयते वर्षान्तेष्वृतुषु न चेदात्ययिकं कर्म्म ॥ १०८ ॥

आत्ययिके पुनःकर्म्मणि काममृतुं विकल्प्य कृत्रिमगुणोप-

ध्यानेन यथर्त्तुगुणविपरीतेन भेषजं संयोगसंस्कारप्रमाण-विकल्पेनोपपाद्य प्रमाणवीर्य्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेनावहितः ॥ १०९ ॥

आतुरावस्थास्वपि तु कार्य्याकार्य्यं प्रति कालाकालसंज्ञा, अस्यामवस्थायामस्य भेषजस्य कालोऽकालः पुनरस्येति । एतदपि भवत्यवस्थाविशेषेण, तस्मादातुरावस्थास्वपि हि कालाकालसंज्ञा । तस्य परीक्षा मुहुर्म्मुहुरातुरस्य सर्व्वावस्थाविशेषावेक्षणं यथावद्भेषजप्रयोगार्थम् । न ह्यतिपतितकालमप्राप्तकालं वा भेषजमुपयुज्यमानं यौगिकं भवति । कालो हि भैषज्यप्रयोगपर्य्याप्तिमभिनिर्व्वर्त्तयति । प्रवृत्तिस्तु प्रतिकर्म्मसमारम्भः । तस्य लक्षणं भिषगौषधातुरपरिचारकाणां क्रियासमायोगः ॥ ११० ॥

उपायः पुनर्भिषगादीनां सौष्ठवमभिसम्पानञ्च सम्यक् । तस्य लक्षणं भिषगादीनां यथोक्तगुणसम्पद्भिर्देशकालप्रमाणसात्म्यक्रियादिभिश्च सिद्धिकारणैः सम्यगुपपादितस्यौषधस्यावचारणमिति ॥ १११ ॥

एवमेते दश परीक्ष्यविशेषाः पृथक् पृथक् परीक्षितव्या भवन्ति । परीक्षायास्तु खलु प्रयोजनं प्रतिपत्तिज्ञानम् । प्रतिपत्तिर्नाम स यस्तु विकारो यथा प्रतिपत्तव्यस्तस्य तथानुष्ठानज्ञानम् । यत्र तु खलु वमनादीनां प्रवृत्तियत्र च निवृत्तिस्तत्रासतः सिद्धिरुत्तरकालमुपदेक्ष्यतेऽसर्व्वम् । प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु खलु गुरुलाघवं संप्रधार्य्य सम्यगध्यवस्येदन्यतरनिष्ठायाम् । सन्ति हि व्याधयः शास्त्रेषूत्सर्गापवादैरुपक्रमं

प्रति निर्द्दिष्टाः । तस्माद् गुरुलाघवं सम्प्रधार्य्य सम्यगध्य-वस्येदित्युक्तम् ॥ ११२ ॥

यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति तान्यनुव्याख्यास्यामः । तद्यथा —फलजीमूतकेक्ष्वाकुधामार्गव-कुटज कृतवेधन-फलानि, फल-जीमूतकेक्ष्वाकु-धामार्गव-पत्र-पुष्पाणि, आरग्वधवृक्षकमदनस्वादुकण्टकपाठापाटलाशार्ङ्गेष्टा-मूर्व्वासप्तपर्णनक्तमालपिचुमर्द्दपटोलसुषवीगुडूची-चित्रकसोम-वल्कशतावरीद्वीपिशिग्रुमूलकषायैश्च, मधूकमधुककोविदार-कर्व्वुदारनीपनिचुलविम्बीशणपुष्पीसदापुष्पीप्रत्यक्पुष्पीकषायैश्च एलाहरेणुप्रियङ्गुपृथ्वीकाकुस्तुम्बुरुतगरनलदह्रीवेरतालीशोशीर-कषायैश्च, इक्षुकाण्डेक्ष्विक्षुवालिकादर्भपोटगलतगरकालङ्कृत-कषायैश्च, सुमनाःसौमनस्यायनी-हरिद्रादारुहरिद्रावृश्चीरपुन-र्नवामहासहाक्षुद्रसहाकषायैश्च, शाल्मलीशाल्मलकभद्रपर्णीला-पर्ण्युपोदिकोद्दालकधन्वनराजादनोपचित्रागोपीश्रृङ्गाटिकाकषा-यैश्च, पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरसर्षपफाणितक्षीर-क्षारलवणोदकैश्च यथालाभं यथेष्टं वाप्युपसंस्कृत्य वर्त्तिक्रिया-चूर्णावलेहस्नेह-कषायमांसरसयवागूयूषकाम्बलिकक्षीरोपधेया-न्मोदकानन्यांश्च भक्ष्यप्रकारान् विविधाननुविधाय यथार्ह वमनार्हाय दद्याद् विधिवद्वमनमिति कल्पसंग्रहो वमन-द्रव्याणां । कल्पस्त्वेषां विस्तरेणोत्तरकालमुपदेक्ष्यते ॥ ११३ ॥

विरेचनद्रव्याणि तु श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्ष-सप्तलाशङ्खिनीदन्तीद्रवन्तीनां क्षीरमूलत्वक्पत्रपुष्पफलानि यथायोगं तैस्तैः क्षीरमूलत्वक्पत्रपुष्पफलैर्विकल्पैराविकल्पैः, अज-

गन्धाश्वगन्धाजशृङ्गीक्षीरिणीनीलिनीक्लीतककषायैश्च, प्रकीर्य्योदकीर्य्यामसूर-विदलाकम्पिल्लकविड़ङ्गगवाक्षीकषायैश्च, पीलु-पियाल-मृद्वीकाकाश्मर्य्य परूषक-बदरदाड़िमामलक-हरीतकी-विभीतकवृश्चीर-पुनर्नवाविदारिगन्धादिकषायैश्च, सीधुसुरा-सौवीरकतुषोदकमैरेयमेदकमदिरामधुमधूलकधान्याम्लकुवल-बदरखर्ज्जूरकर्कन्धुभिश्च, दधिदधिमण्डोदश्विद्भिश्च, गोमहिष्यजावीनाञ्च क्षीरमूत्रैर्यथालाभं यथेष्टं वाप्युपसंस्कृत्य वर्त्तिक्रिया-चूर्णावलेहस्नेहकषायमांसरसयूषकाम्बलिकयवागूक्षीरोपधेयान् मोदकानन्यांश्च भक्ष्यविकारान् विविधांश्च योगाननुविधाय यथार्हं विरेचनार्हाय दद्याद्विरेचनमिति. कल्पसंग्रहो विरेचनद्रव्याणाम्। कल्पस्त्वेषां विस्तरेणोपदेक्ष्यते उत्तरकालम् ॥ ११४ ॥

आस्थापनेषु तु भूयिष्ठकल्पानि द्रव्याणि यानि योगमुपयान्ति तेषु तेष्ववस्थान्तरेष्वातुराणां तानि द्रव्याणि नामतो विस्तरेणोपदिश्यमानान्यपरिसंख्येयानि सुग्रतिबहुत्वात्। इष्टश्चानतिसंक्षेपविस्तरोपदेशस्तन्त्रे, इष्टञ्च 'केवलं' ज्ञानं, तस्माद्रसत एव तान्यनुव्याख्यास्यामः ॥ ११५ ॥

रससमवायविकल्पविस्तरो ह्येषामपरिसङ्ख्येयः समवेतानां रसानामंशांशबलविकल्पातिबहुत्वात्। तस्माद् द्रव्याणाञ्चैकदेशमुदाहरणाय रसेष्वनुविभज्य रसैकैकत्वेन च नामलक्षणार्थं षड़ास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्यास्यन्ते। यतः षड्विधमास्थापनमेकरसमित्याचक्षते भिषजस्तद्दुर्लभतमं संसृष्टरसभूयिष्ठत्वाद् द्रव्याणाम्। तस्मान्मधु-

ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्त्ता नान्य इति कर्म्मात्मकत्वाच्च । हेत्वादिभिरयुक्तः सर्व्वलोकोऽहमिति विदित्वा ज्ञानं पूर्व्वमुत्थाप्यतेऽपवर्गाय । तत्र संयोगापेक्षी लोकशब्दः षड्धातुसमुदायो हि सामान्यतः सर्व्वलोकः । तस्य हेतुरुत्पत्तिर्वृद्धिरुपप्लवो वियोगश्च । तत्र हेतुरुत्पत्तिकारणम्, उत्पत्तिर्जन्म, वृद्धिराप्यायनम्, उपप्लवो दुःखागमः, षड्धातुविभागो वियोगः स जीवापगमः प्राणनिरोधो भङ्गो लोकस्वभावश्च । तस्य मूलं सर्व्वोपप्लवानाञ्च प्रवृत्तिर्निवृत्तिरुपरमश्च । प्रवृत्तिर्दुःखं निवृत्तिः सुखमिति यज्ज्ञानमुत्पद्यते तत् सत्यम् । तस्य हेतुः सर्व्वलोकसामान्यज्ञानमेतत् प्रयोजनं सामान्योपदेशस्येति ॥ ६ ॥

अथाग्निवेश उवाच । किंमूला भगवन् प्रवृत्तिर्निवृत्तौ वा उपाय इति ॥ ७ ॥

भगवानुवाच । मोहेच्छाद्वेषकर्म्ममूला प्रवृत्तिस्तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपातविप्रत्यय-विशेषानुपायाः । तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यैवोत्तिष्ठन्ते यैरभिभूतो न सत्तामतिवर्त्तते । तत्रैवं जातिरूपवित्तवुद्धिशीलविद्याभिजनवयोवीर्य्यप्रभावसम्पन्नोऽहमित्यहङ्कारः । यन्मनोवाक्कायकर्म्म नापवर्गाय स सङ्गः । कर्म्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति नवेति संशयः । सर्व्वास्ववस्थास्वनन्योऽहमहं स्रष्टा स्वभावसिद्धोऽहमहं शरीरेन्द्रियवुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसंप्लवः । मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्य चाहमित्यभ्यवपातः । कार्य्याकार्य्यहिताहित-

शुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः। ज्ञाज्ञयोः प्रकृति-विकारयोः प्रवृत्तिनिवृत्त्योश्चासामान्यदर्शनं विशेषः। प्रोक्षणा-नशनाग्निहोत्रत्रिसवणाभ्युक्षणावाहनयजनयाजनयाचनसलिल-हुताशनप्रवेशनादयः समारम्भाः प्रोच्यन्ते ह्यनुपायाः। एवमयं धीधृतिस्मृतिरहङ्काराभिनिविष्टः संसक्तसंशयोऽभिप्लुतबुद्धिरभ्य-पतितोऽन्यथादृष्टिर्विशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्व-शरीरदोषमूलानां मूलं सर्व्वदुःखानां भवति। एवमहङ्कारा-दिभिर्दोषैर्भ्राम्यमाणो नातिवर्त्तते प्रवृत्तिं सा मूलमघस्य। निवृत्तिरपवर्गस्तत्परं प्रशान्तं तदक्षरं तद्ब्रह्म स मोक्षः॥८॥

तत्र मुमुक्षूणामुदयनानि च सर्व्वाण्यनुव्याख्यास्यामः। तत्र मुमुक्षोरादित एवाचार्य्याभिगमनं, तस्योपदेशानुष्ठानम्, अग्नेरेवोपचर्य्या, धर्म्मशास्त्रानुगमनं, तदर्थावबोधस्तेनावष्टम्भः, तत्र यथोक्ताः क्रियाः, सतामुपासनम्, असतां परिवर्ज्जनं, न सङ्गतिर्दुर्ज्जनेन, सत्यं सर्व्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनं, सर्व्वप्राणिषु चात्मनीवावेक्षा, सर्व्वासामस्मरणमस-ङ्कल्पनमप्रार्थनाऽनभिभाषणञ्च स्त्रीणां, सर्व्वपरिग्रहत्यागः, कौपीनं प्रच्छादनार्थं धातुरागनिवसनं, कन्थासीवनहेतोः सूचीपिप्पलकं, शौचाधानहेतोर्जलकुण्डिका, दण्डधारणं, भैक्ष्य-चर्य्यार्थं पात्रं, प्राणधारणार्थमेककालमग्राम्यो यथोपपन्न एवा-भ्यवहारः। श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं, ध्यानहेतोः कायनिबन्धनं, वनेष्वनिकेतवासः, तन्द्रानिद्रालस्यादि-कर्म्मवर्ज्जनं, सर्व्वेष्विन्द्रियार्थेष्वनुरागोपतापनिग्रहः, सुप्त-स्थितगत-प्रेक्षिताहारविहार-प्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृति-

पूर्व्विका प्रवृत्तिः, सत्कारस्तुतिगर्हावमानक्षमित्वं, क्षुत्पिपासायासश्रमशीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वं, शोकदैन्यद्वेषमदमानलोभरागेर्षाभयक्रोधादिभिरसम्वलनं, अहङ्कारादिषूपसर्गसंज्ञा, लोकपुरुषयोः स्वर्गादिसामान्यावेक्षणं, कार्य्यकालात्ययभयं, योगारम्भे सततमनिर्व्वेदः सत्त्वोत्साहः, अपवर्गाय धीधृतिस्मृतिबलाधानं, नियमनमिन्द्रियाणां चेतसि चेतस आत्मन्यात्मनश्च, धातुभेदेन शरीरावयवसंख्यानमभीक्ष्णं, सर्व्वं कारणवद्दुःखमस्वमनित्यमित्यभ्युपगमः । सर्व्वप्रवृत्तिषु दुःखसंज्ञा, सर्व्वसंन्यासे सुखमित्यभिनिवेशः, एष मार्गोऽपवर्गाय अतोऽन्यथा बध्यत इत्युदयनानि व्याख्यातानि ॥ ६ ॥

भवन्ति चात्र ।

एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति ।
मृज्यमान इवादर्शस्तैलचेलकषादिभिः ॥
ग्रहाम्बुदरजोधूमनीहारैरसमावृतम् ।
यथार्कमण्डलं भाति भाति सत्त्वं तथामलम् ॥
ज्वलत्यात्मनि संरुद्धं तत् सत्त्वं संवृतायने ।
शुद्धः स्थिरः प्रसन्नार्च्चिर्दीपो दीपाशये यथा ॥ १० ॥
शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते ।
यया भिनत्त्यतिबलं महामोहमयं तमः ॥
सर्व्वभावस्वभावज्ञो यया भवति निस्पृहः ।
योगं यया साधयते सांख्यः सम्पद्यते यया ॥
यया नोपैत्यहङ्कारं नोपास्ते कारणं यया ।
यया नालम्बते किञ्चित् सर्व्वं संन्यस्यते यया ।

याति ब्रह्म यया नित्यमजरं शान्तमक्षरम् ।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानञ्च सामता ॥ ११ ॥
लोके विततमात्मानं लोकञ्चात्मनि पश्यतः ।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥
पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा ।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥ १२ ॥
नात्मनः कारणाभावाल्लिङ्गमप्युपलभ्यते ।
स सर्व्वकारणत्यागान्मुक्त इत्यभिधीयते ॥
विपापं विरजः शान्तं परमक्षरमव्ययम् ।
अमृतं ब्रह्म निर्व्वाणं पर्य्यायैः शान्तिरुच्यते ॥ १३ ॥
एतत् तत् सौम्य विज्ञानं यज्ज्ञात्वा मुक्तसंशयाः ।
मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥ १४ ॥

तत्र श्लोकौ ।

सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च ।
सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ॥
शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी ।
विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥ १५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
पुरुषविचयो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः।

---

### ( शरीरविचयः। )

**अथातः शरीरविचयं शारीरं व्याख्यास्याम इति ह**

**स्माह भगवानात्रेयः॥ १ ॥**

शरीरविचयः शरीरोपकारार्थमिष्यते भिषग्विद्यायाम्। ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः॥ २ ॥

तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चमहाभूतविकार-समुदायात्मकम्। समयोगवाहिनो यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदायं क्लेशं विनाशं वा प्राप्नोति॥३॥

वैषम्यगमनं पुनर्धातूनां वृद्धिह्रासगमनमकात्स्न्येन। प्रकृत्या च यौगपद्येन विरोधिनां धातूनां वृद्धिह्रासौ भवतः। यद्धि यस्य धातोर्वृद्धिकरं तत् ततो विपरीतगुणस्य धातोः प्रत्यवायकरन्तु सम्पद्यते। तदेव तस्मात् भेषजं सम्यगवचार्य्य-माणं युगपन्न्यूनातिरिक्तानां धातूनामधिकमपकर्षति न्यून-माप्याययति। एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थ-वृत्तानुष्ठानञ्च यावद्धातूनां साम्यं स्यात्॥ ४ ॥

स्वस्थस्यापि समधातूनां साम्यानुग्रहार्थमेव कुशला रस-गुणानाहारविकारांश्च पर्य्यायेणेच्छन्त्युपयोक्तुम्। सात्म्यसमा-ज्ञातानेकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरणलक्षणसमा-ज्ञातचेष्टया समभिच्छन्ति कर्त्तुम्। देशकालात्मगुणविपरी-

तासां हि कर्म्मणामाहारविकाराणाञ्च क्रमेणोपयोगः सम्यक्। सर्व्वाभियोगोऽनुदीर्णानां सन्धारणमसन्धारणमुदीर्णानाञ्च गतिमतां साहसानाञ्च वर्ज्जनम्। स्वस्थवृत्तमेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते॥ ५॥

धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाप्याहारविकारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति। ह्रासन्तु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाप्याहारैरभ्यस्यमानैः। तत्रेमे शरीरधातुगुणाः संख्यासामर्थ्यकरास्तद्यथा गुरुलघुशीतोष्णस्निग्धरुक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविषदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवाः। तेषु ये गुरवो धातवो गुरुभिराहारविकारगुणैरभ्यस्यमानैराप्याय्यन्ते लघवश्च ह्रसन्ति। लघवस्तु लघुभिरेवाप्याय्यन्ते गुरवश्च ह्रसन्त्येवमेव सर्व्वधातुगुणानां सामान्याद् वृद्धिर्विपर्य्ययाद्ह्रासः। तस्मान्मांसमाप्याय्यते मांसेन भूयोऽन्येभ्यः शरीरधातुभ्यः। तथा लोहितं लोहितेन, मेदो मेदसा, वसा वसया, अस्थि तरुणास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण, गर्भस्त्वामगर्भेण॥ ६॥

यत्र त्वेवं लक्षणेन सामान्येन सामान्यवतामाहारविकाराणामसान्निध्यं स्यात्। सन्निहितानां वाप्ययुक्तत्वान्नोपयोगो घृणित्वादन्यस्माद्वा कारणात् स च धातुरभिवर्द्धयितव्यः स्यात्। तस्य ये समानगुणाः स्युराहारविकारा असेव्याश्च तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनाञ्चाहारविकाराणामुपयोगः स्यात्। तद्यथा—शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धसमाख्यातानाञ्चापरेषामेव द्रव्याणाम्। मूत्रक्षये पुनरिक्षुरस-

वारुणीमण्डद्रवमधुराम्ललवणोपक्लेदिनाम्, पुरीषक्षये कुल्माष-माषकुष्कुण्डाजमध्ययवशाकधान्याम्लानाम्, वातक्षये कटुतिक्त-कषायरूक्षलघुशीतानाञ्च, पित्तक्षयेऽम्ललवणकटुकक्षारोष्ण-तीक्ष्णाणाम्, श्लेष्मक्षये स्निग्धगुरुमधुरसान्द्रपिच्छिलानां द्रव्याणां । कर्म्मापि च यद्यद्यस्य धातोर्वृद्धिकरं तत् तदनु-सेव्यम् । एवमन्येषामपि शरीरधातूणां सामान्यविपर्य्ययाभ्यां वृद्धिह्रासौ यथाकालं कार्य्याविति ॥ ७ ॥

सर्व्वधातूनामेकैकशोऽतिदेशतश्च वृद्धिह्रासकराणि व्याख्या-तानि भवन्ति । कार्त्स्न्येन शरीरवृद्धिकरास्त्विमे भावा भवन्ति, तद्यथा,– कालयोगः स्वभावसिद्धिराहारसौष्ठवम-विघातश्चेति । बलवृद्धिकरास्त्विमे भावा भवन्ति, तद्यथा— बलवत्पुरुषे देशे जन्म बलवत्पुरुषे च काले । सुखश्च काल-योगो वीजक्षेत्रगुणसम्पच्चाहारसम्पच्च शरीरसम्पच्च सात्म्य-सम्पच्च सत्त्वसम्पच्च स्वभावसंसिद्धिश्च यौवनञ्च कर्म्म च संहर्ष-श्चेति ॥ ८ ॥

आहारपरिणामकरास्त्विमे भावा भवन्ति तद्यथा,--उष्मा, वायुः, क्लेदः, स्नेहः, कालः, संयोगश्चेति । तत्र तु खल्वेषा-मुष्मादीनामाहारपरिणामकराणां भावानामिमे कर्म्मविशेषाः भवन्ति, तद्यथा,—उष्मा पचति वायुरपकर्षति क्लेदः शैथिल्य-मापादयति स्नेहो मार्द्दवं जनयति, कालः पर्य्याप्तिमभिनिर्व्वर्त्त-यति, संयोगस्त्वेषां परिणामधातुसाम्यकरः सम्पद्यते । परि-णामतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते यथास्वमवि-रुद्धा विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरम् ॥ ९ ॥

शरीरधातवस्त्वेवं द्विविधाः संग्रहेण मलभूताः प्रसादभूताश्च। तत्र मलभूतास्ते शरीरस्य ये बाधकराः स्युस्तद्यथा शरीरच्छिद्रेषूपदेहाः पृथग् जन्मानो वहिर्म्मुखाः परिपक्वाश्च धातवः। प्रकुपिताश्च वातपित्तश्लेष्माणो ये चान्येऽपि केचित् शरीरे तिष्ठन्ति भावाः शरीरस्योपघातायोपपद्यन्ते सर्व्वांस्तान् मलान् संप्रचक्ष्महे। इतरांस्तु प्रसादाख्यान् गुर्व्वादींश्च द्रवान्तान् गुणभेदेन रसादींश्च शुक्रान्तान् द्रव्यभेदेन॥ १०॥

तेषां सर्व्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषत्वात्. वातादीनां पुनर्धात्वन्तरे कालान्तरे प्रदुष्टानां विविधाशितपीतीयेऽध्याये विज्ञानानुरक्तानि। एतावतेऽत्र दुष्टदोषगतिर्यावत् संस्पर्शनाच्छरीरधातूनाम्। प्रकृतिभूतानान्तु खलु वातादीनां फलमारोग्यं तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिः॥ ११॥

तत्र श्लोकः।

सर्व्वदा सर्व्वथा सर्व्वं शरीरं वेद यो भिषक्।
आयुर्व्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम्॥ १२॥

तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच। श्रुतमेतद् यदुक्तं भगवता शरीराधिकारे वचः। किन्नु खलु गर्भस्याङ्गं पूर्व्वमभिनिर्व्वर्त्तते कुक्षौ, कुतो मुखं, कथं वा चान्तर्गतस्तिष्ठति, किमाहारश्च वर्त्तयति, कथंभूतश्च निष्क्रामति, कैश्चायमाहारोपचारैर्जातस्त्वव्याधिरभिवर्द्धते, सद्यो हन्यते कैः, कथञ्चास्य देवादिप्रकोपनिमित्ता विकारा उपलभ्यन्ते आहोस्विन्न, किञ्चास्य कालाकालमृत्य्वोर्भावाभावयोर्भगवानध्यवस्यति, किञ्चास्य परमायुः, कानि चास्य परमायुषो निमित्तानीति॥ १३॥

तमेमुक्तवन्तमग्निवेशं भगवान् पुनर्व्वसुरात्रेय उवाच । पूर्व्वमुक्तमेतद्गर्भावक्रान्तौ यथायमभिनिर्व्वर्त्तते कुक्षौ । यच्चास्य यदा सन्तिष्ठतेऽङ्गजातम् । विप्रतिपत्तिवादास्त्वत्र बहुविधाः सूत्रकारिणामृषीणां सन्ति सर्व्वेषां तानपि निबोधोच्यमानान् । शिरः पूर्व्वमभिनिर्वर्त्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति सर्व्वेन्द्रियाणां तदधिष्ठानमिति, हृदयमिति काङ्कायनो वाह्लीकभिषक् चेतनाधिष्ठानत्वात्, नाभिरिति भद्रकाप्य-आहारागम इति कृत्वा, पक्वगुदमिति शौनको मारुताधिष्ठानत्वात्, हस्तपादमिति वड़िशस्तत्करणत्वात्, पुरुषस्य इन्द्रियाणीति जनको वैदेहस्तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा, बुद्धिपरोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः, सर्व्वाङ्गनिर्व्वृत्तिर्युगपदिति धन्वन्तरिः । तदुपपन्नं सर्व्वाङ्गानां तुल्यकालाभिनिर्व्वृत्तत्वाद् हृदयप्रभृतीनाम् । सर्व्वाङ्गानां ह्यस्य हृदयं मूलमधिष्ठानञ्च केषाञ्चिद्भावानां, न च तस्मात् पूर्व्वाभिनिर्व्वृत्तिरेषान्तस्माद्धृदयपूर्व्वाणां सर्व्वाङ्गानां तुल्यकालाभिनिर्व्वृत्तिः सर्व्वभावा ह्यन्योन्यप्रतिबद्धास्तस्माद्यथाभूतदर्शनं साधु ॥१४॥

गर्भस्तु खलु मातुः पृष्ठाभिमुख ऊर्द्धशिराः सङ्कुच्याङ्गान्यास्ते जरायुवृतः कुक्षौ । व्यपगतपिपासाबुभुक्षस्तु गर्भः परतन्त्रवृत्तिर्मातरमाश्रित्य वर्त्तयत्युपस्नेहोपस्वेदाभ्याम् । गर्भस्तु सदसद्भूताङ्गावयवस्तदन्तरं ह्यस्य लोमकूपायनैरुपस्नेहः कश्चिन्नाभिनाड्ययनैः । नाभ्यां ह्यस्य नाड़ीप्रसक्ता सा नाभ्याञ्चामरामरा चास्य मातुः प्रसक्ता हृदये, मातृहृदयं ह्यस्य तामपरामभिसंप्लवते शिराभिः स्यन्दमानाभिः । स तस्य रसो

बलवर्णकरः सम्पद्यते, स च सर्व्वरसवानाहारः स्त्रियाः ह्यापन्नगर्भायाः स्त्रिधा रसः प्रतिपद्यते स्वशरीरपुष्टये स्तनाय गर्भवृद्धये च, स तेनाहारेणोपष्टब्धो वर्त्तयत्यन्तर्गतः। स चोपस्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवर्त्त्याऽवाक्-शिरा निष्क्रामत्यपत्यपथेन। एषा प्रकृतिर्व्विकृतिरतोऽन्यथा परन्त्वत एव स्वतन्त्रवृत्तिर्भवति ॥ १५ ॥

तस्याहारोपचारौ जातिसूत्रीयोपदिष्टावविकारकरौ चाभि-वृद्धिकरौ भवतः। ताभ्यामेव सेविताभ्यां विषमाभ्यां जातः सद्य-उपहन्यते तरुरिवाचिरव्यपरोपितो वातातपाभ्यामप्रतिष्ठित-मूलः। आप्तोपदेशादद्भुतरूपदर्शनात् समुत्थानलिङ्गचिकित्सित-विशेषाच्च दोषप्रकोपानुरूपाश्च देवादिप्रकोपनिमित्ताश्च विकाराः समुपलभ्यन्ते ॥ १६ ॥

कालाकालमृत्योस्तु भावाभावयोरिदमध्यवसितं नः। यः कश्चिन्म्रियते सर्व्वः काल एव स म्रियते न हि कालच्छिद्र-मस्तीत्येके भाषन्ते। तच्चासम्यक्, न ह्यच्छिद्रता वा काल-स्योपपद्यते कालस्वलक्षणभावात् ॥ १७ ॥

तथाहुरपरे यो यदा म्रियते स तस्य नियतो मृत्युकालः स सर्व्वभूतानां सत्यः समक्रियत्वादिति। तदपि चान्यथार्थ-ग्रहणं न हि कश्चिन्न म्रियत इति समक्रियः, कालः पुनरायुषः प्रमाणमधिकृत्योच्यते। यस्य चेष्टं यो यदा म्रियते तस्य स नियतो मृत्युकाल इति। तस्य सर्व्वे भावा यथास्वं नियतकाला भविष्यन्ति। तच्च नोपपद्यते प्रत्यक्षं ह्यकालाहारवचनकर्म्मणां फलमनिष्टं विपर्य्यये चेष्टम्। प्रत्यक्षतश्चोपलभ्यते खलु काला-

कालयुक्तिस्तासु तास्ववस्थासु तं तमर्थमभिसमीक्ष्य । तद्यथा कालोऽयमस्य तु व्याधेराहारस्यौषधस्य प्रतिकर्म्मणो विसर्गस्याकालो वा लोकेऽप्येतद्भवति । काले देवो वर्षत्यकाले वर्षति, काले शीतमकाले शीतं, काले तपत्यकाले तपति, काले पुष्पफलमकाले च पुष्पफलमिति । तस्मादुभयमस्ति काले मृत्युरकाले च नैकान्तिकमत्र । यदि ह्यकाले मृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्व्वं स्यात् ॥ १८ ॥

एवं गते हिताहितज्ञानमकारणं स्यात् प्रत्यक्षानुमानोपदेशाश्चाप्रमाणीस्युर्ये प्रमाणभूताः सर्व्वतन्त्रेषु यैरायुष्याण्यनायुष्याणि चोपलभ्यन्ते । वाग्वस्तुमात्रमेतद्वादमृषयो मन्यन्ते नाकाले मृत्युरस्तीति । वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले तस्य निमित्तं प्रकृतिगुणात्मसम्पत्सात्म्योपसेवनञ्चेति ॥ १९ ॥

तत्र श्लोकाः ।

शरीरं यद् यथा तच्च वर्त्तते क्लिष्टमामयैः ।
यथा क्लेशं विनाशञ्च याति ये चास्य धातवः ॥
वृद्धिह्रासौ यथा चैषां क्षीणानामौषधञ्च यत् ।
देहवृद्धिकरा भावा बलवृद्धिकराश्च ये ॥
परिणामकरा भावा यांश्च तेषां पृथक् क्रियाः ।
मलाख्याः सम्प्रसादाख्या धातवः प्रश्न एव च ॥
नवको निर्णयश्चास्य विधिवत् सम्प्रकाशितः ।
तथ्यः शरीरविचये शारीरे परमर्षिणा ॥ २० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने शरीरविचयो नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

(शरीरसंख्या।)

अथातः शरीरसंख्या नाम शारीरं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः॥ १॥

शरीरसङ्ख्यामवयवशः कृत्स्नं शरीरं प्रविभज्य सर्व्वशरीर-सङ्ख्यानप्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ॥ २॥

तमुवाच भगवानात्रेयः। शृणु मत्तोऽग्निवेश! सर्व्वशरीरमभिसंचक्षाणाद् यथाप्रश्नमेकमनाः। यथावच्छरीरे षट् त्वचस्तद्यथा—उदकधरा त्वग् बाह्या द्वितीया त्वगसृग्धरा तृतीया सिध्मकिलाससम्भवाधिष्ठाना चतुर्थी कुष्ठसम्भवा-धिष्ठाना पञ्चमी अलजीविद्रधीसम्भवाधिष्ठाना षष्ठी तु सा यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति यां चाप्यधि-ष्ठायारूंषि जायन्ते पर्व्वसन्धिषु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि चेति, षट् त्वच एताः षडङ्गं शरीरमवतत्य तिष्ठन्ति॥ ३॥

तत्रायं शरीरस्याङ्गविभागः, तद्यथा—द्वौ बाहू द्वे सक्थिनी शिरोग्रीवमन्तराधिरिति षडङ्गमङ्गम्॥ ४॥

त्रीणि षष्ठ्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः। तद्यथा,—द्वात्रिंशद्दन्तोलूखलानि, द्वात्रिंशद्दन्ताः, विंशतिर्नखाः, विंशतिः पाणिपादशलाकाः, चत्वार्य्यधिष्ठानान्यासां, चत्वारि पाणिपादपृष्ठानि, षष्टिरङ्गुल्यस्थीनि, द्वे पार्ष्ण्योर्द्वे कूर्च्चाधश्चत्वारः पाण्योर्मणिकाश्चत्वारः पादयोर्गुल्फाः, चत्वार्य्यरत्न्योरस्थीनि

चत्वारि जङ्घयोर्द्वे जानुनोर्द्वे कूर्परयोर्द्वे ऊर्व्वोर्द्वे बाह्वोः सांसयोः द्वावक्षकौ द्वे तालुनि द्वे श्रोणिफलके, एकं भगास्थि पुंसां मेढ्रास्थि एकं त्रिकसंश्रितमेकं गुदास्थि पृष्ठगतानि पञ्चत्रिंशत् पञ्चदशास्थीनि ग्रीवायां द्वे जत्रुणोरेकं हन्वस्थि द्वे हनुमूलबन्धने द्वे ललाटे द्वे अक्ष्णोर्द्वे गण्डयोर्नासिकायां त्रीणि घोणाख्यानि द्वयोः पार्श्वयोश्चतुर्व्विंशतिश्चतुर्व्विंशतिः पञ्जरास्थीनि च पार्श्वकानि । तावन्ति चैषां स्थालिकान्यर्ब्बुदाकाराणि तानि द्विसप्ततिर्द्वौ शङ्खकौ चत्वारि शिरःकपालानि वक्षसि सप्तदशेति त्रीणि षष्ट्यधिकानि शतान्यस्थ्नामिति ॥ ५ ॥

पञ्चेन्द्रियाधिष्ठानानि, तद्यथा त्वग्जिह्वा नासिकाक्षिणी कर्णौ च । पञ्च बुद्धीन्द्रियाणि, तद्यथा स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति । पञ्च कर्म्मेन्द्रियाणि तद्यथा हस्तौ पादौ पायुरुपस्थो जिह्वा चेति ॥ ६ ॥

हृदयं चेतनाधिष्ठानमेकम् । दश प्राणायतनानि, तद्यथा—मूर्द्धा कण्ठो हृदयं नाभिर्गुदो वस्तिरोजः शुक्रं शोणितं मांसमिति । तेषु षट् पूर्व्वाणि मर्म्मसंख्यातानि । पञ्चदश कोष्ठाङ्गानि, तद्यथा नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधारश्चामाशयश्च पक्वाशयश्चोत्तरगुदञ्चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपावहनञ्चेति ॥ ७ ॥

षट्पञ्चाशत् प्रत्यङ्गानि षट्स्वङ्गेषूपनिबद्धानि यान्यपरिसंख्यातानि पूर्व्वमङ्गेषु परिसंख्यायमानेषु । तान्यन्यैः पर्य्यायैरिह प्रकाश्य व्याख्यातानि भवन्ति । तद्यथा—द्वे जङ्घापिण्डिके द्वे ऊरुपिण्डिके द्वौ स्फिचौ द्वौ वृषणावेकं शेफः द्वे उखे द्वौ

वङ्क्षणौ द्वौ कुकुन्दरावेकं वस्तिशीर्षमेकमुदरं द्वौ स्तनौ द्वौ भुजौ द्वे बाहुपिण्डिके चिवुकमेकं द्वावोष्ठौ द्वे सृक्कण्यौ द्वौ दन्तवेष्टकावेकं तालु एका गलशुण्डिका द्वे उपजिह्विके एका गोजिह्विका द्वौ गण्डौ द्वे कर्णशष्कुलिके द्वौ कर्णपुत्रकौ द्वे अक्षिकूटे चत्वार्य्यक्षिवर्त्मानि द्वे अक्षिकनीनिके द्वे भ्रुवावेकमवटुः चत्वारि पाणिपादहृदयानि नव महान्ति छिद्राणि सप्त शिरसि द्वे चाधः ॥ ८ ॥

एतावद्दृश्यं शक्यमपि निर्द्देष्टुमनिर्द्देश्यमतःपरं तर्क्यमेव। तद्यथा,—नव स्नायुशतानि सप्त शिराशतानि द्वे धमनीशते पञ्च पेशीशतानि सप्तोत्तरं मर्म्मशतं द्वे पुनः सन्धिशते विंशत्युत्तरसहस्राणि नव च शतानि षट्पञ्चाशत्सहस्राणि शिराधमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणम्, तावन्ति चैव केशश्मश्रुलोमानीत्येतद् यथावद् यत् संख्यातं त्वक्प्रभृति दृश्यमतःपरं तर्क्यम्। एके तदुभयमपि न विकल्पयन्ते प्रकृतिभावाच्छरीरस्य ॥ ९ ॥

यत् त्वञ्जलिसङ्ख्येयं तदुपदेक्ष्यामः, तत्परं प्रमाणमभिज्ञेयं तच्च वृद्धिह्रासयोगि तर्क्यमेव। तद्यथा दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन यत् तु प्रच्यवमानं पुरीषमनुबध्नात्यतियोगेन तथा मूत्रं रुधिरमन्यांश्च शरीरधातून्, यत् तु सर्व्वशरीरचरं बाह्यत्वग्बिभर्त्ति यत् त्वगन्तरे व्रणगतं लसीकाशब्दं लभते यच्चोष्मणानुबद्धं लोमकूपेभ्यो निष्पतत् स्वेदशब्दमवाप्नोति तदुदकं दशाञ्जलिप्रमाणम्, नवाञ्जलयः पूर्व्वस्याहारपरिणामधातोर्यद्रसमित्याचक्षते। अष्टौ शोणितस्य

सप्त पुरीषस्य षट् श्लेष्मणः पञ्च पित्तस्य चत्वारो मूत्रस्य त्रयो वसाया द्वौ मेदस एको मज्ज्ञः । मस्तिष्कस्य अर्द्धाञ्जलिः शुक्रस्य तावदेव प्रमाणं तावदेव श्लेष्मणश्चौजस इत्येतच्छरीर-तत्त्वमुक्तम् ॥ १० ॥

तत्र यद्विशेषतः स्थूलं स्थिरं मूर्त्तिमद् गुरुखरकठिनमङ्गं नखास्थिदन्तमांसचर्म्मवर्च्चःकेशश्मश्रुलोमकण्डरादि तत् पार्थिवं गन्धो घ्राणञ्च । यद् द्रवसरमन्दस्निग्धमृदुपिच्छिलं रसरुधिर-वसाकफपित्तमूत्रस्वेदादि तदाप्यं रसो रसनञ्च । यत् पित्तमुष्मा च यो या च भाः शरीरे तत् सर्व्वमाग्नेयं रूपं दर्शनञ्च । यदु-च्छ्वास-प्रश्वासोन्मेषनिमेषाकुञ्चनप्रसारण-गमनप्रेरणधारणादि तद्वायवीयं स्पर्शः स्पर्शनञ्च । यद्विविक्तमुच्यते महान्ति चाणूनि च स्रोतांसि तदान्तरीक्षं शब्दः श्रोत्रञ्च । यत् प्रयोक्तृ तत्तत् प्रधानं बुद्धिर्मनश्चेति शरीरावयवसंख्या यथास्थूलभेदेनाव-यवानां निर्द्दिष्टा ॥ ११ ॥

शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति अतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्च । तेषां संयोगविभागे परमाणूनां कारणं वायुः कर्म्म स्वभावश्च, तदेतच्छरीरसंख्यातम-नेकावयवं दृष्टमेकत्वेन सङ्गसंख्यातम् पृथक्त्वेनापवर्गः । तत्र प्रधानमसक्तं सर्व्वसत्तानिवृत्तौ निवर्त्तत इति ॥ १२ ॥

तत्र श्लोकौ ।

शरीरसंख्यां यो वेद सर्व्वावयवशो भिषक् ।
तदज्ञाननिमित्तेन स मोहेन न युज्यते ॥

अमूढो मोहमूलैश्च न दोषैरभिभूयते।
निर्दोषो निःस्पृहः शान्तः प्रशाम्यत्यपुनर्भवः॥ १३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
शरीरसंख्या नाम सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

(जातिसूत्रीयम्।)

अथातो जातिसूत्रीयं शारीरं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः॥ १॥

स्त्रीपुरुषयोरव्यापन्नशुक्रशोणितयोनिगर्भाशययोः श्रेयसीं प्रजामिच्छतोस्तन्निर्वृत्तिकरं कर्मोपदेक्ष्यामः। अथापैतौ स्त्रीपुरुषौ स्नेहस्वेदाभ्यामुपपाद्य वमनविरेचनाभ्यां संशोध्य क्रमात् प्रकृतिमापादयेत्, संशुद्धौ चास्थापनानुवासनाभ्यामुपाचरेदुपाचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं स्त्रियन्तु तैलमाषाभ्याम्। ततः पुष्पात् प्रभृति त्रिरात्रमासीत ब्रह्मचारिण्यधःशायिनी पाणिभ्यामन्नमजर्जरपात्रे भुञ्जाना न च काञ्चिदेव मृजामापद्येत॥ २॥

ततश्चतुर्थेऽहन्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लानि वासांस्याच्छादयेत् पुरुषञ्च। ततः शुक्लवाससौ च स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेतामिति ब्रूयात्। स्नानात् प्रभृति युग्मेष्वहःसु संवसेतां पुत्रकामौ तावयुग्मेषु दुहितृकामौ॥ ३॥

न च न्युब्जां पार्श्वगतां वा संसेवेत । न्युब्जाया वातो बलवान् स योनिं पीड़यति । पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा संच्युतः पिदधाति गर्भाशयम् । वामे पार्श्वे पित्तं तदस्याः पीड़ितं विदहति रक्तं शुक्रञ्च, तस्मादुत्ताना सती बीजं गृह्णीयात् । तथा हि यथास्थानमवतिष्ठन्ते दोषाः पर्य्याप्ते चैनां शीतोदकेन परिषिञ्चेत् ॥ ४ ॥

तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धा चान्यञ्च पुमांसमिच्छन्ती मैथुने चातिकामा वा नारी गर्भं न धत्ते विगुणां वा प्रजां जनयति । अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्ज्जयेत् । पुरुषेऽप्येत एव दोषाः । अतः सर्व्वदोषवर्ज्जितौ स्त्रीपुरुषौ संसृज्येयाताम् ॥ ५ ॥

सञ्जातहर्षौ मैथुने चानुकूलाविष्टगन्धं सास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनमशित्वा दक्षिणपादेन पुमान् वामपादेन स्त्री चारोहेत् । तत्र मन्त्रं प्रयुञ्जीत, अहिरसि आयुरसि सर्व्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्च्चसा भवेदिति—

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्य्यस्तथाश्विनौ ।
भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे ।

इत्युक्त्वा संवसेयाताम् । सा चेदेवमाशासीत बृहन्तमवदातं हर्य्यक्षमोजस्विनं शुचिं सत्त्वसम्पन्नं पुत्रमिच्छेयमिति ॥ ६ ॥

शुद्धस्नानात् प्रभृत्यस्मै मन्थमवदातं यवानां मधुसर्पिर्भ्यां संसृज्य श्वेताया गोः सरूपवत्सायाः पयसालोड्य राजते

कांस्ये वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय, प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत । तथा सायमवदातशरणशयनासनयानवसन-भूषणवेशाच स्यात्। सायं प्रातश्च शश्वत् श्वेतं महान्त-मृषभमाजानेयं वा हरिचन्दनाङ्गदं पश्येत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत। सौम्याकृतिवचनोपचार-चेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत्। सहचर्य्यश्चैनां प्रियहिताभ्यां सततमुपचरेयुस्तथा भर्त्ता न च मिश्रीभावमापद्येयाताम्। इत्यनेन विधिना सप्तरात्रं स्थित्वाष्ट-मेऽहन्याप्लुत्याद्भिः सशिरस्कं सह भर्त्रा चाहतानि वस्त्राणा-च्छादयेदवदातान्यवदाताश्च स्रजो भूषणानि बिभृयात् ॥ ७ ॥

तत ऋत्विक् प्रागुत्तरस्यां दिश्यागारस्य प्राक्प्रवणमुदक-प्रवणं वा प्रदेशमभिसमीक्ष्य गोमयोदकाभ्यां स्थण्डिलमुप-संलिप्य प्रोक्ष्य चोदकेन वेदीमस्मिन् स्थापयेत्। तां पश्चिमेना-माहतवस्त्रसञ्चये श्वेतार्षभे वाप्यजिन उपविशेद् ब्राह्मणप्रयुक्तो राजन्यप्रयुक्तस्तु वैयाघ्रे चर्म्मण्यानडुहे वा वैश्यप्रयुक्तस्तु रौरवे वास्ते वा। तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौडुम्बरीभिर्माधूकी-भिर्वा समिद्भिरग्निमुपसमाधाय कुशैः परिस्तीर्य्य परिधिभिश्च परिधाय लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपकिरेत्। तत्र प्रणीयोदपात्रं पवित्रं पूतमुपसंस्कृत्य सर्पिराज्यार्थं यथोक्त-वर्णानाजानेयादीन् समन्ततः स्थापयेत् ॥ ८ ॥

ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपवेश्या-न्वालभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना। ततस्तस्या आशा-

सानाया ऋत्विक्प्रजापतिमभिनिर्द्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्व्वपेद्विष्णुर्योनिं कल्पयत्वित्यनयार्चा ततश्चैवाज्येन स्थालीपाकमभिसंसार्य्य त्रिर्जुहुयात् । यथाम्नायं मन्त्रोपमन्त्रितमुदकपात्रं तस्यै दद्यात् सर्व्वोदकार्थान् कुरुष्वेति । ततः समाप्ते कर्म्मणि पूर्व्वं दक्षिणपादमभिहरन्तौ प्रदक्षिणमग्निमनुपरिक्रामेत्, ततो ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्राज्यशेषं प्राश्नीयात् पूर्व्वं पुमान् पश्चात् स्त्री । न चोच्छिष्टमवशेषयेत् । ततस्तौ सह संवसेतामष्टरात्रं तथाविधपरिच्छदावेव च स्यातां तथेष्टपुत्रं जनयेताम् ॥ ९ ॥

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुञ्च पुत्रमाशासीत, या वा कृष्णं कृष्णमृदुदीर्घकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम्, एष एवानयोरपि होमविधिः । किन्तु परिबर्हो वर्णवर्ज्जं स्यात्, पुत्रवर्णानुरूपस्तु यथाशीरेव तयोः परिबर्होऽन्यः कार्य्यः स्यात् । द्विजेभ्यः शूद्रा तु नमस्कारमेव कुर्य्याद् देवगुरुतपस्विसिद्धेभ्यश्च । या या च यथाविधं पुत्रमाशासीत तस्यास्तस्यास्तां पुत्राशिषमनुनिशम्य तांस्तान् जनपदान् मनसानुपरिक्रामयेत् । ततो या या येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत सा सा तेषां तेषां जनपदानां मनुष्याणामाहारविहारोपचारपरिच्छदाननुविधीयस्वेति वाच्या स्यात् । इत्येतत् सर्व्वं पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातं भवति ॥ १० ॥

न खलु केवलमेतदेव कर्म्म वर्णानां वैशेष्यकरमपि तु तेजोधातुरप्युदकान्तरीक्ष-धातुप्रायोऽवदात-वर्णकरो भवति,

पृथिवीवायुधातुप्रायः कृष्णवर्णकरः, समसर्व्वधातुप्रायः श्यामवर्णकरः॥ ११॥

सत्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्वान्यन्तर्व्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोचितञ्च कर्म्म सत्वविशेषाभ्यासश्चेति। यथोक्तेन विधिनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोस्तु मिश्रीभावमापन्नयोः शुक्रं शोणितेन सह संयोगं समेत्याव्यापन्नमव्यापन्नेन योनावनुपहतायामप्रदुष्टे गर्भाशये गर्भमभिनिर्व्वर्त्तयत्येकान्तेन। यथा निर्म्मले वाससि सुपरिकल्पिते रञ्जनं समुदितगुणमुपनिपातादेव रागमभिनिर्व्वर्त्तयति तद्वत्। यथा वा क्षीरं दध्नाभिषुतमभिषवणाद्विहाय स्वभावमापद्यते दधिभावं शुक्रं तद्वत्, एवमभिनिर्व्वर्त्तमानस्य गर्भस्य तु स्त्रीपुरुषत्वे हेतुः पूर्व्वमुक्तः॥ १२॥

यथा हि वीजमनुपतप्तमुप्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्व्वा व्रीहित्वं यवो वा यवत्वं तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयते। तयोः कर्म्मणा वेदोक्तेन विवर्त्तनमुपदिश्यते प्राग्व्यक्तीभावात् प्रयुक्तेन। सम्यक् कर्म्मणां हि देशकालसम्पदुपेतानां नियतमिष्टफलत्वं तथेतरेषामितरत्वम्। तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग् व्यक्तीभावाद् गर्भस्य पुंसवनमौषधमस्यै दद्यात्॥ १३॥

गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहत आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौरसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये कल्के पिवेत्। तथैवापरान् जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं

वाप्युपसंस्कृत्य पयसा। कुडाकीटकं मत्स्यकञ्चोदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्। तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णानणुप्रमाणान् दध्नि पयस्युदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण। पुष्येणैव च पिष्टस्य पच्यमानस्योष्माणमुपघ्राय तस्यैव च पिष्टस्योदकसंसृष्टस्य रसं देहल्यामुपधाय दक्षिणे नासापुटे स्वयमासिञ्चेत् पिचुना। इति पुंसवनानि। यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा पुंसवनमिष्टं तच्चानुष्ठेयम् ॥ १४ ॥

अत ऊर्द्ध्वं गर्भस्थापनानि व्याख्यास्यामः। ऐन्द्री ब्राह्मी शतवीर्य्या सहस्रवीर्य्याऽमोघाऽव्यथा शिवाऽरिष्टा वाट्यपुष्पी विष्वक्सेनकान्ता च, आसामोषधीनां शिरसा दक्षिणेन पाणिना धारणमेताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम्, एताभिश्चैव पुष्ये पुष्ये स्नानं,सदा चैताभिः समालभेत। तथा सर्व्वासां जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिरिति गर्भस्थापनानि व्याख्यातानि भवन्ति ॥ १५ ॥

गर्भोपघातकरास्त्विमे भावा भवन्ति, तद्यथा; उत्कटविषमस्थानकठिनासनसेविन्या वातमूत्रपुरीषवेगानुपरुन्धत्या दारुणानुचितव्यायामसेविन्यास्तीक्ष्णोष्णातिमात्रसेविन्याः प्रमिताशनसेविन्या गर्भो म्रियतेऽन्तः कुक्षेरकाले वा स्रंसते शोषी वा भवति। तथाभिघातप्रपीड़नैः श्वभ्रकूपप्रपातदेशावलोकनैर्वाभीक्ष्णं मातुः प्रपतत्यकाले। तथातिमात्रसंक्षोभिभिर्यानैरप्रियातिमात्रश्रवणैर्वा। प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाड़ी कण्ठमनुवेष्टयति, विवृतशायिनी नक्तञ्चारिणी

चोन्मत्तं जनयत्यपस्मारिणं पुनः कलिकलहाचारशीला, व्यवायशीला दुर्व्वपुषमह्रीकं स्त्रैणं वा, शोकनित्या भीतमपचितमल्पायुषं वा, अभिध्यात्री परोपतापिनमीर्ष्युं स्त्रैणं वा, स्तेना त्वायासबहुलमतिद्रोहिणमकर्म्मशीलं वा, अमर्षिणी चण्डमौपाधिकमसूयकं वा, स्वप्ननित्या तन्द्रालुमबुधमल्पाग्निं वा, मद्यनित्या पिपासालुमनवस्थितचित्तं वा, गोधामांसप्रिया शर्करिणमश्मरिणं शनैर्मेहिनं वा, वराहमांसप्रिया रक्ताक्षं क्रथनमतिपरुषरोमाणं वा, मत्स्यमांसनित्या चिरनिमिषं स्तब्धाक्षं वा, मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा, अम्लनित्या रक्तपित्तिनमक्षिरोगिणं वा, लवणनित्या शीघ्रवलीपलितखालित्यरोगिणं वा, कटुकनित्या दुर्व्वलमल्पशुक्रमनपत्यं वा, तिक्तनित्या शोषिणमबलमपचितं वा, कषायनित्या श्यावमानाहिनमुदावर्त्तिनं वा, यद्यच्च यस्य यस्य व्याधेर्निदानमुक्तं तत् तदासेवमानान्तर्व्वत्नी तन्निमित्तविकारबहुलमेवापत्यमुपजनयति पितृजास्तु शुक्रदोषा मातृजैरपचारैर्व्याख्याता इति गर्भोपघातकरा भावा व्याख्याताः ॥ १६ ॥

तस्मादहितानाहारविहारान् प्रजामिच्छन्ती स्त्री विशेषेण वर्ज्जयेत्। साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्यामिति ॥ १७ ॥

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत्, न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेत्, न रक्तमवसेचयेत्, सर्व्वकालञ्च नास्थापनमनुवासनं वा कुर्य्यादन्यत्रात्ययिकाद्व्याधेः। अष्टमं माससमुपादाय वमनादि-

साध्येषु पुनर्विकारेष्वात्ययिकेषु मृदुभिर्वमनादिभिस्तदनुकारिभिर्वोपचारः स्यात्। पूर्णमिव तैलपात्रमसंक्षोभ्याऽन्तर्वत्नी भवत्युपचर्य्या ॥ १८ ॥

सा चेदपचाराद् द्वयोस्त्रिषु वा मासेषु पुष्पं पश्येन्नास्या गर्भः स्थास्यतीति विद्यात्, अजातसारा हि तस्मिन् काले भवन्ति गर्भाः। सा चेच्चतुष्प्रभृतिषु मासेषु क्रोधशोकासूयेर्ष्याभयत्रासव्यवायव्यायामसंक्षोभसन्धारणविषमाशन-शयन-स्थान-क्षुत्पिपासातियोगात् कदाहाराद्वा पुष्पं पश्येत् तस्या गर्भस्थापनविधिमुपदेक्ष्यामः ॥ १९ ॥

पुष्पदर्शनादेवैनां ब्रूयाच्छयनं तावन्मृदुसुखशिशिरास्तरणसंस्तीर्णमीषदवनतशिरस्कं प्रतिपद्यस्वेति। ततो यष्टिमधुकसर्पिर्भ्यां परमशिशिरवारिणि संस्थिताभ्यां पिचुमाप्लाव्योपस्थसमीपे स्थापयेत्। तस्यास्तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्यामधो नाभेः सर्व्वतः प्रदिह्यात्। सर्व्वतश्च गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा न्यग्रोधादिकषायेण वा परिषेचयेदधो नाभेः। उदकं वा सुशीतमवगाहयेत्. क्षीरिणां कषायद्रुमाणाञ्च स्वरसपरिपीतानि चेलानि ग्राहयेत्। न्यग्रोधादिसिद्धयोर्वा क्षीरसर्पिषोः पिचुं ग्राहयेदतश्चैवाक्षमात्रं प्राशयेत् प्राशयेद्वा केवलञ्च क्षीरसर्पिः। पद्मोत्पलकुमुदकिञ्जल्कांश्चास्यै समधुशर्करान् लेहार्थं दद्यात्, शृङ्गाटकपुष्करबीजकशेरुकान् भक्षणार्थम्। गन्धप्रियङ्गुसितोत्पलशालूकोडुम्बरशलाटुन्यग्रोधशुङ्गानि वा पाययेदेनामाजेन पयसा। पयसा चैनां बलातिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन

समधुशर्करं रक्तशालीनामोदनं मृदुसुरभिशीतं भोजयेत्। लावकपिञ्जलकुरङ्गशम्बरशशहरिणैणकालपुच्छकरसेन वा घृत-सुसंस्कृतेन सुखशिशिरोपवातदेशस्थां भोजयेत्। तथा क्रोध-शोकायासव्यवायव्यायामतश्चाभिरक्षेत्। सौम्याभिश्चैनां कथा-भिर्मनोऽनुकूलाभिरुपासीत, तथास्या गर्भस्तिष्ठति ॥ २० ॥

यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात् प्रायस्तस्यास्तद् गर्भबाधकं भवति विरुद्धोपक्रमत्वात् तयोः। यस्याः पुनरुष्ण-तीक्ष्णोपयोगाद्गर्भिण्या महति संजातसारे गर्भे पुष्पदर्शनं स्यादन्यो वा योनिप्रस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुत-त्वात्, स कालान्तरमवतिष्ठतेऽतिमात्रं, तमुपविष्टकमित्याचक्षते केचित्। उपवासव्रतकर्म्मपरायाः पुनः कदाहारायाः स्नेह-द्वेषिण्या वातप्रकोपणान्यासेवमानाया गर्भो वृद्धिं नाप्नोति परिशुष्कत्वात्, स चापि कालान्तरमवतिष्ठतेऽतिमात्रमस्पन्दनञ्च भवति, तन्तु नागोदरमित्याचक्षते। नार्य्योस्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः ॥ २१ ॥

भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धानां सर्पिषा-मुपयोगः। नागोदरे तु योनिव्यापन्निर्द्दिष्टं पयसामामगर्भाणां गर्भवृद्धिकराणाञ्च सम्भोजनमेतैरेव सिद्धैश्च घृतादिभिः सुबु-भुक्षायाम्। अभीक्ष्णं यानवाहनापमार्ज्जनावजृम्भणैरुपपादन-मिति ॥ २२ ॥

यस्याः पुनर्गर्भो न स्पन्दते, तां श्येनमत्स्यगवयशिखितित्तिर-ताम्रचूड़शिखिनामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूतसर्पिषा मूलकयूषेण वा रक्तशालीनामोदनं मृदुमधुरशीतं

भोजयेत्। तैलाभ्यङ्गेनाश्वाश्वाभीक्ष्णमुदरवंक्षणोरुकटीपार्श्व-पृष्ठप्रदेशानीषदुष्णेनोपाचरेत्॥ २३॥

यस्याः पुनरुदावर्त्तविबन्धः स्यादष्टमे मासि न चानुवासन-साध्यं मन्यते। ततस्तस्यास्तद्विकारप्रशमनमुपकल्पयेन्निरूहम्, उदावर्त्तो ह्युपेक्षितः गर्भं सगर्भां गर्भिणीं वा निपातयेत्। तत्र वीरणशालिषष्टिक-कुशकाशेक्षुबालिकावेतसपरिव्याध-मूलानां भूतीकानन्ताकाश्मर्य्यपरूषकमधुकमृद्वीकानाञ्च पय-सार्द्धोदकेनोद्गमय्य रसं पियालविभीतकमज्जतिलकल्कसम्प्रयुक्त-मीषल्लवणमनत्युष्णं च निरूहं दद्यात्। व्यपगतविबन्धाञ्चैनां सुखसलिलपरिषिक्ताङ्गीं स्थैर्य्यकरमविदाहिनमाहारं भुक्तवतीं सायं मधुरकसिद्धेन तैलेनानुवासयेत्, न्युब्जान्त्वेनामास्थाप-नानुवासनाभ्यामुपचरेत्॥ २४॥

यस्याः पुनरतिमात्रदोषोपचयाद्वा तीक्ष्णोष्णातिमात्रसेवना-द्वा वातमूत्रपुरीषवेगधारणैर्वा विषमाशनशयनस्थान-संपीड़नैर्वा क्रोधशोकेर्ष्यासूयाभयत्रासादिभिर्वापरैः कर्म्मभिरन्तः कुक्षौ गर्भो म्रियते। तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः, शूलमधिकमुपजायते न चाव्यः प्रादुर्भवन्ति योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतस्ताम्यति व्यथते भ्रमते श्वसित्यरतिबहुला च भवति न चास्या वेगप्रादुर्भावो वा यथा-वदुपलभ्यत इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात्॥२५॥

तस्य गर्भशल्यस्य जरायुप्रपातनं कर्म्म संशमनमित्याहुरेके। मन्त्रादिकमथर्व्ववेदविहितमित्येके। परिदृष्टकर्म्मणा शल्य-हर्त्रा हरणमित्येके। व्यपगतगर्भशल्यान्तु स्त्रियमामगर्भां

सुरासीध्वरिष्टमधुमदिरासवानामन्यतममग्रे सामर्थ्यतः पाययेत गर्भकोष्ठविशुद्ध्यर्थमर्त्तिविस्मरणार्थं प्रहर्षणार्थञ्च ॥ २६ ॥

अतःपरं वृंहणैर्बलानुरक्षिभिः स्नेहसम्प्रयुक्तैर्यवाग्वादिभिर्वा नतुकालयोगिभिराहारैरुपाचरेद् दोषधातुक्लेदविशोषणमात्रं वा तत्कालम्। अतःपरं स्नेहपानैर्वस्तिभिराहारविधिभिश्च दीपनीयजीवनीयवृंहणीयमधुरवातहरैरुपचारैराचरेत् ॥२७॥

परिपक्वगर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहोपचारः स्यात्। परमतो निर्विकारमाप्यायमानस्य गर्भस्य मासि मासि कर्म्मोपदेच्यामः ॥ २८ ॥

प्रथमे मासे शङ्किता चेद्गर्भमापन्ना क्षीरमनुपस्कृतं मात्रावच्छीतं काले पिबेत् सात्म्यञ्च भोजनं सायं प्रातश्च भुञ्जीत। द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम्, तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य, चतुर्थे मासे तु क्षीरनवनीतमक्षमात्रमश्नीयात्, पञ्चमे मासे क्षीरसर्पिः, षष्ठे मासि क्षीरसर्पिर्मधुरौषधसिद्धं तदेव सप्तमे मासि। तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते, तन्नेति भगवानात्रेयः। किन्तु गर्भोत्पीड़नाद्वातपित्तश्लेष्माणा उरः प्राप्य विदहन्ति ततः कण्डूरुपजायते कण्डूमूला च किक्किशावाप्तिर्भवति। तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रमस्यै पातुं दद्यात्। चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्नीयात्। शिरीषधातकीसर्षपमधुकचूर्णैः कुटजार्जकबीजमुस्तहरिद्राकल्कैर्वा निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा पृषत्-हरिणशशरुधिरयुतया त्रिफलया वा करवीरक-

पत्रसिद्धेन वा तैलेनाभ्यङ्गः । परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा । जातकण्डूश्च कण्डूयनं वर्ज्जयेत् त्वग्भेदनवैरूप्यपरिहारार्थम् । अशक्यायान्तु कण्ड्वामुन्मर्द्दनोद्घर्षणाभ्यां परिहारः * स्यात् । मधुरमाहारजातं वातहरमल्पमल्पस्नेहलवणमल्पोदकानुपानञ्च भुञ्जीत ॥ २९ ॥

अष्टमे मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत् । तन्नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेदिति । अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्व्वसुरात्रेयो न त्वेतदकार्य्यमेवं कुर्व्वती ह्यारोग्यबलवर्णस्वरसंहननसम्पदुपेतं ज्ञातीनामपि श्रेष्ठमपत्यं जनयति । नवमे खल्वेनां मासि मधुरौषधसिद्धेन तैलेनानुवासयेत् । अतश्चास्यास्तैलं पिचुमिश्रं योनौ प्रणयेद् गर्भस्थानमार्गस्नेहनार्थम् ॥ ३० ॥

यदिदं कर्म्म प्रथममासमुपादायोपदिष्टमानवमान्मासात्, तेन गर्भिण्या गर्भसमये गर्भधारणे कुक्षिकटीपार्श्वपृष्ठं मृदु भवति वातश्चानुलोमः सम्पद्यते मूत्रपुरीषे च प्रकृतिभूते सुखेन मार्गमनुपद्येते चर्म्मनखानि मार्द्दवमुपयान्ति बलवर्णौ चोपचीयेते पुत्रं जेष्ठं † सम्पदुपेतं सुखिनं सुखेनैषा काले प्रजायत इति ॥ ३१ ॥

प्राक् चैवास्या नवमान्मासात् सूतिकागारं कारयेदपहृतास्थिशर्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्राग्द्वारमुदग्द्वारं वा । बैल्वानां काष्ठानां तैन्दुकैङ्गुदानां भाल्लातकानां वारुणानां खादिराणां वा यानि चान्यान्यपि ब्राह्मणाः शंसेयु-

* परिचार इति वा पाठः ।　　† इष्टमिति पाठान्तरम् ।

रथर्व्ववेदविदस्तद्वसनालेपनाच्छादनापिधानसम्पदुपेतं वास्तु विद्यात्, हृदययोगेनाग्निसलिलोदूखलवर्च्चःस्थानस्नानभूमिमहानसमृतुसुखञ्च। तत्र सर्पिस्तैलमधुसैन्धवसौवर्च्चलकाललवणविड़ङ्गगुड़कुष्ठकिलिमनागर-पिप्पलीमूल-हस्तिपिप्पलीमण्डूकपर्णीलालाङ्गलिकीवचाचव्य-चित्रकचिरविल्व-हिङ्गुसर्षपलशुनकणकणिकानीपातसीवल्वजभूर्ज्जाः कुलत्थमैरेयसुरासवाः सन्निहिताः स्युः। तथाश्मानौ द्वौ द्वे चण्डमुषले द्वे उलूखले खरो वृषभश्च द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ शस्त्राणि च तीक्ष्णायसानि द्वौ च विल्वमयौ पर्य्यङ्कौ तैन्दुकैङ्गुदानि काष्ठान्यग्निसन्धुक्षणानि स्त्रियश्च बह्व्यो बहुशः प्रजाताः सौहार्द्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिष्ण्वोऽभिमताः। ब्राह्मणाश्चाथर्व्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येरन यच्चान्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत्कार्य्यम् ॥ ३२ ॥

ततः प्रवृत्ते नवमे मासि पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्त्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकञ्चादौ प्रवेश्य गोभ्यस्तृणोदकं मधुलाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि फलानीष्टानि दत्त्वा, उदकपूर्व्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य स्वस्ति वाचयेत्। ततः पुण्याहशब्देन गोब्राह्मणमन्वावर्त्तमाना प्रविशेत् सूतिकागारम्। तवस्था च प्रसवकालं प्रतीक्षेत ॥ ३३ ॥

तस्यास्तु खल्विमानि लिङ्गानि प्रजननकालमभिभवन्ति, तद्यथा क्लमो गात्राणां ग्लानिराननस्याक्ष्णोः शैथिल्यं विमुक्त-

बन्धनत्वमिव वक्षसः कुक्षेरवस्रंसममधो गुरुत्वं वंक्षणवस्ति-कटीकुक्षिपार्श्वपृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाषश्च। ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्य। आवी-प्रादुर्भावे तु भूमौ शयनं विदध्यान्मृद्वास्तरणोपपन्नं तदध्या-सीनां तां ततः समन्ततः परिवार्य्य यथोक्तगुणाः स्त्रियः पर्य्यु-पासीरन्, ताश्चाश्वासयन्त्यो वाग्भिर्ग्राहणीयाभिरुपदिष्टवदर्थाभिधायिनीभिः। सा चेदावीभिः संक्लिश्यमाना न प्रजायेताथैनां ब्रूयात्, उत्तिष्ठ मुषलमन्यतरञ्च गृहाणोष्वानेनैतदुलूखलं धान्यपूर्णं मुहुर्म्मुहुरभिजहि मुहुर्म्मुहुरवजृम्भस्व चंक्रमस्व चान्तरान्तरा इत्येवमुपदिशन्त्येके॥ ३४॥

तन्नेत्याह भगवानात्रेयः। दारुणव्यायामवर्ज्जनं हि गर्भिण्याः सततमुपदिश्यते विशेषतश्च प्रजननकाले, प्रचलित-सर्व्वधातुदोषायाः सुकुमार्य्या नार्य्या मुषलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यात्, दुष्प्रतीकारतमा हि तस्मिन् काले विशेषेण भवति गर्भिणी। तस्मान्मुषलग्रहणं परिहार्य्य-मृषयो मन्यन्ते जृम्भणञ्चंक्रमणञ्च पुनरनुष्ठेयमिति॥ ३५॥

अथास्यै दद्यात् कुष्ठेलालाङ्गलिकीवचाचित्रकचिरविल्वचूर्ण-मुपघ्रातुं सा तत् मुहुर्म्मुहुरुपजिघ्रेत्। तथा भूर्ज्जपत्रधूमं शिंशपासारधूमं वा, तस्याश्चान्तरान्तरा कटीपार्श्वपृष्ठसक्थि-देशानीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्गीयादित्यनेन तु कर्म्मणा गर्भोऽवाक् प्रतिपद्यते। स यदा जानीयाद्विमुच्य हृदय-मुदरमस्यास्त्वाविशति वस्तिशिरोऽवगृह्णाति त्वरयन्त्येनामाव्यः परिवर्त्ततेऽस्या अवाग्गर्भ इत्यस्यामवस्थायां पर्य्यङ्कमेना-

मारोप्य प्रवाहयितुमुपक्रमेत कर्णे चास्या मन्त्रमिममनुकूला स्त्री जपेत्।

क्षितिर्जलं वियत् तेजो वायुरिन्द्रः प्रजापतिः।
सगर्भां त्वां सदा पान्तु वैशल्यञ्च दिशन्तु ते॥
प्रसुव त्वमविक्लिष्टमविक्लिष्टा शुभानने।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम्॥ ३६॥

तास्त्वेनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतावीर्मा प्रवाहिष्ठाः, यद्व्यनागतावीः प्रवाहयते व्यर्थमेवास्यास्तत् कर्म्म भवति। प्रजा चास्या विकृता विकृतिमापन्ना च श्वासकासशोषप्लीहप्रसक्ता वा भवति। यथा हि क्षवथूद्गारवातमूत्रपुरीषवेगान् प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण वाप्यवाप्नोति तथानागतकालं गर्भमपि प्रवाहमाणा। यथा चैषामेव क्षवथ्वादीनां सन्धारणमुपघातायोपपद्यते तथा प्राप्तकालस्य गर्भस्याप्रवाहणमिति। सा यथानिर्द्देशं कुरुष्वेति वक्तव्या स्यात्। तथा च कुर्व्वती शनैः शनैः पूर्व्वं प्रवाहेत ततोऽनन्तरं बलवत्तरमिति, तस्याञ्च प्रवाहमाणायां स्त्रियः शब्दं कुर्य्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति तथास्या हर्षेणाप्यायन्ते प्राणाः॥ ३७॥

यदा च प्रजाता स्यात् तदैनामवेक्षेत काचिदस्या अमरा प्रपन्ना वा प्रपन्नानेति। तस्याश्चेदमरा न प्रपन्ना स्यादथैनामन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवन् निपीड्य सव्येन पाणिना पृष्ठत उपसंगृह्य तां सुनिर्धूतं निर्धूनुयात्। अथास्याः पार्ष्णिं श्रोणीमाकोटयेदस्याः स्फिचावुपसंगृह्य

सुपीड़ितं पीड़येत् । अथास्या बालवेण्या कण्ठतालु परिमृशेत् । भूर्ज्जपत्रकाचमणिसर्पनिर्म्मोकैश्चास्या योनिं धूपयेत् । कुष्ठतालीशकल्कं बल्वजयूषे मैरेयसुरामण्डे वा कौलत्थे वा मण्डूकपर्णीपिप्पलीक्वाथे वा संप्लाव्य तया पाययेदेनाम् ॥ ३८॥

तथा सूक्ष्मैलाकिलिमकुष्ठनागरविड़ङ्गकालविड़गुड़चव्यपिप्पलीचित्रकोपकुञ्चिकाकल्कं खरवृषभस्य जरतो वा दक्षिणं कर्णमुत्कृत्य दृषदि जर्ज्जरीकृत्य बल्वजयूषादीनामन्यतमे प्रक्षिप्याप्लाव्य मुहूर्त्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम् । शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत्, अतश्चैवाऽनुवासयेदेतैरेव चाप्लावनैः फलजीमूतकेच्वाकुधामार्गवकुटजकृतवेधनहस्तिपर्ण्युपहितैरास्थापयेत् । तदास्थापनमस्याहि सद्यः वातमूत्रपुरीषैर्निर्हरत्यमरामासक्तां वायोरनुलोमगमनात् । अमरां हि वातमूत्रपुरीषाण्यन्यानि चान्तर्वहिर्मुखानि सज्जन्ति । तस्यास्तु खल्वमरायाः प्रपतनार्थे खल्वेवमेव कर्म्मणि क्रियमाणे जातमात्रस्यैव कुमारस्य कार्य्याण्येतानि कर्म्माणि भवन्ति, तद्यथा—अश्मनोः संघट्टनं कर्णयोर्मूले शीतोदकेनोष्णोदकेन वा मुखपरिषेकः, तथासंक्लेशविहृतान् प्राणान् पुनर्लभेत कृष्णकपालिकासूर्पेण चैनमभिनिष्पुनीयुः, यद्यच्चेष्टं स्याद् यावत् प्राणानां प्रत्यागमनं तत्तत् सर्व्वमेव कुर्य्युः ॥ ३९ ॥

ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणाभ्यामुपपादयेत् । अथास्य ताल्वोष्ठकण्ठजिह्वामार्ज्जनमारभेत अङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधान-

कार्पासपिचुमत्या, प्रथमं प्रमार्ज्जिताख्यस्य चास्य शिरस्तालु कार्पासिकपिचुना स्नेहगर्भेण प्रतिसंच्छादयेत्। ततोऽस्यानन्तरं कार्य्यं सैन्धवोपहितेन सर्पिषा प्रच्छर्द्दनम्, ततः कम्पनं नाड्या-स्तनस्तस्याः कल्पनविधिमुपदेक्ष्यामः। नाभिबन्धनात् प्रभृति छित्वाष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्मराजतायसानामन्यतमेनोर्द्ध-धारेण छेदयेत्, तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिल-मवसृजेत्॥ ४०॥

तस्य चेन्नाभिः पच्यते तां लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्क-सिद्धेन तैलेनाभ्यञ्ज्यादेषामेव तैलौषधानां चूर्णेनावचूर्णयेदेष नाड़ीकल्पनविधिरुक्तः सम्यक्। असम्यक्कल्पने हि नाड्या आयामव्यायामोत्तुण्डिता-पिण्डलिका-विनामिका-विजृम्भिका-व्याधिभ्यो भयम्। तत्राविदाहिभिर्व्वातपित्तप्रशमनैरभ्यङ्गोत्सा-दनपरिषेकैः सर्पिर्भिश्चोपक्रमेत गुरुलाघवमभिसमीक्ष्य कुमा-रस्य। प्रागतो जातकर्म्म कार्य्यं ततो मधुसर्पिषी मन्त्रोप-मन्त्रिते यथाम्नायं प्राशितुमस्मै दद्यात्। स्तनमत ऊर्द्ध्वमनेनैव विधिना दक्षिणं पातुं पुरस्तात् प्रयच्छेत्। अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितम्॥ ४१॥

अथास्य रक्षां विदध्यात्, आदानीखदिरकर्कन्धुपीलुपरूषक-शाखाभिरस्या गृहं भिषक् समन्ततः परिवारयेत्। सर्व्वतश्च सूतिकागारस्य सर्षपातसीतण्डुलकणकणिकाः प्रकिरेत्। तथा तण्डुलबलिमङ्गलहोमः सततमुभयकालं क्रियेत प्राङ्नाम-कर्म्मणो द्वारे च मुषलमनुतिरश्चीनं न्यस्तं कुर्य्यात्। वचा-

कुष्ठक्षौमकहिङ्गुसर्षपातसीलशुनकणकणिकानां रक्षोघ्नसमाख्यातानाञ्चौषधीनां पोट्टलिकां बद्धा सूतिकागारस्योत्तरदेहल्यामवसृजेत् । तथा सूतिकायाः कण्ठे सपुत्रायाः स्थालुद्रकुम्भपर्य्यङ्केष्वपि तथैव द्वयोर्द्वारपक्षयोः सकणकुम्भकेन्धनाग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात् । स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुर्दशाहं द्वादशाहं वानुपरतप्रदानमङ्गलाशीःस्तुतिगीतवादित्रमन्नपानविशदमनुरक्तप्रहृष्टजनसम्पूर्णञ्च तद्वेश्म कार्य्यम् । ब्राह्मणश्चाथर्व्ववेदवित् सततमुभयकालं शान्तिं जुहूयात् स्वस्त्ययनार्थं सुकुमारस्य तथा सूतिकाया इत्येतद्रक्षाविधानमुक्तम् ॥ ४२ ॥

सूतिकान्तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत् प्रथमं परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यीभावमभिसमीक्ष्य भिषक् । पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरचूर्णसहितं स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा तथा तस्यां न वायुरुदरे विकृतिमुत्पादयत्यनवकाशत्वात् । जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां द्रवां मात्रशः पाययेतोभयकालञ्चोष्णोदकेन परिषेचयेत् प्राक् स्नेहयवागूपानाभ्यामेवं पञ्चरात्रं सप्तरात्रञ्च अनुपाल्य क्रमेणाप्याययेत् स्वस्थवृत्तमेतावत्तु सूतिकायाः ॥४३॥

तस्यास्तु खलु सूतिकाया यो व्याधिरुत्पद्यते स कृच्छ्रसाध्यो भवत्यसाध्यो वा, गर्भवृद्धिक्षयितशिथिलसर्व्वधातुत्वात् प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च । तस्मात्तां यथोक्तेन विधिनोपचरेत्, भौतिकजीवनीयबृंहणीयमधुरवातहर-

सिद्धैरभ्यङ्गोत्सादनपरिषेकावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेद्विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ॥ ४४ ॥

दशम्यां निश्यतीतायां परेऽहनि सपुत्रा स्त्री सर्व्वगन्धौषधैर्गौरसर्षपलोध्रैश्च स्नाता लघ्वहतशुचिवस्त्रं परिधाय पवित्रेष्टलघुभूषणवती च संस्पृश्य मङ्गलानुग्रचितामर्च्चयित्वा च देवतां शिखिनः शुक्लवाससोऽव्यङ्गांश्च ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमहतेन शुचिवाससाच्छादयेत्। प्राक्शिरसमुदक्शिरसं वा संवेश्य देवतापूर्व्वं द्विजातिभ्यः प्रणमतीत्युक्त्वा कुमारस्य पिता द्वे नामनी कारयेन् नाक्षत्रिकं नामाभिप्रायिकञ्च। तत्राभिप्रायिकं नाम घोषवदाद्यन्तस्थान्तमूष्मान्तञ्च वृद्धं त्रिपुरुषान्तरमनवप्रतिष्ठितम्। नाक्षत्रिकन्तु नक्षत्रदेवतासंयुक्तं कृतं द्व्यक्षरं चतुरक्षरं वा ॥ ४५ ॥

कृते च नाम कर्म्मणि कुमारं परीक्षितुमुपक्रमेदायुषः प्रमाणज्ञानहेतोः। तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि भवन्ति। तद्यथा—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते। स्थिरा बहला त्वक्, प्रकृत्याकृतिसुसम्पन्नमीषत्प्रमाणातिरिक्तमनुरूपमातपत्रोपमं शिरः प्रशस्यते। व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्द्ध्वव्यञ्जनसम्पन्नमुपचितं बलिनमर्द्धचन्द्राकृति ललाटं, बहलौ विपुलसमपीठौ समौ नीचैर्वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुत्रकौ महाच्छिद्रौ कर्णौ, ईषत् प्रलम्बिन्यावसङ्गते समे संहते महत्यौ भ्रुवौ, समे समाहितदर्शने व्यक्तभागविभागे बलवति तेजसोपपन्ने स्वङ्गापाङ्गे चक्षुषी। ऋज्वी महोच्छ्वासा वंशसम्पन्ना ईषदवनताग्रा नासिका, महदृजु-

सुनिविष्टदन्तमास्यम्, आयामविस्तरोपपन्ना श्लक्ष्णा तन्वी प्रकृतियुक्ता पाटलवर्णा जिह्वा, श्लक्ष्णं युक्तोपचयमुष्मोपपन्नं रक्तं तालु, महानदीनः स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः, नातिस्थूलौ नातिकृशौ विस्तारोपपन्नावास्यप्रच्छादनौ रक्तावोष्ठौ, महत्यौ हनू, वृत्ता नातिमहती ग्रीवा, व्यूढमुपचितमुरो गूढं जत्रु पृष्ठवंशश्च, विप्रकृष्टान्तरौ स्तनौ, असम्पातिनी स्थिरे पार्श्वे, वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च, महदुपचितं पाणिपादम्, स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्म्माकाराः करजाः, प्रदक्षिणावर्त्ता सोत्सङ्गा च नाभी, नाभ्युरस्त्रिभागहीना समा समुपचितमांसा कटी, वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचौ, अनुपूर्व्वं वृत्तावुपचययुक्तावूरू, नात्युपचिते नात्यपचित एणीपदे प्रगूढशिरास्थिसन्धी जङ्घे, नात्युपचितौ नात्यपचितौ गुल्फौ, पूर्व्वोपदिष्टगुणौ पादौ कूर्म्माकारौ, प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि तथा स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि। यच्च किञ्चिदन्यदनुक्तमस्ति तदपि सर्व्वं प्रकृतिसम्पन्नमिष्टं विपरीतं पुनरनिष्टमिति दीर्घायुर्लक्षणानि ॥ ४६ ॥

अतो धात्रीपरीक्षामुपदेक्ष्यामः। अथ ब्रूयाद् धात्रीमानयेति समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनामविरूपामजुगुप्सितां देशजातीयामक्षुद्रामक्षुद्रकर्म्मिणीं कुले जातां वत्सलामरोगजीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्तामशायिनीमनुच्चारशायिनीमनन्तावशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्यसम्पदुपेतामिति ॥ ४७ ॥

तत्रेयं स्तनसम्पत्, नात्यूर्द्धौ नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति। स्तन्यसम्पत् तु प्रकृतिवर्णगन्धरसस्पर्शमुदकपात्रे च दुह्यमानं दुग्धमुदकं वैति प्रकृतिभूतत्वात् तत् पुष्टिकरमारोग्यकरञ्चेति। अतोऽन्यथा व्यापन्नं ज्ञेयम् ॥ ४८ ॥

तस्य विशेषाः श्यावारुणवर्णं कषायानुरसं विशदमनालक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्षणं वातविकाराणां कर्त्तृ वातोपसृष्टं क्षीरमिति ज्ञेयम्। कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगन्धि भृशोष्णञ्च पित्तविकाराणां कर्त्तृ पित्तोपसृष्टं क्षीरमिति ज्ञेयम्। अत्यर्थशुक्लमतिमाधुर्य्योपपन्नं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीदति श्लेष्मविकाराणाञ्च कर्त्तृ श्लेष्मोपसृष्टं क्षीरमिति ज्ञेयम्। तेषान्तु त्रयाणामपि क्षीरदोषाणां प्रतिविशेषमभिसमीक्ष्य यथास्वं यथादोषञ्च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय भवन्ति ॥४९॥

पानाशनविधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्गहरेणुककुलत्थसुरासौवीरकमैरेयमेदकलशुनकरञ्जप्रायः स्यात्। क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद्विधानं कार्य्यं स्यात्। पाठामहौषधसुरदारुमुस्तमूर्व्वागुडूचीवत्सकफलकिराततिक्तककटुरोहिणीशारिवाकषायाणाञ्च पानं प्रशस्यते। तथान्येषां तिक्तकषायकटुकमधुराणां द्रव्याणां प्रयोगः। इति क्षीरविशोधनानुक्तानि भवन्ति, क्षीरविकारविशेषानभिसमीक्ष्य मात्रां कालञ्चेति क्षीरविधानानि ॥ ५० ॥

क्षीरजननानि तु मद्यानि सीधुवर्ज्ज्यानि ग्राम्यानूपौदकानि च शाकधान्यमांसानि द्रवमधुराम्ल-भूयिष्ठाश्चाहाराः क्षीरिण्यश्चौषधयः क्षीरपानञ्चानायासश्च वीरणषष्टिशालिकेक्षु-बालिकादर्भकुशकाशगुन्द्रेत्कट-मूलकषायाणाञ्च पानमिति क्षीरजननान्युक्तानि ॥ ५१ ॥

धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात् तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधायैन्द्रीं ब्राह्मीं शतवीर्य्यां सहस्रवीर्य्यां मोघामव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तामिति बिभ्रत्योषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेदिति धात्रीकर्म्म ॥ ५२ ॥

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः । वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिकापतङ्गं सुविभक्तसलिलोदूखलमूत्रवर्च्चःस्थानस्नानभूमिमहानसमृतुसुखं यथर्त्तुशयनासनास्तरणसम्पन्नं कुर्य्यात् । तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचिवृद्धवैद्यानुरक्तजनसम्पूर्णमिति कुमारागारविधिः ॥ ५३ ॥

शयनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः । स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्ज्यानि स्युः । असति सम्भवेऽन्येषां तान्येव च सुप्रक्षालितोपधानानि सुधूपितानि शुद्धानि शुष्काण्युपयोगं गच्छेयुः ॥ ५४ ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानाञ्च यवसर्षपातसीहिङ्गुगुग्गुलुवचाचोरकवयःस्थागोलोमीजटिलापल-

क्षमाशोकरोहिणीसर्पनिर्म्मोकाणि घृतयुक्तानि स्युः। मणयश्च धारणीयाः कुमारस्य खड्‌गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः। मन्त्राद्याश्चौषधयो जीवकर्षभकौ च यानि चान्यान्यपि ब्राह्मणाः प्रशंसेयुरथर्व्ववेदविदः ॥ ५५ ॥

क्रीड़नकानि खल्वस्य तु विचित्राणि घोषवन्त्यभिरामाणि चागुरूण्यतीच्णाग्राणि चानास्यप्रवेशीनि चाप्राणहराणि चावित्रासनानि च स्युः। न ह्यस्य वित्रासनं साधु तस्मात् तस्मिन् रुदत्यभुञ्जाने वान्यत्र विधेयतामगच्छति राक्षसपिशाचपूतनाद्यानां नामान्याह्वयता कुमारस्य वित्रासनार्थं नाम ग्रहणं न कार्य्यं स्यात् ॥ ५६ ॥

यदि त्वातुर्य्यं किञ्चित् कुमारमागच्छेत् तत् प्रकृतिनिमित्त-पूर्व्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्व्वविशेषान् आतुरौषधदेशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरमृदुलघुसुरभिशीतसङ्करं कर्म्म प्रवर्त्तयन्नेवं सात्म्या हि कुमारा भवन्ति तथा ते शर्म्म लभन्ते अचिराय, रोगे त्वरोगवृत्तमातिष्ठेद् देशकालात्मगुणविपर्य्ययेण वर्त्तमानः। क्रमेणासात्म्यानि परिवर्त्तोपयुञ्जानः सर्व्वाण्यहितानि वर्ज्जयंस्तथा बलवर्णशरीरायुषां सम्पदमवाप्नोतीति ॥ ५७ ॥

एवमेनं कुमारमायौवनप्राप्तेर्धर्म्मार्थकौशलागमनादनुपालयेदिति पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातम्, तदाचरन् यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयक इति ॥ ५८ ॥

तत्र श्लोकौ ।

पुत्राशिषां कर्म्म समृद्धिकारकं यदुक्तमेतन्महदर्थसंहितम् ।
तदाचरन् ज्ञो विधिभिर्यथातथं प्रजां यथेष्टं लभतेऽनसूयकः ॥
शरीरं चिन्त्यते सर्व्वं दैवमानुषसम्पदा ।
सर्व्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते ॥ ५६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
जातिसूत्रीयं नामाष्टमोऽध्यायः ॥ ८ ॥

इति शारीरस्थानं सम्पूर्णम् ।

# चरक-संहिता।

## इन्द्रियस्थानम्।

### प्रथमोऽध्यायः।

अथातो वर्णस्वरीयमिन्द्रियं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रञ्च घ्राणञ्च रसनञ्च स्पर्शनञ्च सत्त्वञ्च भक्तिश्च शौचञ्च शीलञ्चाचारश्च स्मृतिश्चाकृतिश्च प्रकृतिश्च विकृतिश्च बलञ्च ग्लानिश्च मेधा च हर्षश्च रौक्ष्यञ्च स्नेहश्च तन्द्रा चारम्भश्च गौरवञ्च लाघवञ्च गुणाश्चाहारश्च विहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च पूर्व्वरूपञ्च वेदनाश्चोपद्रवाश्च छाया च प्रतिच्छाया च स्वप्नदर्शनञ्च दूताधिकारश्च पथि चौत्पातिकञ्चातुरकुले भावावस्थान्तराणि च भेषजञ्च भेषजप्रवृत्तिश्च भेषजाधिकारयुक्तिश्चेति परीक्ष्याणि भवन्ति प्रत्यक्षानुमानोप-

देशैरायुषः प्रमाणावशेषं जिज्ञासमानेन भिषजा । तत्र तु खल्वेषां परीक्ष्याणां कानिचित् पुरुषानाश्रितानि कानिचिच्च पुरुषसंश्रयाणि । तत्र यानि पुरुषानाश्रितानि तान्युपदेशतो युक्तितश्च परीक्षेत, पुरुषसंश्रयाणि पुनः प्रकृतितो विकृतितश्च ॥ २ ॥

तत्र प्रकृतिर्जातिप्रसक्ता कुलप्रसक्ता च देशानुपातिनी च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता चेति । एतावज्जातिकुलदेशाकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति ॥ ३ ॥

विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च निमित्तानुरूपा च । लक्ष्यमिति तावन्निमित्तानुमानं । तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति । लक्षणानि हि कानिचित् शरीरोपनिबद्धानि यानि तस्मिंस्तस्मिंस्तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति । लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तेषु निदानेषु । निमित्तानुरूपा तु निमित्तार्थानुकारिणी यामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजो भूयश्चायुषः क्षयनिमित्तां प्रेतलिङ्गानुरूपां यामायुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति । याञ्चाधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणानि उपदेक्ष्यन्त इत्युद्देशः ॥ ४ ॥

तं विस्तरेणोपदिशन्तो भूयः परमतो व्याख्यास्यामः । तत्रादित एव वर्णाधिकारस्तद्यथा—कृष्णः श्यामः श्यामावदातोऽवदातश्चेति प्रकृतिवर्णाः शरीरस्य । यांश्चापरानवेक्ष्यमाणानपि विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः । नील-

श्यामताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति। यांश्चापरानवेक्ष्यमाणानपि विद्यात्, प्रागविकृतादद्भुतोत्पन्नानिति प्रकृतिविकृतिवर्णा भवन्त्युक्ताः शरीरस्य ॥ ५ ॥

तत्र प्रकृतिवर्णोऽर्द्धशरीरे विकृतिवर्णोऽर्द्धशरीरे द्वावपि वर्णौ मर्य्यादाविभक्तौ दृष्ट्वा यद्येवं सव्यदक्षिणविभागेन यद्येवं पूर्व्वपश्चिमविभागेन यद्येवमधरोत्तरविभागेन यद्येवमन्तर्बहिर्विभागेनातुरस्यारिष्टमिति विद्यात्। एवमस्य वर्णभेदो मुखस्यान्तर्गतो वर्त्तमानो मरणाय भवति। वर्णभेदेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः। तथा पिप्लवव्यङ्गतिलकालकपिड़कानामन्यतमस्याननेजन्मातुरस्यैवमेवाप्रशस्तं विद्यात् ॥ ६ ॥

नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिषु च वैकारिकोक्तानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य भवति। यच्चान्यदपि किञ्चिद्वर्णवैकृतमभूतपूर्व्वं सहसैवोत्पद्येतानिमित्तमेव हीयमानस्यातुरस्य तच्चारिष्टमिति विद्यादिति वर्णाधिकारः ॥ ७ ॥

स्वराधिकारस्तु हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतझर्झरानूकाः प्रकृतिस्वरा भवन्ति। यांश्चापरानवेक्ष्यमाणान् विद्यादनूकतोऽन्यथा वापि निर्द्दिश्यमानांस्तज्ज्ञैः। शुककलग्रहग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णाश्चातुराणां स्वरा वैकारिका भवन्ति। यांश्चापरानवेक्ष्यमाणानपि विद्यात् प्राग्विकृतादद्भुतोत्पन्नानिति प्रकृतिविकृतिस्वरा व्याख्याता भवन्ति। तत्र प्रकृतिवैकारिकाणां स्वराणामाभिनिर्वृत्तिः स्वरानेकत्वमेकत्वं चानेकत्वमप्रशस्तमिति स्वराधिकारः। इति वर्णस्वराधिकारौ यथावदुक्तौ मुमूर्षतां ज्ञानार्थमिति ॥ ८ ॥

भवन्ति चात्र ।

यस्य वैकारिको वर्णः शरीर उपपद्यते ।
अर्द्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः ॥
नीलं वा यदि वा श्यामं ताम्रं वा यदि वारुणम् ।
मुखार्द्धमन्यथा वर्णो मुखार्द्धेऽरिष्टमुच्यते ॥
स्नेहो मुखार्द्धे सुव्यक्तो रौक्ष्यमर्द्धमुखे भृशम् ।
ग्लानिरर्द्धे तथा हर्षो मुखार्द्धे प्रेतलक्षणम् ॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः ।
आतुरस्याशु जायन्ते मुखे प्राणान् मुमुक्षतः ॥
पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंश्रितः ।
चूर्णको वापि दन्तेषु लक्षणं तद् गतायुषः ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत् क्षीणबलेऽन्तकृत् ॥ ९ ॥
यस्य नीलावुभावोष्ठौ पक्वजाम्बवसन्निभौ ।
मुमूर्षुरिति तं विद्यान्नरं धीरो गतायुषम् ॥
एको वा यदि वानेको यस्य वैकारिकः स्वरः ।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः ॥
यच्चान्यदपि किञ्चित् स्याद्वैकृतं स्वरवर्णयोः ।
बलमांसविहीनस्य तत् सर्व्वं मरणोदयः ॥ १० ॥

तत्र श्लोकः ।

इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम् ।
यस्तु सम्यग्विजानाति नायुर्ज्ञाने स मुह्यति ॥ ११ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
वर्णस्वरीयमिन्द्रियं नाम प्रथमोऽध्यायः ॥ १ ॥

अथातः पुष्पितकमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

पुष्पं यथा पूर्व्वरूपं फलस्येह भविष्यतः ।
तथा लिङ्गमरिष्टाख्यं पूर्व्वरूपं मरिष्यतः ॥
अप्येवन्तु भवेत् पुष्पं फलेनाननुबन्धि यत् ॥
फलञ्चापि भवेत् किञ्चिद् यस्य पुष्पं न पूर्व्वजम् ।
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥ २ ॥

मिथ्यादृष्टमरिष्टाभमनरिष्टमजानता ।
अरिष्टं वाप्यसम्बुद्धमेतत् प्रज्ञापराधजम् ॥ ३ ॥

ज्ञानसम्बुद्धनार्थन्तु लिङ्गैर्मरणपूर्व्वजैः ।
पुष्पितानुपदेक्ष्यामो नरान् बहुविधान् बहून् ॥
नानापुष्पोपमो गन्धो यस्य भाति दिवानिशम् ।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः ।
स ना संवत्सरादूर्द्ध्वं जहातीति विनिश्चयः ॥ ४ ॥

एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत् ।
इष्टैर्वा यदि वानिष्टैः स च पुष्पित उच्यते ॥
समासेनाशुभान् गन्धानेकत्वेनाथवा पुनः ।
आजिघ्रेद् यस्य गात्रेषु तं विद्यात् पुष्पितं भिषक् ॥ ५ ॥

आप्लुतानाप्लुते काये यस्य गन्धाः शुभाशुभाः ।
व्यत्यासेनाभिमिलिताः सुरः स च पुष्पित उच्यते ॥

तद्यथा चन्दनं कुष्ठं तगरागुरुणी मधु ।
माल्यं मूत्रपुरीषे वाऽमृतानि कुणपानि वा ॥
ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।
तेऽप्यनेनानुमानेन विज्ञेया विकृतिं गताः ॥
इदन्त्वाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।
वक्ष्यामो यदभिज्ञाय भिषङ्मरणमादिशेत् ॥ ६ ॥
वियोनिर्विदुरो गन्धो यस्य गात्रेषु जायते ।
इष्टो वा यदि वानिष्टो न स जीवति तां समाम् ॥ ७ ॥
एतावद्गन्धविज्ञानं रसज्ञानमतःपरम् ।
आतुराणां शरीरेषु वक्ष्यामो विधिपूर्व्वकम् ॥ ८ ॥
यो रसः प्रकृतिस्थानां नराणां देहसम्भवः ।
स एषां चरमे काले विकारं भजते द्वयम् ॥
कश्चिदेवास्यवैरस्यमत्यर्थमुपपद्यते ।
स्वादुत्वमपरस्यापि विपुलं भजते रसः ॥
तमनेनानुमानेन विद्याद्विकृतिमागतम् ।
मनुष्यो हि मनुष्यस्य कथं रसवाप्नुयात् ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्व्वशः ॥ ९ ॥

तत्र श्लोकः ।

यान्येतानि मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतत् फलं मरणमादिशेत् ॥ १० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृत इन्द्रियस्थाने
पुष्पितकमिन्द्रियं नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातः परिमर्शनीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक् ।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत ॥ २ ॥

स्पर्शप्राधान्येनातुरस्यायुषः प्रमाणावशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना केवलमस्य शरीरं स्पृशेत्, परिमर्शयेद्वान्येन । परिमृशता तु खल्वातुरशरीरमिमे भावास्तत्र तत्रावबोद्धव्या भवन्ति । तद्यथा—सततं स्पन्दमानानां शरीरदेशानां स्तम्भः, नित्योष्मणां शीतभावः, मृदूनां दारुणत्वम्, श्लक्ष्णानां खरत्वम्, सतामसद्भावः, सन्धीनां स्रंसभ्रंशच्यवनानि । मांसशोणितयोर्वीतभावः, दारुणत्वम्, स्वेदानुबन्धः स्तम्भो वा । यच्चान्यदपि किञ्चिदीदृशं विकृतमनिमित्तं स्यादिति लक्षणं स्पृश्यानां भावानाम् ॥ ३ ॥

तत्रास्ततोऽनुव्याख्यास्यामः । तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिग्गुदर-पार्श्व-पृष्ठेषिकापाणिग्रीवा-ताल्वोष्ठललाटं स्विन्नं शीतं स्तब्धं दारुणं वीतमांसशोणितं वा स्यात् परासुरयं पुरुषो न चिरात् कालं मरिष्यतीति विद्यात् ॥ ४ ॥

तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवंक्षण-गुदवृषणमेढ्रनाभ्यंसस्तनमणिकहनुपर्शुकानासिकाकर्णाक्षिभ्रू-शङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्कन्नानि स्युः परासुरयं पुरुषो न चिरात् कालं मरिष्यतीति विद्यात् ॥ ५ ॥

तथास्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीश्च लक्षयेत्। तस्य चेदुच्छ्वासोऽतिदीर्घोऽतिह्रस्वो वा स्यात् परासुरिति विद्यात्। तस्य चेन् मन्ये परिमृश्यमाने न स्पन्देयातां परासुरिति विद्यात्। तस्य चेद्दन्ताः प्रकीर्णाः श्वेताजातशर्कराः स्युः परासुरिति विद्यात्। तस्य चेत् पक्ष्माणि जटाबद्धानि स्युः परासुरिति विद्यात्। तस्य चेच्चक्षुषी प्रकृतिहीने विकृतियुक्ते अनुग्रतूपिण्डिते अतिप्रविष्टे अतिजिह्मे अतिविषमे अतिप्रस्रुते अतिविमुक्तबन्धने सततोन्मिषिते सततनिमिषिते निमेषोन्मेषातिप्रवृत्ते विभ्रान्तदृष्टिके विपरीतदृष्टिके हीनदृष्टिके व्यस्तदृष्टिके नकुलान्धे कपोतान्धेऽलातवर्णे कृष्णनीलपीतश्यावताम्रहरितहारिद्रशुक्लवैकारिकाणां वर्णानामन्यतमेनातिसंप्लुते वा स्यातां तदा परासुरिति विद्यात्॥ ६॥

अथास्य केशलोमान्यायच्छेत्। तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन् न चेद्वेदयेयुस्तं परासुरिति विद्यात्। तस्य चेदुदरे शिराः प्रकाशेरन् श्यावताम्रनीलहारिद्रशुक्ला वा स्युः परासुरिति विद्यात्। तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युस्तं परासुरिति विद्यात्। अथास्याङ्गुलीर्लक्षयेत् तस्य चेदङ्गुलय आयम्यमाना न स्फुटेयुस्तं परासुरिति विद्यात्॥ ७॥

भवति चात्र।

एतान् स्पृश्यान् बहून् भावान् यः स्पृशन्नवबुध्यते।
आतुरे न स सम्मोहमायुर्ज्ञानस्य गच्छति॥ ८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने परिमर्शनीयमिन्द्रियं नाम तृतीयोऽध्यायः॥ ३॥

चतुर्थोऽध्यायः।

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित्।
आयुःप्रमाणं जिज्ञासुर्भिषक् तन्नो निबोधत ॥
अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः।
अज्ञा हि वितथं ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसम्भवम्।
आलक्ष्यतानिमित्तेन लक्षणं मरणाय तत् ॥ २ ॥
इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम्।
तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ३ ॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम्।
विगीतमुभयन्त्वेतत् पश्यन् मरणमृच्छति ॥ ४ ॥
यस्य दर्शनमायाति मारुतोऽम्बरगोचरः।
अग्निना याति वा दीप्तस्तस्यायुःक्षयमादिशेत् ॥ ५ ॥
जले सुविमले जालमजालावतते नरः।
स्थिरे गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते ॥ ६ ॥
जाग्रत् पश्यति यः प्रेतान् रक्षांसि विविधानि च।
अन्यद्वाप्यद्भुतं किञ्चिज्जीवितात् परिमुच्यते ॥ ७ ॥
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्।
कृष्णं वा यदि वा शुक्लं निशां व्रजति सप्तमीम् ॥ ८ ॥
मरीचीनसतोऽमेघान् मेघान् वाप्यसतोऽम्बरे।

विदुग्रती वा विना शेषैर्यः पश्यति स नश्यति ॥ ९ ॥
मृण्मयीमिव यः पार्वीं कृष्णाम्बरसमावृताम् ।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ १० ॥
अपर्व्वणि यदा पश्येत् सूर्य्याचन्द्रमसोर्ग्रहम् ।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ ११ ॥
नक्तं सूर्य्यमहश्चन्द्रमनग्नौ धूममुत्थितम् ।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १२ ॥
प्रभावतः प्रभाहीनान्निष्प्रभान् ये प्रभावतः ।
नरा विलिङ्गान् पश्यन्ति भावान् प्राणान् जिहासवः ॥१३॥
व्याकृतीनि विवर्णानि विसंख्योपगतानि च ।
विनिर्मितानि पश्यन्ति रूपाण्यायुःक्षये नराः ॥ १४ ॥
यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न पश्यति ।
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥ १५ ॥
अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते ।
तावुभौ पश्यतः क्षिप्रं यमक्षयमसंशयम् ॥ १६ ॥
संवृताङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति गतासुं तं बुद्धिमान् परिवर्ज्जयेत् ॥ १७ ॥
विपर्य्ययेण यो विद्याद्गन्धानां साध्वसाधुताम् ।
न चैतान् सर्व्वशो विद्यात् तं विद्याद्विगतायुषम् ॥ १८॥
यो रसान् न विजानाति न वा जानाति तत्त्वतः ।
मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ १९ ॥
उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान् ।
स्पृष्ट्वा विद्यात् ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥ २० ॥

अन्तरेण तपस्तीव्रं योगं वा विधिपूर्व्वकम्।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमुपपद्यते॥ २१॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान् न पश्यति।
विपर्य्ययेण यो विद्यात् तं विद्याद् विगतायुषम्॥ २२॥
स्वस्थाः प्रज्ञाविपर्य्यासैरिन्द्रियार्थेषु वैकृतम्।
पश्यन्ति ये सुबहुशस्तेषां मरणमादिशेत्॥ २३॥

तत्र श्लोकः।

एतदिन्द्रियविज्ञानं यः पश्यति यथातथं।
मरणं जीवितञ्चैव स भिषग्ज्ञातुमर्हति॥ २४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने इन्द्रियानीकं नाम चतुर्थोऽध्यायः॥ ४॥

पञ्चमोऽध्यायः।

अथातः पूर्व्वरूपीयमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः॥ १॥

पूर्व्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक्।
भिन्नाभिन्नानि वक्ष्यामो भिषजां ज्ञानवृद्धये॥ २॥
पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया।
यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः॥ ३॥
अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्।
विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्॥ ४॥

पूर्व्वरूपैकदेशांस्तु वक्ष्यामोऽन्यान् सुदारुणान्।
ये रोगाननुबध्नन्ति मृत्युर्य्यैरेव बुध्यते॥ ५॥
बलञ्च हीयते यस्य प्रतिश्यायश्च वर्द्धते।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते॥ ६॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम्।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति॥ ७॥
प्रेतैः सह पिवेन्मद्यं स्वप्ने यः कृष्यते शुना।
स घोरं ज्वरमासाद्य न जीवेन्न च मुच्यते *॥ ८॥
लाक्षारक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात्।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते॥ ९॥
रक्तस्रग्रक्तसर्व्वाङ्गो रक्तवासा मुहुर्हसन्।
यः स्वप्ने नीयते नार्य्या स रक्तं प्राप्य सीदति॥ १०॥
शूलाटोपान्त्रकूजाश्च दौर्ब्बल्यं चातिमात्रया।
नखादिषु च वैवर्णं गुल्मेनान्तकरो ग्रहः॥ ११॥
लताकण्टकिनी यस्य दारुणा हृदि जायते।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम्॥ १२॥
कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्य्यते।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम्॥ १३॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्च्चिषम्।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः॥ १४॥
स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्नन्ति मक्षिकाः।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते॥ १५॥

* सुघोरं ज्वरमासाद्य स जीवमवसज्यति इति पाठान्तरम्।

स्नेहं बहुविधं स्वप्ने चाण्डालैः सह यः पिबेत् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १६ ॥
ध्यानायासौ तथोद्वेगो मोहश्चास्थानसम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्व्वकः ॥ १७ ॥
आहारद्वेषणं यस्य लुप्तचित्तमुदर्हितम् ।
विद्याद् धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १८ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छापिपासाबहुलं हन्त्युन्मादः शरीरिणम् ॥ १९ ॥
नृत्यन् रक्षोगणैः सार्द्धं यः स्वप्नेऽम्भसि मज्जति ।
स प्राप्य भृशमुन्मादं याति लोकमितःपरम् ॥ २० ॥
असत् तमः पश्यति यो यः शृणोत्यसतः स्वनान् ।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण बध्यते ॥ २१ ॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम् ।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः ॥ २२ ॥
स्तभ्येते प्रतिबुद्धस्य हनू मन्ये तथाक्षिणी ।
यस्य तं बहिरायामो गृहीत्वा हन्त्यसंशयम् ॥ २३ ॥
शष्कुलीर्व्वाप्यपूपान् वा स्वप्ने खादति यो नरः ।
स चेत् प्रच्छर्द्दयेत् तादृक् प्रतिबुद्धो न जीवति ॥ २४ ॥
एतानि पूर्व्वरूपाणि यः सम्यगवबुध्यते ।
स एषामनुबन्धञ्च फलञ्च ज्ञातुमर्हति ॥ २५ ॥
य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत् ।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा ॥ २६ ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः ।

वयांसि च विलीयन्ते स्वप्ने मौण्ड्यामियाच्च यः ॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्य्यते।
रक्षःप्रेतपिशाचस्त्रीचण्डालद्रविडान्ध्रकैः ॥
वंशवेत्रलतापाशतृणकण्टकसङ्कटे।
प्रमुह्यति च यः स्वप्ने यो गच्छन् प्रपतत्यपि ॥
भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि ॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते।
स्वप्ने मज्जति शीघ्रेण स्रोतसा नीयते च यः ॥
स्नेहपानं तथाभ्यङ्गः प्रच्छर्द्दनविरेचने।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ ॥
उपानद्युगनाशश्च प्रपातः पदचर्म्मणोः।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चापि भर्त्सनम् ॥
चन्द्रतारार्कनक्षत्रदेवतादीपचक्षुषाम्।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥
रक्तपुष्पं वनं भूमिं पापकर्म्मालयं चिताम्।
गुहान्धकारसम्बाधं स्वप्ने यः प्रविशत्यपि ॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम्।
दारुणामटवीं स्वप्ने कपियुक्तः प्रयाति वा ॥
कषायिणामसौम्यानां नग्नानां दण्डधारिणाम्।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥ २७ ॥
कृष्णा पापानाचारा दीर्घकेशनखस्तनी।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ २८ ॥

इतेऽते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ॥ ३१ ॥
मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे ॥ ३२ ॥
नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा ।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा ॥ ३३ ॥
दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा ।
भाविकं दोषजञ्चैव स्वप्नं सप्तविधं विदुः ॥ ३४ ॥
तत्र पञ्चविधं पूर्व्वमफलं भिषगादिशेत् ।
दिवास्वप्नमतिह्रस्वमतिदीर्घञ्च बुद्धिमान् ॥ ३५ ॥
दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत् ।
न स्वपेद् यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ३६ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ।
पश्येत सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम् ॥ ३७ ॥

तत्र श्लोकः ।

पूर्व्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान् ।
न स मोहादसाध्येषु कर्म्माण्यारभते भिषक् ॥ ३८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
पूर्व्वरूपीयमिन्द्रियं नाम पञ्चमोऽध्यायः ॥ ५ ॥

अथातः कतमानि शरीरीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

कतमानि शरीराणि व्याधिमन्ति महामुने ।
यानि वैद्यः परिहरेद् येषु कर्म्म न सिध्यति ॥
इत्यात्रेयोऽग्निवेशेन प्रश्नं पृष्टः पुनर्व्वसुः ।
आचचक्षे यथा तस्मै भगवांस्तन्निबोधत ॥ २ ॥
यस्य वै भाषमाणस्य रुजत्यूर्द्धमुरो भृशम् ।
अन्नं वा च्यवतेऽपक्वं स्थितं वापि न जीर्य्यति ॥
बलञ्च हीयते शीघ्रं तृष्णा चातिप्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्ज्जयेत् ॥ ३ ॥
हिक्का गम्भीरजा यस्य शोणितञ्चातिसार्य्यते ।
न तस्मै भेषजं दद्यात् स्मरन्नात्रेयशासनम् ॥ ४ ॥
आनाहश्चातिसारश्च यमेतौ दुर्ब्बलं नरम् ।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥ ५ ॥
आनाहश्चातितृष्णा च कर्षितं यमुभौ भृशम् ।
विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ॥ ६ ॥
ज्वरः पौर्व्वाह्णिको यस्य शुष्ककासश्च दारुणः ।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ ७ ॥
ज्वरो यस्यापराह्णे तु श्लेष्मकासश्च दारुणः ।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ ८ ॥
यस्य मूत्रं पुरीषञ्च ग्रथितं सम्प्रवर्त्तते ।

निरुष्मणो जठरिणः श्वसतो न स जीवति ॥ ९ ॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति ।
ज्ञातिसंघं स संक्लेश्य तेन रोगेण हन्यते ॥ १० ॥
श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।
सीदतश्चाप्युभे जंघे तं भिषक् परिवर्ज्जयेत् ॥ ११ ॥
शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १२ ॥
उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः ।
सततं च्यवते यस्य दूरात् तं परिवर्ज्जयेत् ॥ १३ ॥
हृष्टरोमा सान्द्रमूत्रः शुष्ककासज्वरार्द्दितः ।
क्षीणमांसो नरो दूराद् वर्ज्जनीयो वैद्येन जानता ॥ १४ ॥
त्रयः प्रकुपिता यस्य दोषाः कोष्ठेऽभिलक्षिताः ।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥ १५ ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्ब्बलस्य विशेषेण नरस्यान्ताय जायते ॥ १६ ॥
पाण्डुरश्च कृशोऽत्यर्थं तृष्णयातिपरिप्लुतः ।
डम्बरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता ॥ १६ ॥
हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया ।
प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्ज्जयेत् ॥ १७ ॥
व्यायच्छते ताम्यति च शर्म्म किञ्चिन्न विन्दति ।
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥ १८ ॥
विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम् ।
जायन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ १९ ॥

बलं विज्ञानमारोग्यं यहणी मांसशोणितम् ।
एतानि यस्य क्षीयन्ते क्षिप्रं क्षिप्रं स क्षीयते ॥ २० ॥
विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २१ ॥

तत्र श्लोकः ।

इत्येतानि शरीराणि व्याधिमन्ति विवर्ज्जयेत् ।
न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमात् ॥ २२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
कतमानिशरीरीयमिन्द्रियं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातः पन्नरूपीयमिन्द्रियं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

दृष्ट्वां यस्य विजानीयात् पन्नरूपां कुमारिकाम् ।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम् ॥ २ ॥
ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्य छाया प्रेतस्तथाविधः ॥ ३ ॥
छिन्ना छिद्राकुला छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधा छिन्ना विशिरा विकृता च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्व्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ४ ॥

संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्त्तते यस्य स्वस्थोऽपि प्रेत एव सः ॥ ५ ॥
संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या ।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु ।
छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया ॥ ६ ॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च ॥
रूक्षा श्यावारुणा या तु वायवी सा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥
शुद्धवैदूर्य्यविमला सुस्निग्धा चाम्भसी शुभा ।
स्थिरा स्निग्धायता श्लक्ष्णा श्यामा श्वेता च पार्थिवी ॥७॥
वायवी गर्हिता त्वासां चतस्रः सुखोदयाः ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥ ८ ॥
स्यात् तैजसी प्रभा सर्व्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुरासिता ॥
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विपुलाश्च याः ।
ताः शुभा रूक्षमलिनाः संक्षिप्ताश्चाशुभोदयाः ॥ ९ ॥
वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते च्छाया विकृष्टा भाः प्रकाशते ॥ १० ॥
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले च्छायाः प्रभाश्रयाः ॥ ११ ॥
कामलाक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।

सन्त्रासश्चोष्णता चाङ्गे यस्य तं परिवर्ज्जयेत् ॥ १२ ॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः।
मुहुर्म्मुहुर्न सप्ताहं स जीवति विकत्थनः ॥ १३ ॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः।
व्यापन्ना ग्रहणीप्रायाः सोऽर्द्धमासं न जीवति ॥ १४ ॥
उपरुद्धस्य योगेन कर्षितस्याल्पमश्नतः।
बहुमूत्रपुरीषं स्याद् यस्य तं परिवर्ज्जयेत् ॥ १५ ॥
दुर्ब्बलो बहु भुङ्क्ते यः प्राग्भुक्तादन्नमातुरः।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ १६ ॥
वर्द्धिष्णु गुणसम्पन्नमन्नमश्नाति यो नरः।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥ १७ ॥
प्रकूजति प्रश्वसिति शिथिलञ्चातिसार्य्यते।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ १८ ॥
ह्रस्वञ्च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्व्वसुः ॥ १९ ॥
उर्द्धञ्च यः प्रश्वसिति श्लेष्मणा चाभिभूयते।
हीनवर्णबलाहारो नरो वा न स जीवति ॥ २० ॥
ऊर्द्धाग्रे नयने यस्य यस्यानारतकम्पने।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ २१ ॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म्म न सिध्यति ॥ २२ ॥
व्यावृत्तमुखजिह्वस्य भ्रुवौ यस्य च विच्युते।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २३ ॥

शेफस्थात्यर्थमुत्सिक्तं निःस्रुतौ वृषणौ भृशम् ।
अतश्चैव विपर्य्यासो विकृत्या प्रेतलक्षणम् ॥ २४ ॥
निचितं यस्य मांसन्तु त्वगस्थिचैव दृश्यते ।
क्षीणस्यानूनतस्तस्य मासमायुः परं भवेत् ॥ २५ ॥

तत्र श्लोकः ।

इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान् ।
आयुर्व्वेदविदित्याख्यां लभते कुशलो नरः ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

अथातोऽवाक्शिरसीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम् ॥ २ ॥
जटीभूतानि पक्ष्माणि दृष्टिश्चापि न गृह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ ३ ॥
यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदह्येते यथा प्रेतस्तथैव सः ॥ ४ ॥
भ्रुवोर्वा यदि वा मूर्द्ध्नि सीमन्तावर्त्तकान् बहून् ।
अपूर्व्वानकृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत् ॥ ५ ॥

वाक्रमेतेन जीवन्ति लक्षणेनातुरा नराः।
अरोगाणां पुनस्त्वेतत् षड्रात्रं परमुच्यते ॥ ६ ॥
आयम्योत्पाटितान् केशान् यो नरो नावबुध्यते।
अनातुरो वा रोगी वा षड्रात्रं नातिवर्त्तते ॥ ७ ॥
यस्य केशा निरभ्यङ्गा दृश्यन्तेऽभ्यक्तसन्निभाः।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत् ॥ ८ ॥
ग्लायतो नासिकावंशः पृथुत्वं यस्य गच्छति।
अशूनः शूनसङ्काशः प्रत्याख्येयः स जानता ॥ ९ ॥
अत्यर्थं विवृता यस्य यस्य चात्यर्थसंवृता।
जिह्वा वा परिशुष्का वा नासिका न स जीवति ॥ १० ॥
मुखं शब्दश्रवाश्चोष्ठौ शुक्लश्यावातिलोहितौ।
विकृतौ यस्य वा नीलौ न स रोगाद्विमुच्यते ॥ ११ ॥
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः।
विकृत्या न स रोगांस्तु विहायारोग्यमश्नुते ॥ १२ ॥
स्तब्धा निश्चेतना गुर्व्वी कण्टकोपचिता भृशम्।
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी ॥ १३ ॥
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निःश्वस्य ताम्यति।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत् ॥ १४ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम्।
भवत्यायुःक्षये क्रूरमथवापि भवेन् मृदु ॥ १५ ॥
घट्टयन् जानुना जानु पादावुद्यम्य पातयन्।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १६ ॥
दन्तैश्छिन्दन् नखाग्राणि नखैश्छिन्दन् शिरोरुहान्।

काष्ठेन भूमिं विलिखन् न रोगात् परिमुच्यते ॥ १७ ॥
दन्तान् खादति यो जाग्रदसाम्ना विरुदन् हसन् ।
विजानाति न चेद् दुःखं न स रोगाद् विमुच्यते ॥ १८ ॥
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ।
उच्चैश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ १९ ॥
यैर्विन्दति पुरा भावैः समेतैः परमां रतिम् ।
तैरेव रममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ २० ॥
न बिभर्त्ति शिरोग्रीवं पृष्ठं वा भारमात्मनः ।
न हनू पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २१ ॥
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणञ्च सन्धीनां मुमूर्षोरुपजायते ॥ २२ ॥
गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २३ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च ।
आयुष्यन्तं गते जन्तोर्बलञ्च परिहीयते ॥ २४ ॥
शिरो विक्षिपते कृच्छ्रान् मुञ्चयित्वा प्रपाणिको ।
ललाटप्रस्रुतस्वेदो मुमूर्षुः श्लथबन्धनः ॥ २५ ॥

तत्र श्लोकः ।

इमानि लिङ्गानि नरेषु बुद्धिमान्
विभावयेतावहितो मुहुर्मुहुः ।
क्षणेन भूत्वा ह्यपयान्ति कानिचिन्
न चाफलं लिङ्गमिहास्ति किञ्चन ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
अवाक्शिरसीयमिन्द्रियं नामाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।



अथातो यस्यश्यावीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥ २ ॥
निःसंज्ञः परिशुष्कास्यः संविग्नो व्याधिभिश्च यः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत् ॥ ३ ॥
हरिताश्च शिरा यस्य लोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ ४ ॥
शरीरान्ताश्च शोभन्ते शरीरञ्चोपशुष्यति ।
बलञ्च हीयते यस्य राजयक्ष्मा हिनस्ति तम् ॥ ५ ॥
अंसाभितापो हिक्का च दर्शनं शोणितस्य च ।
आनाहः पार्श्वशूलञ्च भवत्यन्ताय शोषिणः ॥ ६ ॥
वातव्याधिरपस्मारी कुष्ठी रक्तौ तथोदरी ।
गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति ।
अन्येष्वपि विकारेषु तान् भिषक् परिवर्ज्जयेत् ॥ ७ ॥
विरेचनहृतानाहो यस्तृष्णानुगतो नरः ।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥ ८ ॥
पेयं पातुं न शक्नोति शुष्कत्वादास्यकण्ठयोः ।
उरसश्च विबद्धत्वाद् यो नरो न स जीवति ॥ ९ ॥
स्वरस्य दुर्ब्बलीभावं हानिञ्च बलवर्णयोः ।

रोगवृद्धिमयुक्तान्ना च दृष्ट्वा मरणमादिशेत् ॥ १० ॥
ऊर्द्ध्वश्वासं गतोष्माणं शूलोपहतवंक्षणम् ।
शर्म्म चानधिगच्छन्तं बुद्धिमान् परिवर्ज्जयेत् ॥ ११ ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ।
श्रोतारञ्चाप्यशब्दस्य दूरतः परिवर्ज्जयेत् ॥ १२ ॥
यं नरं सहसा रोगो दुर्ब्बलं परिमुञ्चति ।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥
अथ चेज्ज्ञातयस्तस्य याचेरन् प्रणिपाततः ।
रसेनाद्यादिति ब्रूयान्नास्मै दद्याद्विशोधनम् ॥
मासेन चेन्न दृश्येत विशेषस्तस्य शोभनः ।
रसैश्चान्यैर्बहुविधैर्दुर्लभं तस्य जीवितम् ॥ १३ ॥
निष्ठ्यूतञ्च पुरीषञ्च रेतश्चाम्भसि मज्जति ।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥ १४ ॥
निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक् ।
तच्च सीदेत् पयः प्राप्य न स जीवितुमर्हति ॥ १५ ॥
पित्तमुष्मानुगं यस्य शङ्खौ प्राप्य विशुष्यति ।
स रोगः शङ्खको नाम त्रिरात्राद्धन्ति मानवम् ॥ १६ ॥
सफेनं रुधिरं यस्य मुहुरास्यात् प्रसिच्यते ।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः ॥ १७ ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान् न स जीवति ॥ १८ ॥

तत्र श्लोकौ ।

विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते ।

भवन्त्येतानि सम्यग्गेदन्यान्येवंविधानि च ॥
तानि सर्व्वाणि लक्ष्यन्ते न तु सर्व्वाणि मानवम्।
विशन्ति विनशिष्यन्तं तस्माद्बोध्यानि सर्व्वशः ॥ १९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
यस्यश्यावनिमित्तीयमिन्द्रियं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः।

अथातः सद्योमरणीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

सद्यस्त्विरतः प्राणान् लक्षणानि पृथक् पृथक्।
अग्निवेश प्रवक्ष्यामि संस्पृष्टो येन जीवति ॥ २ ॥
वाताष्ठीला सुसंवृत्ता तिष्ठन्ती दारुणा हृदि।
तृष्णयाभिपरीतस्य सद्यो मुष्णाति जीवितम् ॥ ३ ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम्।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम् ॥ ४ ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम् ॥ ५ ॥
क्षीणशोणितमांसस्य वायुरूर्द्ध्वगतिश्चरन्।
उभे मन्ये समे यस्य सद्यो मुष्णाति जीवितम् ॥ ६ ॥
अन्तरेण गुदं गच्छन् नाभिञ्च सहसानिलः।
कृशस्य वंक्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥७॥

वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्यायताक्षस्य सद्यो मुष्णाति जीवितम् ॥ ८ ॥
हृदयञ्च गुदे चोभे गृहीत्वा मारुतो बली ।
दुर्ब्बलस्य विशेषेण सद्यो मुष्णाति जीवितम् ॥ ९ ॥
वंक्षणौ च गुदे चोभे गृहीत्वा मारुतो बली ।
श्वासं सञ्जनयन् जन्तोः सद्यो मुष्णाति जीवितम् ॥१०॥
नाभिं वस्तिशिरो मूत्रं पुरीषञ्चापि मारुतः ।
विबध्य जनयन् शूलं सद्यो मुष्णाति जीवितम् ॥ ११ ॥
भिद्यते वंक्षणौ यस्य वातशूलैः समन्ततः ।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥१२॥
आप्लुतं मारुतेनेह शरीरं यस्य केवलम् ।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥ १३॥
शरीरं शोफितं यस्य वातशोफेन देहिनः ।
भिन्नं पुरीषं तृष्णा च सद्यो जह्यात् स जीवितम् ॥१४॥
पक्वाशयसमुत्थाना यस्य स्यात् परिकर्त्तिका ।
तृष्णा गुदग्रहश्चोग्रः सद्यः प्राणान् जहाति सः ॥ १५ ॥
पक्वाशयमधिष्ठाय हत्वा संज्ञाञ्च मारुतः ।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥ १६ ॥
दन्ताः कर्द्दमदिग्धाभा मुखं चूर्णकसंयुतम् ।
शिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥ १७ ॥
तृष्णाश्वासशिरोरोगमोहदौर्ब्बल्यकूजनैः ।
स्पृष्टः प्राणान् जहात्याशु शकृद्भेदेन चातुरः ॥ १८ ॥

तत्र श्लोकः।

एतानि खलु लिङ्गानि यः सम्यगवबुध्यते।
स जीवितञ्च मर्त्त्यानां मरणञ्चापि बुध्यते॥ १९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने सद्योमरणीयमिन्द्रियं नाम दशमोऽध्यायः॥ १०॥

## एकादशोऽध्यायः।

अथातोऽनुज्योतीयमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः॥ १॥

अनुज्योतिरनेकाग्रो दुश्छायो दुर्म्मनाः सदा।
रतिं न लभते गन्ता परलोकं समान्तरे॥ २॥
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते।
लोकान्तरगतः पिण्डं भुङ्क्ते संवत्सरेण सः॥ ३॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम्।
संवत्सरान्ते जन्तुः स सम्पश्यति महत् तमः॥ ४॥
विकृत्या विनिमित्तं यः शोभामुपचयं धनम्।
प्राप्नोत्यतो वा विभ्रंशं समान्तं तस्य जीवितम्॥ ५॥
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।
षड़ेतानि निवर्त्तन्ते षड़्भिर्मासैर्मरिष्यतः॥ ६॥
धमनीनामपूर्व्वाणां जालमत्यर्थशोभनम्।
ललाटे दृश्यते यस्य षण्मासान् न स जीवति॥ ७॥

लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते ।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत् ॥ ८ ॥
शरीरकम्पः संमोहो गतिर्वैषम्यमेव च ।
मत्तस्येवोपलक्ष्यन्ते यस्य मासं न जीवति ॥ ९ ॥
रेतोमूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि ।
स मासात् स्वजनद्वेष्टा मृत्युवारिणि मज्जति ॥ १० ॥
हस्तपादं मुखञ्चोभे विशेषाद् यस्य शुष्यतः ।
शूयेते वा विना देहात् स च मासाद्विनश्यति ॥ ११ ॥
ललाटे वस्तिशीर्षे वा नीला यस्य प्रकाशते ।
राजी बालेन्दुकुटिला न स जीवितुमर्हति ॥ १२ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विलीयन्ते नचिरात् स विनश्यति ॥ १३ ॥
ग्रीवामर्दो न बलवान् जिह्वाश्वयथुरेव च ।
ब्रध्नास्यगलपाकश्च यस्य पक्षं तमादिशेत् ॥ १४ ॥
संभ्रमोऽतिप्रलापोऽतिपर्व्वभेदश्च दारुणः ।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥ १५ ॥
प्रमुह्य लुञ्चयेत् केशान् परान् गृह्णात्यतीव च ।
नरः स्वस्थवदाहारवचनः कालचोदितः ॥ १६ ॥
समीपे चक्षुषोः कृत्वा मृगयेताङ्गुलीकरम् ।
स्मयतेऽपि च कालांश्च ऊर्द्ध्वाचोऽनिमिषेक्षणः ॥
शयनादासनादङ्गात् काष्ठात् कुड्यादथापि च ।
असन्मृगयते किञ्चित् स मुह्यन् कालचोदितः ॥ १७ ॥
अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ ।

शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥ १८ ॥
आश्रयंस्तं समीपस्थं स्वजनं जनमेव वा ।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥ १९ ॥
अयोगमतियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युगपद्दृष्ट्वा भेषजं नावचारयेत् ॥ २० ॥
अतिप्रवृद्ध्या दोषाणां मनसश्च बलक्षयात् ।
वासमुत्सृजति क्षिप्रं शरीरी देहसंज्ञकम् ॥ २१ ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम् ।
हीयतेऽसुक्षये निद्रा नित्या भवति वा नवा ॥ २२ ॥
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।
वशगाः सर्व्व एवैते बोद्धव्याः समवर्त्तिनः ॥
एतेषु रोगः क्रमते भेषजं प्रतिहन्यते ।
नैषामन्नानि भुञ्जीत न चोदकमपि स्पृशेत् ॥ २३ ॥
पादाः समेताश्चत्वारः सम्पन्नाः साधकैर्गुणैः ।
व्यर्था गतायुषो द्रव्याद् विना नास्ति गुणोदयः ॥ २४ ॥
परीक्ष्यमायुर्भिषजा नीरुजस्यातुरस्य च ।
आयुर्व्वेदफलं कृत्स्नमायुर्ज्ञे ह्यनुवर्त्तते ॥ २५ ॥

तत्र श्लोकः ।

क्रियापथमतिक्रान्ताः केवलं देहमाप्लुताः ।
दोषा यत् कुर्व्वते चिह्नं तदरिष्टं निरुच्यते ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृत इन्द्रियस्थाने
अनुज्योतीयमिन्द्रियं नामैकादशोऽध्यायः ॥ ११ ॥

---

अथातो गोमयचूर्णीयमिन्द्रियं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

यस्य गोमयचूर्णाभं चूर्णं मूर्द्धनि जायते ।
सस्नेहं भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ २ ॥
निर्वर्षन्निव यः पादौ च्युतांसः परिधावति ।
विकृत्या न स लोकेऽस्मिंश्चिरं वसति मानवः ॥ ३ ॥
यस्य स्नातानुलिप्तस्य पूर्व्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्व्वगात्रेषु सोऽर्द्धमासं न जीवति ॥ ४ ॥
यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ ५ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥ ६
आहारमपि भुञ्जानो भिषजा सूपकल्पितम् ।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥ ७ ॥
दूताधिकारे वक्ष्यन्ते लक्षणानि मुमूर्षताम् ।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्यायादसंशयम् ॥ ८ ॥
मुक्तकेशोऽथवा नग्नो रुदत्यप्रयतोऽथवा ।
भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥
सुप्ते भिषजि ये दूताश्छिन्दन्त्यपि च भिन्दति ।
आगच्छन्ति भिषक् तेषां न भर्त्तारमनुव्रजेत् ॥ ९ ॥
जुह्वत्यग्निं तथा पिण्डान् पितृभ्यो निर्व्वपत्यपि ।

वैद्यो दूता य आयान्ति ते घ्नन्ति प्रजिघांसवः ॥ १० ॥
कथयन्त्यप्रशस्तानि चिन्तयन्त्यथवा पुनः ।
वैद्यो दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ११ ॥
मृतदग्धविनष्टानि भजति व्याहरन्त्यपि ।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १२ ॥
विकारसामान्यगुणे देशे कालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं समुपाचरेत् ॥ १३ ॥
दीनभीतद्रुतत्रस्तमलिनानसतीं स्त्रियम् ।
त्रीन् व्याकृतींश्च षण्डांश्च दूतान् विद्यान् मुमूर्षताम् ॥१४॥
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा ।
संप्रेक्ष्य चोग्रकर्म्माणं न वैद्यो गन्तुमर्हति ॥ १५ ॥
आतुरार्थमनुप्राप्तं खरोष्ट्ररथवाहनम् ।
दूतं दृष्ट्वा भिषग्विद्यादातुरस्य पराभवम् ॥ १६ ॥
पलालतुषमांसास्थिकेशलोमनखद्विजान् ।
मार्ज्जनीसूर्पमुषलानुपानद्भग्नविच्युते ॥
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्ट्रमश्म च ।
तत्पूर्व्वदर्शने दूता व्याहरन्ति मुमूर्षताम् ॥ १७ ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्यन्निमित्तमशुभं तन्न नानुव्रजेद्भिषक् ॥ १८ ॥
तथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा ।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत् ॥

तत्पूर्व्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत् ॥ १८ ॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम् ।
पथ्यातुरकुलानाञ्च वक्ष्याम्यौत्पातिकं पुनः ॥ २० ॥
अवक्षुतं तथोत्कृष्टं स्खलनं पतनं तथा ।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम् ॥
वस्त्रोष्णीषोत्तरासङ्गच्छत्रोपानद्युगाश्रयम् ।
पतनं दर्शनं वापि मृतं व्यवसितं तथा ॥
चैत्यध्वजपताकानां पूर्णानां पतनानि च ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांशुभिः ॥
पथच्छेदो विड़ालेन शुना सर्पेण वा पुनः ।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति ॥
व्रजतां दर्शनञ्चैवमुत्तानानाञ्च दर्शनम् ।
इत्येतान्यप्रशस्तानि सर्व्वाण्याहुर्मनीषिणः ॥
एतानि पथि वैद्यस्य पश्यतातुरवर्त्मनि ।
शृखतापि न गन्तव्यं तदागारं विपश्चिता ॥ २१ ॥
इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम् ।
इमामपि च बुध्येत गृहावस्थां मुमूर्षताम् ॥ २२ ॥
प्रवेशे पूर्णकुम्भाग्निमृद्वीजफलसर्पिषाम् ।
वृषब्राह्मणरत्नानां देवतानाञ्च निर्गतिम् ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ।
भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥ २३ ॥
छिन्नभिन्नावभग्नानि दग्धानि मृदितानि च ।

दुर्व्वलानि च सेवन्ते मुमूर्षोर्वैभिषका जनाः ॥ २४ ॥
शयनं वसनं यानं गमनं भोजनं रुतम्।
श्रूयतेऽमङ्गलं यस्य नास्ति तस्य चिकित्सितम् ॥ २५ ॥
शयनं वसनं यानमन्यद् वापि परिच्छदम्।
प्रेतवद् यस्य कुर्व्वन्ति सुहृदः प्रेत एव सः ॥ २६ ॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैवोपशाम्यति।
निवाते सेन्धनं यस्य तस्य नास्ति चिकित्सितम् ॥ २७ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा।
अतिमात्रममात्राणि दुर्लभं तस्य जीवितम् ॥ २८ ॥

भवन्ति चात्र।

यद्द्वादशभिरध्यायैर्व्यासतः परिकीर्त्तितम्।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत् ॥
तत्समासेन वक्ष्यामि पर्य्यायान्तरमाश्रितम्।
पर्य्यायवचनं श्रुत्वा विज्ञानायोपकल्पते ॥ २९ ॥
अत्यर्थं पुनरेवेयं विवक्षा नोपपद्यते।
तस्मिन्नेवाधिकरणे यत् पूर्व्वमभिदर्शितम् ॥ २९ ॥
वसतां चरमे काले शरीरेषु शरीरिणाम्।
अव्ययानां विनाशाय देहेभ्यः प्रविवत्सताम् ॥
दृष्टांस्तितिक्षतां प्राणान् कान्तं वासं जिहासताम् ॥
तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम् ॥
विनाशायेह रूपाणि यान्यवस्थान्तराणि च।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम् ॥ ३० ॥
प्राणाः समुपरुध्यन्ते विज्ञानमुपरुध्यते।

वमन्ति बलमङ्गानि चेष्टा ह्युपरमन्ति च ॥
इन्द्रियाणि विनश्यन्ति खिलीभवति वेदना ।
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि ॥
स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः ।
उपप्लवन्ते पाप्मानः ओजस्तेजश्च नश्यति ॥
शीलं व्यावर्त्ततेऽत्यर्थं शक्तिश्च परिवर्त्तते ।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं गताः ॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः ।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगपि क्षयम् ॥
उष्माणः प्रलयं यान्ति विश्लेषं यान्ति सन्धयः ।
गन्धा विकृतिमायान्ति भेदं वर्णस्वरौ तथा ॥
वैवर्ण्यं भजते कायः कायच्छिद्रं विशुष्यति ।
धूमः सञ्जायते मूर्द्ध्नि दारुणाख्यश्च चूर्णकः ॥
सततस्पन्दना देशाः शरीरे येऽभिलक्षिताः ।
ते स्तम्भानुगताः सर्व्वे न चलन्ति कथञ्चन ॥
गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः ।
विपर्य्यासेन वर्त्तन्ते स्थानेष्वन्येषु तद्विधाः ॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते ।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्द्धनि ॥
भेषजानि न संवृत्तिं प्राप्नुवन्ति तथा रुचिम् ।
यानि चाप्युपपद्यन्ते तेषां कर्म्म न सिध्यति ॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः ॥ ३१ ॥
क्षिप्रं समभिवर्त्तन्ते प्रतिहत्य बलौजसी ।
शब्दः स्पर्शो रसो रूपं गन्धश्चेष्टा विचेष्टितम् ॥

उत्पद्यन्तेऽशुभान्येव प्रतिकर्म्मप्रवृत्तिषु ।
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्य्यते ।
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्द्धते ॥
कृत्स्नमौत्पातिकं घोरमनिष्टमुपलभ्यते ।
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ॥ ३१ ॥
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ॥
मरणायेह रूपाणि पश्यतापि भिषग्विदा ।
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ।
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातकम् ॥
आतुरस्य भवेद् दुःखमथवान्यस्य कस्यचित् ।
अध्रुवं मरणं यस्य नैनमिच्छेच्चिकित्सितुम् ॥ ३३ ॥
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता ।
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम् ॥
इतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः ।
आतुराचारशीलैस्तु द्रव्यसम्पत्तिलक्षणैः ॥ ३४ ॥
स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम् ।
अमुण्डजटिलं दूतं जातिवेशक्रियासमम् ॥
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च ।
अदारुणेषु नक्षत्रेष्वनुग्रेष्वध्रुवेषु च ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्द्दशीम् ।
मध्याह्नमर्द्धरात्रञ्च भूकम्पं राहुदर्शनम् ॥
विना देशमशस्तञ्चाशस्तौत्पातिकलक्षणम् ।
दूतं प्रशस्तमव्यग्रं निर्द्दिशेदागतं भिषक् ॥ ३५ ॥

दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥
सुरध्वजपताकानां फलानां पावकस्य च ।
कन्यानां वर्द्धमानानां बद्धस्यैकपशोस्तथा ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ।
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वड़वायाः स्त्रियास्तथा ॥
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥
मत्स्याजद्विजशङ्खानां मांसस्य च घृतस्य च ।
रुचकादर्शसिद्धार्थरोचनानाञ्च दर्शनम् ॥
गन्धः सुगन्धो वर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्तानां गिरः शुभाः ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ ३६ ॥
मङ्गलाचारसम्पन्नः सातुरो वैश्मिको जनः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥
धनैश्वर्य्यसुखावाप्तिरिष्टलाभः सुखेन च ।
द्रव्याणां तत्र योग्यानां योजना सिद्धिरेव च ॥ ३७ ॥
गृहप्रासादशैलानां नागानां वृषभस्य च ।
हयानां पुरुषाणाञ्च स्वप्ने समधिरोहणम् ॥

अर्णवानां प्रतरणं वृद्धिः सम्बाधनिःसृतिः ॥
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ।
सोमार्काग्निद्विजातीनां गवां नृणां यशस्विनाम् ।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः ।
स्वप्ने सुमनसाञ्चैव शुक्लानां दर्शनं शुभम् ॥
अश्वगोरथयानञ्च यानं पूर्व्वोत्तरेण च ।
रोदनं पतितोत्थानं द्विषताञ्चावमर्द्दनम् ॥ ३८ ॥
सत्त्वलक्षणसंयोगो भक्तिर्वैद्य द्विजातिषु ।
साध्यत्वं न च निर्व्वेदस्तदारोग्यस्य लक्षणम् ॥ ३९ ॥
आरोग्याद्बलमायुश्च सुखञ्च लभते महत् ।
इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणः ॥ ४० ॥

तत्र श्लोकौ ।

उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ।
दूतस्वप्नातुरोत्पातयुक्तिसिद्ध्यपाश्रयम् ॥ ४१ ॥

इतीदमुक्तं निखिलं यथातथं
तदन्ववेक्ष्यं सततं भिषग्विदा ।
तथा हि सिद्धिञ्च यशश्च शाश्वतं
स सिद्धकर्म्मा लभते धनानि च ॥ ४२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
गोमयचूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः ॥१२॥

इतीन्द्रियस्थानं सम्पूर्णम् ।

# चरक-संहिता

## चिकित्सास्थानम्

### प्रथमोऽध्यायः ।

#### रसायनपादः ।

अथातोऽभयामलकीयं रसायनपादं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

चिकित्सितं व्याधिहरं पथ्यं साधनमौषधम् ।
प्रायश्चित्तं प्रशमनं प्रकृतिस्थापनं हितम् ॥
विद्याद् भेषजनामानि भेषजं द्विविधञ्च तत् ।
स्वस्थस्योजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् ॥ २ ॥
अभेषजञ्च द्विविधं बाधनं सानुबाधनम् ॥ ३ ॥
स्वस्थस्योजस्करं यत् तु तद्वृष्यं तद्रसायनम् ॥ ४ ॥

प्रायः प्रायेण रोगाणां द्वितीयं प्रशमे मतम्।
प्रायःशब्दो विशेषार्थो ह्युभयं ह्युभयार्थकृत्॥ ५॥
दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः।
प्रभावर्णस्वरौदार्य्यं देहेन्द्रियबलं परम्॥
वाक्सिद्धिं प्रणतिं कान्तिं लभते ना रसायनात्।
लाभोपायो हि शस्तानां रसादीनां रसायनम्॥ ६॥
अपत्यसन्तानकरं यत् सद्यः सम्प्रहर्षणम्।
वाजीवातिबलो येन यात्यप्रतिहतः स्त्रियः॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते।
जीर्य्यतोऽप्यक्षयं शुक्रं फलवद् येन दृश्यते॥
प्रभूतशाखः शाखीव येन चैत्यो यथा महान्।
भवत्यर्च्यो * बहुमतः प्रजानां सुबहुप्रजः॥
सन्तानमूलं येनेह प्रेत्य चानन्त्यमश्नुते।
यशः श्रियं बलं पुष्टिं वाजीकरणमेव तत्॥ ७॥
स्वस्थस्योजस्करन्त्वेतद् द्विविधं प्रोक्तमौषधम्।
यद्व्याधिनिर्घातकरं वक्ष्यते तच्चिकित्सिते॥
चिकित्सितार्थ एतावान् विकाराणां यदौषधम्।
रसायनविधिश्चाग्रे वाजीकरणमेव च॥ ८॥
अभेषजमिति ज्ञेयं विपरीतं यदौषधात्।
तदसेव्यं निषेव्यन्तु प्रवक्ष्यामि यदौषधम्॥ ९॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः।
कुटीप्रावेशिकञ्चैव वातातपिकमेव च॥ १०॥

---

* भवत्यसौ इति वा पाठः।

कुटीप्रावेशिकस्यादौ विधिः समुपदेक्ष्यते ।
नृपवैद्यद्विजातीनां साधूनां पुण्यकर्म्मणाम् ॥
निवासे निर्भये शस्ते प्राप्योपकरणे पुरे ।
दिशि पूर्व्वोत्तरस्याञ्च सुभूमौ कारयेत् कुटीम् ॥
विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम् ।
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम् ॥
शब्दादीनामशस्तानामगम्यां स्त्रीविवर्ज्जिताम् ।
इष्टोपकरणोपेतां सक्तवैद्यौषधद्विजाम् ॥ ११ ॥
अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ।
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः ॥
धृतिस्मृतिबलं कृत्वा श्रद्दधानः समाहितः ।
विधूय मानसान् दोषान् मैत्रीं भूतेषु चिन्तयन् ॥
देवताः पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ।
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम् ॥ १२ ॥
तस्यां संशोधनैः शुद्धः सुखी जातबलः पुनः ।
रसायनं प्रयुञ्जीत तत् प्रवक्ष्यामि शोधनम् ॥ १३ ॥
हरीतकीनां चूर्णानि सैन्धवामलके गुड़म् ।
वचां विड़ङ्गं रजनीं पिप्पलीं विश्वभेषजम् ॥
पिबेदुष्णाम्बुना जन्तुः स्नेहस्वेदोपपादितः ॥ १४ ॥
तेन शुद्धशरीराय कृतसंसर्ज्जनाय च ।
त्रिरात्रं यावकं दद्यात् पञ्चाहं वापि सर्पिषा ।
सप्ताहं वा पुराणस्य यावच्छुद्धिस्तु वर्चसः ॥ १५ ॥
शुद्धकोष्ठन्तु तं ज्ञात्वा रसायनमुपाचरेत् ।

वयःप्रकृतिसात्म्यज्ञो यौगिकं यस्य यद्भवेत् ॥ १६ ॥
हरीतकीं पञ्चरसामुष्णामलवणां शिवाम् ।
दोषानुलोमिनीं लघ्वीं विद्याद्दीपनपाचनीम् ॥
आयुष्यां पौष्टिकीं धन्यां वयसः स्थापनीं पराम ।
सर्व्वरोगप्रशमनीं बुद्धीन्द्रियबलप्रदाम् ॥
कुष्ठं गुल्ममुदावर्त्तं शोषं पाण्डामयं मदम् ।
अर्शांसि ग्रहणीदोषं पुराणं विषमज्वरम् ॥
हृद्रोगं सशिरोरोगमतीसारमरोचकम् ।
कासं प्रमेहमानाहं प्लीहानमुदरं नवम् ॥
कफप्रसेकं वैस्वर्य्यं वैवर्ण्यं कामलां क्रिमीन् ।
श्वयथुं तमकं छर्द्दिं क्लैव्यमङ्गावसादनम् ॥
स्रोतोविबन्धान् विविधान् प्रलेपं हृदयोरसोः ।
स्मृतिबुद्धिप्रमोहञ्च जयेच्छीघ्रं हरीतकी ॥ १७ ॥
अजीर्णिनो रूक्षभुजः स्त्रीमद्यविषकर्षिताः ।
सेवेरन्नाभयामेते क्षुत्तृष्णोष्णार्द्दिताश्च ये ॥ १८ ॥
तान् गुणांस्तानि कर्म्माणि विद्यादामलकेष्वपि ।
यान्युक्तानि हरीतक्या वीर्य्यस्य तु विपर्य्ययः ॥ १९ ॥
अतश्चामृतकल्पानि विद्यात् कर्म्मभिरीदृशैः ।
हरीतकीनां शस्यानि भिषगामलकस्य च ॥ २० ॥
ओषधीनां परा भूमिर्हिमवान् शैलसत्तमः ।
तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि च ॥
आपूर्णरसवीर्य्याणि काले काले यथाविधि ।
आदित्यसलिलच्छायापवनप्रीणितानि च ॥

यान्यदग्धान्यपूतीनि निर्व्रणान्यगदानि च ।
तेषां प्रयोगं वक्ष्यामि फलानां कर्म्म चोत्तमम् ॥ २१
पञ्चानां पञ्चमूलानां भागान् दशपलोन्मितान् ।
हरीतकीसहस्रञ्च त्रिगुणामलकं नवम् ॥
विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम् ।
विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् ॥
बिल्वाग्निमन्थश्योणाकं काश्मर्य्यमथ पाटलीम् ।
पुनर्नवां सूर्पपर्ण्यौ बलामेरण्डमेव च ॥
जीवकर्षभकौ मेदां जीवन्तीं सशतावरीम् ।
शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥
इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत् ।
भागान् यथोक्तांस्तत् सर्व्वं साध्यं दशगुणेऽम्भसि ॥
दशभागावशेषन्तु पूतं तद् ग्राहयेद्रसम् ।
हरीतकीश्च ताः सर्व्वाः सर्व्वाण्यामलकानि च ॥
तानि सर्व्वाण्यनस्थीनि फलान्याप्लोथ्य कूर्च्चनैः ।
विनीय तस्मिन्निर्य्यूहे चूर्णानीमानि दापयेत् ॥
मण्डूकपर्ण्याः पिप्पल्याः शङ्खपुष्प्याः प्लवस्य च ।
मुस्तानां सविड़ङ्गानां चन्दनागुरुणोस्तथा ॥
मधुकस्य हरिद्राया वचायाः कनकस्य च ।
भागांश्चतुष्पलान् कृत्वा सूक्ष्मैलायास्त्वचस्तथा ॥
सितोपलासहस्रञ्च चूर्णितं तुलयाधिकम् ।
तैलस्य द्व्याढ़कं तत्र दद्यात् त्रीणि च सर्पिषः ॥
साध्यमौड़म्बरे पात्रे तत् सर्व्वं मृदुनाग्निना ।

ज्ञात्वा लेहमदग्धञ्च शीतं क्षौद्रेण संसृजेत् ॥
क्षौद्रप्रमाणं स्नेहाद्धं तत् सर्व्वं घृतभाजने ।
तिष्ठेत् संमूच्छितं तस्य मात्रां काले प्रयोजयेत् ॥
या नोपरुन्ध्यादाहारमेवं मात्रा जरां प्रति ।
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥
वैखानसा वालिखिल्यास्तथा चान्ये तपोधनाः ।
रसायनमिदं प्राप्य बभूवुरमितायुषः ॥
मुक्त्वा जीर्णं वपुश्चाग्र्यमवापुस्तरुणं वयः ।
वीततन्द्राक्लमश्वासा निरातङ्काः समाहिताः ॥
मेधास्मृतिबलोपेताश्चिररात्रं तपोधनाः ।
ब्राह्मं तपो ब्रह्मचर्य्यं चेरुश्चात्यन्तनिष्ठया ॥
रसायनमिदं ब्राह्ममायुष्कामः प्रयोजयेत् ।
दीर्घमायुर्वयश्चाग्र्यं कामांश्चेष्टान् समश्नुते ॥ २२ ॥

इति ब्राह्मरसायनम् ।

यथोक्तगुणानामामलकानां सहस्रं पिष्ट्वा स्वेदनविधिना पयस उष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत्। तदामलकसहस्रं स्वरसपरिपीतं स्थिरा-पुनर्नवा-जीवन्ती-नागबला-ब्रह्मसुवर्च्चलामण्डूकपर्णीशतावरीशङ्खपुष्पीपिप्पलीवचाविड़ङ्ग-स्वयंगुप्तामृताचन्दनागुरु-मधुक-मधूकपुष्पोत्पल-पद्म-मालती-युवतीयूथिकाचूर्णाष्टभागसंयुक्तम्, पुनर्नागबलासहस्रपलस्वरस-परिपीतमनातपशुष्कं द्विगुणितसर्पिषा क्षौद्रसर्पिषा वा क्षुद्र-गुड़ाकृतिं कृत्वा शुचौ दृढ़े घृतभाविते कुम्भे भस्मराशेरधः स्थापयेदन्तर्भूमेः पक्षं कृतरक्षाविधानमथर्व्ववेदविदा। पक्षात्यये

पोद्धृत्य कनकरजतताम्रप्रवालकालायसचूर्णाष्टभागसंयुक्तमर्द्ध-कर्षवृद्ध्या यथोक्तेन विधिना प्रातः प्रातः प्रयुञ्जानोऽग्निबल-मभिसमीक्ष्य जीर्णे च षष्टिकं पयसा समपिष्कमुपसेवमानो यथोक्तान् गुणान् समश्नुत इति ॥ २३ ॥

भवन्ति चात्र ।

इदं रसायनं ब्राह्मं महर्षिगणसेवितम् ।
भवत्यरोगो दीर्घायुः प्रयुञ्जानो महाबलः ॥
कान्तः प्रजानां सिद्धार्थश्चन्द्रादित्यसमद्युतिः ।
श्रुतं धारयते सत्त्वमार्षञ्चास्य प्रवर्त्तते ।
धरणीधरसारश्च वायुना समविक्रमः ।
स भवत्यविषञ्चास्य गात्रे सम्पद्यते विषम् ॥ २४ ॥

इति ब्राह्म-रसायनद्वितीययोगः ।

बिल्वाग्निमन्थौ श्योणाकः काश्मर्य्यः पाटलिर्बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥
मुस्तं पुनर्नवा मेदा सैला चन्दनमुत्पलम् ।
विदारीवृषमूलानि काकोली काकनासिका ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक् ।

मत्स्यण्डिकायाः पूताया लेह्यवत् साधु साधयेत् ॥
षट्पलं मधुनश्चात्र सिद्धशीते समावपेत्।
चतुष्पलं तुगाक्षीर्य्याः पिप्पलीद्विपलं तथा ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चाप्यपकर्षति ॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥
मेधां स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥
रसायनस्यास्य नरः प्रयोगाल्लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य सर्व्वं बिभर्त्ति रूपं नवयौवनस्य ॥ २५ ॥

इति च्यवनप्राशः।

अथामलकहरीतकीनामामलकविभीतकानामामलकहरीतकीविभीतकानां वा पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानामकुलकानां पलसहस्रमुदूखले संपोष्य दधि-घृतमधु-पलल-तैलशर्करा-संयुक्तं भक्षयेदनन्न-भुग् यथोक्तेन विधिना। तस्यान्ते यवाग्वादिभिः प्रकृत्यवस्थापनमभ्यङ्गोत्सादनं सर्पिषा यवचूर्णैश्चायञ्च रसायनप्रयोगप्रकर्षो द्विस्तावदग्नि-बलमभिसमीक्ष्य प्रतिभोजनं यूषेण पयसा वा षष्टिकः ससर्पि-

स्थाऽतःपरं यथासुखविहारः कामभक्ष्यः स्यात् । अनेन प्रयोगेण ऋषयः पुनर्युवत्वमवापुर्बभूवुश्चानेकवर्षशतजीविनो निर्व्विकाराः परं शरीरबुद्धीन्द्रिय-बलसमुदिताश्चेरुश्चात्यन्तनिष्ठया तपः ॥ २६ ॥ इति चतुर्थामलकरसायनम् ।

हरीतक्यामलकविभीतकपञ्चपञ्चमूलनिर्य्यूहेण पिप्पली-मधु-मधूक-काकोली-क्षीरकाकोल्यात्मगुप्ता-जीवकर्षभक-क्षीर-शुक्लाकल्कसंप्रयुक्तेन विदारीस्वरसेन क्षीराष्टगुणसंप्रयुक्तेन च सर्पिषः कुम्भं साधयित्वा प्रयुञ्जानोऽग्निबलसमां मात्रां । जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिकमुष्णोदकानुपानमश्नन् जराव्याधि-पापाभिचारपगतभयःशरीरबुद्धीन्द्रियबलमतुलमुपलभ्याप्रतिहत-सर्व्वारम्भः परमायुरवाप्नुयात् ॥ २७ ॥

इति पञ्चमो हरीतकीयोगः ।

हरीतक्यामलकविभीतकहरिद्रास्थिरावचाविड़ङ्गामृतवल्ली-विश्वभेषजमधुकपिप्पलीसोमवल्कसिद्धेन क्षीरसर्पिषा मधुशर्क-राभ्यामपि च सन्नीयामलकस्वरसपरिपीतमामलकचूर्णमय-श्चूर्णचतुर्भागसम्प्रयुक्तं पाणितलमात्रं प्रातः प्रातः प्राश्य यथो-क्तेन विधिना सायं मुद्गयूषेण पयसा वा ससपिष्कं शालिषष्टि-कमश्नीयात् । त्रिवर्षप्रयोगादस्य वर्षशतमजरं वयस्तिष्ठति श्रुत-मवतिष्ठते सर्व्वामयाः प्रशाम्यन्ति विषमविषं भवति गात्रे गात्र-मश्मवत् स्थिरीभवत्यधृष्यो भूतानां भवतीति ॥ २८ ॥

भवन्ति चात्र ।

यथामराणाममृतं यथा भोगवतां सुधा ।
तथाभवन्महर्षीणां रसायनविधिः पुरा ॥

न जरां न च दौर्ब्बल्यं नातुर्य्यं निधनं न च।
जग्मुर्वर्षसहस्राणि रसायनपराः पुरा॥
न केवलं दीर्घमिहायुरश्नुते
रसायनं यो विधिवन्निषेवते।
गतिं सदेवर्षिनिषेवितां शुभां
प्रपद्यते ब्रह्म तथेति चाक्षरम्॥ २८॥

तत्र श्लोकः।

अभयामलकीयेऽस्मिन् षड्योगाः परिकीर्त्तिताः।
रसायनानां सिद्धानामायुर्यैरनुवर्त्तते॥ ३०॥

इति चिकित्सितेऽभयामलकीये रसायनपादः प्रथमः।

अथातः प्राणकामीयं रसायनपादं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः॥ १॥

प्राणकामाः शुश्रूषध्वमिदमुच्यमानममृतमिवापरमदिति-सुतहितकरमचिन्त्याद्भुतप्रभावमायुष्यमारोग्यकरं वयसःस्थापनं निद्रातन्द्राश्रमक्लमालस्यदौर्ब्बल्यापहरमनिलकफपित्त-साम्यकरं स्थैर्य्यकरमबद्धमांसहरमन्तरग्निसन्धुक्षणं प्रभावर्णस्वरोत्तमकरं रसायनविधानम्। अनेन च्यवनादयो महर्षयः पुनर्युवत्वमापुः, नारीणां चेष्टतमा बभूवुः, स्थिरसमसुविभक्तमांसाः सुसंहत-स्थिरशरीराः सुप्रसन्नबलवर्णेन्द्रियाः सर्व्वत्राप्रतिहतपराक्रमाः सर्व्वक्लेशसहाश्च॥ २॥

सर्व्वे शरीरदोषा भवन्ति ग्राम्यादाहारादम्ललवण-कटुक-क्षार-शुष्कशाकमाष-तिलपललपिष्टान्नभोजिनां विरूढनवशूक-

श्मीधान्यविरुद्धासात्म्यरूक्षक्षाराभिष्यन्दिभोजिनां क्लिन्नगुरु-पूतिपर्य्युषितभोजिनां विषमाशनाध्यशनप्रियाणां दिवास्वप्नस्त्री-मद्यनित्यानां विषमातिमात्रव्यायामसंक्षोभितशरीराणां भयक्रोध-शोकलोभमोहायासबहुलानाम् । अतोनिमित्ताद्धि शिथिली-भवन्ति मांसानि विमुच्यन्ते सन्धयो विदह्यते रक्तं विष्यन्दते चानल्पं मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्रं न प्रवर्त्तते क्षय-मुपैत्योजः, स एवंभूतो ग्लायति सीदति निद्रातन्द्रालस्यसम-न्वितो निरुत्साहः श्वसिति । असमर्थश्चेष्टानां शारीरमानसीनां नष्टस्मृतिबुद्धिच्छायो रोगाणामधिष्ठानभूतो न सर्व्वमायु-रवाप्नोति । तस्मादेतान् दोषानवेक्षमाणः सर्व्वान् यथोक्तान-हितानपास्याहारविहारान् रसायनानि प्रयोक्तुमर्हति ॥ ३ ॥

इत्युक्त्वा भगवान् पुनर्व्वसुरात्रेय उवाच । आमलकानां सु-भूमिजानां कालजानामनुपहतगन्धवर्णरसानामापूर्णरसप्रमाण-वीर्य्याणां स्वरसेन पुनर्नवाकल्कपादसंप्रयुक्तेन सर्पिषः साध-येदाढ़कम् । अतःपरं विदारीस्वरसेन जीवन्तीकल्कप्रयुक्तेन । अतःपरं चतुर्गुणेन पयसा बलातिबलाकषायेण शतावरीकल्क-संप्रयुक्तेन । अनेन क्रमेणैकं शतपाकं सहस्रपाकं वा शर्कराक्षौद्रचतुर्भागसंप्रयुक्तं सौवर्णे राजते मार्त्तिके वा शुचौ दृढ़े घृतभाविते कुम्भे स्थापयेत् । तद्‌यथोक्तेन विधिना यथाग्नि प्रातः प्रातः प्रयोजयेत् । जीर्णे च क्षीरसर्पिर्भ्यां शालिषष्टिक-मश्नीयात् । अस्य प्रयोगाद्वर्षशतं वयोऽजरं तिष्ठति श्रुतमव-तिष्ठते सर्व्वामयाः प्रशाम्यन्त्यप्रतिहतगतिः स्त्रीष्वपत्यवान् भवति ॥ ४ ॥

भवति चात्र।

बृहच्छरीरं गिरिसारसारं स्थिरेन्द्रियञ्चातिबलेन्द्रियञ्च।
अधृष्यमन्यैरतिकान्तरूपं प्रशस्तपूजासुखचित्तभाक् च॥
बलं महद्वर्णविशुद्धिरग्र्या स्वरो घनौघस्तनितानुकारी।
भवत्यपत्यं विपुलं स्थिरञ्च समश्नुतो योगमिमं नरस्य॥ ५॥

इत्यामलकघृतम्।

आमलकसहस्रं पिप्पलीसहस्रसंप्रयुक्तं पलाशतरुभस्मनः क्षारोदकोत्तरं तिष्ठेत्, तदनुगतक्षारोदकमनातपशुष्कमनस्थि-चूर्णीकृतं चतुर्गुणाभ्यां मधुसर्पिर्भ्यां संनीय शर्कराचूर्णचतुर्भाग-सम्प्रयुक्तं घृतभाजनस्थं षण्मासान् स्थापयेदन्तर्भूमेस्तस्योत्तर-कालमग्निबलसमां मात्रां खादेत् पौर्व्वाह्णिकः प्रयोगः, सात्म्यपथ्यश्चाहारविधिर्नापराह्णिकः। अस्य प्रयोगाद्वर्षशत-मजरं वयस्तिष्ठतीति समं पूर्व्वेण॥ ६॥ इत्यामलकावलेहः।

आमलकचूर्णाढ़कमेकविंशतिरात्रमामलकसहस्रस्वरसपरि-पीतं मधुघृताढ़काभ्यां द्वाभ्यामेकीकृतमष्टभागपिप्पलीकं शर्करा-चूर्णचतुर्भागसम्प्रयुक्तं घृतभाजनस्थं प्रावृषि भस्मराशौ निदध्यात् तद्वर्षान्ते सात्म्यपथ्याशी प्रयोजयेत्। अस्य प्रयोगाद्वर्षशत-मजरमायुस्तिष्ठतीति समानं पूर्व्वेण॥ ७॥

इत्यामलकचूर्णम्।

विड़ङ्गतण्डुलचूर्णानामाढ़कं पिप्पलीतण्डुलानामध्यर्द्धाढ़कं सितोपलासर्पिस्तैलमध्वाढ़कैः षड़्भिरेकीकृतं घृत-भाजनस्थं प्रावृषि भस्मराशाविति सर्व्वं समानं पूर्व्वेण यावदाशीः॥ ८॥

इति विड़ङ्गावलेहः।

दशाहं यावदश्नीयाल्लघ्वन्नं ज्वरशान्तये ॥ ९२ ॥
अत ऊर्द्ध्वं कफे मन्दे वातपित्तोत्तरे ज्वरे ।
परिपक्केषु दोषेषु सर्पिःपानं यथामृतम् ॥ ९३ ॥
निर्द्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् वैद्यः कषायैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन च ।
भवत्यलं निग्रहाय दोषाणां बलकृच्च तत् ॥ ९४ ॥
दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् ।
बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥ ९५ ॥
क्रियाभिराभिः प्रशमं न प्रयाति यदा ज्वरः ।
अक्षीणबलमांसस्य शमयेत् तं विरेचनैः ॥ ९६ ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ ९७ ॥
निरूहो बलमग्निञ्च विज्वरत्वं मुदं रुचिम् ।
परिपक्केषु दोषेषु प्रयुक्तः शीघ्रमावहेत् ॥
पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् ।
स्रंसनस्त्रीन् मलान् वस्तिर्हरेत् पक्वाशयस्थितान् ॥ ९८ ॥
ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये ।
रूक्षबद्धपुरीषाय प्रदद्यादनुवासनम् ॥ ९९ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।
जीर्णे ज्वरे रुचिकरं कुर्य्याच्छीर्षविरेचनम् ॥ १०० ॥
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सावगाहनान् ।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥

तेराशु प्रशमं याति वह्निर्मार्गंगतो ज्वरः ।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ १०१ ॥
धूपनाञ्जनयोगैश्च यान्ति जीर्णज्वराः शमम् ।
त्वङ्मात्रशेषो येषाञ्च भवन्त्यागन्तुरन्वयः ॥ १०२ ॥
इति क्रियाक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः ॥
तेषान्तु एष क्रमस्तानि द्रव्याण्यूर्द्धमतः शृणु ॥ १०३ ॥
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ १०४ ॥
लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।
पिवेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥ १०५ ॥
अम्लाभिलाषी तामेव दाड़िमाम्लां सनागराम् ।
सृष्टविट् पैत्तिको वाथ शीतां मधुयुतां पिवेत् ॥ १०६ ॥
पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिवेत् ॥ १०७ ॥
ज्वरातिसारी पेयां वा पिवेत् साम्लां शृतां नरः ।
शालपर्णीबलाविल्वनागरोत्पलधान्यकैः ॥ १०८ ॥
शृतां विदारीगन्धादैर्दीपनीं स्वेदनीं नरः ।
कासी श्वासी च हिक्की च यवागूं ज्वरितः पिवेत् ॥१०९॥
विबद्धवर्च्चाः सयवां पिप्पल्यामलकैः शृताम् ।
सर्पिष्मतीं पिवेत् पेयां ज्वरी दोषानुलोमनीम् ॥ ११० ॥
कोष्ठे विबद्धे सरुजि पिवेत् पेयां शृतां ज्वरी ।
मृद्वीकापिप्पलीमूलचव्यामलकनागरैः ॥ १११ ॥
पिवेत् सविल्वां पेयां वा ज्वरे सपरिकर्त्तिके ।

बलाद्दाम्लकोलाम्लकलशीधावनीशृताम् ॥ ११२ ॥
अस्वेदनिद्रस्तृष्णार्त्तः पिवेत् पेयां सशर्कराम्।
नागरामलकैः सिद्धां घृतभृष्टां ज्वरापहाम् ॥ ११३ ॥
मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
यूषार्थे यूषसात्म्याय ज्वरिताय प्रदापयेत् ॥ ११४ ॥
पटोलपत्रं सफलं कुलकं पापचेलिकम्।
कर्कोटकं कठिल्लञ्च विद्याच्छाकं ज्वरे हितम् ॥ ११५ ॥
लावान् कपिञ्जलानेणांश्चकोरानुपचक्रकान्।
कुरङ्गान् कालपुच्छांश्च हरिणान् पृषतः शशान् ॥
प्रदद्यान्मांससात्म्याय ज्वरिताय ज्वरापहान्।
ईषदम्लाननम्लान् वा रसान् काले विचक्षणः ॥
कुक्कुटांश्च मयूरांश्च तित्तिरिक्रौञ्चवर्त्तकान्।
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ॥ ११६ ॥
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्।
भिषङ्मात्राविकल्पज्ञो दद्यात्तानपि कालवित् ॥ ११७ ॥
घर्म्माम्बु चानुपानार्थं तृषिताय प्रदापयेत्।
मद्यं वा मद्यसात्म्याय यथादोषं यथाबलम् ॥ ११८ ॥
गुरूष्णस्निग्धमधुरकषायांश्च नवज्वरे।
आहारान् दोषपक्त्यर्थं प्रायशः परिवर्ज्जयेत् ॥ ११९ ॥
अन्नपानक्रमः सिद्धो ज्वरघ्नः सम्प्रकाशितः।
अत ऊर्द्ध्वं प्रवक्ष्यन्ते कषाया ज्वरनाशनाः ॥ १२० ॥
पाक्यं शीतकषायं वा मुस्तपर्पटकं पिवेत्।
सनागरं पर्पटकं पिवेद्वा सदुरालभम् ॥

किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम् ।
पाठामुशीरं सोदीच्यं पिबेद्वा ज्वरशान्तये ॥
ज्वरघ्ना दीपनाश्चैते कषाया दोषपाचनाः ।
तृष्णारुचिप्रशमना मुखवैरस्यनाशनाः ॥ १२१ ॥
वतूसकारग्वधौ पाठां षड्ग्रन्थां कटुरोहिणीम् ।
मूर्व्वां सातिविषां निम्बं पटोलं धन्वयासकम् ॥
वचामुस्तमुशीराणि मधुकं त्रिफलां बलाम् ।
पाक्यं शीतकषायं वा पिबेज्ज्वरहरं नरः ॥ १२२ ॥
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बः पटोलस्त्रिफला मृद्वीका मुस्तवतूसकौ ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ।
कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततसततान्येद्युस्तृतीयकचतुर्थकान् ॥ १२३ ॥
मधूकमुस्तमृद्वीकाकाश्मर्य्याणि परूषकम् ।
त्रायमाणामुशीराणि त्रिफलां कटुरोहिणीम् ।
पीत्वा निशिस्थितं जन्तुर्ज्वराच्छीघ्रं विमुच्यते ॥ १२४ ॥
बृहत्यौ वतूसकं मुस्तं देवदारु महौषधम् ।
कोलवल्ली च योगोऽयं सन्निपातज्वरापहः ॥ १२५ ॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।
विबद्धदोषो ज्वरितः कषायं सगुडं पिबेत् ॥ १२६ ॥
त्रिफलां त्रायमाणाञ्च मृद्वीकां कटुरोहिणीम् ।

पित्तश्लेष्महरस्त्वेष कषायोऽत्यानुलोमिकः ॥
त्रिवृताशर्करायुक्तः पित्तश्लेष्मज्वरापहः ॥ १२७ ॥
शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥
एष शव्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासतन्द्रासु शस्यते ॥ १२८ ॥
बृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्व्वेषु दद्यात् सोपद्रवेषु च ॥ १२९ ॥
कषायाश्च यवाग्वश्च पिपासाज्वरनाशनाः ।
निर्द्दिष्टा भेषजाध्याये भिषक् तानपि योजयेत् ॥ १३० ॥
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥ १३१ ॥
रूक्षं तेजो ज्वरकरं तेजसा रूक्षितस्य च ।
यः स्यादनुबलो धातुः स्नेहसाध्यः स चानिलः ॥ १३२॥
कषायाः सर्व्व एवैते सर्पिषा सह योजिताः ।
प्रयोज्या ज्वरशान्त्यर्थमग्निसन्धुक्षणाः शिवाः ॥ १३३ ॥
पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकस्तामलकी शारिवातिविषा स्थिरा ॥
द्राक्षामलकविल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतैर्घृतं सद्यो जीर्णज्वरमपोहति ॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।

अंसाभितापमग्निञ्च विषमं सन्नियच्छति ॥ १३४ ॥

इति पिप्पल्याद्यं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेत् घृतं जीर्णज्वरापहम् ॥ १३५ ॥

इति वासाद्यं घृतम्।

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम्।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥
कृत्वा कषायं पेष्यार्थं दद्यात् तामलकीं शटीम्।
द्राक्षां पुष्करमूलञ्च मेदामामलकानि च ॥
घृतं पयश्च तत् सिद्धं सर्पिर्ज्वरहरं परम्।
तृष्णाकासशिरःशूलपार्श्वशूलांसतापनुत् ॥ १३६ ॥

इति बलाद्यं घृतम्।

ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ १३७ ॥
मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पेयं वमनं ज्वरशान्तये ॥
क्षौद्राम्बुना रसेनेक्षोरथवा लवनाम्बुना।
ज्वरे प्रच्छर्द्दनं शस्तं मद्यैर्वा तर्पणेन वा ॥ १३८ ॥
मृद्वीकामलकानां वा रसं प्रच्छर्द्दनं पिबेत्।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥ १३९ ॥
त्रिवृताद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा।

पिबेद्वा क्षौद्रमावाप्य सघृतं त्रिफलारसम् ॥
आरग्बधं वा पयसा मृद्वीकानां रसेन वा।
त्रिफलां * त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥
ज्वराद्विमुच्यते पीत्वा मृद्वीकाभिः सहाभयाम्।
पयोऽनुपानमुष्णं वा पीत्वा द्राक्षारसं नरः ॥ १४० ॥
कासाच्छ्वासाच्छिरःशूलात् पार्श्वशूलाच्चिरज्वरात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ १४१ ॥
एरण्डमूलोत्क्वथितं ज्वरात् सपरिकर्त्तिकात्।
पयो विमुच्यते पीत्वा तद्वद्बिल्वशलाटुभिः ॥ १४२ ॥
त्रिकण्टकबलाव्याघ्री गुड़नागरसाधितम्।
वर्च्चोमूत्रविबन्धघ्नं शोफज्वरहरं पयः ॥ १४३ ॥
सनागरं समृद्वीकं सघृतक्षौद्रशर्करम्।
शृतं पयः सखर्ज्जूरं पिपासाज्वरनाशनम् ॥ १४४ ॥
चतुर्गुणेनाम्भसा वा शृतं ज्वरहरं पयः।
धारोष्णं वा पयः सद्यो वातपित्तज्वरं जयेत् ॥ १४५ ॥
जीर्णज्वराणां सर्व्वेषां पयः प्रशमनं परम्।
पेयं तदुष्णं शीतं वा यथास्वैरौषधैः शृतम् ॥ १४६ ॥
प्रयोजयेत् ज्वरहरान् निरूहान् सानुवासनान्।
पक्वाशयगते दोषे सिद्धौ यानुपदिक्ष्यते ॥ १४७ ॥
पटोलारिष्टपत्राणि सोशीरश्चतुरङ्गुलः।
ह्रीवेरं रोहिणी तिक्ताश्वदंष्ट्रामदनानि च ॥

* त्रिवृतामिति पाठान्तरम्।

स्थिरा बला च तत् सर्व्वं पयस्यर्द्धोदके शृतम्।
क्षीरावशेषं निर्य्यूहं संयुक्तं मधुसर्पिषा॥
कल्कैर्मदनमुस्तानां पिप्पल्या मधुकस्य च।
वत्सकस्य च संयुक्तं वस्तिं दद्यात् ज्वरापहम्॥
शुद्धे मार्गे हृते दोषे विप्रसन्नेषु धातुषु।
गताङ्गशूलो लघ्वङ्गः सद्यो भवति विज्वरः॥ १४८॥
आरग्वधमुशीराणि मदनस्य फलानि च।
पर्णांश्चतस्रो मधुकं निर्य्यूहमुपकल्पयेत्॥
प्रियङ्गुर्मदनं मुस्तं शताह्वा मधुयष्टिका।
कल्कः सर्पिर्गुड़ः क्षौद्रं ज्वरघ्नो वस्तिरुत्तमः॥ १४९॥
गुडूचीं त्रायमाणाञ्च चन्दनं मधुकं वृषम्।
स्थिरां बलां पृश्निपर्णीं मदनञ्चेति साधयेत्॥
रसं जाङ्गलमांसस्य रसेन सहितं भिषक्।
पिप्पलीफलमुस्तानां कल्केन मधुकस्य च॥
ईषत् सलवणं युक्तं निरूहं मधुसर्पिषा।
ज्वरप्रशमनं दद्याद्बलवर्णाग्निप्रदम्॥ १५०॥
जीवन्तीं मधुकं मेदां पिप्पलीं मदनं वचाम्।
ऋद्धिं रास्नां बलां विल्वं शतपुष्पां शतावरीम्॥
पिष्ट्वा क्षीरं जलं सर्पिस्तैलञ्च विपचेद्भिषक्।
आनुवासनिकं स्नेहमेतद् दद्याज्ज्वरापहम्॥ १५१॥
पटोलपिचुमर्द्दाभ्यां गुडूच्या मधुकेन च।
मदनेन शृतः स्नेहो ज्वरघ्नमनुवासनम्॥ १५२॥
चन्दनागुरुकाश्मर्य्यपटोलमधुकोत्पलैः।

स्निग्धः स्वेदो ज्वरहरः स्नेहवस्तिः प्रशस्यते ॥ १५३ ॥
यदुक्तं भेषजाध्याये विमाने रोगभेषजे।
शिरोविरेचनं कुर्य्याद्युक्तिज्ञस्तज्ज्वरापहम् ॥
यच्च नावनिकं तैलं याश्च प्राग्धूमवर्त्तयः।
मात्राशितीये निर्द्दिष्टाः प्रयोज्यास्ता ज्वरेष्वपि ॥ १५४ ॥
अभ्यङ्गांश्च प्रदेहांश्च परिषेकांश्च कारयेत्।
यथाभिलाषं शीतोष्णं विभज्य द्विविधं ज्वरम् ॥ १५५ ॥
सहस्रधौतं सर्पिर्वा तैलं वा चन्दनादिकम्।
दाहज्वरप्रशमनं दद्यादभ्यञ्जनं भिषक् ॥ १५६ ॥

अथ चन्दनाद्यं तैलमुपदेक्ष्यामः। चन्दनशैलेयभद्रश्रिय-कालानुसार्य्य-भण्डी-कालीयक-पद्मापद्मकोशीर-शारिवामधुक-प्रपौण्डरीकनागपुष्पोदीच्य-पद्मोत्पलनलिनकुमुद-सौगन्धिक-पुण्डरीकशतपत्रविसमृणाल-शालूक-शैवालकशेरुकानन्ताकुश-काशेक्षुदर्भशरनलशालिमूलजम्बूवेत्रवेतसवानीरगुन्द्राककुभा-शनाश्वकर्ण-स्यन्दन-वातपोथ-शालतालधवतिनिशखदिरकदर-कदम्बकाश्मर्य्यफल-सर्ज्जप्लक्षपीतनोदुम्बराश्वत्थन्यग्रोधलोध्र-धातकीदूर्व्वेत्कटशृङ्गाटकमञ्जिष्ठाज्योतिष्मतीपुष्करवीजक्रौञ्चा-दनवदरकोविदारकदलीसम्वर्त्तकारिष्टकशतपर्व्वाशीतकुम्भिका-शतावरीश्रीपर्णी-रोहिणी-श्रावणी-महाश्रावणीशीतपाक्योदन-पाकी-कालाबला- पयस्याविदारी-जीवकर्षभक- क्षुद्रसहा- मेदा-महामेदा-मधुरसर्षप्रोक्ता-तृणशून्य-मोचरसाटरूषक-वकुल-कुटज-पटोल-निम्व-शाल्मली-नारिकेल-खर्ज्जूरमृद्वीकापियाल-प्रियङ्गुधन्वनात्मगुप्तामधूकानामन्येषाञ्च शीतवीर्य्याणां यथा-

लाभमौषधानां कषायं कारयेत् । तेन कषायेण द्विगुणित-पयसा तेषामेव च कल्केन कषायार्द्धमात्रं मृद्वग्निना साधयेत् तैलम् । एतत् तैलमभ्यङ्गादेव सद्योदाहज्वरमपनयति । एतैरेव चौषधैः सुश्लक्ष्णपिष्टैः सुशीतैः प्रदेहं कारयेत् । एतैरेव च शृतशीतं सलिलमवगाहपरिषेकार्थं प्रयुञ्जीत ॥ १५७ ॥

इति चन्दनादि तैलादि ।

मद्यारनालक्षीरसौवीर-दधि-घृत-सलिल-सेकावगाहाश्च सद्योदाहज्वरमपनयन्ति शीतस्पर्शत्वादिति ॥ १५८ ॥

भवन्ति चात्र ।

पौष्करेषु सुशीतेषु पद्मोत्पलदलेषु च ।
कदलीनाञ्च पत्रेषु क्षौमेषु विमलेषु च ॥
चन्दनोदकशीतेषु दाहार्त्तः संविशेत् सुखम् ।
हिमाम्बुपूर्णे सदने शीते धारागृहेऽपि वा ॥ १५९ ॥
हेमशङ्खप्रवालानां मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां संस्पर्शानुरसान् स्पृशेत् ॥ १६० ॥
स्रग्भिर्नीलोत्पलैः पद्मैर्व्यजनैर्विविधैरपि ।
शीतवातकरैर्वीज्यश्चन्दनोदकवर्षिभिः ॥ १६१ ॥
नद्यस्तड़ागाः पद्मिन्यो ह्रदाश्च विमलोदकाः ।
अवगाहे हिता दाहतृष्णाग्लानिज्वरापहाः ॥ १६२ ॥
प्रियाः प्रदक्षिणाचाराः प्रमदाश्चन्दनोक्षिताः ।
सान्त्वयेयुः परैः कामैर्मणिमौक्तिकभूषणाः ॥ १६३ ॥
निचान्नपानानि शीतान्युपवनानि च ।
वायवश्चन्द्रपादाश्च शीतदाहज्वरापहाः ॥ १६४ ॥

अथोष्णाभिप्रायिणां ज्वरितानामभ्यङ्गादीनुपक्रमाननु-व्याख्यास्यामः। अगुरुकुष्ठतगरनलदपत्रशैलेयकध्यामकहरेणुक-स्थौणेयकक्षेमकैलावराङ्गदलपुर-तमालपत्रभूतीकरोहिषसरल-शल्लकीदेवदार्व्वग्निमन्थ-विल्वश्योणाककाश्मर्य्यपाटला-पुनर्नवा-वृहती-कण्टकारिका-वृश्चिरशालपर्णीपृश्निपर्णी-माषपर्णीमुद्ग-पर्णीगोक्षुरकैरण्डशोभाञ्जनक-वरुणार्कचिरिविल्वतिल्वकशटी-पुष्करमूलगण्डीरोरुवूकपत्तूराक्षीराश्मान्तकशिग्रुमातुलुङ्गमूषिक-पर्णी-तिलपर्णीपिलुपर्णीमेषशृङ्गीहिंस्रा-दन्तशठैरावतकभल्ला-तकास्फोतककाण्डीरात्मगुप्ताकाकाण्डेषीका-करञ्जधान्यकाज-मोदापृथ्वीकासुमुखसुरसकरककाण्डीरकुठेरककालमालकपर्णास-क्षवकफणिज्झकभूस्तृणशृङ्गवेरपिप्पलीसर्षपाश्वगन्धारास्नारुहा-वरोहाबलातिबलागुडूचीशतपुष्पाशीतवल्लीनाकुलीगन्धनाकुली-श्वेताज्योतिष्मती-चित्रकाध्यण्डाम्लचाङ्गेरी-तिल-वदरकुलत्थ-माषाणामेवंविधानामन्येषां चोष्णवीर्य्याणां यथालाभमौषधानां कषायं कारयेत्। तेन कषायेण तेषामेव च कल्केन सुरा-सौवीरकतुषोदकमैरेयमेदकदधिमण्डारनालकट्वरप्रतिविनीतेन तैलपात्रं विपाचयेत्। तेन सुखोष्णेन तैलेनोष्णाभिप्रायिणं ज्वरितं सततमभ्यञ्ज्यात्, तस्य शीतज्वरः प्रशाम्यति। एतैरेव-चौषधैः श्लक्ष्णपिष्टैः सुखोष्णैः प्रदेहं कारयेत्। एतैरेव च शृतं सुखोष्णं सलिलमवगाहार्थं परिषेकार्थञ्च प्रयुञ्जीत शीत-ज्वरप्रशमार्थमिति॥ १६५॥

इति शीतज्वरे अगुर्व्वादि तैलादि।

भवन्ति चात्र ।

त्रयोदशविधः स्वेदः स्वेदध्याये निदर्शितः ।
मात्राकालविदा युक्तः स च शीतज्वरापहः ॥ १६६ ॥
सा कुटी तच्च शयनं तच्चावच्छादनं ज्वरम् ।
शीतं प्रशमयन्त्याशु धूपाश्चागुरुजा घनाः ॥ १६७ ॥
चारूपचितगात्राश्च तरुण्यो यौवनोष्मणा ।
आश्लेषाच्छमयन्त्याशु प्रमदाः शिशिरं ज्वरम् ॥ १६८ ॥
स्वेदनान्यन्नपानानि वातश्लेष्महराणि च ।
शीतज्वरं जयन्त्याशु संसर्गबलयोजनात् ॥ १६९ ॥
निरामे वातजे चैव पुराणे क्षयजे ज्वरे ।
लङ्घनं न हितं विद्याच्छमनैस्तमुपाचरेत् ॥ १७० ॥
विक्षिप्यामाशयोष्माणां यस्माद्धत्वा रसं नृणाम् ।
ज्वरं कुर्व्वन्ति दोषास्तु हीयतेऽग्निबलं ततः ॥
यथाप्रज्वलितो वह्निः स्थाल्यामिन्धनवानपि ।
न पचत्योदनं सम्यगनिलप्रेरितो बहिः ॥
पक्तिस्थानात् तदा दोषैरुष्मा क्षिप्तो वहिर्नृणाम् ।
न पचत्यभ्यवहृतं कृच्छ्रात् पचति वा लघु ॥
अतोऽग्निबलरक्षार्थं लङ्घनादिक्रमो हितः ।
सम्यक् तेन हि पच्यन्ते सर्व्वधातुगता मलाः ॥ १७१ ॥
निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ।
उदीर्णदोषस्त्वल्पाग्निरश्नन् गुरु विशेषतः ॥
मुच्यते सहसा प्राणैश्चिरं क्लिश्यति वा नरः ।
एतस्मात् कारणाद्विद्वान् वातिकेऽप्यादितो ज्वरे ॥

नाति गुर्व्वति वा स्निग्धं भोजयेत् सहसा नरम् ॥ १७२ ॥
ज्वरे मारुतजे त्वादावनपेक्ष्यापि हि क्रमम् ।
कुर्य्यान्निरनुबन्धानामभ्यङ्गादीनुपक्रमान् ॥
पाययित्वा कषायञ्च भोजयेद्रसभोजनम् ।
जीर्णज्वरहरं कुर्य्यात् सर्व्वशश्चाप्युपक्रमम् ॥ १७३ ॥
श्लेष्मलानामवातानां ज्वरोऽनुष्णः कफाधिकः ।
परिपाकं न सम्प्राप्ते नापि याति मृदूष्मणाम् ॥
तं क्रमेण यथोक्तेन लङ्घनाल्पाशनादिना ।
आदशाहमुपक्रम्य कषायाद्यैरुपाचरेत् ॥ १७४ ॥
सामा ये ये च कफजाः कफपित्तज्वराश्च ये ।
लङ्घनं लङ्घनीयोक्तं तेषु कार्य्यं प्रति प्रति ॥ १७५ ॥
वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ।
ज्वरानुपाचरेद्धीमान् कफपित्तानिलोद्भवान् ।
संसृष्टान् सन्निपतितान् बुद्ध्वा तरतमैः समैः ।
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत् ॥
वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ।
कफस्थानानुपूर्व्व्या वा सन्निपातज्वरं जयेत् ॥ १७६ ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥
रक्तावसेचनैः शीघ्रं सर्पिःपानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥ १७७ ॥
शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ।
शाखानुसारी तस्याशु मुञ्चेद्वाह्वोः क्रमात् सिराम् ॥१७८॥

वीसर्पेणाभिवातेन यश्च विस्फोटकैर्ज्वरः ।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरो न चेत् ॥ १७९ ॥
दौर्ब्बल्याद्देहधातूनां ज्वरो जीर्णोऽनुवर्त्तते ।
बल्यैः संबृंहणैस्तस्मादाहारैस्तमुपाचरेत् ॥ १८० ॥
कर्म्म साधारणं जह्यात् तृतीयकचतुर्थकौ ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥
वातप्रधानं सर्पिर्भिर्वस्तिभिः सानुवासनैः ।
स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् ॥ १८१ ॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥ १८२ ॥
वमनं पाचनं रुक्षमन्नपानं विलङ्घनम् ।
कषायोष्णञ्च विषमे ज्वरे शस्तं कफोत्तरे ॥ १८३ ॥
योगाः पराः प्रवक्ष्यन्ते विषमज्वरनाशनाः ।
प्रयोक्तव्या मतिमता दोषादीन् प्रविभज्य ते ॥ १८४ ॥
सुरा समण्डा पानार्थे भक्ष्यार्थे चरणायुधाः ।
तित्तिरिश्च मयूराश्च प्रयोज्या विषमज्वरे ॥ १८५ ॥
पिबेद्वा षट्पलं सर्पिरभयां वा प्रयोजयेत् ।
त्रिफलायाः कषायं वा गुडूच्या रसमेव वा ॥ १८६ ॥
नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ॥
पिबेज्ज्वरागमे युक्त्या स्नेहस्वेदोपपादितः ॥ १८७ ॥
सर्पिषो महतीं मात्रां पीत्वा वा च्छर्द्दयेत् पुनः ।
उपयुज्यान्नपानं वा प्रभूतं पुनरुल्लिखेत् ॥ १८८ ॥
सान्नं मद्यं प्रभूतं वा पीत्वा वा तदहः स्वपेत् ।

आस्थापनं यापनं वा कारयेद्विषमज्वरे ॥ १८९ ॥
पयसा वृषदंशस्य शकृद्वेगागमे पिवेत् ।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १९० ॥
पिप्पल्यास्त्रिफलायाश्च दध्नस्तक्रस्य सर्पिषः ।
पञ्चगव्यस्य पयसः प्रयोगो विषमज्वरे ॥ १९१ ॥
लसुनस्य सतैलस्य प्रागभक्तमुपसेवनम् ।
मेध्यानामुष्णवीर्य्याणामामिषाणाञ्च भक्षणम् ॥ १९२ ॥
व्याघ्री वसा हिङ्गुसमा नस्तं कार्य्यं ससैन्धवा।
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा ॥ १९३ ॥
सैन्धवं पिप्पलीनाञ्च तण्डुलं समनःशिलम् ।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे ॥ १९४ ॥
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १९५ ॥
ये धूमा धूपनं यच्च नावनञ्चाञ्जनञ्च यत् ।
मनोविकारे निर्द्दिष्टं कार्य्यं तद्विषमज्वरे ॥ १९६ ॥
मणीनामौषधीनाञ्च मङ्गल्यानां विषस्य च ।
धारणादगदानाञ्च सेवनान्न भवेज्ज्वरः ॥ १९७ ॥
सोमं सानुचरं देवं समातृगणमीश्वरम् ।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम् ।
स्तुवन् नामसहस्रेण ज्वरान् सर्व्वानपोहति ॥
ब्रह्माणमश्विनाविन्द्रं हुतभक्षं हिमाचलम् ।
गङ्गां मरुद्गणांश्चेष्टान् पूजयन् जयति ज्वरान् ॥

भक्त्या मातुः पितुश्चैव गुरूणां पूजनेन च ।
ब्रह्मचर्य्येण तपसा सत्येन नियमेन च ॥
जपहोमप्रदानेन वेदानां श्रवणेन च ।
ज्वराद्विमुच्यते शीघ्रं साधूनां दर्शनेन च ॥ १९८ ॥
ज्वरे रसस्थे वमनमुपवासञ्च कारयेत् ।
सेकप्रदेहौ रक्तस्थे तथा संशमनानि च ॥
विरेचनं सोपवासं मांसमेदःस्थिते हितम् ।
अस्थिमज्जगते देया निरूहाः सानुवासनाः ॥ १९९ ॥
शापाभिचाराद् भूतानामभिषङ्गाच्च यो ज्वरः ।
दैवव्यपाश्रयं तत्र सर्व्वमौषधमिष्यते ॥ २०० ॥
अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिषः ।
रक्तावसेकैर्मधैश्च सात्म्यैर्मांसरसोदनैः ॥
पानाद्वा मद्यसात्म्यानां मदिरारसभोजनैः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २०१ ॥
आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः ॥
काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः ।
सद्वाक्यैश्च शमं यान्ति ज्वरः क्रोधसमुत्थितः ॥
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः ॥ २०२ ॥
ज्वरस्य वेगं कालञ्च चिन्तयन् ज्वर्य्यते तु यः ।
तस्येष्टैस्तु विचित्रैश्च विषयैर्नाशयेत् स्मृतिम् ॥ २०३ ॥
ज्वरप्रमोक्षे पुरुषः कूजन् वमन् विचेष्टते ।

श्वसन् विवर्णः खिन्नाङ्गो वेपते शीयते मुहुः ॥
प्रलपत्युग्रासर्व्वाङ्गः शीताङ्गश्च भवत्यपि।
विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्ष्यते ॥
सदोषशब्दञ्च शकृद् द्रवं सृजति वेगवत्।
लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥
बहुदोषस्य बलवान् प्रायेणाभिनवोज्वरः।
स क्रियादोषपक्व्या चेद्विमुञ्चति सुदारुणम् ॥ २०४ ॥
कृत्वा दोषवशाद्वेगं क्रमादुपरमन्ति ये।
तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥ २०५ ॥
विगतक्लमसन्तापमव्यथं विमलेन्द्रियम्।
युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥ २०६ ॥
सज्वरो ज्वरमुक्तश्च विदाहीनि गुरूणि च।
असात्म्यान्यन्नपानानि विरुद्धानि च वर्ज्जयेत् ॥
व्यवायमतिचेष्टाश्च स्नानमत्यशनानि च।
तथा ज्वरः शमं याति प्रशान्तो जायते न च ॥ २०७ ॥
व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥
असञ्जातबलो यस्तु ज्वरमुक्तो निषेवते।
वर्ज्ज्यमेतन्नरस्तस्य पुनरावर्त्तते ज्वरः ॥ २०८ ॥
दुर्हृतेषु च दोषेषु यस्य वा विनिवर्त्तते।
स्वल्पेनाप्यपचारेण तस्य व्यावर्त्तते पुनः ॥ २०९ ॥
चिरकालपरिक्लिष्टं दुर्ब्बलं दीनचेतसम्।
अचिरेणैव कालेन स हन्ति पुनरागतः ॥ २१० ॥
अथवा विपरीपाकं धातुष्वेव क्रमान्मलाः।

यान्ति ज्वरमकुर्व्वन्तस्ते तथाप्यपकुर्व्वते ॥
दीनतां श्वयथुं ग्लानिं पाण्डुतां नान्नकामताम् ।
कण्डूरुत्कोठपिड़काः कुर्व्वन्त्यग्निञ्च ते मृदुम् ॥
एवमन्येऽपि च गदा व्यावर्त्तन्ते पुनर्गताः ।
अनिर्घातेन दोषाणामल्पैरप्यहितैर्नृणाम् ॥ २११ ॥
निवृत्तेऽपि ज्वरे यस्माद्‌यथावस्थं यथाबलम् ।
यथाप्राणं हरेद्दोषं प्रयोगैर्वा शमं नयेत् ॥
मृदुभिः शोधनैः शुद्धिर्यापना वस्तयो हिताः ।
हिताश्च लघवो यूषा जाङ्गलामिषजा रसाः ॥
अभ्यङ्गोद्वर्त्तनस्नानधूपनान्यञ्जनानि च ।
हितानि पुनरावृत्ते ज्वरे तिक्तघृतानि च ॥ २१२ ॥
गुर्व्वभिष्यन्द्यसात्म्यानां भोजनात् पुनरागते ।
लङ्घनौषधोपचारादिः क्रमः कार्य्यश्च पूर्व्ववत् ॥ २१३ ॥
किराततिक्तकं तिक्ता मुस्तं पर्पटकोऽमृता ।
घ्नन्ति पीतानि चाभ्यासात् पुनरावर्त्तकं ज्वरम् ॥ २१४ ॥
तस्यां तस्यामवस्थायां ज्वरितानां विचक्षणः ।
ज्वरक्रियाक्रमापेक्षी कुर्य्यात् तत्तत् चिकित्सितम् ॥२१५॥
रोगराट् सर्व्वभूतानामन्तकृद्दारुणो ज्वरः ।
तस्माद्विशेषतस्तस्य यतेत प्रशमे भिषक् ॥ २१६ ॥

तत्र श्लोकः ।

यथाक्रमं यथाप्रश्नमुक्तं ज्वरचिकित्सितम् ।
आत्रेयेणाग्निवेशाय भूतानां हितमिच्छता ॥ २१७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ज्वरचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

चतुर्थोऽध्यायः ।

अथातो रक्तपित्तचिकित्सितं व्याख्यास्याम इतिह स्माह भगवानात्रेयः ॥ १ ॥

विहरन्तं यतात्मानं पञ्चगङ्गे पुनर्व्वसुम् ।
प्रणम्योवाच निर्म्मोहमग्निवेशोऽग्निवर्च्चसम् ॥
भगवन् रक्तपित्तस्य हेतुरुक्तः सलक्षणः ।
वक्तव्यं यत् परं तस्य वक्तुमर्हसि तद्‌गुरो ॥ २ ॥

गुरुरुवाच ।

महागदं महावेगमग्निवच्छीघ्रकारि च ।
हेतुलक्षणवच्छीघ्रं रक्तपित्तमुपाचरेत् ॥ ३ ॥
तस्योष्णं तीक्ष्णमम्लञ्च कटूनि लवणानि च ।
घर्म्मश्चान्नविदाहश्च हेतुः पूर्व्वं निदर्शितः ॥ ४ ॥
तैर्हेतुभिः समुत्क्लिष्टं पित्तं रक्तं प्रपद्यते ।
तद्‌योनित्वात् प्रपन्नञ्च वर्द्धते तत् प्रदूषयत् ॥
तस्योष्मणा द्रवो धातुर्धातोर्धातोः प्रसिच्यते ।
स्विद्यतस्तेन संवृद्धिं भूयस्तदधिगच्छति ॥
संयोगाद् दूषणात् तत् तु सामान्याद्गन्धवर्णयोः ।
रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥ ५ ॥
प्लीहानञ्च यकृच्चापि तदधिष्ठाय वर्त्तते ।
स्रोतांसि रक्तवाहीनि तन्मूलानि हि देहिनाम् ॥ ६ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितम् ।

श्यावारुणं सफेनञ्च तनु रुक्षञ्च वातिकम् ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् ।
मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् ॥
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् ॥ ७ ॥
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ।
यत् त्रिदोषमसाध्यं तन्मन्दाग्नेरतिवेगवत् ।
व्याधिभिः चीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ ८ ॥
गतिरूर्द्धमधश्चैव रक्तपित्तस्य दर्शिता ।
ऊर्द्धा सप्तविधद्वारा द्विद्वारा त्वधरा गतिः ॥
सप्त छिद्राणि शिरसि द्वे चाधः साध्यमूर्द्धगम् ।
याप्यन्त्वधोगं मार्गौ तु द्वावसाध्यं प्रवर्त्तते ॥ ९ ॥
छिद्रेभ्य एभ्यः सर्व्वेभ्यो रोमकूपेभ्य एव च ।
वर्त्तते तामसङ्ख्येयां गतिं तस्याहुरान्तिकीम् ॥ १० ॥
यच्चोभयाभ्यां मार्गाभ्यामतिमात्रं प्रवर्त्तते ।
तुल्यं कुणपगन्धेन रक्तं कृष्णमतीव च ॥
संसृष्टं कफवाताभ्यां कण्ठे सज्जति चापि यत् ।
यच्चाप्युपद्रवैः सर्व्वैर्यथोक्तैः समभिद्रुतम् ॥
हारिद्रनीलहरितताम्रैर्वर्णैरुपद्रुतम् ।
चीणस्य कासमानस्य यद्वा तच्च न सिध्यति ॥ ११ ॥
यद्द्विदोषानुगं यद्वा शान्तं भूयः प्रवर्त्तते ।
मार्गान्मार्गं चरेद् यद्वा याप्यं पित्तमसृक् च तत् ॥ १२ ॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥ १३ ॥

स्निग्धोष्णमुष्णरूक्षञ्च रक्तपित्तस्य कारणम् ।
अधोगस्योत्तरं प्रायः पूर्व्वं स्यादूर्द्ध्वगस्य तु ॥ १४ ॥
ऊर्द्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ।
द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्त्तते ॥ १५ ॥
अक्षीणबलमांसस्य रक्तपित्तं यदश्नतः ।
तद्दोषदुष्टमुत्क्लिष्टं नादौ स्तम्भनमर्हति ॥
गलग्रहं पूतिनस्यं मूर्च्छायमरुचिं ज्वरम् ।
गुल्मं प्लीहानमानाहं किलासं मूत्रकृच्छ्रताम् ॥
कुष्ठान्यर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधञ्च कुर्य्यात् स्तम्भितमादितः ॥
तस्मादुपेक्ष्यं बलिनां बलदोषविचारिणा ।
रक्तपित्तं प्रथमतः प्रवृत्तं सिद्धिमिच्छता ॥ १६ ॥
प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम् ।
वृद्धिं प्रयाति पित्तासृक् तस्मात्तल्लङ्घ्यमादितः ॥
मार्गौ दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च ।
लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत् ॥ १७ ॥
ह्रीवेरचन्दनोशीरमुस्तपर्पटकैः शृतम् ।
केवलं शृतशीतं वा दद्यात् तोयं पिपासवे ॥ १८ ॥
ऊर्द्ध्वगे तर्पणं पूर्व्वं पेयां पूर्व्वमधोगते ।
कालसात्म्यानुबन्धज्ञो दद्यात् प्रकृतिकल्पवित् ॥ १९ ॥
जलं खर्ज्जूरमृद्वीकामधूकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थे सशर्करम् ॥
तर्पणं सघृतक्षौद्रं लाजचूर्णैः प्रदापयेत् ।

ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥
मन्दाग्नेरम्लसात्म्याय तत् साम्लमपि कल्पयेत् ।
दाड़िमामलकैर्विद्वानम्लार्थञ्चानुदापयेत् ॥ २० ॥
शालिषष्टिकनीवारकोरदूषप्रसातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मुद्गा मसूराश्चणकाः समकुष्ठाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥
पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ।
किराततिक्तकं शाकं गण्डीरं सकठिल्लकम् ॥
कोविदारस्य पुष्पाणि काश्मर्य्याश्चाथ शाल्मलेः ।
अन्नपानविधौ शाकं यच्चान्यद्रक्तपित्तनुत् ॥
शाकार्थं शाकसात्म्यानां तच्छस्तं रक्तपित्तिनाम् ।
स्विन्नं वा सर्पिषा भृष्टं यूषवद्वा विपाचितम् ॥
पारावतान् कपोतांश्च लावान् रक्ताक्षवर्त्तकान् ।
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान् ॥
रक्तपित्ते हितान् विद्याद्रसांस्तेषां प्रयोजयेत् ।
ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् ॥
कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ॥ २१ ॥
रक्तपित्ते यवागूनामतः कल्पः प्रवक्ष्यते ॥
पद्मोत्पलानां किञ्जल्कः पृश्निपर्णी प्रियङ्गुका ।
जले साध्या रसे तस्मिन् पेया स्याद्रक्तपित्तिनाम् ॥
चन्दनोशीरलोध्राणां रसे तद्वत् सनागरे ।
किराततिक्तकोशीरमुस्तानां तद्वदेव च ॥

धातकीधन्वयासाम्बु विल्वानां वा रसे शृताः ।
मसूरपृश्निपर्णीर्वा स्थिरा मुद्गरसेऽथवा ॥
रसे हरेणुकानां वा सघृते सबलारसे ।
सिद्धाः पारावतादीनां रसे वा सुः पृथक् पृथक् ॥
इत्युक्ता रक्तपित्तघ्नाः शीताः समधुशर्कराः ।
यवाग्वः कल्पना चैषां कार्य्या मांसरसेष्वपि ॥ २२ ॥
शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तिनाम् ।
वातोल्वणे तित्तिरिः स्यादुडुम्बररसे शृतः ॥
मयूरः प्लक्षनिर्यूहे न्यग्रोधस्य च कुक्कुटः ।
रसे विसोत्पलादीनां वर्त्तकक्रकरौ हितौ ॥ २३ ॥
तृष्यते तिक्तकैः साद्ध तृष्णाघ्नं वा फलोदकम् ।
सिद्धं विदारिगन्धाद्यैरथवा शृतशीतलम् ॥ २४ ॥
ज्ञात्वा दोषावनुबलौ बलमाहारमेव च ।
जलं पिपासवे दद्याद्बहुशो वाल्पशोऽपि वा ॥ २५ ॥
निदानं रक्तपित्तस्य यत् किञ्चित् संप्रकाशितम् ।
जीवितारोग्यकामैस्तन्न सेव्यं रक्तपित्तिभिः ॥
इत्यन्नपानं निर्द्दिष्टं क्रमशो रक्तपित्तनुत् ॥ २६
वक्ष्यते बहुदोषाणां कार्य्यं बलवताञ्च यत् ॥
अक्षीणबलमांसस्य यस्य सन्तर्पणोत्थितम् ।
बहुदोषं बलवतो रक्तपित्तं शरीरिणः ॥
काले संशोधनार्हस्य तद्धरेन्निरुपद्रवम् ।
विरेचनेनोर्द्ध्वभागमधोगं वमनेन च ॥ २७ ॥
त्रिवृतामभयां प्राज्ञः फलान्यारग्वधस्य वा ।

त्रायमाणां गवाक्ष्या वा मूलमामलकानि वा ॥
विरेचनं प्रयुञ्जीत प्रभूतमधुशर्करम् ।
रसः प्रशस्यते तेषां रक्तपित्ते विशेषतः ॥ २८ ॥
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ।
सशर्करं वा सलिलमिक्षूणां रस एव वा ॥
वत्सकस्य फलं मुस्तं मदनं मधुकं मधु ।
अधोगे रक्तपित्ते तु वमनं परमुच्यते ॥ २९ ॥
ऊर्द्ध्वगे शुद्धकोष्ठस्य तर्पणादिक्रमोहितः ।
अधोगमे यवाग्वादिर्न चेत् स्यान्मारुतो बली ॥ ३० ॥
बलमांसपरिक्षीणं शोकभाराध्वकर्षितम् ।
ज्वलनादित्यसन्तप्तमन्यैर्वा क्षीणमामयैः ॥
गर्भिणीं स्थविरं बालं रुक्षाल्पप्रमिताशिनम् ।
अवम्यमविरेच्यं वा यं पश्येद्रक्तपित्तिनम् ॥
शोषेण सानुबन्धं वा तस्य संशमनी क्रिया ।
शस्यन्ते रक्तपित्तस्य परञ्चातः प्रवक्ष्यते ॥ ३१ ॥
अटरूषकमृद्वीकापथ्याक्वाथः सशर्करः ।
मधुमिश्रः श्वासकासरक्तपित्तनिवर्हणः ॥ ३२ ॥
अटरूषकनिर्यूहे प्रियङ्गुं मृत्तिकाञ्जने ।
विनीय लोध्रं क्षौद्रञ्च रक्तपित्तहरं पिवेत् ॥ ३३ ॥
पद्मकं पद्मकिञ्जल्कं दूर्व्वां वास्तुकमुत्पलम् ।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिवेत् ॥ ३४ ॥
प्रपौण्डरीकं मधुकं मधु चाश्वशकृद्रसे ।
यवासभृङ्गरजसोर्मूलं वा गोशकृद्रसे ॥

विनीय रक्तपित्तघ्नं पेयं स्यात् तण्डुलाम्बुना ।
युक्तं वा मधुसर्पिर्भ्यां लिह्याद् गोऽश्वशकृद्रसम् ॥ ३५ ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुत् ॥
शृङ्गाटकानां लाजानां मुस्तखर्ज्जूरयोरपि ।
लिह्याच्चूर्णानि मधुना पद्मानां केशरस्य च ॥ ३६ ॥
रक्तं लिह्याद्दन्वजानां मधुना मृगपक्षिणाम् ।
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावतं शकृत् ॥ ३७ ॥

उशीरकालीयकलोध्रपद्मप्रियङ्गुकाकट्फलशङ्खगैरिकाः ।
पृथक् पृथक् चन्दनतुल्यभागिकाः सशर्करास्तण्डुलधावनाप्लुताः ॥
रक्तं सपित्तं तमकं पिपासां दाहञ्च पीताः शमयन्ति सद्यः ।
किराततिक्तं क्रमुकं समुस्तं प्रपौण्डरीकं कमलोत्पले च ॥
ह्रीवेरमूलानि पटोलपत्रं दुरालभा पर्पटका मृणालम् ।
धनञ्जयोडुम्बरवल्कत्वङ्न्यग्रोधशालेयवासकत्वक् ॥
तुगा लता केशरतण्डुलीयं सशारिवं मोचरसः समङ्गा ।
पृथक् पृथक् चन्दनयोजितानि तेनैव कल्पेन हितानि तत्र ॥
निशि स्थिता वा स्वरसीकृता वा कल्कीकृता वा मृदिताः शृता वा
एते समस्ता गणशः पृथग्वा रक्तं सपित्तं शमयन्त्युदीर्णम् ॥३८॥
मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन ।
बलाजले पर्य्युषिताः कषाया रक्तं सपित्तं शमयन्त्युदीर्णम् ॥३९॥
वैदूर्य्यमुक्तामणिगैरिकाणां मृच्छङ्खहेमामलकोदकानाम् ।
मधूदकस्येक्षुरसस्य चैव पानात्क्षमं गच्छति रक्तपित्तम् ॥४०॥
उशीरपद्मोत्पलचन्दनानां पक्कस्य लोष्ट्रस्य च यः प्रसादः ।

सशर्करः क्षौद्रयुतः सुशीतो रक्तातियोगप्रशमाय पेयः ॥ ४१ ॥
प्रियङ्गुकाचन्दनलोध्रशारिवामधूकमुस्ताभयधातकीजलम् ।
समृत्प्रसादं सह यष्टिकाम्बुना सशर्करं रक्तनिवर्हणं परम् ॥४२
कषाययोगैर्विविधैर्यथोक्तैर्दीप्तेऽनले श्लेष्मणि निर्जिते च ।
यद्रक्तपित्तं प्रशमं न याति तत्रानिलः स्यादनु तत्र कार्य्यम् ॥
छागं पयः स्यात् परमं पयोगे गव्यं शृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिकसंप्रयुक्तं विदारिगन्धादिगणैः शृतं वा ॥
द्राक्षाशृतं नागरकैः शृतं वा बलाशृतं गोक्षुरकैः शृतं वा ।
सजीवकं सर्षभकं ससर्पिः पयः प्रयोज्यं सितया शृतं वा ॥४३॥
शतावरीगोक्षुरकैः शृतं वा शृतं पयो वाप्यथ पर्णिनीभिः ।
रक्तं निहन्त्याशु विशेषतस्तु यन्मूत्रमार्गात् सरुजं प्रयाति ॥४४
विशेषतो विट्पथसंप्रवृत्ते पयोहितं मोचरसेन सिद्धम् ।
वटावरोहैर्वटशुङ्गकैर्वा ह्रीवेरनीलोत्पलनागरैर्वा ॥ ४५ ॥
कषाययोगान् पयसा पुरा वा पीत्वातु चाद्यात् पयसैव शालीन् ।
कषाययोगैरथवा विपक्वमेतैः पिबेत् सर्पिरतिस्रवे च ॥ ४६ ॥
वासां सशाखां सफलां समूलां कृत्वा कषायं कुसुमानि चास्याः ।
प्रदाय कल्कं विपचेद्घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥४७

इति वासाघृतम् ।

पलाशवृन्तस्वरसेन सिद्धं तस्यैव कल्केन मधुद्रुमेण ।
लिह्याद्घृतं वत्सककल्कसिद्धं तद्वत् समङ्गोत्पललोध्रसिद्धम् ॥४८
स्यात् त्रायमाणा विधिरेष एव सोदुम्बरे चैव पटोलपत्रे ।
सर्पींषि पित्तज्वरनाशनानि सर्व्वाणि शस्तानि च रक्तपित्ते ॥४९
अभ्यङ्गयोगाः परिषेचनानि सेकावगाहाः शयनानि वेश्म ।

शीतो विधिर्वस्तिविधानमग्र्यं पित्तज्वरे यत् प्रशमाय दृष्टम् ॥
तद्रक्तपित्ते निखिलेन कार्य्यं कालञ्च मात्राञ्च पुरा समीक्ष्य ।
सर्पिर्गुड़ा ये च हिताः क्षतेभ्य स्ते रक्तपित्तं शमयन्ति सद्यः ॥५०
कफानुबन्धे रुधिरे सपित्ते कण्ठागमे स्यादग्रथिते प्रयोगः ।
युक्तस्य युक्त्या मधुसर्पिषोश्च क्षारस्य चैवोत्पलनालजस्य ॥
मृणालपद्मोत्पलकेशराणां तथा पलाशस्य तथा प्रियङ्गोः ।
तथा मधूकस्य तथाशनस्य क्षाराः प्रयोज्या विधिनैव तेन ॥५१॥
शतावरीदाड़िमतिन्तिड़ीकं काकोलीमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य घृतं पचेत् क्षीरचतुर्गुणेन ॥
कासज्वरानाहविबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्यात् ॥
यत् पञ्चमूलैरथ पञ्चभिर्वा सिद्धं घृतं तच्च तदर्थकारि ॥ ५२ ॥

इति शतमूलादिघृतम् ।

कषाययोगा य इहोपदिष्टा स्ते चावपीड़े भिषजा प्रयोज्याः ।
घ्राणात् प्रवृत्तं रुधिरं सपित्तं यदा भवेन्निःसृतदुष्टदोषम् ॥
रक्ते प्रदुष्टे ह्यवपीड़बन्धे दुष्टप्रतिश्यायशिरोविकाराः ।
रक्तं सपूयं कुणपश्च गन्धः स्याद्घ्राणनाशः क्रिमयश्च दुष्टाः ॥५३
नीलोत्पलं गैरिकशङ्खयुक्तं सचन्दनं स्यात् तु सिताजलेन ।
नस्यं तथाम्रास्थिरसः समङ्गः सधातकीमोचरसः सलोध्रः ॥
द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्व्वास्वरसस्य चैव ।
यवासमूलानि पलाण्डुमूलं नस्यं तथा दाड़िमपुष्पतोयम् ॥
पियालतैलं मधुकं पयश्च सिद्धं घृतं माहिषमाजकं वा ।
आम्रास्थिपूर्व्वैः पयसा च नस्यं सशारिवैः स्यात् कमलोत्पलैश्च ॥५४
भद्रश्रियं लोहितचन्दनञ्च प्रपौण्डरीकं कमलोत्पले च ।

उशीरवानीरजलं मृणालं सहस्रवीर्य्या मधुकं पयस्या ॥
शालीक्षुमूलानि यवासगुन्द्रामूलं नलानां कुशकाशयोश्च ।
कुचन्दनं शैवलमप्यनन्ता कालानुसार्य्या तृणमूलमृद्भिः ॥
मूलानि पुष्पाणि च वारिजानां प्रलेपनं पुष्करिणीमृदश्च ।
उदुम्बराश्वत्थमधूकलोध्राः कषायवृक्षाः शिशिराश्च सर्व्वे ॥
प्रदेहकल्पे परिषेचने च तथावगाहे घृततैलसिद्धौ । [ ५५ ॥
रक्तस्य पित्तस्य च शान्तिमिच्छन् भद्रश्रियादीनि भिषक् प्रदद्यात्
धारागृहं भूमिगृहं सुशीतं वनञ्च रम्यं जलवातशीतम् ।
वैदूर्य्यमुक्तामणिभाजनानां स्पर्शाश्च दाहे शिशिराम्बुशीताः ॥
पुष्पाणि पत्राणि च वारिजानां क्षौमञ्च शीतं कदलीदलञ्च ।
प्रच्छादनार्थं शयनासनानां पद्मोत्पलानाञ्च दलाः प्रशस्ताः ॥
प्रियङ्गुकाचन्दनरूषितानां स्पर्शाः प्रियाणाञ्च वराङ्गनानाम् ।
दाहे प्रशस्ताः सजलाः सुशीताः पद्मोत्पलानाञ्च कलापवाताः ॥
सरिद्ध्रदानां हिमवद्दरीणां चन्द्रोदयाणां कमलाकराणाम् ।
मनोऽनुकूलाः शिशिराश्च सर्व्वाः कथाः सरक्तं शमयन्ति पित्तम् ॥५६

तत्र श्लोकौ ।

हेतुं वृद्धिं संज्ञां स्थानं लिङ्गं पृथक् प्रदुष्टस्य ।
मार्गौ साध्यमसाध्यं याप्यं कार्य्यक्रमश्चैव ॥
पानान्नमिष्टमेव च वर्ज्ज्यं संशोधनञ्च शमनञ्च ।
गुरुरुक्तवान् यथावच्चिकित्सिते रक्तपित्तस्य ॥ ५७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
रक्तपित्तचिकित्सितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातो गुल्मचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

सर्व्वप्रजानां पितृवच्छरण्यः पुनर्व्वसुर्भूतभविष्यदीशः ।
चिकित्सितं गुल्मनिवर्हणार्थं प्रोवाच सिद्धं वदतां वरिष्ठः ॥२॥

विट्श्लेष्मपित्तादिपरिस्रवाद्वा तैरेव वृद्धैरतिपीड़नाद्वा ।
वेगैरुदीर्णैर्विहतैरधो वा वाह्याभिघातैरतिपीड़नैर्वा ॥
रुक्षान्नपानैरतिसेवितैर्वा शोकेन मिथ्याप्रतिकर्म्मणा वा ।
विचेष्टितैर्वा विषमातिमात्रैः कोष्ठे प्रकोपं समुपैति वायुः ॥३॥

कफञ्च पित्तञ्च स दुष्टवायुरुद्धूय मार्गान् विनिबध्य ताभ्याम् ।
हृन्नाभिपार्श्वोदरवस्तिशूलं करोत्यधो याति न बद्धमार्गः ॥ ४ ॥

पक्वाशये पित्तकफाशये वा स्थितः स्वतन्त्रः परसंश्रयो वा ।
स्पर्शोपलभ्यः परिपिण्डितत्वाद्गुल्मो यथादोषमुपैति नाम ॥५॥

वस्तौ च नाभ्यां हृदि पार्श्वयोर्वा स्थानानि गुल्मस्य भवन्ति पञ्च ।
पञ्चात्मकस्य प्रभवन्तु तस्य वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥६॥

रुक्षान्नपानं विषमातिमात्रं विचेष्टितं वेगविनिग्रहश्च ।
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥७॥

यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम् ।
श्यावारुणत्वं शिशिरज्वरञ्च हृत्कुक्षिपार्श्वांसशिरोरुजञ्च ॥
करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ।
वातात् स गुल्मो न च तत्र रुक्षं कषायतिक्तं कटु चोपशेते ॥८

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरञ्च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥९
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्य्यति भोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥१०
शीतं गुरु स्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य सर्व्वस्तु दृष्टो निचयात्मकस्य ॥११॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥१२
निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१३
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥१४
ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रिया रक्तभवोऽभ्युपैति ॥१५॥
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात् सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥१६

क्रियाक्रममतः सिद्धं गुल्मिनां गुल्मनाशनम् ।
प्रवक्ष्याम्यत ऊर्द्धञ्च योगान् गुल्मनिवर्हणान् ॥ १७ ॥
रूक्षव्यायामजं गुल्मं वातिकं तीव्रवेदनम् ।
बद्धविण्मारुतं स्नेहैरादितः समुपाचरेत् ॥
भोजनाभ्यञ्जनैः पानैर्निरूहैः सानुवासनैः ।
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ॥
स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्वणम् ।

भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ १८ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्द्धनाभिजे।
पक्वाशयगते वस्तिरुभयं जठराश्रये ॥ १९ ॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्च्चसोः।
वृंहणान्यन्नपानानि स्निग्धोष्णानि प्रयोजयेत् ॥
पुनःपुनः स्नेहपानं निरूहाः सानुवासनाः।
प्रयोज्या वातगुल्मेषु कफपित्तानुरक्षिणा ॥ २० ॥
कफवाते जितप्राये पित्तं शोणितमेव च।
यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥
यथोल्वणस्य दोषस्य तत्र कार्य्यं भिषग्जितम्।
आदावन्ते च मध्ये च मारुतं परिरक्षता ॥ २१ ॥
वातगुल्मे कफोवृद्धो हत्वाग्निमरुचिं यदि।
हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत् तु तम् ॥ २२ ॥
शूलानाहविबन्धेषु गुल्मे वातकफोल्वणे।
वर्त्तयो गुड़िकाश्चूर्णं कफवातहरं हितम् ॥ २३ ॥
पित्तं वा यदि संवृद्धं सन्तापं वातगुल्मिनः।
कुर्य्याद्विरेच्यः स भवेत् सस्नेहैरानुलोमिकैः ॥ २४ ॥
गुल्मो यद्यनिलादीनां कृते सम्यग्भिषग्जिते।
न प्रशाम्यति रक्तस्य सोऽवसेकात् प्रशाम्यति ॥ २५ ॥
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्।
रुक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ॥ २६ ॥
पित्तं वा पित्तगुल्मं वा ज्ञात्वा पक्वाशयस्थितम्।
कालविन्निर्हरेत् सद्यः सतिक्तैः क्षीरवस्तिभिः ॥

पयसा वा सुखोष्णेन सतिक्तेन विरेचयेत् ।
भिषगग्निबलापेक्षी सर्पिषा तैल्वकेन वा ॥ २७ ॥
तृष्णाज्वरपरीदाहशूलस्वेदाग्निमाद्दवे ।
गुल्मिनामरुचौ चापि रक्तमेवात्रसेचयेत् ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ॥२८॥
कृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।
समाश्वस्तं सशेषार्त्तिं सर्पिरभ्यासयेत् पुनः ॥ २९ ॥
रक्तपित्तातिवृद्धत्वात् क्रियामनुपलभ्य च ।
यदि गुल्मो विदह्येत शस्त्रं तत्र भिषग्जितम् ॥ ३० ॥
गुरुः कठिनसंस्थानो गूढमांसान्तराश्रयः ।
अविवर्णः स्थिरः स्निग्धो ह्यपक्वो गुल्म उच्यते ॥ ३१ ॥
दाहशूलार्त्तिसंक्षोभस्वप्ननाशारुचिज्वरैः ।
विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत् ॥ ३२ ॥
विदाहलक्षणे गुल्मे बहिस्तुङ्गे समुन्नते ।
श्यावे सरक्तपर्य्यन्ते संस्पर्शे वस्तिसन्निभे ॥
निपीड़ितोन्नते स्तब्धे सुप्ते तत्पार्श्वपीड़नात् ।
तत्रैव पिण्डिते शूले संपक्वं गुल्ममादिशेत् ॥
तत्र धान्वन्तरीयाणामधिकारः क्रियाविधौ ।
वैद्यानां कृतयोग्यानां व्यधशोधनरोपणे ॥ ३३ ॥
अन्तर्भागस्य चाप्येतत् पच्यमानस्य लक्षणम् ।
हृत्क्रोड़शूनतान्तःस्थे बहिःस्थे पार्श्वनिर्गतिः ॥ ३४ ॥
पक्वः स्रोतांसि संक्लिद्य व्रजत्यूर्द्ध्वमधोऽपि च ।

स्वयंप्रवृत्तं तं दोषमुपेक्षेत हिताशनैः ॥
दशाहं द्वादशाहं वा रक्षन् भिषगुपद्रवान् ।
तत ऊर्द्धं हितं पानं सर्पिषः सविशोधनम् ॥
शुद्धस्य तिक्तं सक्षौद्रं प्रयोगे सर्पिरिष्यते ।
अन्तर्विद्रधिवच्चात्र कार्य्यं शोधनरोपणे ॥ ३५ ॥
शीतलैर्गुरुभिः स्निग्धैर्गुल्मे जाते कफात्मके ।
अवम्यस्याल्पकायाग्नेः कुर्य्याल्लङ्घनमादितः ॥ ३६ ॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ ३७ ॥
उष्णैरेवोपचर्य्यश्च कृते वमनलङ्घने ।
योज्यश्चाहारसंसर्गो भेषजैः कटुतिक्तकैः ॥ ३८ ॥
सानाहं सविबन्धञ्च गुल्मं कठिनमुन्नतम् ।
दृष्ट्वादौ स्वेदयेद्युक्त्या स्विन्नञ्च विलयेद्भिषक् ॥ ३९ ॥
लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ संप्रधुक्षिते ।
कफगुल्मी पिबेत् काले सक्षारकटुकं घृतम् ॥ ४० ॥
स्थानादपसृतं ज्ञात्वा कफगुल्मं विरेचनैः ।
सस्नेहैर्वस्तिभिर्वापि शोधयेद्दाशमूलकैः ॥ ४१ ॥
वृद्धेऽग्नावनिलेऽमूढ़े ज्ञात्वा सस्नेहमाशयम् ।
गुड़िकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ॥ ४२ ॥
कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम् ।
जयेत् कफकृतं गुल्मं क्षारारिष्टाग्निकर्म्मभिः ॥ ४३ ॥
दोषप्रकृतिगुल्मान्तु योगं बुद्ध्वा कफोल्बणे ।
बलदोषप्रमाणज्ञः क्षारं गुल्मे प्रयोजयेत् ॥

एकान्तरं द्व्यन्तरं वा त्र्यहं विश्राम्य वा पुनः ।
शरीरबलदोषाणां वृद्धिक्षयणकोविदः ॥
श्लेष्माणं मधुरं स्निग्धं मांसक्षीरघृताशिनः ।
छित्त्वा छित्त्वाशयात् क्षारः क्षारत्वात् क्षारयत्यधः ॥ ४४ ॥
मन्देऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम् ।
प्रयोज्यास्त्वामशुद्ध्यर्थमरिष्टाः कफगुल्मिनाम् ॥ ४५ ॥
लङ्घनोल्लेखनैः स्वेदैः सर्पिःपानैर्विरेचनैः ।
वस्तिभिर्गुड़िकाचूर्णक्षारारिष्टगणैरपि ॥
श्लैष्मिकः कृतमूलत्वाद्यस्य गुल्मो न शाम्यति ।
तस्य दाहो हृते रक्ते शरलौहादिभिर्हितः ॥ ४६ ॥
औष्ण्यात् तैक्ष्ण्याच्च शमयेदग्निर्गुल्मे कफानिलौ ।
तयोः शमाच्च सङ्घातो गुल्मस्य विनिवर्त्तते ॥ ४७ ॥
दाहे धान्वन्तरीयाणामत्रापि भिषजां बलम् ।
क्षारप्रयोगे भिषजां क्षारतन्त्रविदां बलम् ॥ ४८ ॥
व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः ।
सिद्धानतः प्रवक्ष्यामि योगान् गुल्मनिबर्हणान् ॥ ४९ ॥
त्र्यूषणत्रिफलाधान्यविड़ङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ५० ॥

इति त्र्यूषणादिघृतम् ।

एत एव च कल्काः स्युः कषायः पाञ्चमूलिकः ।
द्विपञ्चमूलिको वापि तद्घृतं गुल्मनुत् परम् ॥ ५१ ॥

इति त्र्यूषणादिघृतमपरम् ।

प्रसन्नया वा क्षीरोत्थं सुरया दाड़िमेन वा।
दध्नः सरेण वा कार्य्यं घृतं मारुतगुल्मनुत् ॥ ५२ ॥
हिङ्गुसौवर्च्चलव्योषगुड़दाड़िमदीप्यकैः।
पुष्कराजाजीधन्याकवेतसक्षारचित्रकैः ॥
शठीवचाजगन्धैलासुरसैश्च विपाचितम्।
शूलानाहहरं सर्पिर्दध्ना चानिलगुल्मिनाम् ॥ ५३ ॥
इति हिङ्गुसौवर्च्चलाद्यं घृतम्।
हवुषाव्योषवृक्षीरचव्यचित्रकसैन्धवैः।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ॥
मातुलुङ्गदधिक्षीरकोलमूलकदाड़िमैः।
रसैश्च वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान्।
वस्तिहृत्पार्श्वशूलञ्च घृतमेतदपोहति ॥ ५४ ॥
इति हवुषाद्यं घृतम्।
पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद्द्विपलं पलम्।
धान्यात् प्रस्थं घृतात् शुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरम् ॥ ५५ ॥
इति पिप्पल्याद्यं घृतम्।
घृतानामौषधगणा य एते परिकीर्त्तिताः।
ते चूर्णयोगा वर्त्तयस्ताः कषायास्ते च गुल्मिनाम् ॥ ५६ ॥
कोलदाड़िमघर्म्माम्बुसुरामण्डाम्लकाञ्जिकैः।
शूलानाहनुदः पेया बीजपूररसेन वा ॥ ५७ ॥

चूर्णानि मातुलुङ्गस्य भावितानि रसेन वा ।
कुर्य्याद्वर्त्तीः सगुड़िका गुल्मानाहार्त्तिशान्तये ॥ ५८ ॥
हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥
दाड़िमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमनुपानेष्वनत्ययम् ।
प्रागभक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे ॥
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्डामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन च ।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥५६॥

इति हिङ्ग्वादिचूर्णं गुड़िका च ।

मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवे ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ६० ॥
शटीपुष्करहिङ्ग्वम्लवेतसक्षारचित्रकान् ।
धान्यकञ्च यमानीञ्च विड़ङ्गं सैन्धवं वचाम् ॥
सचव्यपिप्पलीमूलामजगन्धां सदाड़िमाम् ।
अजाजीञ्चाजमोदाञ्च चूर्णं कृत्वा प्रयोजयेत् ॥
रसेन मातुलुङ्गस्य मधुशुक्तेन वा पुनः ।
भावितं गुड़िकां कृत्वा सुपिष्टां कोलसन्निताम् ॥

गुल्मं प्लीहानमानाहं श्वासं कासमरोचकम्।
हिक्कां हृद्रोगमर्शांसि विविधां शिरसो रुजाम्॥
पाण्डुामयं कफोत्क्लेशं सर्व्वजाञ्च प्रवाहिकाम्।
पार्श्वहृद्वस्तिशूलञ्च गुड़िकैषा व्यपोहति॥ ६१॥
नागराद्दैपलं पिष्ट्वा द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुड़पलं चीरेणोष्णेन ना पिवेत्॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत्॥ ६२॥
पिवेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिवेन्नरः।
श्लेष्मण्यनुबले पूर्व्वं हितं पित्तानुगे परम्॥ ६३॥
साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम्।
चीरोदकेऽष्टगुणिते चीरशेषञ्च ना पिवेत्॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधिं शोथं साधयत्याशु तत् पयः॥ ६४॥
इति लशुनचीरम्।

तैलं प्रसन्ना गोमूत्रमारनालं यवाग्रजं।
गुल्मं जठरमानाहपीतमेकत्र साधयेत्॥ ६५॥
इति तैलपञ्चकम्।

पञ्चमूलीकषायेण सचीरेण शिलाजतु।
पिवेत् तस्य प्रयोगेण वातगुल्मात् प्रमुच्यते॥ ६६॥
इति शिलाजतुप्रयोगः।

वाट्यं यूषेण पिप्पल्या मूलकानां रसेन वा।
भुक्त्वा स्निग्धमुदावर्त्ताद्वातगुल्माद्विमुच्यते॥ ६७॥

शूलानाहविबन्धार्त्तं स्वेदयेद्वातगुल्मिनम्।
स्वेदैः स्वेदविधावुक्तैर्नाड़ीप्रस्तरसङ्करैः॥ ६८॥
वस्तिकर्म्म परं विद्यात् गुल्मघ्नं तद्धि मारुतम्।
स्वे स्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति॥
तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः॥
गुल्मघ्ना विविधा दृष्टाः सिद्धाः सिद्धिषु वस्तयः॥ ६९॥
इति वस्तिक्रिया।
गुल्मघ्नानि च तैलानि वक्ष्यन्ते वातरोगिके।
तानि मारुतजे गुल्मे पानाभ्यङ्गानुवासनैः।
प्रयुक्तान्याशु सिद्धन्ति तैलं ह्यनिलजित् परम्॥ ७०॥
नीलिनीचूर्णसंयुक्तं पूर्व्वोक्तं घृतमेव च।
समलाय प्रदेयं स्याच्छोधनं वातगुल्मिने॥
नीलिनी त्रिवृता दन्ती पथ्या कम्पिल्लकैः सह।
शोधनार्थं घृतं देयं सविड़क्षारनागरम्॥ ७१॥
नीलिनीं त्रिफलां रास्नां वलां कटुकरोहिणीम्।
पचेद्विड़ङ्गं व्याघ्रीञ्च पलिकानि जलाढ़के॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च॥
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम्।
जीर्णे सम्यग्विरिक्तञ्च भोजयेद्रसभोजनम्॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान्।
श्वित्रं प्लीहानमुन्मादं घृतमेतद्व्यपोहति॥ ७२॥
इति नीलिन्याद्यं घृतम्।

कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकाः।
शालयो मदिरा सर्पिर्वातगुल्मभिषग्जितम्॥
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम्।
सममण्डवारुणीपानं पक्वं वा धान्यकैर्जलम्॥ ७३॥
मन्देऽग्नौ वर्द्धते गुल्मो दीप्ते चाग्नौ प्रशाम्यति।
तस्मान्ना नातिसौहित्यं कुर्य्यान्नातिविलङ्घनम्॥ ७४॥
सर्व्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते।
या क्रिया क्रियते सिद्धिं सा याति न विरूक्षिते॥ ७५॥
भिषगात्ययिकं बुद्ध्वा पित्तगुल्ममुपाचरेत्।
वैरेचनिकसिद्धेन पयसा सर्पिषापि वा॥ ७६॥
रोहिणीकटुकानिम्बमधुकत्रिफलात्वचः।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतोः पले॥
द्विपलञ्च मसूराणां साध्यमष्टगुणेऽम्भसि।
शृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम्॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छारुचिस्तथा॥ ७७॥

इति रोहिण्याद्यं घृतम्।

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः॥
रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः॥
रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत्॥

पित्तरक्तभवं गुल्मं वीसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम्॥ ७८॥

इति त्रायमाणाद्यं घृतम्।

रसेनामलकेचूणां घृतप्रस्थं विपाचयेत्।
पथ्यापादं पिबेत् सर्पिस्तत् सिद्धं पित्तगुल्मनुत्॥ ७९॥

इत्यामलकाद्यं घृतम्।

द्राक्षां मधूकं खर्ज्जूरीं विदारीं सशतावरीम्।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम्॥
जलाढ़के पादशेषं रसमामलकस्य च।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम्॥
साधयेत् तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम्।
प्रयोगात् पित्तगुल्मघ्नं सर्व्वपित्तविकारनुत्॥ ८०॥

इति द्राक्षाद्यं घृतम्।

वृषं समूलमापोथ्य पचेदष्टगुणेऽम्भसि।
शेषेऽष्टभागे तस्यैव पुष्पकल्कं प्रदापयेत्॥
तेन सिद्धं घृतं शीतं सक्षौद्रं पित्तगुल्मनुत्।
रक्तपित्तज्वरश्वासकासहृद्रोगनाशनम्॥ ८१॥

इति वासाघृतम्।

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम्।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत्॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम्।
तेन विरिक्तदोषस्य गुल्मः शाम्यति पैत्तिकः॥ ८२॥
द्राक्षाभयारसं गुल्मे पैत्तिके सगुड़ं पिबेत्।

विद्यात् कम्पिल्लकं वापि विरेकार्थं मधुद्रवम् ॥ ८३ ॥
दाहप्रशमनोऽभ्यङ्गः सर्पिषा पित्तगुल्मिनाम् ।
चन्दनाद्येन तैलेन तैलेन मधुकस्य वा ॥ ८४ ॥
ये च पित्तज्वरार्त्तानां सतिक्ताः क्षीरबस्तयः ।
हितास्ते पित्तगुल्मिभ्यो वक्ष्यन्ते ये च सिद्धिषु ॥ ८५ ॥
शालयो जाङ्गलं मांसं गव्याजो पयसी घृतम् ।
खर्ज्जूरामलकं द्राक्षां दाड़िमं सपरूषकम् ॥
आहारार्थं प्रयोक्तव्यं पानार्थं सलिलं शृतम् ।
बलाविदारीगन्धाद्यैः पित्तगुल्मचिकित्सितम् ॥
आमान्वये पित्तगुल्मे सामे वा कफवातिके ।
यवागूभिः खड़ैर्यूषैः सन्धुक्ष्योऽग्निर्विलङ्घिते ॥ ८६ ॥
शमप्रकोपौ दोषाणां सर्व्वेषामग्निसंश्रितौ ।
तस्मादग्निं सदा रक्षेन्निदानानि च वर्ज्जयेत् ॥ ८७ ॥
वमनार्हाय वमनं प्रदद्यात् कफगुल्मिने ।
स्निग्धस्विन्नशरीराय गुल्मे शैथिल्यमागते ॥
परिवेष्ट्य प्रदीप्तांस्तु बल्वजानथवा कुशान् ।
भिषक् कुम्भे समावाप्य गुल्मं घटमुखे न्यसेत् ॥
स गृहीतो यदा गुल्मस्तदा घटमथोद्धरेत् ।
वस्त्रान्तरं ततः कृत्वा छिन्द्याद्गुल्मं प्रमाणवित् ॥
विमार्गजं यदा पश्येत् यथालाभं प्रपीड़येत् ।
मृद्नीयाद् गुल्ममेवैकं न त्वव हृदयं स्पृशेत् ॥ ८८ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ ८९ ॥

सव्योषक्षारलवणं दशमूलीशृतं घृतम्।
कफगुल्मं जयत्याशु सहिङ्गुविड़दाड़िमम्॥ ६०॥

इति दशमूलीघृतम्।

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढ़के॥
पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचाम्।
विड़ङ्गं सैन्धवं हिङ्गु यावशूकं विड़ं शटीम्॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक्।
प्रस्थञ्च पयसो दत्वा घृतप्रस्थं विपाचयेत्॥
एतद् भल्लातकघृतं कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत्॥ ६१॥

इति भल्लातकाद्यं घृतम्।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत्॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम्॥ ६२॥

इति पञ्चकोलघृतम्।

त्रिवृतां त्रिफलां दन्तीं दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्त्वा चतुर्भागस्थितं रसम्॥
सर्पिरेरण्डतैलञ्च क्षीरञ्चैकत्र साधयेत्।
स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत्॥
कफवातविबन्धेषु कुष्ठप्लीहोदरेषु च।
प्रयोज्यो मिश्रकः स्नेहो योनिशूलेषु चाधिकम्॥ ६३॥

इति मिश्रकः स्नेहः।

यदुक्तं वातगुल्मघ्नं स्रंसनं नीलिनीघृतम् ।
द्विगुणं तद्विरेकार्थं प्रयोज्यं कफगुल्मिनाम् ॥ ६४ ॥
सुधाक्षीरद्रवे चूर्णं त्रिवृतायाः सुभावितम् ।
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ ६५ ॥
जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥
अष्टभागावशेषन्तु रसं पूतमधिक्षिपेत् ।
दन्तीसमं गुड़ं पूतं क्षिपेत् तत्राभयाश्च ताः ॥
तैलार्द्धकुड़वञ्चैव त्रिवृतायाश्चतुःपलम् ।
चूर्णितञ्चार्द्धपलिकं पिप्पलीविश्वभेषजम् ॥
तत् साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
दद्याच्चूर्णपलञ्चैकं त्वगेलापत्रकेशरात् ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयम् ॥
गुल्मं श्वयथुमर्शांसि पाण्डुरोगमरोचकम् ।
हृद्रोगं ग्रहणीदोषं कामलां विषमज्वरम् ॥
कुष्ठं प्लीहानमानाहमेषा हन्त्युपयोजिता ।
निरत्ययः क्रमश्चास्या द्रवो मांसरसौदनः ॥ ६६ ॥

इति दन्तीहरीतकी ।

सिद्धाः सिद्धिषु वक्ष्यन्ते निरूहाः कफगुल्मिनाम् ।
अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते ॥
यच्चूर्णं गुड़िका याश्च विहिता वातगुल्मिनाम् ।
द्विगुणक्षारहिङ्ग्वम्लवेतसास्ताः कफे हिताः ॥

य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् ।
सिद्धा निरत्ययाः शस्ता दाहस्त्वन्ते प्रशस्यते ॥ ९७ ॥
प्रपुराणानि धान्यानि जाङ्गला मृगपक्षिणः ।
कौलत्थो मुद्गयूषश्च पिप्पल्या नागरस्य च ॥
शुष्कमूलकयूषश्च बिल्वस्य तरुणस्य च ;
चिरबिल्वाङ्कुराणाञ्च यमान्याश्चित्रकस्य च ॥
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमैः ।
तक्रेण तैलसर्पिर्भ्यां व्यञ्जनान्युपकल्पयेत् ॥ ९८ ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥ ९९ ॥
यमानीचूर्णितं तक्रं विड़ेनालवणीकृतम् ।
पिबेत् सन्दीपनं वातमूत्रवर्च्चोऽनुलोमनम् ॥ १०० ॥
सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः ।
कृतमूलः शिरानद्धो यदा कूर्म्म इवोन्नतः ॥
दौर्ब्बल्यारुचिहृल्लासकासवम्यरतिज्वरैः ।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते न स सिध्यति ॥ १०१ ॥
गृहीत्वा सज्वरश्वासं वम्यतीसारपीड़ितम् ।
हृन्नाभिहस्तपादेषु शोफः कर्षति गुल्मिनम् ॥ १०२ ॥
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धविरेचनम् ॥ १०३ ॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ॥ १०४ ॥
प्रभिद्यते न यद्येवं दद्याद्योनिविशोधनम् ।

क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः॥
ताभ्यां वा भावितान् दद्यादूयोनौ कटुकमत्स्यकान्।
वराहमत्स्यपित्ताभ्यां नक्तकान् वा सुभावितान्॥
अधोहरैश्चोर्द्धहरैर्भावितान् वा समाक्षिकैः।
किण्वं वा सगुड़क्षारं दद्यादूयोनिविशोधनम्॥ १०५॥
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा।
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रदापयेत्॥ १०६॥
वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम्।
अदृश्यमाने रुधिरे दद्यादूगुल्मप्रभेदनम्॥ १०७॥
प्रवर्त्तमाने रुधिरे दद्यान्मांसरसौदनम्।
घृततैलेन चाभ्यङ्गं पानार्थं तरुणीं सुराम्॥ १०८॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरीः क्रियाः।
कुर्य्याद्वातरुगार्त्तायाः सर्व्वा वातहरीः पुनः॥
घृततैलावसेकांश्च तित्तिरींश्चरणायुधान्।
सुरां समण्डां पूर्व्वञ्च पानमम्लस्य सर्पिषः॥
प्रयोजयेदुत्तरं वा जीवनीयेन सर्पिषा।
अतिप्रवृत्ते रुधिरे सतिक्तेनानुवासनम्॥ १०९॥

तत्र श्लोकाः।

स्नेहः स्वेदः सर्पिर्वस्तिश्चूर्णानि बृंहणं गुड़िकाः।
वमनविरेचनमोक्षः क्षतजस्य च वातगुल्मवताम्॥
सर्पिः सतिक्तसिद्धं क्षीरं प्रस्रंसनं निरूहाश्च।
रक्तञ्चावसेचनमाश्वासनं संशमनयोगाः॥
उपनाहनं सशस्त्रं पक्वस्याभ्यन्तरप्रभिन्नस्य।

संशोधनसंशमने पित्तप्रभवस्य गुल्मस्य ॥
स्नेहः स्वेदो भेदो लङ्घनमुल्लेखनं विरेकश्च ।
सर्पिर्वस्तिर्गुड़िकाश्चूर्णमरिष्टाश्च सक्षाराः ॥
गुल्मस्यान्ते दाहः कफजस्यायेऽपनीतरक्तस्य ।
गुल्मस्य शोणितस्य क्रियाक्रमः स्त्रीभवस्योक्तः ॥
पथ्यान्नपानसेवा हेतूनां वर्ज्जनं यथास्वञ्च ।
नित्यञ्चाग्निसमाधिः स्निग्धस्य च सर्व्वकर्म्माणि ॥
हेतुर्लिङ्गं सिद्धिः क्रियाक्रमः साध्यतानुयोगाश्च ।
गुल्मचिकित्सितसंग्रह एतावान् व्याहृतोऽग्निवेशस्य ॥१६१॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
गुल्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातः प्रमेहचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

निर्म्मोहमानानुशयो निरायः पुनर्व्वसुर्ज्ञानतपोविशालः ।
कालेऽग्निवेशाय सहेतुलिङ्गानुवाच मेहान् शमनञ्च तेषाम् ॥२
आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुड़वैकृतञ्च प्रमेहहेतुः कफकृच्च सर्व्वम् ॥ ३ ॥
मेदश्च मांसञ्च शरीरजञ्च क्लेदं कफो वस्तिगतं प्रदूष्य ।

करोति मेहान् समुदीर्णमुष्णस्तानेव पित्तं परिदूष्य चापि ॥
क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून् प्रमेहान् कुरुतेऽनिलश्च ।
दोषो हि वस्तिं समुपेत्य मूत्रं सन्दूष्य मेहान् जनयेद्यथास्वम् ॥ ४
साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्यः पवनाच्चतुष्कः ।
समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ ५ ॥
कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बु वसालसीकाः ।
मज्जारसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥६
जलोपमञ्चेक्षुरसोपमं वा घनं घनञ्चोपरि विप्रसन्नम् ।
शुक्लं सशुक्रं शिशिरं शनैर्वा लालेव वा वालुकया युतं वा ॥
विद्यात् प्रमेहान् कफजान् दशैतान् क्षारोपमं कालमथापि रक्तम् ।
हारिद्रमाञ्जिष्ठमथापि नीलमेतान् प्रमेहान् षड् षन्ति पैत्तान् ॥
मज्जौजसा वा वसयान्वितं वा लसीकया वा सततं विबद्धम् ।
चतुर्व्विधं मूत्रयतेऽनिलेन शेषेषु धातुष्ववकर्षितेषु ॥ ७ ॥
वर्णं रसं स्पर्शमथापि गन्धं यथास्वदोषं भजते प्रमेहः ।
श्यावारुणो वातकृतः सशूलो मज्जादिसादृगुण्यमुपेत्यसाध्यः ॥८
स्वेदोऽङ्गगन्धः शिथिलाङ्गता च शय्यासनस्वप्नसुखे रतिश्च ।
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखातिवृद्धिः ॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये करपाददाहः ।
भविष्यतो मेहगदस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ ९ ॥
स्थूलः प्रमेही बलवानिहैकः कृशस्तथैकः परिदुर्ब्बलश्च ।
संवृंहणं तत्र कृशस्य कार्य्यं संशोधनं दोषबलाधिकस्य ॥ १० ॥
स्निग्धस्य योगा विविधाः प्रयोज्याः कल्पोपदिष्टा मलशोधनाय ।
ऊर्द्ध्वं तथाधश्च मलेऽपनीते मेहेषु सन्तर्पणमेव कार्य्यम् ॥ ११ ॥

गुल्मः क्षयो मेहनवस्तिशूलं मूत्रग्रहश्चाप्यपतर्पणेन ।
प्रमेहिणः स्युः परिवृंहणानि कार्य्याणि तत्र प्रसमीक्ष्य वह्निम् ॥ १२
संशोधनं नार्हति यः प्रमेही तस्य क्रिया संशमनी प्रयोज्या ।
मन्थाः कषाया यवचूर्णलेहाः प्रमेहशान्तैर लघवश्च भक्ष्याः ॥ १३
ये विष्किरा ये प्रतुदा विहङ्गास्तेषां रसैर्जाङ्गलजैर्मनोज्ञैः ।
यवौदनं रक्तमथापि वाद्यं मद्यान् सशक्तूनपि चाप्यपूपान् ॥
मुद्गादियूषैरपि तिक्तशाकैः पुराणशाल्योदनमाददीत ।
दन्तीङ्गुदीतैलयुतं प्रमेही तथातसीसर्षपतैलयुक्तम् ॥
सषष्टिकं स्यात् तृणधान्यमन्नं यवप्रधानस्तु भजेत् प्रमेही ।

यवस्य भक्ष्यान् विविधांस्तथाद्यात्
कफप्रमेही मधुसम्प्रयुक्तान् ॥ १४ ॥
निशिस्थितानां त्रिफलाकषाये
स्युस्तर्पणाः क्षौद्रयुता यवानाम् ।
तान् सीधुयुक्तान् प्रपिबेत् प्रमेही
प्रायोगिकान् मेहबधार्थमेव ॥ १५ ॥
ये स्त्रेष्मसेहे विहिताः कषाया-
स्तैर्भावितानाञ्च पृथग्यवानाम् ।
शक्तूनपूपान् सगुडान् सधानान्
भक्ष्यांस्तथान्यान् विविधांश्च खादेत् ॥
खराश्वगोहंसपृषद्भृतानां
तथा यवानां विविधाश्च भक्ष्याः ।
देयास्तथा वेणुयवा यवानां
कल्पेन गोधूममयाश्च भक्ष्याः ॥ १६ ॥

संशोधनोल्लेखनलङ्घनानि कालप्रयुक्तानि कफप्रमेहान्।
जयन्ति पित्तप्रभवान् विरेकः सन्तर्पणः संशमनो विधिश्च ॥१७॥
दार्व्वीसुराह्वत्रिफलाः समुस्ताः कषायमुत्क्वाथ्य पिबेत् प्रमेही।
क्षौद्रेण युक्तामथवा हरिद्रां पिबेद्रसेनामलकीफलानाम् ॥ १८ ॥
हरीतकीकट्फलमुस्तलोध्रं पाठाविड़ङ्गार्ज्जुनधन्वनाश्च।
उभे हरिद्रे तगरं विड़ङ्गं कदम्बशालार्ज्जुनदीप्यकाश्च ॥
दार्व्वी विड़ङ्गं खदिरो धवश्च सुराह्वकुष्ठागुरुचन्दनानि।
दार्व्व्यग्निमन्थौ त्रिफला सपाठा पाठा च मूर्व्वा च तथा श्वदंष्ट्रा॥
यमान्युशीराण्यभया गुड़ूची चव्याभयाचित्रकसप्तपर्णाः।
पादैः कषायाः कफमेहिनां ते दशोपदिष्टा मधुसम्प्रयुक्ताः ॥१९॥
उशीरलोध्रार्ज्जुनचन्दनानामुशीरमुस्तामलकाभयानाम्।
पटोलनिम्बामलकामृतानां मुस्ताभयापद्मकवृक्षकाणाम् ॥
लोध्राम्बुकालीयकधातकीनां निम्बार्ज्जुनाम्रातनिशोत्पलानाम्।
शिरीषसर्ज्जार्ज्जुनकेशराणां प्रियङ्गुपद्मोत्पलकिंशुकानाम् ॥
अश्वत्थपाठासनवेतसानां कटङ्कटेर्य्युत्पलमुस्तकानाम्।
पैत्तेषु मेहेषु दश प्रदिष्टाः पादैः कषाया मधुसम्प्रयुक्ताः ॥ २० ॥
सर्व्वेषु मेहेषु हितौ तु पूर्व्वौ कषाययोगौ विहितास्तु सर्व्वे।
मन्थश्च पाने यवभावनायां सुभोजने पानविधौ पृथक्च ॥२१॥
सिद्धानि तैलानि घृतानि चैव देयानि मेहेष्वनिलात्मकेषु।
मेदः कफश्चैव कषाययोगैः स्नेहैश्च वायुः शममेति तेषाम् ॥२२
कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही॥
पिबेद्रसेनामलकस्य चापि कल्कीकृतान्यक्षसमानि काले।

जीर्णे च भुञ्जीत पुराणमन्नं मेही रसैर्जाङ्गलजैर्मनोज्ञैः॥ २३॥
दृष्ट्वानुबन्धं पवनात् कफस्य पित्तस्य वा स्नेहविधिर्विकल्प्यः।
तैलं कफे स्यात् स्वकषायसिद्धं पित्ते घृतं पित्तहरैः कषायैः॥२४
त्रिकण्टकाश्मान्तकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः।
पाठापटोलार्ज्जुननिम्बमुस्तैर्हरिद्रया पद्मकदीप्यकैश्च॥
मञ्जिष्ठया चागुरुचन्दनैश्च सर्व्वैः समस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद्घृतन्तु पैत्तेषु मिश्रं त्रिषु लक्षणेषु॥ २५॥
फलत्रिकं दारु निशा विशाला मुस्ता च निःक्वाथ्य निशा सकल्का।
पिवेत् कषायं मधुसम्प्रयुक्तं सर्व्वप्रमेहेषु समुद्धतेषु॥ २६॥
लोध्रं शटीं पुष्करमूलमेलां मूर्व्वां विडङ्गं त्रिफलां यमानीम्।
चव्यं प्रियङ्गुं क्रमुकं विशालां किराततिक्तं कटुरोहिणीञ्च॥
भार्गीं नतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषं सपाठम्।
कलिङ्गकान् केशरमिन्द्रसाह्वान् नखं सपत्रं मरिचं प्लवञ्च॥
द्रोणेऽम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे।
रसेऽर्द्धभागं मधुनः प्रदाय पक्षं निधेयो घृतभाजनस्थः॥
लोध्रासवोऽयं कफपित्तमेहान् क्षिप्रं निहन्याद्द्विपलप्रयोगात्।
पाण्ड्वामयार्शांस्यरुचिं ग्रहण्या दोषं किलासं विविधञ्च कुष्ठम्॥
इति लोध्रासवः॥ २७॥

क्वाथः स एवाष्टपले च दन्त्या भल्लातकानाञ्च चतुःपलं स्यात्।
सितोपलात्वष्टपला विशेषः क्षौद्रञ्च तावत् पृथगासवौ तौ॥२८॥
सारोदकं वाथ कुशोदकं वा मधूदकं वा त्रिफलारसं वा।
सीधुं पिवेद्वा निगदं प्रमेही माध्वीकमग्र्यं चिरसंस्थितं वा॥
मांसानि शूल्यानि मृगद्विजानां खादेद्यवानां विविधांश्च भक्ष्यान्।

संशोधनारिष्टकषायलेहैः सन्तर्पणोत्थान् शमयेत् प्रमेहान् ॥ २९
भृष्टान् यवान् भक्षयतः प्रयोगान् शुष्कांश्च शक्तूनभवन्ति मेहाः ।
श्वित्रञ्च कृच्छ्रं कफजञ्च कुष्ठं तथैव मुद्गामलकप्रयोगान् ॥३०॥
सन्तर्पणोत्थेषु गदेषु योगा मेदस्विनां ये च मयोपदिष्टाः ।
विरूक्षणार्थं कफपित्तजेषु सिद्धाः प्रमेहेष्वपि ते प्रयोज्याः ॥३१॥
व्यायामयोगैर्विविधैः प्रगाढैरुद्वर्त्तनैः स्नानजलावसेकैः ।
सेव्यत्वगेलागुरुचन्दनाद्यैर्विलेपनैश्चाशु न सन्ति मेहाः ॥ ३२ ॥
क्लेदश्च मेदश्च कफश्च वृद्धः प्रमेहहेतुः प्रसमीक्ष्य तस्मात् ।
वैद्येन पूर्व्वं कफपित्तजेषु मेहेषु कार्य्याण्यपतर्पणानि ॥ ३३

या वातमेहान् प्रतिपूर्व्वमुक्ता
वातोल्वणानां विहिता क्रिया सा ।
वायुर्हि मेहेष्वतिकर्षितानां
कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥ ३४ ॥
यैर्हेतुभिर्ये प्रभवन्ति मेहा-
स्तेषु प्रमेहेषु न ते निषेव्याः ।
हेतोरसेवा विहिता यथैव
जातस्य रोगस्य भवेच्चिकित्सा ॥ ३५ ॥
हारिद्रवर्णं रुधिरञ्च मूत्रं
विना प्रमेहस्य हि पूर्व्वरूपैः ।
यो मूत्रयेत् तं न वदेत् प्रमेहं
रक्तस्य पित्तस्य हि स प्रकोपः ॥ ३६ ॥
दृष्ट्वा प्रमेहं मधुरं सपिच्छं
मधूपमं स्याद्द्विविधो विचारः ।

क्षीणेषु दोषेष्वनिलात्मकाः स्युः
सन्तर्पणाद्वा कफसम्भवाः स्युः ॥ ३७ ॥
सपूर्व्वरूपाः कफपित्तमेहाः
क्रमेण ये वातकृताश्च मेहाः ।
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तु मेदो यदि न प्रदुष्टम् ॥
जातप्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि बीजदोषात् ।
ये चापि केचित् कुलजा विकारा
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥ ३८ ॥
प्रमेहिणां याः पिड़का मयोक्ता-
रोगाधिकारे पृथगेव सप्त ।
ताः शल्यविद्भिः कुशलैश्चिकित्स्याः
शस्त्रेण संशोधनरोपणैश्च ॥ ३९ ॥

तत्र श्लोकाः ।

हेतुर्दोषो दूष्यं मेहानां साध्यतानुरूपश्च मेहः ।
द्विविधो द्विविधं भिषगजितं तल्लक्षणं दोषः ॥
आद्या यवान्नविकृतिर्मन्था मेहापहाः कषायाश्च ।
तैलघृतलेहयोगा भक्ष्याः प्रवरासवाः सिद्धाः ॥
व्यायामविधिर्विविधः स्नानानुद्वर्त्तनानि गन्धाश्च ।
मेहानां प्रशमार्थं चिकित्सिते दृष्टमेतावत् ॥ ४० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
प्रमेहचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातः कुष्ठचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

हेतुं द्रव्यं लिङ्गं कुष्ठानामाश्रयं प्रशमनञ्च ।
शृण्वग्निवेश सम्यग्विशेषतः स्पर्शनघ्नानाम् ॥ २ ॥
विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागतां छर्द्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥
व्यायाममतिसन्तापमतिभुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणाम् ॥
घर्म्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम् ।
अजीर्णाध्यशिनाञ्चैव पञ्चकर्म्मापचारिणाम् ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ।
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥
व्यवायञ्चाप्यजीर्णेऽन्ने निद्राञ्च भजतां दिवा ।
विप्रान् गुरून् धर्षयतां पापं कर्म्म च कुर्व्वताम् ॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ।
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ३ ॥
ततः कुष्ठानि जायन्ते सप्त चैकादशैव च ।
न चैकदोषजं किञ्चित् कुष्ठं समुपलभ्यते ॥ ४ ॥
स्पर्शाज्ञत्वमतिस्वेदो न वा वैवर्ण्यमुन्नतिः ।
कोठानां लोमहर्षश्च कण्डूस्तोदः श्रमः क्लमः ॥

व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
दाहः सुप्ताङ्गता चेति कुष्ठलक्षणमग्रजम् ॥ ५ ॥

अत ऊर्द्ध्वमष्टादशानां कुष्ठानां कपालोडुम्बरमण्डलर्ष्य-जिह्व-पुण्डरीकसिध्मकाकणैककुष्ठचर्म्माख्यकिटिमविपादिकालसकदद्रुचर्म्मदल-पामाविस्फोट-शतारु-विचर्च्चिकानां लक्षणानुपदेक्ष्यामः ॥ ६ ॥

कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ।
कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम् ॥ ७ ॥
रुग्दाहरागकण्डूभिः परीतं लोमपिञ्जरम् ।
उडुम्बरफलाभासं कुष्ठमौडुम्बरं वदेत् ॥ ८ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते ॥ ९ ॥
कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम् ।
यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १० ॥
सश्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सरागञ्च * पुण्डरीकं प्रचक्षते ॥ ११ ॥
श्वेतं ताम्रं तनुच यद्रजो घृष्टं विमुञ्चति ।
अलाबुपुष्पवर्णञ्च तत् सिध्मं भूयसोरसि ॥ १२ ॥
यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति ॥ १३ ॥
इति सप्त महाकुष्ठानि ।

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।

---

* सदाहञ्चेति पाठान्तरम् ।

तदेककुष्ठं चर्म्माख्यं बहलं हस्तिचर्म्मवत् ॥
श्यावं किणखरस्पर्शं परुषं किटिमं स्मृतम् ।
वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ।
सकण्डूरागपिड़कं दद्रुमण्डलमुद्गतम् ॥
रक्तं सशूलं कण्डूमत् सस्फोटं यद् दलत्यपि ।
तच्चर्म्मदलमाख्यातं संस्पर्शासहमुच्यते ॥
पामाः श्वेतारुणश्यावाः कण्डूरा पिड़का भृशम् ।
स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥
रक्तं श्यावं सदाहार्त्ति शतारुः स्याद्बहुव्रणम् ।
सकण्डू पिड़का श्यावा बहुस्रावा विचर्च्चिका ॥ १४ ॥
इत्येकादश क्षुद्रकुष्ठानि ।

वातेऽधिकतरे कुष्ठं कापालं मण्डलं कफे ।
पित्ते त्वौडुम्बरं विद्यात् काकणन्तु त्रिदोषजम् ॥ १५ ॥
वातपित्ते श्लेष्मपित्ते वातश्लेष्मणि चाधिके ।
ऋष्यजिह्वं पुण्डरीकं सिध्मकुष्ठञ्च जायते ॥ १६ ॥
चर्म्माख्यमेककुष्ठञ्च किटिमं सविपादिकम् ।
कुष्ठञ्चालसकं ज्ञेयं प्रायो वातकफाधिकम् ॥ १७ ॥
पामाशतारुविस्फोटं दद्रुश्चर्म्मदलं तथा ।
पित्तश्लेष्माधिकं प्रायः कफप्राया विचर्च्चिका ॥ १८ ॥
सर्व्वं त्रिदोषजं कुष्ठं दोषाणाञ्च बलाबलम् ।
यथास्वैर्लक्षणैर्बुद्ध्वा कुष्ठानां क्रियते क्रिया ॥
दोषस्य यस्य पश्येत् कुष्ठेषु विशेषलिङ्गमुद्रिक्तम् ।

तत्रैव श्रमं कुर्य्यात् ततः परञ्चानुबन्धस्तु ॥ १९ ॥
कुष्ठविशेषैर्दोषा दोषविशेषैः पुनः कुष्ठानि ।
ज्ञायन्ते ते हेतुं हेतुस्तांश्च प्रकाशयन्ति ॥ २० ॥
रौक्ष्यं शोषस्तोदः शूलं सङ्कोचनं तथायासः ।
पारुष्यं खरभावो हर्षः श्यावारुणत्वञ्च ॥
कुष्ठेषु वातलिङ्गं दाहो रागः परिस्रवः पाकः ।
विस्रो गन्धः क्लेदस्तथाङ्गपतनञ्च पित्तकृतम् ॥
श्वैत्यं शैत्यं कण्डूः स्थैर्य्यं सोत्सेधगौरवस्नेहाः ।
कुष्ठेषु तु कफलिङ्गं जन्तुभिरभिभक्षणं क्लेदः ॥ २१ ॥
सर्व्वैर्लिङ्गैर्युक्तं मतिमान् विवर्ज्जयेदबलम् ।
तृष्णादाहपरीतं शान्ताग्निं जन्तुभिर्जग्धम् ॥ २२ ॥
वातकफप्रबलं यद्यदेकदोषोल्बणं न तत् कृच्छ्रम् ।
कफपित्तवातपित्तप्रबलानि तु कृच्छ्रकुष्ठानि ॥ २३ ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रे ॥
वमनविरेचनयोगाः कल्पोक्ताः कुष्ठिनां प्रयोक्तव्याः ।
प्रच्छनमल्पे कुष्ठे महति च शस्तं शिराव्यधनम् ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ २४ ॥
स्नेहस्य पानमिष्टं शुद्धे कोष्ठे प्रवाहिते रक्ते ।
वायुर्हि शुद्धकोष्ठं कुष्ठिनमबलं विशति शीघ्रम् ॥ २५ ॥
दोषोत्क्लिष्टे हृदये वाम्यः कुष्ठेषु चोर्द्ध्वभागेषु ।
कुटजफलमदनमधुकैः सपटोलैर्निम्बरसयुक्तैः ॥

शीतरसः पक्वरसो मधूनि च मधुकञ्च वमनानि ।
कुष्ठे त्रिवृता दन्ती त्रिफला च विरेचने शस्ता ॥
सौवीरकतुषोदकमालोडनमासवांश्च सीधूनि ।
शंसन्त्यधोहराणां यथाविरेकं क्रमश्चेष्टः ॥ २६ ॥
दार्व्वीबृहतीसेव्यैः पटोलपिचुमर्द्दमदनकृतमालैः ।
सस्नेहैरास्थाप्यः कुष्ठी सकलिङ्गफलमुस्तैः ॥
वातोल्वणं विरिक्तं निरूढमनुवासनार्हमालक्ष्य ।
फलमधुकनिम्बकुटजैः सपटोलैः साधयेत् स्नेहम् ॥२७॥
सैन्धवदन्तीमधुकं फणिज्झकं सपिप्पलीकरञ्जफलम् ।
नस्यं स्यात् सविडङ्गं क्रिमिकुष्ठकफप्रदोषघ्नम् ॥ २८ ॥
वैरेचनिकैर्धूमैः श्लोकस्थानेरितैः प्रशाम्यन्ति ।
क्रिमयः कुष्ठकिलासाः प्रयोजितैरुत्तमाङ्गस्थाः ॥ २८ ॥
स्थिरकठिनमण्डलानां स्विन्नानां प्रस्तरप्रणाड़ीभिः ।
कूर्च्चैर्विघट्टितानां रक्तोत्क्लेशोऽपनेतव्यः ॥
आनूपवारिजानां मांसानां पोट्टलैः सुखोष्णैश्च ।
स्विन्नोत्सन्नं विलिखेत् कुष्ठं तीक्ष्णेन शस्त्रेण ॥
रुधिरागमार्थमथवा शृङ्गालाबुभिराहरेद्रुधिरम् ।
प्रच्छितमल्पं कुष्ठं विरेचयेद्वा जलौकाभिः ॥ ३० ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवेत् तेषाम् ॥ ३१ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनानि यानि स्युः ।
तेषु निपात्यः क्षारो रक्तञ्च दोषञ्च विस्राव्य ॥ ३२ ॥
पाषाणकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ।

पीताऽगदश्च कार्य्यो बुधैः प्रदेहोऽगदैश्चाशु ॥ ३३ ॥
स्तब्धानि सुप्तान्यस्वेदनकण्डुलानि कुष्ठानि ।
कूर्च्चैर्दन्तीत्रिवृताकरवीरकरञ्जकुटजानाम् ॥
जात्यर्कनिम्बजैर्वा पत्रैः शस्त्रैः समुद्रफेनैर्वा ।
घृष्टानि गोमयैर्वा ततः प्रदेहैः प्रदेह्यानि ॥ ३४ ॥
मारुतकफकुष्ठघ्नं कर्म्मोक्तं कुष्ठिनां कार्य्यम् ।
कफपित्तरक्तहरणं तिक्तकषायैः प्रशमनञ्च ॥ ३५ ॥
सर्पींषि तिक्तकानि च यच्चोक्तं रक्तपित्तनुत् कर्म्म ।
बाह्याभ्यन्तरमग्र्यं तत् कार्य्यं पित्तकुष्ठेषु ॥ ३६ ॥
दोषाधिक्यविभागादितेऽग्रतत् कर्म्म कुष्ठनुत् प्रोक्तम् ।
वक्ष्यामि कुष्ठशमनं प्रायस्त्वग्दोषसामान्यात् ॥ ३७ ॥
दार्व्वीं रसाञ्जनं वा गोमूत्रेण प्रबाधते कुष्ठम् ।
अभया प्रयोजिता वा मासं सव्योषगुड़तैला ॥ ३८ ॥

मूलं पटोलस्य तथा गवाक्ष्याः पृथक्पलांशं त्रिफला त्रिवृच्च ।
स्यात् त्रायमाणा कटुरोहिणी च भागार्द्धिका नागरपादयुक्ता ॥
पलं तथैषां सह चूर्णितानां जले शृतं दोषहरं पिबेन्ना ।
जीर्णे रसै धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥
कुष्ठानि शोफं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च ।
योगः प्रयोगेण निहन्ति चैषां हृद्वस्तिशूलं विषमज्वरञ्च ॥३९॥

इति पटोलमूलादि चूर्णम् ।

मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूल्यौ द्वे ।
सप्तच्छदनिम्बत्वक् सविशाला चित्रको मूर्व्वा ॥

चूर्णं तपर्णभागे * र्नवभिः संयोजितं समध्वाज्यम् ।
सिद्धं कुष्ठनिवर्हणमेतत् प्रायोगिकं भक्ष्यम् ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
व्रध्नभगन्दरपिड़काकण्डूकोठांश्च विनिहन्ति ॥ ४० ॥

इति मुस्तादि चूर्णम् ।

त्रिफलातिविषाकटुकानिम्बकलिङ्गकवचापटोलानाम् ।
मागधिकारजनीद्वयपद्मकमूर्व्वाविशालानाम् ॥
भूनिम्बपलाशानां दद्यात्त्रिपलं ततस्त्रिंशत्त्रिगुणा ।
तस्याश्च पुनर्ब्राह्मी तच्चूर्णं सुपिनुत् परमम् ॥ ४१ ॥
नवनीतकप्रयोगे रसेन जात्याः समाक्षिकः परमः ।
सप्तदशकुष्ठघाती माक्षिकधातुश्च मूत्रेण ॥
गन्धकयोगसुवर्णमाक्षिकयोगादेव ।
सर्व्वव्याधिविनाशनमद्यात् कुष्ठी रसञ्च निगृहीतम् ॥
वज्रं शिलाजतुसहितं सहितं वा योगराजेन ।
सर्व्वव्याधिहरणार्थमद्यात् कुष्ठी निगृह्य नित्यञ्च ॥ ४२ ॥
खदिरसुरदारुसारं श्रपयित्वा तद्रसेन तोयार्थः ।
क्षौद्रप्रस्थे कार्य्यः कार्य्ये ते वाष्टपलिके च ॥
तत्रायश्चूर्णानामष्टपलं प्रक्षिपेत् तथामूनि ।
त्रिफलैले त्वङ्‌मरिचं पत्रं कनकञ्च कर्षांशम् ॥
मतृस्यण्डिका मधुसमा तन्मासं जातमायसे भाण्डे ।
मध्वासवमाचरतः कुष्ठकिलासे शमं यातः ॥ ४३ ॥

इति मध्वासवः ।

---

* चूर्णस्तु पञ्चभागैर्नवभिरिति वा पाठः ।

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य ।
द्रव्याणि चूर्णितानि च षट्पलिकान्यत्र देयानि ॥
त्रिफलाव्योषविडङ्गरजनीमुस्ताटरूषकेन्द्रयवाः ।
सौवर्णी च तथा त्वक् छिन्नरुहा चेति तन्मात्रम् ॥
निदधीत धान्यमध्ये प्रातः प्रातः पिबेत्ततो युक्त्या ।
मासेन महाकुष्ठं हन्त्येवाल्पन्तु पक्षेण ॥
अर्शःश्वासभगन्दरकासकिलासप्रमेहशोषांश्च ।
ना भवति कनकवर्णः पीत्वारिष्टं कनकविन्दुम् ॥ ४४ ॥

इति कनकविन्द्वरिष्टम् ।

कुष्ठेष्वनिलकफकृतेष्वेवं पेयस्तथा पित्तेषु ।
कृतमालक्वाथश्चापेयः विशेषात् कफकृतेषु ॥ ४५ ॥
त्रिफलासवश्च गौड़ः सचित्रकः कुष्ठरोगविनिहन्ता ।
क्रमुकदशमूलदन्तीवराङ्गमधुयोगसंयुक्तः ॥ ४६ ॥
लघूनि चान्नानि हितानि विद्यात् कुष्ठेषु शाकानि च तिक्तकानि
भल्लातकैः सत्रिफलैः सनिम्बैर्युक्तानि चान्नानि घृतानि चैव ॥
पुराणधान्यान्यथ जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः ।
शस्ता न गुर्व्वम्लपयोदधीनि नानूपमत्स्या न गुड़स्तिलाश्च ॥४७
एला कुष्ठं दार्व्वी शतपुष्पा चित्रको विडङ्गश्च ।
कुष्ठालेपनमिष्टं रसाञ्जनञ्चाभया चैव ॥ ४८ ॥
चित्रकमेलां विम्बीं वृषकं त्रिवृदर्कनागरकम् ।
चूर्णीकृतमष्टाहं भावयितव्यं पलाशस्य ॥
क्षारेण गवां मूत्रे स्रुतेनाऽस्य मण्डलान्याशु ।
भिद्यन्ते विलयन्ति च लिप्तान्यर्काभितप्तानि ॥ ४९ ॥

मांसी मरिचं लवणं रजनी तगरं सुधा गृहधूमः ।
मूत्रं गोः पित्तञ्च क्षारः पालाशः कुष्ठघ्नो लेपः ॥ ५० ॥
त्रपु सीसमयश्चूर्णं मण्डलनुत् फल्गुचित्रकौ बृहती ।
गोधारसः सलवणो दारु च मूत्रञ्च मण्डलनुत् ॥ ५१ ॥
कदलीपलाशपाटलिनिचुलक्षारान्भसा प्रसन्नेन ।
मांसेषु तोयकार्यं कार्यं पिष्टे च किण्वे च ॥
तैर्मोदकः सुजातः किण्वे जनितः प्रलेपनं श्रेष्ठम् ।
मण्डलकुष्ठविनाशनमातपसंस्थं क्रिमिघ्नञ्च ॥ ५२ ॥
मुस्तं त्रिफला मदनं करञ्ज आरग्वधः कलिङ्गयवाः ।
दार्व्वी ससप्तपर्णा स्नानं सिद्धार्थकं नाम ॥
एष कषायो वमनं विरेचनं वर्णकस्तथोद्घर्षः ।
त्वग्दोषशोफकुष्ठप्रबाधनः पाण्डुरोगघ्नः ॥ ५३ ॥
कुष्ठं करञ्जबीजान्येड़गजः कुष्ठसूदनो लेपः ।
प्रपुन्नाड़बीजसैन्धवरसाञ्जनकपित्थलोध्राश्च ॥
करवीरमूलवल्कः कुटजकरञ्जयोः फलं त्वचो दार्व्व्याः ।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ५४ ॥
लोध्रस्य धातकीनां वत्सकबीजस्य नक्तमालस्य ।
कल्कश्च मालतीनां कुष्ठेषून्मर्दनालेपौ ॥ ५५ ॥
शैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि ।
पिष्टा च काकमाची चतुर्व्विधः कुष्ठनुल्लेपः ॥ ५६ ॥
दार्व्व्या रसाञ्जनस्य च निम्बपटोलस्य खदिरसारस्य ।
आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥
इति षट्कषाययोगाः कुष्ठघ्नाः सम्मतास्त्रिविधाः ।

स्नाने पाने च हितास्तथाष्टमश्चाश्मवमारख्य ॥
आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः ।
तैलघृतपाकयोगे चेष्यन्ते कुष्ठशान्त्यर्थम् ॥ ५७ ॥
त्रिफला निम्बपटोलं मञ्जिष्ठा रोहिणी वचा रजनी ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥
एतैरेव च सर्पिः सिद्धं वातोल्बणं जयति कुष्ठम् ।
एष च कल्पो दृष्टः खदिरासनदारुनिम्बानाम् ॥ ५८ ॥
कुष्ठार्कतुत्थकट्फलमूलकबीजानि रोहिणी कटुका ।
कुटजफलोत्पलमुस्तं बृहतीकरवीरकासीसम् ॥
एडगजनिम्बपाठा दुरालभा चित्रको विडङ्गञ्च ।
तिक्तालाबुकबीजं कम्पिल्लकसर्षपं वचा दार्व्वी ॥
एतैस्तैलं सिद्धं कुष्ठघ्नं योग एष चालेपः ।
उद्वर्त्तनं प्रघर्षणमवचूर्णनमेष एव चेष्टः ॥ ५९ ॥
श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गञ्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ ६० ॥

इति श्वेतकरवीराद्यं तैलम् ।

श्वेतकरवीरपल्लवमूलत्वग् वत्सको विडङ्गञ्च ।
कुष्ठार्कमूलसर्षपशिग्रुत्वग्रोहिणी कटुका ॥
एतैस्तैलं सिद्धं कल्कैः पादांशिकैर्गवां मूत्रम् ।
दत्त्वा तैलचतुर्गुणमभ्यङ्गात् कुष्ठकण्डूघ्नम् ॥ ६१ ॥

इति श्वेतकरवीरपल्लवाद्यं तैलम् ।

तिक्तालाबुकबीजं द्वे तुल्ये रोचना हरिद्रे द्वे ।
बृहतीफलमेरण्डः सविशालाश्चित्रको मूर्व्वा ॥

काशीशहिङ्गुशिग्रुवृषसुरदारुतुम्बुरुविडङ्गम्।
लाङ्गलकं कुटजत्वक् कटुकाख्यरोहिणी चैव॥
सर्षपतैलं कल्कैरेतैर्मूत्रे चतुर्गुणे साध्यम्।
कण्डूकुष्ठविनाशनमभ्यङ्गाद्वातकफहन्तृ॥ ६२॥

इति तिक्तेक्ष्वाकुतैलम्।

कनकक्षीरीशैला भार्गी दन्त्याः फलानि मूलञ्च।
जातीप्रवालसर्षपलशुनविडङ्गं करञ्जत्वक्॥
सप्तच्छदार्कपल्लवमूलत्वङ्निम्बचित्रकास्फोताः।
गुञ्जैरण्डं वृहतीमूलकसुरसार्ज्जकफलानि॥
कुष्ठं पाठां मुस्तं तुम्बुरुमूर्व्वावचाः सषड्ग्रन्थाः।
एड़गजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः॥
हरितालमवाक्पुष्पी तुत्थं कम्पिल्लकोऽमृतासङ्गः।
सौराष्ट्री काशीशं दार्व्वीत्वक् सर्ज्जिका लवणम्॥
कल्कैरेतैस्तैलं करवीरकमूलपल्लवकषाये।
सार्षपमथवा तैलं गोमूत्रचतुर्गुणं साध्यम्॥
कटुकालाव्वां स्थाप्यं तत् सिद्धं तेन मण्डलान्याशु।
भिन्द्याच्छिषगभ्यङ्गात् क्रिमींश्च कण्डूञ्च विनिहन्यात्॥६३

इति कनकक्षीरीतैलम्।

कुष्ठं तमालपत्रं मरिचं समनःशिलं सकाशीशम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे॥
तेनालिप्तं सिध्मं सप्ताहाद्घर्म्मसेविनो व्येति।
मासान्नवं किलासं स्नानं मुक्त्वा विशुद्धतनोः॥ ६४॥

इति सिध्मे लेपः।

सर्षपकरञ्जकोषातकीनां तैलान्यथेङ्गुदीनाञ्च ।
कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य ॥ ६५ ॥
जीवन्ती मञ्जिष्ठा दार्व्वी कम्पिल्लकं पयस्तुत्थम् ।
एष घृततैलपाकः सिद्धः सिद्धे च सर्ज्जरसो देयः ॥
समधूच्छिष्टो विपादिका तेन शाम्यतीत्यक्तम् ।
चर्म्मैककुष्ठकिटिमं कुष्ठं शाम्यत्यलकमञ्च ॥ ६६ ॥

इति विपादिकाहरघृततैले ।

क्लिन्नं वराहरुधिरे पृथ्वीका सैन्धवञ्च लेपः स्यात् ।
लेपो योज्यः कुसुम्बरूणि कुष्ठञ्च मण्डलनुत् ॥ ६७ ॥
पूतिकदारुजटिलाः पक्वसुरा चौद्रमुद्गपर्ण्यौ च ।
लेपः सकाकनासो मण्डलकुष्ठापहः सिद्धः ॥ ६८ ॥
चित्रकशोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥
लाक्षारसाञ्जनैलापुनर्नवाश्चेति कुष्ठिनां लेपाः ।
दधिमण्डयुताः सर्व्वे देयाः षण्मासकफघ्नाः ॥ ६९ ॥
एड़गजकुष्ठसैन्धवसौवीरकसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिकुष्ठमण्डलाख्यं दद्रुकुष्ठञ्च नाशयति ॥ ७० ॥
एड़गजः सर्ज्जरसो मूलकवीजञ्च सिध्मकुष्ठानाम् ।
काञ्जिकयुक्तन्तु पृथङ्मतमिदमुद्वर्त्तनं क्रमशो लेपाः ॥७१॥
वासा त्रिफला पाने स्नाने चोन्मर्द्दने प्रदेहे च ।
बृहती सेव्यपटोली सशारिवा रोहिणी चैव ॥
खदिरामयघातककुभरोहितकलोध्रकुटजधवनिम्बाः ।
सप्तच्छदकरवीराः शस्यन्ते स्नानपानेषु ॥ ७२ ॥

जलवाष्पलोध्रकेशरपत्रप्लवचण्डामृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ७३ ॥
यष्ट्याह्वलोध्रपद्मकपटोलपिचुमर्द्दचन्दनरसाश्च ।
स्नाने पाने च हिताः सुशीतलाः पित्तकुष्ठेभ्यः ॥ ७४ ॥
आलेपनं प्रियङ्गुर्हरेणुका वत्सकस्य च फलानि ।
सातिविषा च ससेव्या सचन्दना रोहिणी कटुका ॥ ७५ ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्चाभ्यङ्गः ॥ ७६ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके सचर्म्मदले ।
शीताः प्रदेहसेका व्यधो विरेको घृतं तिक्तम् ॥
खदिरघृतं निम्बघृतं दार्व्वीघृतमुत्तमं पटोलघृतम् ।
कुष्ठेषु रक्तपित्तप्रबलेषु भिषग्जितं सिद्धम् ॥ ७७ ॥
त्रिफलात्वचोऽर्द्धपलिकाः पटोलपत्रञ्च कार्षिकाः शेषाः ।
कटुरोहिणी सनिम्बा यष्ट्याह्वा त्रायमाणा च ॥
एष कषायः साध्यो दत्त्वा द्विपलं मसूरविदलानाम् ।
सलिलाढ़केऽष्टभागे शेषे पूतो रसो ग्राह्यः ॥
तत्र कषायेऽष्टपले चतुष्पलं सर्पिषश्च पक्तव्यम् ।
यावत् स्यादष्टपलं शेषं पेयं ततः कोष्णम् ॥
तद्वातपित्तकुष्ठं वीसर्पं वातशोणितं प्रबलम् ।
ज्वरदाहगुल्मविद्रधिविभ्रमविस्फोटकान् हन्ति ॥ ७८ ॥
निम्बपटोलं दार्व्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशां पर्पटकं त्रायमाणाञ्च ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते ।

चन्दनकिराततिक्तकमागधिकास्त्रायमाणाञ्च ॥
मुस्तं वत्सकवीजं कल्कीकृत्यार्द्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत् तिक्तकं घृतं पेयम् ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डूामयश्वयथुहारि ।
पामावीसर्पपिड़काकण्डूमदगण्डनुत् सिद्धं तिक्तम् ॥७९॥

इति तिक्तषट्पलकं घृतम् ।

सप्तच्छदं प्रतिविषां शम्पाकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्द्दपर्पटकम् ॥
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥
वत्सकवीजं वासां मूर्व्वाममृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥
कल्कश्चातुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत् सिद्धम् ॥
कुष्ठानि रक्तपित्तप्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्परक्तपित्तं वातासृक्पाण्डुरोगञ्च ॥
विस्फोटकान् सपामानुन्मादं कामलां ज्वरं कण्डूम् ।
हृद्रोगगुल्मपिड़का असृग्दरं गण्डमालाञ्च ॥
हन्यादेतत् सर्पिः पीतं काले यथाबलं सद्यः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते वमने ।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्त्तते साध्यम् ॥ ८० ॥

इति महातिक्तकं घृतम् ।

खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले ।
तुलार्द्धाः सर्व्व एवैते करञ्जारिष्टवेतसाः ॥
पर्पटः कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥
सप्तपर्णश्च संक्षुण्णा दशद्रोणेषु वारिणः ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढकं पचेत् ।
महातिक्तककल्कैस्तु यथोक्तैः पलसम्मितैः ॥
निहन्ति सर्व्वकुष्ठानि पानाभ्यङ्गनिषेवणात् ।
महाखदिरमित्येतत् परं कुष्ठविकारनुत् ॥ ८१ ॥

इति महाखदिरं घृतम् ।

प्रपतत्सु लसीकाप्रस्रुतेषु गात्रेषु जन्तुजग्धेषु ।
मूत्रं निम्बविडङ्गे स्नानं पानं प्रदेहश्च ॥ ८२ ॥
वृषकुटजसप्तपर्णाः करवीरकरञ्जनिम्बखदिराश्च ।
स्नाने पाने लेपे क्रिमिकुष्ठनुदः सगोमूत्राः ॥ ८३ ॥
पानाहारविधाने प्रसेचने धूपने प्रदेहे च ।
क्रिमिनाशनं विडङ्गं विशिष्यते कुष्ठहा खदिरः ॥ ८४ ॥
एड़गजः सविड़ङ्गो मूलान्यारग्बधस्य कुष्ठानाम् ।
उद्दालनं स्नुदन्ता गोऽश्ववराहोष्ट्रदन्ताश्च ॥ ८५ ॥
एड़गजः सविड़ङ्गो द्वे च निशे राजवृक्षमूलञ्च ।
कुष्ठोद्दालनमग्र्यं सपिप्पलीपाकलं योज्यम् ॥ ८६ ॥
श्वित्राणां प्रशमार्थं प्रयोक्तव्यं सर्व्वतो विशुद्धानाम् ।
श्वित्रे स्रंसनमग्र्यं मलपूरस इष्यते सगुड़ः ॥

तं पीत्वा सुस्निग्धो यथाबलं सूर्य्यपादसन्तापम् ।
संसेवेत विरिक्तस्त्र्यहं पिपासुः पिबेत् पेयाम् ॥ ८७ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत् पत्रम् ॥
मलपूमसनं प्रियङ्गुं शतपुष्पाञ्चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥
यच्चान्यत् कुष्ठघ्नं श्वित्राणां सर्व्वमेतच्छस्तम् ।
खदिरोदकसंयुक्तं खदिरोदकपानमग्र्यम् वा ॥ ८८ ॥
समनःशिलं विडङ्गं काशीशं रोचनां कनकपुष्पीम् ।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात् ॥
कदलीक्षारयुक्तं वा खरास्थि दग्धं गवां रुधिरयुक्तम् ।
हस्तिमदाध्युषितं वा मालत्याः क्षारकं क्षारम्
नीलोत्पलं सकुष्ठं ससैन्धवं हस्तिमूत्रपिष्टं वा ।
मूलकबीजावल्गुजालेपः पिष्टो भवेद् गवां मूत्रे ॥
काकोदुम्बरिकावासावल्गुजचित्रका गवां मूत्रे ।
पिष्टा मनःशिला वा संयुक्ता बर्हिपित्तेन ॥ ८९ ॥

इति श्वित्रे लेपाः ।

लेपः किलासहन्ता बीजान्यवल्गुजानि लाक्षा च ।
गोपित्तमञ्जने द्वे पिप्पल्यः काललोहरजः ॥ ९० ॥
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ ९१ ॥
दारुणाच्चारुणं श्वित्रं किलासं नामभिस्त्रिभिः ।
यदुच्यते तत् त्रिविधं त्रिदोषं प्रायशस्तु तत् ॥

दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते।
श्वेतं मेदःश्रिते श्वित्रं गुरु तच्चोत्तरोत्तरम् ॥ ६२ ॥
यत् परस्परतोऽभिन्नं बहु यद्रक्तलोमवत्।
यच्च वर्षगणोत्पन्नं तच्छ्वित्रं नैव सिध्यति ॥ ६३ ॥
वचांस्यतथ्यानि कृतघ्नभावो निन्दा गुरूणां गुरुधर्षणञ्च।
पापक्रिया पूर्व्वकृतञ्च कर्म्म हेतुः किलासस्य विरोधि चान्नम् ॥ ६४

तत्र श्लोकाः।

हेतुर्द्रव्यं लिङ्गं विविधं ये येषु चाधिका दोषाः।
कुष्ठेषु दोषलिङ्गं समासतो दोषनिर्द्देशः ॥
साध्यमसाध्यं कृच्छ्रं कुष्ठं कुष्ठापहाश्च ये योगाः।
सिद्धाः किलासहेतुर्लिङ्गं गुरुलाघवं तथा शान्तिः ॥
इति संग्रहः प्रणीतो महर्षिणा कुष्ठनाशनेऽध्याये।
स्मृतिबुद्धिवर्द्धनार्थं शिष्याय हुताशवेशाय ॥ ६५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
कुष्ठचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

दिवौकसां कथयतामृषिभिर्वै श्रुता कथा ।
कामव्यसनसंयुक्ता पौराणी शशिनं प्रति ॥
रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः ।
आजगामाल्पतामिन्दोर्देहः स्नेहपरिक्षयात् ॥
दुहितॄणामसम्भोगाच्छेषाणाञ्च प्रजापतेः ।
क्रोधो निश्वासरूपेण मूर्त्तिमान् निःसृतो मुखात् ॥
प्रजापतेर्हि दुहितॄरष्टाविंशतिमंशुमान् ।
भार्य्यार्थं प्रतिजग्राह न च सर्व्वास्ववर्त्तत ॥
गुरुणा तमवध्यातं भार्य्यास्वसमवर्त्तिनम् ।
रजःपरीतमबलं यक्ष्मा शशिनमाविशत् ॥
सोऽभिभूतोऽतिबलिना गुरुक्रोधेन निष्प्रभः ।
देवदेवर्षिसहितो जगाम शरणं गुरुम् ॥
अथ चन्द्रमसः शुद्धां मतिं बुद्ध्वा प्रजापतिः ।
प्रसादं कृतवान् सोमस्ततोऽश्विभ्यां चिकित्सितः ॥
स विमुक्तो ग्रहश्चन्द्रो विरराज विशेषतः ।
ओजसा वर्द्धितोऽश्विभ्यां शुद्धं सत्त्वमवाप च ॥ २ ॥
क्रोधो यक्ष्मा ज्वरो रोग एकार्थो दुःखसंज्ञकः ।
यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः ॥ ३ ॥

स यक्ष्मा हुङ्कृतोऽश्विभ्यां मानुषं लोकमागतः।
लब्ध्वा चतुर्व्विधं हेतुं समाविशति मानवम्॥
अयथाबलमारम्भो वेगसन्धारणं क्षयम्।
यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम्॥ ४॥
युद्धाध्ययनभाराध्वलङ्घनप्लवनादिभिः।
पतनैरभिघातैर्व्वा साहसैर्व्वा तथापरैः॥
अयथाबलमारम्भैर्जन्तोरुरसि विक्षते।
वायुः प्रकुपितो दोषावुदीर्य्योभौ विधावति॥
स शिरःस्थः शिरःशूलं करोति गलमाश्रितः।
कण्ठोद्ध्वंसञ्च कासञ्च स्वरभेदमरोचकम्॥
पार्श्वशूलञ्च पार्श्वस्थो वर्च्चोभेदं गुदे स्थितः।
जृम्भां ज्वरञ्च सन्धिस्थ उरस्थश्चोरसो रुजम्॥
क्षणनादुरसः कासात् कफं ष्ठीवेत् सशोणितम।
जर्ज्जरेणोरसा कृच्छ्रमूरःशूलातिपीड़ितः॥
इति साहसिको यक्ष्मा रूपैरेतैः प्रपद्यते।
एकादशभिरात्मज्ञः सेवेतातो न साहसम्॥ ५॥
ह्रीमत्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम्।
वातमूत्रपुरीषाणां निगृह्णाति यदा नरः॥
तदा वेगप्रतीघातात् कफपित्ते समीरयन्।
ऊर्द्ध्वं तिर्य्यगधश्चैव विकारान् कुरुतेऽनिलः॥ ६॥
प्रतिश्यायञ्च कासञ्च स्वरभेदमरोचकम्।
पार्श्वशूलं शिरःशूलं ज्वरमंसावमर्द्दनम्॥
अङ्गमर्द्दो मुहुश्छर्द्दिर्व्वर्च्चोभेदं विलक्षणम्।

रूपाण्येकादशैतानि यक्ष्मा यैरुच्यते महान् ॥ ७ ॥
ईर्ष्योत्कण्ठाभयत्रासक्रोधशोकातिकर्षणात् ।
अतिव्यवायानशनाच्छुक्रमोजश्च हीयते ॥
ततः स्नेहक्षयाद्वायुर्वृद्धो दोषावुदीरयन् ।
प्रतिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् ॥
श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् ।
करोति चांससन्तापमेकादशमहाग्रहः ॥
रूपाण्यावेदयन्त्येतान्येकादश महागदम् ।
संप्राप्तं राजयक्ष्माणं क्षयात् प्राणक्षयावहम् ॥ ८ ॥
विविधान्यन्नपानानि वैषम्येण समश्नताम् ।
जनयन्त्यामयान् घोरान् विषमान् मारुतादयः ॥
स्रोतांसि रुधिरादीनां वैषम्याद्विषमं गताः ।
रुद्ध्वा रोगाय कल्पन्ते पुष्यन्ति च न धातवः ॥ ९ ॥
प्रतिश्यायं प्रसेकञ्च कासं छर्दिमरोचकम् ।
ज्वरमंसाभितापञ्च छर्दनं रुधिरस्य च ॥
पार्श्वशूलं शिरःशूलं स्वरभेदमथापि च ।
कफपित्तानिलकृतं लिङ्गं विद्याद्यथाक्रमम् ॥ १० ॥
इति व्याधिसमूहस्य रोगराजस्य हेतुजम् ।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः ॥ ११ ॥
पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम् ।
अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥
घृणित्वमश्नतश्चापि बलमांसपरिक्षयः ।
स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥

मक्षिकाघूणकेशानां तृणानां पतनानि च।
प्रायोऽन्नपाने केशानां नखानाञ्चाभिवर्द्धनम्॥
पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्।
स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम्॥
जलाशयानां शैलानां वनानां ज्योतिषामपि।
शुष्यतां क्षीयमाणानां पततां यच्च दर्शनम्॥
प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः।
रूपं त्वस्य यथोद्दिष्टं परं शृणु सभेषजम्॥ १२॥
यथास्वेनोष्मणा पाकं शारीरा यान्ति धातवः।
स्रोतसा च यथास्वेन धातुः पुष्यति धातुतः॥
स्रोतसां संनिरोधाच्च रक्तादीनाञ्च संक्षयात्।
धातूष्मणाञ्चापचयाद्राजयक्ष्मा प्रवर्त्तते॥ १३॥
तस्मिन् काले पचत्यग्निर्यदन्नं कोष्ठसंश्रितम्।
मलीभवति तत् प्रायः कल्पते किञ्चिदोजसे॥
तस्मात् पुरीषं संरक्ष्यं विशेषाद्राजयक्ष्मिणः।
सर्व्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम्॥ १४॥
रसः स्रोतःसु रुद्धेषु स्वस्थानस्थो विवर्द्धते॥
स ऊर्द्ध्वं कासवेगेन बहुरूपः प्रवर्त्तते॥
जायन्ते व्याधयश्चातः षडेकादश वा पुनः।
येषां सङ्घातयोगेन राजयक्ष्मेति कथ्यते॥ १५॥
कासोऽंसतापो वैस्वर्य्यं ज्वरः पार्श्वशिरोरुजा।
शोणितस्य श्लेष्मणोश्छर्द्दिः श्वासो वर्च्चोगदोऽरुचिः॥
रूपाण्येकादशैतानि यक्ष्मिणः षडिमानि वा।

कासो ज्वरः पार्श्वशूलं स्वरवर्च्चोगदोऽरुचिः ॥ १६ ॥
सर्व्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा ॥ १७ ॥
घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा ।
मारुताघ्रातशिरसो मारुतः श्यायते प्रति ॥
प्रतिश्यायस्ततो घोरो जायते देहकर्षणः ।
तस्य रूपं शिरःशूलं गौरवं घ्राणविप्लवः ॥
ज्वरः कासः कफोत्क्लेशः स्वरभेदोऽरुचिः क्लमः ।
इन्द्रियाणामसामर्थ्यं यक्ष्मा वाथ प्रवर्त्तते ॥ १८ ॥
पिच्छिलं बहलं विस्रं हरितं श्वेतपीतकम् ।
व्यापन्नं ष्ठीवति रसं यक्ष्मी कासन् कफानुगम् ॥ १९ ॥
अंसपार्श्वाभितापश्च सन्तापः करपादयोः ।
ज्वरः सर्व्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ २० ॥
वातात् पित्तात् कफाद्रक्तात् कासवेगात् सपीनसात् ।
स्वरभेदो भवेद् वाताद्रुक्षः क्षामश्चलः स्वरः ॥
तालुकण्ठपरीदाहः पित्ताद् वक्तुमसूयते ।
कफाद्भेदो विबद्धश्च स्वरः खुरखुरायते ॥
सन्नो रक्तविबन्धत्वात् स्वरः कृच्छ्रात् प्रवर्त्तते ।
कासातिवेगात् कषणः पीनसात् कफवातिकः ॥ २१ ॥
पार्श्वशूलन्त्वनियतं सङ्कोचायामलक्षणम् ।
शिरःशूलं ससन्तापं यक्ष्मिणः स्यात् सगौरवम् ॥ २२ ॥
अतिखिन्ने शरीरे तु यक्ष्मिणो विषमाशनात् ।
कण्ठात् प्रवर्त्तते रक्तं श्लेष्मा चोत्क्लिष्टसञ्चितः ॥

रक्तं विबद्धमार्गत्वान् मांसादीन् नानुपद्यते।
आमाशयस्थमुत्क्लिष्टं बहुत्वात् कण्ठमेति वा ॥ २३ ॥
वातश्लेष्मविबन्धत्वादुरसः श्वासमृच्छति ॥ २४ ॥
दोषैरुपहते चाग्नौ सपिच्छमतिसार्य्यते ॥ २५ ॥
पृथग्दोषैः समस्तैर्वा जिह्वाहृदयसंश्रितैः।
जायतेऽरुचिराहारैर्द्विष्टैरर्थैश्च मानसैः ॥
कषायतिक्तमधुरैर्विद्यान्मुखरसैः क्रमात्।
वाताद्यैररुचिं जातां मानसीं दोषदर्शनात् ॥ २६ ॥
अरोचकात् कासवेगाद्दोषोत्क्लेशाद्भयादपि।
छर्द्दिर्या सा विकाराणामन्येषामप्युपद्रवः ॥ २७ ॥
सर्व्वस्त्रिदोषजो यक्ष्मा दोषाणान्तु बलाबलम्।
परीक्ष्यावस्थिकं वैद्यः शोषिणां समुपाचरेत् ॥ २८ ॥
प्रतिश्याये शिरःशूले कासे श्वासे स्वरक्षये।
पार्श्वशूले च विविधाः क्रियाः साधारणीः शृणु ॥ २९ ॥
पीनसे स्वेदमभ्यङ्गं धूममालेपनानि च।
परिषेकावगाहांश्च यानकं वाव्यमेव च ॥
लवणाम्लकटूष्णांश्च रसान् स्नेहोपबृंहितान्।
लावतित्तिरिदक्षाणां वर्त्तकानाञ्च कल्पयेत् ॥ ३० ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम्।
दाड़िमामलकोपेतं स्निग्धमाजं रसं पिवेत्।
तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः ॥ ३१ ॥
मूलकानां कुलत्थानां यूषैर्वा सूपसंस्कृतैः।
यवगोधूमशाल्यन्नैर्यथासात्म्यमुपाचरेत् ॥ ३२ ॥

पिबेत् प्रसादं वारुण्या जलं वा पाञ्चमूलिकम्।
धान्यनागरसिद्धं वा तामलक्याथ वा शृतम्॥
पर्णिनीभिश्चतसृभिस्तेन चान्नानि कल्पयेत्॥ ३३॥
कृशरोत्कारिकामाषकुलत्थयवपायसैः।
सङ्करस्वेदविधिना कण्ठं पार्श्वमुरः शिरः॥
स्वेदयेत् पत्रभङ्गैश्च शिरश्च परिषेचयेत्।
बलागुडूचीमधुकशृतैर्वा वारिभिः सुखैः॥
वस्तमत्स्यशिरोभिर्वा नाड़ीस्वेदं प्रयोजयेत्।
कण्ठे शिरसि पार्श्वे च पयोभिर्वा सवातिकैः॥
औदकानूपमांसानि सलिलं पाञ्चमूलिकम्।
सस्नेहमारनालं वा नाड़ीस्वेदं प्रयोजयेत्॥ ३४॥
जीवन्त्याः शतपुष्पाया बलाया मधुकस्य च।
वचाया वेशवारस्य विदार्य्या मूलकस्य च॥
औदकानूपमांसानामुपनाहाश्च संस्कृताः।
शस्यन्ते च चतुःस्नेहाः शिरःपार्श्वांसशूलिनाम्॥ ३५॥
शतपुष्पा समधुकं कुष्ठं तगरचन्दने।
आलेपनं स्यात् सघृतं शिरःपार्श्वांसशूलनुत्॥ ३६॥
बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम्।
पलङ्कषा देवदारु चन्दनं केशरं घृतम्॥
वीरा बला विदारी च कृष्णगन्धा पुनर्नवा।
शतावरी पयस्या च कत्तृणं मधुकं घृतम्॥
चत्वार एते श्लोकार्द्धैः प्रदेहाः परिकीर्त्तिताः।
शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनाम्॥ ३७॥

नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः ।
तैलान्यभ्यङ्गयोगाश्च वस्तिकर्म्म तथा परम् ॥
जलौकालाबुशृङ्गैर्वा प्रदुष्टं व्यधनेन वा ।
शिरःपार्श्वांसशूलेषु रुधिरं तस्य निर्हरेत् ॥ ३८ ॥
प्रदेहः सघृतश्चेष्टः पद्मकोशीरचन्दनैः ।
दूर्व्वामधुकमञ्जिष्ठाकेशरैर्वा घृताप्लुतैः ॥
प्रपौण्डरीकं पद्मस्य केशरं नीलमुत्पलम् ।
कशेरुका पयस्या च ससर्पिष्कं प्रलेपनम् ॥ ३९ ॥
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ।
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ॥
माहेन्द्रेण सुशीतेन चन्दनादिशृतेन वा ।
परिषेकः प्रयोक्तव्य इति संशमनी क्रिया ॥ ४० ॥
दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥
शोषी मुञ्चति गात्राणि पुरीषस्रंसनादपि ।
अबलापेक्षिणीं मात्रां किं पुनर्यो विरिच्यते ॥ ४१ ॥
योगात् संशुद्धकोष्ठानां कासे श्वासे स्वरक्षये ।
शिरःपार्श्वांसशूलेषु सिद्धानेतान् प्रयोजयेत् ॥ ४२ ॥
बलाविदारिगन्धाभ्यां पिप्पल्या मधुकेन च ।
सिद्धं सलवणं सर्पिर्नस्यं स्यात् स्वर्य्यमुत्तमम् ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।
साधितं क्षीरसर्पिश्च तत् स्वर्य्यं नावनं घृतम् ॥ ४३ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासनिबर्हणम् ।

प्रयुज्यमानं बहुशो घृतमौत्तरभक्तिकम् ॥
दशमूलेन पयसा सिद्धं मांसरसेन च ।
बलागर्भं घृतं सद्यो रोगानेतान् प्रबाधते ॥
भक्तस्योपरि मध्ये वा यथाग्न्यभ्यवचारितम् ।
रास्नाघृतं वा सक्षीरं सक्षीरं वा बलाघृतम् ॥ ४४ ॥
लेहान् कासापहान् स्वर्य्यान् श्वासहिक्कानिबर्हणान् ।
शिरःपार्श्वांसशूलघ्नान् स्नेहांश्चातः परं शृणु ॥ ४५ ॥
घृतं खर्ज्जूरमृद्वीकामधुकैः सपरूषकैः ।
सपिप्पलीकैर्वैस्वर्य्यकासश्वासनिबर्हणम् ॥ ४६ ॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकक्षौद्रं तत् परं स्वरविशोधनम् ।
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ॥ ४७ ॥
पञ्चभिः पञ्चमूलैर्वा शृताद् यदुदियाद्घृतम् ।
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ॥
सिद्धं सर्पिर्जयत्येतद् यक्ष्मणः सप्तकं बलम् ॥ ४८ ॥
खर्ज्जूरं पिप्पली द्राक्षा पथ्या शृङ्गी दुरालभा ।
त्रिफला पिप्पली मुस्तं शृङ्गाटगुडशर्कराः ॥
वीरा शटी पुष्कराख्यं सुरसः शर्करा गुडः ।
नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥
श्लोकार्द्धैर्विहितानेतान् लिह्यान्ना क्षौद्रसर्पिषा ।
कासश्वासापहान् स्वर्य्यान् पार्श्वशूलापहांस्तथा ॥ ४९ ॥
सितोपला तुगाक्षीरी पिप्पली बहुलात्वचः ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥

चूर्णितं प्राशयेद्वैतच्छ्वासकासज्वरापहम्।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ॥ ५० ॥
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे।
वासावृतं शतावर्य्याः सिद्धं वा परमं हितम् ॥ ५१ ॥
श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीर्बलाम्।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च ॥
पचेद्दशगुणे तोये दशभागावशेषिते।
रसे सुपूते द्रव्याणामेषां कल्कान् समावपेत् ॥
शठ्याः पुष्करमूलस्य पिप्पलीत्रायमाणयोः।
तामलक्याः किराततानां तिक्तस्य कुटजस्य च ॥
फलानां शारिवायाश्च सुपिष्टान् कर्षसम्मितान्।
साधयेत्तु घृतप्रस्थं क्षीरद्विगुणितं भिषक् ॥
ज्वरं दाहं भ्रमं कासमंसपार्श्वशिरोरुजम्।
तृष्णां छर्द्दिरतीसारमेतत् सर्पिर्व्यपोहति ॥ ५२ ॥

इति गोक्षुराद्यघृतम्।

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शठीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ५३ ॥

इति जीवन्त्याद्यघृतम्।

बलां स्थिरां पृश्निपर्णीं बृहतीं सनिदिग्धिकाम्।

साधयित्वा रसे तस्मिन् पयो गव्यं सनागरम् ॥
द्राक्षाखर्ज्जूरसर्पिर्भिः पिप्पल्या च शृतं सह ।
सक्षौद्रं ज्वरकासघ्नं स्वर्य्यञ्चैतत् प्रयोजयेत् ॥ ५४ ॥
आजस्य पयसश्चैवं प्रयोगो जाङ्गला रसाः ।
यूषार्थं चणका मुद्गा मुकुष्टाश्चोपकल्पिताः ॥ ५५ ॥
ज्वराणां शमनीयो यः पूर्व्वमुक्तः क्रियाविधिः ।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते ॥ ५६ ॥
कफप्रसेके बलवान् श्लैष्मिकश्छर्दयेन्नरः ।
पयसा फलयुक्तेन मधुकेन रसेन वा ॥
सर्पिष्मत्या यवाग्वा वा वामनीयोपसिद्धया ।
वान्तोऽन्नकाले लघ्वन्नमाददीत सदीपनम् ॥
यवगोधूममाध्वीकसीध्वरिष्टसुरासवान् ।
जाङ्गलानि च शूल्यानि सेवमानः कफं जयेत् ॥ ५७ ॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्वान् स्निग्धोष्णेनैव निर्ज्जयेत् ॥ ५८ ॥
क्रिया कफप्रसेके या वम्यां सैव प्रशस्यते ।
हृद्यानि चान्नपानानि वातघ्नान्यगुरूणि च ॥ ५९ ॥
प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्य्यते ।
प्राप्नोति चास्यवैरस्यं न चान्नमभिनन्दति ॥
तस्याग्निदीपनान् योगानतीसारनिवर्हणान् ।
वक्त्रशुद्धिकरान् कुर्य्यादरुचिप्रतिबाधकान् ॥ ६० ॥
सनागरानिन्द्रयवान् पिवेद्वा तण्डुलाम्बुना ।
सिद्धां यवागूं जीर्णाम्ले चाङ्गेरीतक्रदाडिमैः ॥ ६१ ॥

पाठां बिल्वं यमानीञ्च पातव्यं तक्रसंयुतम्।
दुरालभां शृङ्गवेरं पाठाञ्च सुरया सह ॥ ६२ ॥
जम्ब्वाम्रमध्यं बिल्वञ्च सकपित्थं सनागरम्।
सुरामण्डेन पातव्यमतीसारनिवृत्तये ॥ ६३ ॥
एतानेव च योगांस्त्रीन् पाठादीन् कारयेत् खड़ान्।
सचुक्रधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् परान् ॥६४॥
वेतसार्ज्जुनजम्बूनां मृणालीकृष्णगन्धयोः।
श्रीपर्ण्या मदयन्त्याश्च यूथिकायाश्च पल्लवान् ॥
मातुलुङ्गस्य धातक्या दाड़िमस्य च कारयेत्।
स्नेहाम्ललवणोपेतान् खड़ान् सांग्राहिकान् परान् ॥ ६५॥
चाङ्गेर्य्याश्चुक्रिकायाश्च दुग्धिकायाश्च कारयेत्।
खड़ान् दधिसरोपेतान् ससर्पिष्कान् सदाड़िमान् ॥६६॥
मांसानां लघुपाकानां रसाः सांग्राहिकैर्युताः।
व्यञ्जनार्थं प्रशस्यन्ते भोज्यार्थं रक्तशालयः ॥ ६७ ॥
स्थिरादिपञ्चमूलेन पाने शस्तं शृतं जलम्।
तक्रं सुरा सचुक्रीका दाड़िमस्याथवा रसः ॥ ६८ ॥
दूतुरत्तां भिन्नशकृतां दीपनं ग्राहि भेषजम्।
वच्चामूरश्च रुचिकरं मुखवैरस्यनाशनम् ॥ ६९ ॥
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनम्।
तद्वत् प्रक्षालयेदास्यं धारयेत् कवलग्रहान् ॥
पिवेद्धूमं ततो मृष्टमद्याद्दीपनपाचनम्।
भेषजं पानमन्नञ्च हितमिष्टोपकल्पितम् ॥ ७० ॥
त्वङ्मुस्तमेलाधान्यानि मुस्तमामलकं त्वचम् ॥

त्वचो दार्व्वी यमानी च पिप्पल्यश्चेतयाप्यपि ॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखधावनाः ।
श्लोकपादेष्वभिहिता रोचना मुखशोधनाः ॥
गुड़िकां धारयेदास्ये चूर्णैर्वा शोधयेन्मुखम् ।
एषामालोड़ितानां वा धारयेत् कवलग्रहान् ॥ ७१ ॥
सुरामाध्वीकशीधूनां तैलस्य मधुसर्पिषोः ।
कवलान् धारयेदिष्टान् क्षीरस्येक्षुरसस्य च ॥ ७२ ॥
यमानी तिन्तिड़ीकञ्च नागरं साम्लवेतसम् ।
दाड़िमं बदरञ्चाम्लं कार्षिकञ्चोपकल्पयेत् ॥
धान्यसौवर्च्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ ७३ ॥

यमानीषाड़वम् ।

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीदोषशोषप्लीहज्वरापहम् ।
वम्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद्गुड़िकाञ्चैतच्चूर्णं पक्त्वा सितोपलाम् ।

गुड़िका ग्लानिसंयोगाच्चूर्णाच्च घुतरा स्मृता ॥ ७४ ॥
तालीशाद्यं चूर्णं गुड़िका च ।

शुष्यते शोषमांसाय कल्पितानि विधानवित् ।
दद्यान्मांसादमांसानि बृंहणानि विशेषतः ॥
शोषिणे बर्हिणां दद्याद्वर्हिशब्देन वापरान् ।
गृध्रानुलूकांश्चाषांश्च * विधिवत् सूपकल्पितान् ॥
काकांस्तित्तिरिशब्देन वम्मिशब्देन चोरगान् ।
समभृष्टान्मत्स्यशब्देन दद्याद्गण्डूपदानपि ॥
लोपाकान् स्थूलनकुलान् विड़ालांश्चोपकल्पितान् ।
शृगालशावांश्च भिषक् शशशब्देन दापयेत् ॥
सिंहानृक्षांस्तरक्षूंश्च व्याघ्रानेवंविधांस्तथा ।
मांसादान् मृगशब्देन दद्यान्मांसाभिवृद्धये ॥
गजखड्गितुरङ्गाणां वेशवारीकृतं भिषक् ।
दद्यान्महिषशब्देन मांसं मांसाभिवृद्धये ॥ ७५ ॥
मांसेनोपचिताङ्गानां मांसं मांसकरं परम् ।
तीक्ष्णोष्णलाघवाच्छस्तं विशेषान् मृगपक्षिणाम् ॥
मांसानि † यान्यनभ्यासादनिष्टानि प्रयोजयेत् ।
तेषूपधा सुखं भोक्तुं तथा शक्यानि तानि हि ॥
जानन् जुगुप्सन्नैवाद्याज्जग्धं वा पुनरुल्लिखेत् ।
तस्मात् संज्ञोपसिद्धानि मांसान्येतानि दापयेत् ॥७६॥
शिखितित्तिरिदक्षाणां हंसानां शूकरोष्ट्रयोः ।

* गोधानकुलान् भासांश्चेत्यपि पाठः ।

† मांसानि यान्यनिष्टानि सत्त्वानूनि प्रयोजयेदिति वा पाठः ।

खरगोमहिषाणाञ्च मांसं मांसकरं परम् ॥
योनिरष्टविधा प्रोक्ता मांसानामन्नपानिके ।
तां परीक्ष्य भिषग्विद्वान् दद्यान्मांसानि शोषिणे ॥ ७७ ॥
प्रसहा भूशयानूपवारिजा वारिचारिणः ।
आहारार्थं प्रदातव्या मात्रया वातशोषिणे ॥
प्रतुदा विष्किराश्चैव धन्वजाश्च मृगद्विजाः ।
कफपित्तपरीतानां प्रयोज्याः शोषरोगिणाम् ॥
विधिवत् सूपसिद्धानि मनोज्ञानि मृदूनि च ।
रसवन्ति सुगन्धीनि मांसान्येतानि भक्षयेत् ॥ ७८ ॥
मांसमेवाश्नतः शोषो माध्वीकं पिबतोऽपि वा ।
नियतस्याल्पचित्तस्य चिरं काये न तिष्ठति ॥
वारुणीमण्डनित्यस्य बहिर्मार्ज्जनसेविनः ।
अविधारितवेगस्य यक्ष्मा न लभते बलम् ॥ ७९ ॥
प्रसन्नां वारुणीं सीधुमरिष्टानासवान् मधु ।
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयेत् ॥
मद्यं तैक्ष्ण्यौष्ण्यवैशद्यसूक्ष्मत्वात् स्रोतसां मुखम् ।
प्रमथ्य विवृणोत्याशु तन्मोक्षात् सप्त धातवः ॥
पुष्यन्ति धातुपोषाच्च शीघ्रं शोषः प्रशाम्यति ।
मांसादमांसस्वरसे सिद्धं सर्पिः प्रयोजयेत् ॥ ८० ॥
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ।
सिद्धं मधुरकैर्द्रव्यैर्दशमूलकषायकैः ॥
क्षीरमांसरसोपेतैर्घृतं शोषहरं परम् ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥

सयावशूकैः सक्षीरैः स्रोतःसंशोधनं घृतम् ।
रास्नाबलागोक्षुरकं स्थिरा वर्षाभूसाधितम् ॥ ८१ ॥
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषनुद् घृतम् ।
यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुना सह ॥
सिद्धानां सर्पिषामेषामद्यादन्नेन वा सह ।
शुष्यतामेष निर्दिष्टो विधिराभ्यवहारिकः ॥ ८२ ॥
बहिःस्पर्शनमाश्रित्य वक्ष्यतेऽतःपरं विधिः ।
स्नेहक्षीराम्बुकोष्ठे तं स्वभ्यक्तमवगाहयेत् ॥
स्रोतोविबन्धमोक्षार्थं बलपुष्ट्यर्थमेव च ।
उत्तीर्णं मिश्रकैः स्नेहैः पुनराक्तैः सुखैः करैः ॥
मृद्नीयात् सुखमासीनं सुखञ्चोत्सादयेन्नरम् ॥ ८३ ॥
जीवन्तीं शतवीर्य्याञ्च विकसां सपुनर्नवाम् ।
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥
विदारीं सर्षपं कुष्ठं तण्डुलानतसीफलम् ।
माषांस्तिलांश्च बिल्वञ्च सर्व्वमेकत्र चूर्णयेत् ॥
यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ।
एतदुत्सादनं कार्य्यं पुष्टिवर्णबलप्रदम् ॥ ८४ ॥
गौरसर्षपकल्केन गन्धैश्चापि सुगन्धिभिः ।
स्नायादृतुसुखैस्तोयैर्जीवनीयौषधैः शृतैः ॥
गन्धैः समाल्यैर्वासोभिर्भूषणैश्च विभूषितः ।
स्पृश्यान् संस्पृश्य संपूज्य देवताः सभिषग्द्विजाः ॥
इष्टवर्णरसस्पर्शगन्धवत् पानभोजनम् ।
इष्टमिष्टैरुपहितं हितमद्यात् सुखप्रदम् ॥

समातीतानि धान्यानि कल्प्यानि यानि शुष्यताम् ।
लघून्यहीनवीर्य्याणि स्वादूनि गन्धवन्ति च ॥
यानि प्रहर्षकारीणि तानि पथ्यतमानि च ।
यच्चोपदेक्ष्यते किञ्चित् क्षतक्षीणचिकित्सिते ॥
यक्ष्मिणस्तत् प्रयोक्तव्यं बलमांसाभिवृद्धये ॥ ८५ ॥
अभ्यङ्गोत्सादनैः स्नानैरवगाहैर्विमार्ज्जनैः ।
वस्तिभिः क्षीरसर्पिर्भिर्मांसैर्मांसरसौदनैः ॥
इष्टैर्मद्यैर्मनोज्ञानां गन्धानामुपसेवनैः ।
यथर्त्तुविहितैः स्नानैर्वासोभिरहतैः प्रियैः ॥
सुहृदां रमणीयानां प्रमदानाञ्च दर्शनैः ।
गीतवादित्रशब्दैश्च प्रियश्रुतिभिरेव च ॥
हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ।
ब्रह्मचर्य्येण दानेन तपसा देवतार्च्चनैः ॥
सत्येनाचारयोगेण मङ्गलैरप्यहिंसया ।
वैद्यविप्रार्च्चनाच्चैव रोगराजो निवर्त्तते ॥ ८६ ॥
यया प्रयुक्तया चेष्ट्या राजयक्ष्मातुरो निरुक् ।
तां वेदविहितामिष्टिमारोग्यार्थं प्रयोजयेत् ॥ ८७ ॥

तत्र श्लोकौ ।

प्रागुत्पत्तिनिमित्तानि प्राग्रूपं रूपसंग्रहः ।
समासाद् व्यासतश्चोक्तं भेषजं राजयक्ष्मणः ॥
नाम हेतुरसाध्यत्वं साध्यत्वं कृच्छ्रसाध्यता ।
इत्युक्तः संग्रहः कृत्स्नो राजयक्ष्मचिकित्सिते ॥ ८८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
राजयक्ष्मचिकित्सितं नामाष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ।

अथात उन्मादचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

बुद्धिस्मृतिज्ञानतपोनिवासः पुनर्व्वसुः प्राणभृतां शरण्यः ।
उन्मादहेत्वाकृतिभेषजानि कालेऽग्निवेशाय शशंस पृष्टः ॥ २ ॥
विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्व्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥
तैरल्पसत्त्वस्य मलाः प्रदुष्टाः बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥ ३ ॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्य्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ॥ ४ ॥
स मूढचेता न सुखं न दुःखं नाचारधर्म्मौ कुत एव शान्तिम् ।
विन्दत्यपास्तस्मृतिबुद्धिसंज्ञो भ्रमत्ययं चेत इतस्ततश्च ॥ ५ ॥
समुद्भ्रमं बुद्धिमनःस्मृतीनामुन्मादमागन्तुनिजोत्थमाहुः ।
तस्योद्भवं पञ्चविधं पृथक् तु वक्ष्यामि लिङ्गानि चिकित्सितञ्च ॥ ६ ॥
रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिञ्चाप्युपहन्ति शीघ्रम् ॥
अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि ।
पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम् ॥ ७ ॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।
उन्मादमुग्रमनात्मकस्य हृदि स्थितं पूर्व्ववदाशु कुर्य्यात् ॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।

प्रच्छायशीतान्नजलाभिलाषाः पीता च भाः पित्तकृतस्य लिङ्गम् ॥८॥
संपूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्म्मणि सम्प्रवृद्धः ।
बुद्धिं स्मृतिञ्चाप्युपहत्य चित्तं प्रमोहयन् सञ्जनयेद्विकारम् ॥
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा ।
छर्द्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मकस्य ॥९॥
यः सन्निपातप्रभवोऽतिघोरः सर्व्वैः समस्तैः स तु हेतुभिः स्यात् ।
सर्व्वाणि रूपाणि बिभर्त्ति तादृग् विरुद्धभेषज्यविधिर्विवर्ज्यः ॥१०॥
देवर्षिगन्धर्व्वपिशाचयक्षरक्षःपितॄणामभिधर्षणानि ।
आगन्तुहेतुर्नियमव्रतादि मिथ्याकृतं कर्म्म च पूर्व्वदेहे ॥ ११ ॥
अमर्त्त्यवाग्विक्रमवीर्य्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् ॥ १२॥
अदूषयन्तः पुरुषस्य देहं देवादयः स्वैस्तु गुणप्रभावैः ।
विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्य्यकान्तौ ॥१३॥
आघातकालास्तु सपूर्व्वरूपाः प्रोक्ता निदानेऽथ सुरादिभिश्च ।
उन्मादरूपाणि पृथङ्निबोध कालञ्च गम्यान् पुरुषांश्च तेषाम् ॥१४

तद्यथा—सौम्यदृष्टिं गम्भीरमधृष्यमकोपनमस्वप्नभोजना-
भिलाषिणमल्पस्वेदमूत्रपुरीषवातं शुभगन्धं फुल्लपद्मवदनमिति
देवोन्मत्तं विद्यात् । गुरुवृद्धसिद्धर्षीणामभिशापाभिचाराभि-
ध्यानानुरूपचेष्टाहारव्याहारं तैरुन्मत्तं विद्यात् । अप्रसन्नदृष्टि-
मपश्यन्तं निद्रालुं प्रतिहतवचनमनन्नाभिलाषिणमरोचका-
विपाकपरीतञ्च पितृभिरुन्मत्तं विद्यात् । चण्डं साहसिकं तीक्ष्णं
गम्भीरमधृष्यं मुखवाद्यनृत्यगीतान्नपानस्नानमाल्यधूपगन्धरतिं
रक्तवस्त्रबलिकर्म्महास्यकथानुयोगप्रियं शुभगन्धञ्च गन्धर्व्वोन्मत्तं

विद्यात्। असक्तत्रस्तप्ररोदनहासिनं नृत्यगीतवाद्यपाठकथान्न-पानस्नानमाल्यधूपगन्धरतिं रक्तविप्लुताक्षं द्विजातिवैद्यपरिवादिनं रहस्यभाषिणं यक्षोन्मत्तं विद्यात्। नष्टनिद्रमन्नपानद्वेषिणमनाहारमप्रतिबलं शस्त्रशोणितमांसरक्तमाल्याभिलाषिणं संतर्ज्जकं राक्षसोन्मत्तं विद्यात्। प्रहासानृतवादिनं देव-विप्रवैद्यद्वेषावज्ञाभिः स्तुतिवेदमन्त्रशास्त्रोदाहरणैः काष्ठादिभिरात्मपीड़नेन च ब्रह्मराक्षसोन्मत्तं विद्यात्। अस्वस्थचित्तस्थानमनभिमानं नृत्यगीतहासिनं बद्धाबद्धप्रलापिनं सङ्कटकूटमलिन * रथ्याचेलतृणाश्मकाष्ठाधिरोहणरतिं भिन्नरूक्षवर्णस्वरं नग्नं विधावन्तं नैकत्र तिष्ठन्तं दुःखान्यावेदयन्तं नष्टस्मृतिं च पिशाचोन्मत्तं विद्यात्॥ १५॥

तत्र शौचाचारतपःस्वाध्यायकोविदं नरं प्रायः शुक्लप्रतिपदि त्रयोदश्याञ्च देवाः, स्नानशुचिविविक्तसेविनं धर्म्मशास्त्रश्रुतिकाव्यकुशलं प्रायः षष्ठीनवम्यो ऋषयः, मातृपितृगुरुवृद्धसिद्धाचार्य्योपसेविनं प्रायो दशम्याममावस्यायाञ्च पितरः, गन्धर्व्वाः स्तुतिगीतवादित्ररतिं परदारगन्धमाल्यप्रियं शौचाचारं प्रायो द्वादश्यां चतुर्द्दश्याञ्च, सत्त्वबलरूपगर्व्वशौर्य्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्प्रबलं प्रायः शुक्लैकादश्यां सप्तम्याञ्च यक्षाः, स्वाध्यायतपोनियमोपवासब्रह्मचर्य्यदेवयतिगुरुपूजारतिं नष्टशौचं ब्राह्मणवादिनं शूरमानिनं देवागारसलिलक्रीड़नरतिं प्रायः शुक्लपञ्चम्यां पूर्णचन्द्रदर्शने च ब्रह्मराक्षसाः, रक्षःपिशाचास्तु हीनसत्त्वपिशुनस्त्रैणलुब्धान् प्रायो

* साचिकूटमलिनं सलिलचर्य्येत्यादि पाठान्तरम्।

द्वितीयाद्वतीयाष्टमीषु पुरुषान् छिद्रमवेक्ष्या भिधर्षयन्ति । इत्य-परिसंख्येयानां ग्रहाणामाविष्कृततमा ह्यष्टावेते व्याख्याताः ॥ १६

सर्व्वेष्वपि तु खल्वेतेषु यो हस्तावुद्यम्य रोषसंरम्भान्निःशङ्क-मन्येष्वात्मनि वा निपातयेत् स ह्यसाध्यो विज्ञेयः । तथा यः साश्रुनेत्रो मेढ्रप्रवृत्तरक्तः क्षतजिह्वः प्रस्रुतनासिकश्छिद्यमान-मर्म्मा प्रतिहन्यमानवाणिः सततं कूजन् दुर्व्वर्णः तृष्णार्त्तः पूतिगन्धश्च हिंसार्थी उन्मत्तो ज्ञेयस्तं परिवर्ज्जयेत् ॥ १७ ॥

रत्यर्च्चनाकामोन्मादिनौ तु भिषगभिप्रायाभिचाराभ्यां बुद्धा तदङ्गोपहारबलिमिश्रेण मन्त्रभैषज्यविधिनोपक्रमेत् । तत्र द्वयोरपि निजागन्तुनिमित्तयोरुन्मादयोः समासविस्तराभ्यां भेषजविधिमनुव्याख्यास्यामः ॥ १८ ॥

उन्मादे वातजे पूर्व्वं स्नेहपानं विशेषवित् ।
कुर्य्यादावृतमार्गे तु सस्नेहं मृदु शोधनम् ॥
कफपित्तोद्भवेऽप्यादौ वमनं सविरेचनम् ।
स्निग्धस्विन्नस्य कर्त्तव्यः शुद्धे संसर्ज्जनक्रमः ॥
निरूहान् स्नेहवस्तींश्च शिरसश्च विरेचनम् ।
ततः कुर्य्याद् यथादोषं तेषां भूयस्त्वमाचरेत् ॥
हृदिन्द्रियशिरःकोष्ठे संशुद्धे वमनादिभिः ।
मनःप्रसादमाप्नोति स्मृतिं संज्ञाञ्च विन्दति ॥ १९ ॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम् ।
ताड़नञ्च मनोबुद्धिदेहसंवेजनं हितम् ॥
यः शक्तो विनये पट्टैः संयम्य सुदृढैः सुखैः ।
अपेतलोहकाष्ठाद्ये संरोध्यश्च तमोगृहे ॥

तर्ज्जनं त्रासनं दानं हर्षणं सान्त्वनं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम्॥ २०॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः।
अतः सिद्धतमान् योगान् शृणून्मादनिवर्हणान्॥ २१॥
हिङ्गु सौवर्च्चलव्योषैर्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ २२॥
विशाला त्रिफला कौन्ती देवदार्व्वेलवालुकम्।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाड़िमकेशरम्।
तालीशपत्रं वृहती मालत्याः कुसुमं नवम्॥
विड़ङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
अष्टाविंशतिरित्येतैः कल्कैः कर्षसमन्वितैः॥
चतुर्गुणे जले सम्यग् घृतप्रस्थं विपाचयेत्।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये॥
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके।
छर्द्द्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु च॥
पाण्डुपामाविषोन्मादविषमेहगदेषु च।
भूतोपहतचित्तानां गद्गदानामरेतसाम्॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम्।
अलक्ष्मीपापरक्षोघ्नं सर्व्वग्रहविनाशनम्।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च॥ २६॥

कल्याणकं घृतम्।

एभ्य एव स्थिराद्यौनि जले पक्त्वैकविंशतिम्।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरे चतुर्गुणे॥
वीराद्विमाषकाकोलीस्वयंगुप्तर्षभर्द्धिभिः।
मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत्॥
वृंहणीयं विशेषेण सन्निपातहरं परम्॥ २४॥

इति महाकल्याणकं घृतम्।

जटिलां पूतनां केशीं चारटीं मर्कटीं वचाम्।
त्रायमाणां जयां वीरां चोरकं कटुरोहिणीम्॥
कायस्थां शूकरीं छत्रामतिच्छत्रां पलङ्कषाम्।
महापुरुषदन्ताञ्च वयःस्थां नाकुलीद्वयम्॥
कटम्भरां वृश्चिकालीं स्थिराञ्चाहृत्य तैर्घृतम्।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम्॥
महापैशाचिकं नाम घृतमेतद्यथामृतम्।
बुद्धिस्मृतिकरञ्चैव बालानाञ्चाङ्गवर्द्धनम्॥ २५॥

इति महापैशाचिकं घृतम्।

लशुनानां शतं त्रिंशदभयात् त्र्यूषणात् पलम्।
गवां चर्म्मससीप्रस्थमाढकं क्षीरमूत्रयोः॥
पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत्।
हिङ्गुचूर्णपलं शीते दत्त्वा च मधुमाणिकाम्॥
तद्दोषागन्तुसम्भूतानुन्मादान् विषमज्वरान्।
अपस्मारञ्च हन्त्याशु पानाभ्यञ्जननावनैः॥ २६॥

इति लशुनाद्यं घृतम्।

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।

तदर्द्धं दशमूल्यास्तु द्राढ़केऽपां विपाचयेत् ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः ॥
दाड़िमाम्लसुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः।
साधयेत् त्रिफलादारुलवणव्योषदीप्यकैः ॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिवेच्छूलगुल्मार्शोजठरापहम् ॥
व्रध्नपाण्ड्वामयप्लीहयोनिदोषज्वरक्रिमीन्।
वातश्लेष्मामयान् सर्व्वानुन्मादांश्चापकर्षति ॥ २७ ॥

इत्यपरं लशुनाद्यं घृतम्।

हिङ्गुना हिङ्गुपर्ण्या च सकायस्थावयःस्थया।
सिद्धं सर्पिर्हितं तद्वद्वयःस्थाहिङ्गुचोरकैः ॥
केवलं सिद्धमेभिर्वा पुराणं पाययेद्घृतम्।
पाययित्वोत्तमां मात्रां श्वभ्रे रुन्ध्याद्गृहेऽपि वा ॥ २८ ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम्।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ २९ ॥
एतानौषधयोगान् वा विधेयत्वमगच्छति।
अञ्जनोत्सादनालेपनावनादिषु योजयेत् ॥ ३० ॥
शिरीषं मधुकं हिङ्गु लशुनं तगरं वचाम्।
कुष्ठञ्च वस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥
तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठाहिङ्गुसर्षपाः।
शिरीषबीजञ्चोन्मादग्रहापस्मारनाशनम् ॥ ३१ ॥

इति नस्यमञ्जनञ्च।

पिष्ट्वा तुल्यमपामार्गहिङ्गुनी हिङ्गुपत्रिकाम् ।
वर्त्तिः स्यान्मरिचार्द्धांशा पित्ताभ्यां गोशृगालयोः ॥
तयाञ्जयेदपस्मारभूतोन्मादज्वरार्द्दितान् ।
भूतार्त्तानमरार्त्तांश्च नरांश्चैव हगामये ॥ ३२ ॥
मरिचञ्चातपे मासं सपित्तं स्थितमञ्जनम् ।
वैकृतं पश्यतः कार्य्यं दोषभूतहतस्मृतेः ॥ ३३ ॥
सिद्धार्थको वचा हिङ्गु करञ्जो देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ३४ ॥
प्रसेके शौनसे गन्धैर्धूमवर्त्तिं कृतां पिवेत् ।
वैरेचनिकधूमोक्तैः श्वेतादैर्वा सहिङ्गुभिः ॥ ३५ ॥
शशकोलूकमार्ज्जारजम्बूकवृकवस्तजैः ।
मूत्रपित्तशकृल्लोमनखैश्चर्म्मभिरेव च ॥
सेकाञ्जनं प्रधमनं नस्यं धूमञ्च कारयेत् ।
वातश्लेष्मात्मके प्रायः पैत्तिके च प्रशस्यते ॥ ३६ ॥
तिक्तकं जीवनीयञ्च सर्पिः स्नेहश्च मिश्रकः ।
शीतानि चान्नपानानि मधुराणि मृदूनि च ॥ ३७ ॥
शङ्खे केशान्तसन्धौ वा मोचयेज्जो भिषक् शिराम् ।

उन्मादे विषमे चैव ज्वरेऽपस्मार एव च ॥ ३८ ॥
घृतमांसविल्वम्नं वा निवाते स्थापयेत् सुखम्।
त्यक्त्वा मतिस्मृतिभ्रंशं संज्ञां लब्ध्वा प्रमुच्यते ॥ ३९ ॥
आश्वासयेत् सुहृद्वा तं वाक्यैर्धर्म्मार्थसंहितैः।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च ॥ ४० ॥
बद्धं सर्षपतैलाक्तं न्यसेद्वोत्तानमातपे।
कपिकच्छ्वाथवा तप्तैर्लौहतैलजलैः स्पृशेत् ॥
कशाभिस्ताड़यित्वा वा बद्ध्वा तु विजने गृहे।
रुन्ध्याच्चेतो हि विभ्रान्तं व्रजत्यस्य तथा शमम् ॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैर्वा तस्करैः शत्रुभिस्तथा ॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्।
त्रासयेयुर्वधेनैनं तर्ज्जयन्तो नृपाज्ञया ॥
देहदुःखभयेभ्यो हि परं प्राणभयं स्मृतम्।
तेन याति शमं तस्य सर्व्वतो विसृतं मनः ॥ ४१ ॥
इष्टद्रव्यविनाशात् तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्त्या शान्त्याश्वासैः शमं नयेत् ॥ ४२ ॥
कामशोकभयक्रोधहर्षेर्षालोभसम्भवान्।
परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ ४३ ॥
बुद्ध्वा देशं वयः सात्म्यं दोषं कालं बलाबले।
चिकित्सितमिदं कुर्य्यादुन्मादे दोषभूतजे ॥ ४४ ॥
देवर्षिपितृगन्धर्व्वैरुन्मत्तस्य तु बुद्धिमान्।
वर्ज्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च ॥

सर्पिष्पानादि तस्येह मृदुभैषज्यमाचरेत्।
पूजां बल्युपहारांश्च मन्त्राञ्जनविधींस्तथा॥
शान्तिकर्म्मेष्टिहोमांश्च जपस्वस्त्ययनानि च।
वेदोक्तान्नियमांश्चापि प्रायश्चित्तानि चाचरेत्॥
भूतानामधिपं देवमीश्वरं जगतः प्रभुम्।
पूजयन् प्रयतोनित्यं जयत्युन्मादजं भयम्॥
रुद्रस्य प्रमथा नाम गणा लोके चरन्ति ये।
तेषां पूजाञ्च कुर्व्वाण उन्मादेभ्यः प्रमुच्यते॥
बलिभिर्मङ्गलैर्होमैरोषध्यगदधारणैः।
सत्याचारतपोज्ञानप्रदाननियमव्रतैः॥
देवगुह्यकविप्राणां गुरूणां पूजनेन च।
आगन्तुः प्रशमं याति सिद्धैर्मन्त्रौषधैस्तथा॥ ४५॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः॥ ४६॥
निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः।
निजागन्तुभिरुन्मादैः सत्त्ववान् न स युज्यते॥ ४७॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम्॥ ४८॥

तत्र श्लोकः।

उन्मादानां समुत्थानं लक्षणं सचिकित्सितम्।
निजागन्तुनिमित्तानामुक्तवान् भिषगुत्तमः॥ ४९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने उन्मादचिकित्सितं नाम नवमोऽध्यायः॥ ९॥

## दशमोऽध्यायः ।

अथातोऽपस्मारचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

स्मृतेरपगमं प्राहुरपस्मारं भिषग्विदः ।
तमःप्रवेशं बीभत्सचेष्टं धीसत्त्वसंप्लवात् ॥ २ ॥
विभ्रान्तबहुदोषाणामहिताशुचिभोजिनाम् ।
रजस्तमोभ्य विहते सत्त्वे दोषावृते हृदि ॥
चिन्ताकामभयक्रोधशोकोद्वेगादिभिस्तथा ।
मनस्यभिहते नृणामपस्मारः प्रवर्त्तते ॥ ३ ॥
धमनीभिः श्रिता दोषा हृदयं पीड़यन्ति हि ।
संपीड्यमानो व्यथते मूढ़ो भ्रान्तेन चेतसा ॥
पश्यत्यसन्ति रूपाणि पतति प्रस्फुरत्यपि ।
जिह्माक्षिभ्रूः स्रवल्लालो हस्तौ पादौ च विक्षिपन् ।
दोषवेगे च विगते सुप्तवत् प्रतिबुध्यते ॥ ४ ॥
पृथग्दोषैः समस्तैश्च वक्ष्यते स चतुर्विधः ।
कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ।
परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ।
स तृष्णोष्मानलव्याप्तलोकदर्शी च पैत्तिकः ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतोहृष्टाङ्गजो गुरुः ।
पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥

सर्व्वैरेतैः समस्तैस्तु लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स च्चासाध्यो यः क्षीणस्यानवश्च यः ॥ ५ ॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्व्वन्ति वेगं किञ्चिदथान्तरम् ॥ ६ ॥
तैरावृतानां हृत्स्रोतो मनसां संप्रबोधनम् ।
तीक्ष्णैरादौ भिषक् कुर्य्यात् कर्म्मभिर्वमनादिभिः ॥
वातिकं वस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ ७ ॥
सर्व्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥ ८ ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं पिबेदपस्मारकामलाज्वरनाशनम् ॥ ९ ॥

इति पञ्चगव्यं घृतम् ।

द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
शम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढ़कीं मूर्व्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रोहिषञ्च भूतीकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥

अपस्मारे ज्वरे कासे तथैवोन्मादशोषिषु च।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थिकविनाशनम् ॥ १० ॥

इति महापञ्चगव्यं घृतम्।

ब्राह्मीरसवचाकुष्ठशङ्खपुष्पीभिरेव च।
पुराणं घृतमुन्मादग्रहापस्मारपापनुत् ॥ ११ ॥
वचाशम्याककैटर्य्यवयःस्थाहिङ्गुचोरकैः।
सिद्धं पलङ्कषायुक्तैर्वातश्लेष्मामयापहम् ॥ १२॥
घृतं सैन्धवहिङ्गुभ्यां वार्षे वास्ते चतुर्गुणे।
मूत्रे सिद्धमपस्मारहृद्ग्रहामयनाशनम् ॥ १३ ॥
तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः।
क्षीरद्रोणे पचेत् सिद्धमपस्मारविनाशनम् ॥ १४ ॥
कंसे क्षीरेक्षुरसयोः काश्मर्य्येऽष्टगुणे रसे।
कार्षिके जीवनीयैश्च घृतप्रस्थं विपाचयेत् ॥
वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति।
तद्वत् काशविदारीक्षुकुशक्वाथशृतं घृतम् ॥ १५ ॥
मधूकद्विपले कल्के द्रोणे चामलकीरसात्।
तद्वत् सिद्धं घृतप्रस्थं पित्तापस्मारभेषजम् ॥ १६ ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ १७ ॥
कटभीनिम्बकट्वङ्गमधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैलमभ्यङ्गार्थे प्रशस्यते ॥ १८ ॥
पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः।

जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जनं तैलमपस्मारविनाशनम् ।
एतैश्चैवौषधैः कार्य्यं धूपनं सम्प्रलेपनम् ॥ १९ ॥
पिप्पलीं लवणं शिग्रुं हिङ्गु हिङ्गुशिराटिकाम् ।
काकोलीं सर्षपान् काकनासां कैटर्य्यचन्दने ॥
शुनःस्कन्धास्थिनखरान् पर्शुकांश्चेति पेषयेत् ।
वस्तमूत्रेण पुष्यर्क्षे प्रदेहः स्यात् सधूपनः ॥ २० ॥
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ २१ ॥
जतुकाश्मकृता तद्वद्दग्धैर्वा वस्तलोमभिः ।
खरास्थिभिर्हस्तिनखैस्तथा गोपुच्छलोमभिः ॥ २२ ॥
कपिलानां गवां मूत्रं नावनं परमं हितम् ।
श्वसृगालविड़ालानां सिंहादीनाञ्च शस्यते ॥ २३ ॥
भार्गी वचा नागदन्ती श्वेतश्वेता विषाणिका ।
ज्योतिष्मती नागदन्ती पादोक्ता मूत्रपेषिताः ।
योगास्त्रयोऽतः षड् विन्दून् पञ्च वा नावयेद्भिषक् ॥२४॥
त्रिफलाव्योषपीतद्रुयवक्षारफणिज्झकैः ।
श्यामापामार्गकरजैःफलैर्मूत्रैश्च वस्तजे ।
साधितं नावनं तैलमपस्मारविनाशनम् ॥ २५॥
पिप्पलीसैन्धवकालौ च कुष्ठञ्च लवणानि च ।
भार्गी च चूर्णितं नस्तः कार्य्यं प्रधमनं परम् ॥ २६ ॥

कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तिः प्रकल्पयेत्॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्द्दिते।
विषपीते जलमृते चैताः सुरमृतोपमाः॥ २७॥
मुस्तं वयःस्थां त्रिफलां कायस्थां हिङ्गु शाद्वलम्।
व्योषं माषान् यवान् मूत्रैर्वास्तमेषार्षभैस्त्रिभिः॥
पिष्ट्वा कृत्वा च तां वर्त्तिमपस्मारे प्रयोजयेत्।
किलासेष तथोन्मादे ज्वरेषु विषमेषु च॥ २८॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं मतम्॥ २९॥
नकुलोलूकमार्ज्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक्॥ ३०॥
आभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते।
स्रोतांसि चास्य शुध्यन्ति स्मृतिं संज्ञां च विन्दति॥ ३१॥
यस्यानुबन्धस्त्वागन्तुर्दोषलिङ्गाधिकाकृतिः।
दृश्येत तस्य कार्य्यं स्यादागन्तून्मादभेषजम्॥ ३२॥
अनन्तरमुवाचेदमग्निवेशः कृताञ्जलिः।
भगवन् पूर्व्वमुद्दिष्टः श्लोकस्थाने महागदः॥
अतत्त्वाभिनिवेशो यस्तद्धेत्वाकृतिभेषजम्।
तत्र नोक्तं ततः श्रोतुमिच्छामि तदिहोच्यताम्॥ ३३॥
शुश्रूषवे वचः श्रुत्वा शिष्यायाह पुनर्व्वसुः।
महागदं सौम्य शृणु सहेत्वाकृतिभेषजम्॥ ३४॥
मलिनाहारशीलस्य वेगान् प्राप्तान् निगृह्णतः।

शीतोष्णस्निग्धरूक्षाद्यैर्हेतुभिश्चातिसेवितैः॥
हृदयं समुपाश्रित्य मनोबुद्धिवहाः शिराः।
दोषाः संदूष्य तिष्ठन्ति रजोमोहावृतात्मनः॥
रजस्तमोभ्यां वृद्धाभ्यां सत्त्वे मनसि संवृते।
हृदये व्याकुले दोषैरथ मूढाल्पचेतसः॥
विषमां कुर्व्वते बुद्धिं नित्यानित्ये हिताहिते।
अतत्त्वाभिनिवेशं तमाहुराप्ता महागदम्॥ ३५॥
स्नेहस्वेदोपपन्नं तं संशोध्य वमनादिभिः।
कृतसंसर्ज्जनं मेध्यैरन्नपानैरुपाचरेत्॥ ३६॥
ब्राह्मीस्वरसयुक्तं यत् पञ्चगव्यमुदाहृतम्।
तत् सेव्यं शङ्खपुष्पी च यच्च मेध्यं रसायनम्॥ ३७॥
सुहृदश्चानुकूलाश्च कथाः सिद्धार्थवादिनः।
संयोजयेयुर्विज्ञानधैर्य्यस्मृतिसमाधिभिः॥ ३८॥
प्रयोज्यं तैललशुनं पयसा वा शतावरी।
ब्राह्मीरसः कुष्ठरसो वचा वा मधुसंयुता॥ ३९॥
दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी महागदः।
तस्माद्रसायनैरेनं प्रायशः समुपाचरेत्॥ ४०॥
जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तौ सदा
रक्षेदुन्मादिनश्चैव सद्यः प्राणहरा हि ते॥ ४१॥

तत्र श्लोकौ।

हेतुः कुर्व्वन्त्यपस्मारं दोषाः प्रकुपिता यथा।
सामान्यतः पृथक्त्वाच्च लिङ्गं तेषाञ्च भेषजम्॥

महागदसमुत्थानं लिङ्गञ्चोवाच सौषधम् ।
प्रजाहितार्थं भगवानपस्मारचिकित्सिते ॥ ४२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
अपस्मारचिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

अथातः क्षतक्षीणचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

उदारकीर्त्तिर्ब्रह्मर्षिरात्रेयः परमार्थवित् ।
क्षतक्षीणचिकित्सार्थमिदमाह चिकित्सितम् ॥ २ ॥
धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
पततो विषमोच्चेभ्यो बलिभिः सह युध्यतः ॥
वृषं हयं वा धावन्तं दम्यं वान्यं निगृह्णतः ।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥
अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम् ।
महानदीं वा तरतो हयैर्वा सह धावतः ॥
सहसोत्पततोऽत्यर्थं तूर्णञ्चातिप्रनृत्यतः ।
तथान्यैः कर्म्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते ।
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ ३ ॥

उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते ।
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥
क्रमाद्वीर्य्यं बलं वर्णो रुचिरग्निश्च हीयते ।
ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निबधस्तथा ॥
दुष्टः श्यावः सुदुर्गन्धिः पीतो विग्रथितो बहुः ।
कासमानस्य चाभीक्ष्णं कफः सास्रः प्रवर्त्तते ॥
सक्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ।
अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम् ॥ ४ ॥
उरोरुक् शोणितच्छर्द्दिः कासो वैशेषिकः क्षते ।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः ॥ ५ ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ।
परिसंवत्सरो याप्यः सर्व्वलिङ्गन्तु वर्ज्जयेत् ॥ ६ ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥
पार्श्ववस्तिरुजा चाल्पपित्ताग्निस्तां सुरायुताम् ।
भिन्नविट्कः समुस्तातिविषां पाठां सवत्सकाम् ॥
लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।
त्वक्क्षीरीं समितां क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥ ७ ॥
इक्षुवालिकाविसग्रन्थिपद्मकेशरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ८ ॥
यवानां चूर्णमादाय क्षीरसिद्धं घृतप्लुतम् ।
ज्वरे दाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ॥ ६ ॥
कासी पर्व्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः ।

मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ॥ १० ॥
एलापत्रत्वचोऽर्द्धांशाः पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः ॥
सञ्चूर्ण्य मधुना युक्ता गुड़िकाः संप्रकल्पयेत् ।
अक्षमात्रां ततश्चैकां भक्षयेन्ना दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्द्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतं क्षयम् ।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ ११ ॥

इत्येलादिगुड़िका ।

रक्तेऽतिवृत्ते दक्षाण्डं यूषैस्तोयेन वा पिबेत् ।
चटकाण्डरसं वापि रक्तं वा छागजाङ्गलम् ॥ १२ ॥
चूर्णं पौनर्नवं रक्तशालितण्डुलशर्करम् ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥ १३ ॥
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।
मूढ़वातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ॥ १४ ॥
क्षामः क्षीणः क्षतोरस्कस्त्वनिद्रस्त्वबलेऽनिले ।
शृतक्षीरसेनाद्यात् सघृतक्षौद्रशर्करम् ॥ १५ ॥
शर्करा यवगोधूमौ जीवकर्षभकौ मधु ।
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षतो कृशः ॥ १६ ॥
क्रव्यादमांसनिर्य्यूहं घृतभृष्टं पिबेच्च सः ।
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्द्धनम् ॥ १७ ॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षशालप्रियङ्गुभिः ।

तालमस्तकजम्ब्वत्वक्प्रियालैश्च सपद्मकैः ॥
साश्वकर्णैः शृतात् क्षीराद्दध्याज्जातेन सर्पिषा ।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रश्च मानवः ॥ १८ ॥
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥ १९ ॥
कोशलाह्वारसे तद्वत् क्षीराष्टगुणसाधितम् ।
कल्कैः कट्वङ्गदार्व्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥ २० ॥
जीवकर्षभकौ वीरां जीवन्तीं नागरं शठीम् ।
चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिके ॥
पुनर्नवे द्वे मधुकमात्मगुप्तां शतावरीम् ।
ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा ॥
शृङ्गाटकं तामलकीं पयस्यां पिप्पलीं बलाम् ।
बदराक्षोटखर्जूरवातामाभिषुकाण्यपि ॥
फलानि चैवमादीनि कल्कान् कुर्व्वीत कार्षिकान् ।
धात्रीरसविदारीक्षुच्छागमांसरसं पयः ॥
दत्वा प्रस्थोन्मितान् भागान् घृतप्रस्थं विपाचयेत् ।
प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलां तथा ॥
पलार्द्धकञ्च मरिचत्वगेलापत्रकेशरात् ।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः ॥
अमृतप्राशमित्येतन्नराणाममृतं घृतम् ।
सुरामृतरसप्रख्यं क्षीरमांसरसाशिनः ॥
नष्टशुक्रक्षतक्षीणदुर्ब्बलव्याधिकर्षितान् ।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च बृंहयेत् ॥

कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत् ।
मूत्रदं वमिमूर्च्छाहृद्‌योनिमूत्रामयापहम् ॥ २१ ॥

इत्यमृतप्राशघृतम् ।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्य्यकत्तृणम् ।
दर्भमूलं पृथक्‌पर्णीं पलाशर्षभकौ स्थिराम् ॥
पलिकान् साधयेत् तेषां रसे क्षीरचतुर्गुणे ।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥
शतवीर्य्याद्विमृद्वीकाशर्कराश्रावणीविसैः ।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्भवशूलनुत् ॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ २२ ॥

इति श्वदंष्ट्रादि घृतम् ।

मधूकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद् घृतम् ।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत् ।
समं शक्तु क्षतक्षीणे रक्तगुल्मे च तद्धितम् ॥ २३ ॥

इति शक्तुप्रयोगः ।

धात्रीफलविदारीक्षुजीवनीयरसैर्घृतम् ।
अजागोपयसोश्चैव सप्त प्रस्थान् पचेद्भिषक् ॥
सिद्धशीते सिताक्षौद्रं द्विप्रस्थं विनयेत् ततः ।
यक्ष्मापस्मारपित्तासृक्‌कासमेहक्षयापहम् ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम् ।
घृतन्तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ॥

लीढ़ं निर्व्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम् ।
आक्रामत्यनिलं पीतमुष्माणं निरुणद्धि च ॥
चामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।
त्वक्क्षीरीपिप्पलीलाजचूर्णैः स्त्यानानि योजयेत् ॥ २४ ॥
सर्पिर्गुड़ान् समध्वंशान् जग्ध्वा चानु पयः पिबेत् ।
रेतो वीर्य्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ २५ ॥
बला विदारी ह्रस्वाच पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टांशिका अपि ॥
एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढ़कम् ॥
सितोपलानि पूतेऽस्मिन् शीते द्वात्रिंशदावपेत् ।
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ॥
समाक्षिकं कौरविकं तत् सर्व्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुड़ान् कृत्वा भूर्ज्जपत्रेण वेष्टयेत् ॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यं चानुपिबेत् कफे ।
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्षिते ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥ २६ ॥
त्वक्क्षीरीश्रावणीद्राक्षामूर्व्वर्षभकजीवकैः ।
वीरर्द्धिक्षीरकाकोलीत्वक्तोकपिकच्छुभिः ॥
खर्ज्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
धात्रीविदारीक्षुरसप्रस्थः प्रस्थं घृतात् पचेत् ॥
शर्करार्द्धतुलां शीते क्षौद्रार्द्धप्रस्थमेव च ।

क्षिप्त्वा सर्पिर्गुडान् कुर्य्यात् कासहिक्काज्वरापहान् ॥
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षयं तृष्णां हन्युरः कार्श्यं सकामलम् ॥ २७ ॥
नवमामलकं द्राक्षामात्मगुप्तां पुनर्नवाम् ।
शतावरीं विदारीञ्च समांशां पिप्पलीं तथा ॥
पृथग्दशपलान् भागान् पलान्यष्टौ च नागरात् ।
यष्ट्याह्वसौवर्च्चलयोर्द्विपलं मरिचस्य च ॥
क्षीरतैलघृतानाञ्च त्र्याढ़के शर्कराशते ।
क्वथिते तानि चूर्णानि दत्त्वा विल्वसमान् गुड़ान् ॥
कुर्य्यात् तान् भक्षयेत् क्षीणः क्षतशुष्कश्च मानवः ।
तेन सद्यो रसादीनां वृद्ध्या पुष्टिं स विन्दति ॥ २८ ॥
इति सर्पिर्गुड़ाः ।

गोक्षीरात् द्व्याढ़कं सर्पिःप्रस्थमिक्षुरसाढ़कम् ।
विदार्य्याः स्वरसात् प्रस्थं रसात् प्रस्थञ्च तैत्तिरात् ॥
दद्यात् सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ।
मधूकपुष्पं कुड़वं पियालकुड़वं तथा ॥
कुड़वार्द्धं तुगाक्षीर्य्या खर्ज्जूराणाञ्च विंशतिम् ।
पृथग्विभीतकानाञ्च पिप्पल्याश्च चतुर्थिकाम् ॥
विंशत् पलानि खण्डाच्च मधुकात् कर्षमेव च ।
तथार्द्धपलिकान्यत्र जीवनीयानि दापयेत् ॥
सिद्धेऽस्मिन् कुड़वं क्षौद्राच्छीते क्षिप्त्वाथ मोदकान् ।
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ।

शुष्यतां क्षीणशुक्राणां रक्ते चोरसि संस्थिते ॥
कृशदुर्ब्बलवृद्धानां पुष्टिवर्णबलार्थिनाम् ।
योनिदोषकृतस्रावहतानाञ्चापि योषिताम् ॥
गर्भार्थिनीनां गर्भश्च स्रवेद् यासां म्रियेत वा ।
धन्या बल्या हितास्ताभ्यः शुक्रशोणितवर्द्धनाः ॥ २८ ॥
इति सर्पिर्मोदकः ।
वस्तिदेशे विकुर्व्वाणे स्त्रीप्रसक्तस्य मारुते ।
वातघ्नान् वृंहणान् वृष्यान् योगांस्तस्य प्रयोजयेत् ॥ ३० ॥
शर्कंरापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च ।
संयुक्तं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ॥ ३१ ॥
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे शृतम् ।
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं वृंहणं परम् ॥ ३२ ॥
शक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ।
आम्बु सात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ॥ ३३ ॥
जीवनीयोपसिद्धं वा घृतभृष्टन्तु जाङ्गलम् ।
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ॥
गोमहिष्यश्वनागाजैः क्षीरैर्मांसैरसैस्तथा ।
यथाग्नि भोजयेद् यूषैः फलाम्लैर्घृतसंस्कृतैः ॥ ३४ ॥
दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः ।
यक्ष्मिणां विहितो ग्राही भिन्ने शकृति चेष्यते ॥ ३५ ॥
पलिकं सैन्धवं शुण्ठी द्वे च सौवर्च्चलात् पले ।
कुड़वांशानि वृक्षाम्लं दाड़िमं पत्रमर्ज्जकात् ॥
एकैकं मरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके ।

शर्कराया: पलान्यत्र दश द्वे च प्रदापयेत् ॥
कृत्वा चूर्णं ततो मात्रामन्नपाने प्रयोजयेत् ।
रोचनं दीपनं बल्यं पार्श्वार्त्तिश्वासकासनुत् ॥ ३६ ॥

इति सैन्धवादिचूर्णम् ।

एका षोड़शिका धान्याद्द्वे ऽजाज्यजमोदयोः ।
ताभ्यां दाड़िमवृक्षाम्लं द्विद्विः सौवर्च्चलात् पलम् ॥
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च ।
तच्चूर्णं षोड़शपले शर्कराया विमिश्रयेत् ॥
षाड़वोऽयं प्रदेयः स्यादन्नपानेषु पूर्व्ववत् ।
मन्दानले शकृद्भेदे यक्ष्मिणामग्निवर्द्धनः ॥ ३७ ॥

इति षाड़वः ।

पिवेन्नागवलामूलमर्द्धकर्षविवर्द्धनम् ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥
एष प्रयोगः पुष्ट्यायुर्बलारोग्यकरः परः ।
मण्डूकपर्ण्याः कल्पोऽयं शुण्ठीमधुकयोस्तथा ॥ ३८ ॥
यद्यत् सन्तर्पणं शीतमविदाहि हितं लघु ।
अन्नपानं निषेव्यं तत् क्षतक्षीणैः सुखार्थिभिः ॥
यच्चोक्तं यक्ष्मिणां पथ्यं कासिनां रक्तपित्तिनाम् ।
तच्च कुर्य्यादवेक्ष्याग्निं व्याधिं सात्म्यं बलन्तथा ॥
उपेक्षिते भवेत् तस्मिन्ननुबन्धो हि यक्ष्मणः ।
प्रागेवागमनात् तस्य तस्मात् तं त्वरया जयेत् ॥ ३९ ॥

तत्र श्लोकौ ।

क्षतक्षयसमुत्थानं सामान्यपृथगाकृतिम् ।

असाध्ययाप्यसाध्यत्वं साध्यानां सिद्धिरेव च ॥
उक्तवान् जेत्रष्ठशिष्याय क्षतक्षीणचिकित्सिते ।
तत्त्वार्थविद् वीतरजस्तमोमोहः पुनर्व्वसुः ॥ ४० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
क्षतक्षीणचिकित्सितं नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

अथातः श्वयथुचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

भिषग्वरिष्ठं सुरसिद्धजुष्टं मुनीन्द्रमत्र्यात्मजमग्निवेशः ।
महागदस्य श्वयथोर्यथावत् प्रकोपरूपप्रशमानपृच्छत् ॥ २ ॥
तस्मै जगादागदवेदसिन्धुः प्रवर्त्तनादिप्रवरोऽत्रिजस्तान् ।
वातादिभेदात्त्रिविधस्य सम्यङ्निजानिजैकाङ्गजसर्व्वजस्य ॥ ३ ॥
शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणञ्च ॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्म्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्म्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥४॥
बाह्यत्वचो दूषयिताभिघातः काष्ठाग्निशस्त्राश्मविषायसाद्यैः ।
आगन्तुहेतुस्त्रिविधो निजश्च सर्व्वाङ्गगात्रावयवाश्रितत्वात् ॥
बाह्याः शिराः प्राप्य यदा कफासृक्पित्तानि संदूषयतीह वायुः ।
तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिङ्गं श्वयथुं करोति ॥ ५ ॥

ऊर्द्ध्वं स्थितैरूर्द्ध्वमधश्च वायोः स्थानस्थितैर्मध्यगतैश्च मध्ये।
सर्व्वाङ्गगः सर्व्वगतैः क्वचित्स्थैर्दोषैः क्वचित् स्याच्छ्वयथुस्तदाख्यः॥६
उष्मा तथा स्याद्दवथुः शिराणामायाम इत्येव च पूर्व्वरूपम्।
सर्व्वस्त्रिदोषोऽधिकदोषलिङ्गैस्तत्संज्ञमभ्येति भिषग्जितञ्च॥७
सगौरवं स्यादनवस्थितत्वं सोत्सेधमुष्माथ शिरातनुत्वम्।
सलोमहर्षाङ्गविवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम्॥८॥
चलस्तनुत्वक् परुषोऽरुणोऽसितः प्रसुप्तिहर्षार्त्तियुतोऽनिमित्ततः।
प्रशाम्यति प्रोन्नमति प्रपीड़ितो दिवा बली च श्वयथुः समीरणात्॥९
मृदुः सगन्धोऽसितपीतरागवान् भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शरुगक्षिरागकृत् स पित्तशोथो भृशदाहपाकवान्॥१०

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
सकृच्छ्रजन्मप्रशमो निपीड़ितो
नचोन्नमेद्रात्रिबली कफात्मकः॥ ११॥

कृशस्य रोगैरबलस्य यो भवेदुपद्रवैर्वा वमिपूर्व्वकैर्युतः।
स हन्ति मर्म्मानुगतोऽथ राजिमान् परिस्रवेद्धीनबलस्य सर्व्वगः॥१२
अहीनमांसस्य य एकदेशजो नवो बलस्थस्य सुखः स साधने।
निदानदोषर्त्तुविपर्य्ययक्रमैरुपाचरेत् तं बलदोषकालवित्॥१३॥
अथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्वणदोषमाश्रितम्।
शिरोगतं शीर्षविरेचनैरधोविरेचनैरूर्द्ध्वमधस्तयोर्द्ध्वगम्॥
उपाचरेत् स्नेहभवं विरुक्षणैः प्रकल्पयेत् स्नेहविधिञ्च रुक्षजे।
विबद्धविट्केऽनिलजे निरूहणं घृतन्तु पित्तानिलजे सतिक्तकम्॥
पयश्च मूर्च्छारतिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते।

कफोत्थितं क्षारकटूष्णसंयुतैः समूत्रतक्रासवयुक्तिभिर्जयेत् ॥१४॥

ग्राम्याब्जानूपं पिशितलवणं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम् ॥
धाना वल्लूरं समशनमथो गुर्व्वसात्म्यं विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्ज्जयेन्मैथुनञ्च ॥ १५ ॥

व्योषत्रिवृत्तिक्तकरोहिणीश्च सायोरजस्काञ्चिफलारसेन ।
पीत्वा कफोत्थं शमयेत्तु शोथं मूत्रेण गव्येन हरीतकीं वा ॥१६॥

हरीतकीनागरदेवदारु सुखाम्बुयुक्तं सपुनर्नवं वा ।
सर्व्वं पिबेत् त्रिष्वपि मूत्रयुक्तं स्नातश्च जीर्णे पयसान्नमद्यात् ॥१७

पुनर्नवानागरमुस्तकल्कान् प्रस्थेन धीरः पयसोऽश्नमात्रान् ।
मयूरकं मागधिकां समूलां सनागरां वा प्रपिबेत् सवाते ॥१८॥

दन्तीत्रिवृद्व्योषचित्रकैर्वा पयः शृतं दोषहरं पिबेन्ना ।
त्रिप्रस्थमात्रञ्च पलार्द्धिकैस्तैरर्द्धावशिष्टं पवने सपित्ते ॥ १९ ॥

सुशीतलप्रीतकरसं प्रयोज्यं श्यामोरुबूकोषणसाधितं वा ।
त्वग्दारुवर्षाभुमहौषधैर्वा गुडूचिकानागरदन्तिभिर्वा ॥ २० ॥

सप्ताहमीष्टंस्त्वथवापि मासं पयः पिबेद्भोजनवारिवर्ज्जी ।
गव्यं समूत्रं महिषीपयो वा क्षीराशनं मूत्रमथो गवां वा ॥२१॥

तक्रं पिबेद्वा गुरुभिन्नवर्च्चाः सव्योषसौवर्च्चलमाक्षिकञ्च ।
गुडाभयं वा गुडनागरं वा सदोषभिन्नामविबन्धवर्च्चाः ॥२२॥

विशुक्तसङ्गे पयसा रसैर्वा प्रागभक्तमद्यादुरुबूकतैलम् ।

स्रोतोविबन्धेऽरुचिरुचिप्रणाशे
मद्यान्यरिष्टांश्च पिबेत् सुजातान् ॥ २३ ॥

गण्डीरभल्लातकचित्रकांश्च व्योषं विडङ्गं बृहतीद्वयञ्च ।

द्विप्रास्थिकं गोमयपावकेन द्रोणे पचेत् कूर्च्चिकमस्तुनस्तु ॥
त्रिभागशेषन्तु सुपूतशीतं द्रोणेन तत् प्राक्तनमस्तुना च ।
सितोपलायाश्च शतेन युक्तं लिप्ते घटे चित्रकपिप्पलीभ्याम् ॥
वैद्रायसे स्थापितमाद्ध्याह्नात् प्रयोजयंस्तद्विनिहन्ति शोफान् ।
भगन्दरार्शःक्रिमिकुष्ठमेहान् वैवर्ण्यकार्श्यानिलहिक्कनञ्च ॥२४॥

इति गण्डीराद्यरिष्टः ।

काश्मर्य्यधात्रीमरिचाभयाह्वमृद्वीकाफलानाञ्च सपिप्पलीनाम् ।
शतं शतं क्षौद्रगुड़ात् पुराणात्तुलान्तु कुम्भे मधुना प्रलिप्ते ॥
सप्ताहमुष्णे द्विगुणन्तु शीते स्थितं जलद्रोणयुतं पिबेन्ना ।
शोफान् विबन्धान् कफवातजांश्च निहन्त्यरिष्टोऽष्टशतोऽग्निकृच्च ॥२५

इत्यष्टशतोऽरिष्टः ।

पुनर्नवे द्वे च बले सपाठे वासा गुडूची सह चित्रकेण ।
निदिग्धिका च त्रिपलानि पक्त्वा द्रोणावशेषे सलिले ततस्तु ॥
पूत्वा रसं द्वे च गुड़ात् पुराणात् तुले मधुप्रस्थयुतं सुशीतम् ।
मासं निदध्याद् घृतभाजनस्थं पर्वे यवानां परतश्च मासात् ॥
चूर्णीकृतैरर्द्धपलांशिकैस्तं हेमत्वगेलामरिचाम्बुपत्रैः ।
गन्धान्वितं क्षौद्रघृतप्रदिग्धं जीर्णे पिबेद्व्याधिबलं समीक्ष्य ॥
स्तृपाण्डुरोगं श्वयथुं प्रवृद्धं प्लीहभ्रमारोचकमेहगुल्मान् ।
भगन्दरं षड़् जठराणि कासं श्वासं ग्रहण्यामयकुष्ठकण्डूः ॥
शाखानिलं बद्धपुरीषताञ्च हिक्कां किलासञ्च हलीमकञ्च ।
क्षिप्रं जयेद्वर्णबलायुरोजस्तेजोन्वितो मांसरसान्नभोजी ॥ २६ ॥

इति पुनर्नवाद्यरिष्टः ।

फलत्रिकं चित्रकपिप्पली च सदीप्यकं लोहरजो विड़ङ्गम् ।

चूर्णीकृतं कौड़विकं द्विरंशं क्षौद्रं पुराणस्य तुलां गुड़स्य ॥
मासं निदध्याद् घृतभाजनस्थं यवेषु तानेव निहन्ति रोगान् ॥२७

इति फलत्रिकाद्यरिष्टः ।

येषाञ्च साम्यात् पाण्डुविकारिणाञ्च
प्रोक्ता हिताः शोथिषु तेऽप्यरिष्टाः ॥ २८ ॥

कृष्णा सपाठा गजपिप्पली च निदिग्धिका चित्रकनागरञ्च ।
सपिप्पलीमूलरजन्यजाजीमुस्तञ्च चूर्णं सुखतोयपीतम् ॥
हन्यात् त्रिदोषं चिरजञ्च शोथं कल्कश्च भूनिम्बमहौषधस्य ।
अयोरजस्त्र्यूषणयावशूकं चूर्णञ्च पीतं त्रिफलारसेन ॥ २९ ॥
क्षारद्वयं स्याल्लवणानि चत्वार्य्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविड़ङ्गसारं मुस्ताजमोदामरदारुबिल्वम् ॥
कलिङ्गका चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गुकर्षन्तु सुसूक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥
स्यात्भस्मनस्तत् सलिलेन साध्यमालोड्य यावद्घनमप्रदग्धम् ।
स्यानं ततः कोलसमान्तु मात्रां कृत्वा सुशुष्कां विधिनोपयुञ्ज्यात् ॥
प्लीहोदरश्वित्रहलीमकार्शःपाण्ड्वामयारोचकशोषशोथान् ।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रदहेत् सुकष्टान् ॥३०॥

इति क्षारगुड़िका ।

प्रयोजयेदार्द्रकनागरं वा तुल्यं गुड़ेनार्द्धपलाभिवृद्ध्या ।
मात्रा परं पञ्च पलानि मासं जीर्णे पयोयूषरसाश्च भक्तम् ॥
गुल्मोदरार्शःश्वयथुप्रमेहान् श्वासप्रतिश्यायलसकाविपाकान् ।
सकामलाशोषमनोविकारान् श्वासं कफञ्चैव जयेत् प्रयोगः ॥३१॥

इति गुड़ार्द्रकप्रयोगः ।

रसस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसान्नमद्यात्
शिलाह्वयञ्च त्रिफलारसेन हन्यात् त्रिदोषं श्वयथुं प्रसह्य ॥३२॥

इति शिलाजतुप्रयोगः।

द्विपञ्चमूल्यास्तु पचेत् कषाये कंसेऽभयानाञ्च शतं गुड़स्य।
लेहे सुसिद्धेऽथ विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपास्थिते च ॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥
श्वासज्वरारोचकमेहगुल्मप्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ३३ ॥

इति कंसहरीतकी।

पटोलमूलामरदारुदन्तीत्रायन्तिपिप्पल्यभयाविशालाः।
यष्ट्याह्वयं तिक्तकरोहिणी च सचन्दना शान्निचुलानि दार्व्वी ॥
कर्षोन्मितैस्तैः क्वथितः कषायो घृतेन पेयः कुड़वेन युक्तः।
वीसर्पदाहज्वरसन्निपाततृष्णाविषाणि श्वयथुञ्च हन्ति ॥ ३४ ॥
यमानिकाचित्रकधान्यपाठाः सदीर्घ्यकव्यूषणवेतसाम्लाः। *
बिल्वात् फलं दाड़िमयावशूके सपिप्पलीमूलमथापि चव्यम् ॥
पिष्ट्वाक्षमात्राणि जलाढ़केन पक्त्वा घृतप्रस्थमथ प्रदद्यात्।

अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ ३५ ॥

इति यमानिकादिघृतम्।

पिबेद्घृतं वाष्टगुणाम्बुसिद्धं सचित्रकक्षारसुदारवीर्य्यम्।

---

* सचित्रकं धान्ययमान्यजाजीसौवर्च्चलं व्यूषणवेतसाम्लमित्यादिकं पठित्वा केचिदिदं चित्रकादिघृतमिति वदन्ति।

कल्याणकं वापि सपञ्चगव्यं तिक्तं महद्वाप्यथ तिक्तकं वा ॥ ३६

चीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुप्रमथनम् ॥
अर्शांसि सामानिलगुल्ममेहांस्तद्धन्ति दीप्तञ्च करोति वह्निम्।
तक्रेण चाद्यात् सघृतेन तेन भोज्यानि सिद्धामथवा यवागूम् ॥ ३७

इति चित्रकघृतम्।

जीवन्त्यजाजीशटिपौष्कराद्यैः सकारवीचित्रकबिल्वमध्यैः।
सयावशूकैर्बदरप्रमाणैर्घाम्लयुक्ता घृततैलभृष्टा ॥
अर्शोऽतिसारानिलगुल्मशोफहृद्रोगमन्दाग्निहिता यवागूः।
या पञ्चमूले * विधिनैव तेन सिद्धा भवेत् सा च समा तयैव ॥ ३८

कुलत्थयूषश्च सपिप्पलीको मौद्गश्च सव्यूषणयावशूकः।
रसस्तथा विष्किरजाङ्गलानां सकूर्म्मगोधाशिखिशल्लकानाम् ॥
सुवर्च्चला गृञ्जनकं पटोलं सवायसीमूलकवेत्रनिम्बम्।
शाकार्थिनां शाकमिति प्रशस्तं भोज्ये पुराणश्च यवः सशालिः ॥ ३९

आभ्यन्तरं भेषजमुक्तमेतद् बहिर्हितं यच्छृणु तद्यथावत्।
स्नेहान् प्रदेहान् परिषेचनानि स्वेदांश्च वातप्रबलस्य कुर्य्यात् ॥ ४०

शैलेयकुष्ठागुरुदारुकौन्तीत्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुस्थौणेयकहेममांसीतालीशपत्रप्लवपत्रधान्यैः ॥
श्रीवेष्टकध्यामकपिप्पलीभिः पृक्कानखैश्चैव यथोपलाभम्।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥ ४१ ॥

इति शैलेयादितैलप्रदेहौ।

जलैस्तथैरण्डवृषार्कशिग्रुकाश्मर्य्यपत्राज्जकजैश्च सिद्धैः।

* या पञ्चकोलैरिति पाठान्तरम्

खिन्नः कवोष्णा रवितप्ततोयैः स्नातश्च गन्धैरनुलेपनीयः॥ ४२॥
सवेतसाः क्षीरवतां द्रुमाणां त्वचः समाञ्जिष्ठलतामृणालाः।
सचन्दनाः पद्मकवालकौ च पैत्ते प्रदेहस्तु सतैलपाकः॥
आक्तस्य तेनाम्बु रविप्रतप्तं सचन्दनं साभयपद्मकञ्च।
स्नाने हितं क्षीरवतां कषायः क्षीरोदकं चन्दनलेपनञ्च॥ ४३॥
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगुमाप्रलेपः।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च॥ ४४॥
विभीतकानां फलमध्यलेपः सर्व्वेषु दाहार्त्तिहरः प्रदिष्टः।
यष्ठ्याह्वमुस्तैः सकपित्थपत्रैः सचन्दनैस्तत् पिड़कासु लेपः॥ ४५॥
रास्नावृषार्कत्रिफलाविड़ङ्गं शिग्रुत्वषो मूषिकपर्णिका च।
निम्बार्ज्जकौ व्याघ्रनखः समूर्व्वा सुवर्च्चला तिक्तकरोहिणी च॥
सकाकमाची बृहती सकुष्ठा पुनर्नवा चित्रकनागरे च।
उन्मर्द्दनं शोफिषु मूत्रपिष्टं शस्तस्तथा मूलकतोयसेकः॥ ४६॥
शोफास्तु गात्रावयवाश्रिता ये ते स्थानदूष्याकृतिनामभेदात्।
शोथा बहुत्वादतिवृत्तसंख्यास्तेषान्तु कांश्चिद् गदतो निबोध॥४७
दोषास्त्रयः स्वैः कुपिता निदानैः कुर्व्वन्ति शोथं शिरसः सुघोरम्।
अन्तर्गले घुर्घुरकान्वितञ्च शालूकमुच्छ्वासनिरोधकारि॥
गलस्य सर्व्वौ चिवुके गले वा सदाहरागः श्वसनोच्छ्वसोषः।
शोथो भृशार्त्तिस्तु विड़ालिका स्याद्वन्याङ्गले चेद्वलयीकृता सा॥
शादिद्रवियर्मीःसंविदाहरागः पाकान्वितस्तालुनि सचिदोषः।
जिह्वोपरिष्टादुपजिह्विका स्यात् कफादधस्तादधिजिह्विका च॥
यो दन्तमांसेषु तु रक्तपित्तात् पाको भवेत् सोपकुशः प्रदिष्टः।
स्याद्दन्तविद्रध्यपि दन्तमांसे शोफः कफाच्छोणितसञ्चयोत्थः॥

गलस्य पार्श्वे गलगण्ड एकः स्यान्मुष्कमाला बहुभिस्तु गण्डैः।
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः॥ ४८॥
तेषां शिराकायशिरोविरेका धूमः पुराणस्य घृतस्य पानम्।
स्याल्लङ्घनं वक्त्रभवेषु चापि प्रघर्षणं स्यात् कवलग्रहश्च॥ ४९॥
अङ्गैकदेशेष्वनिलादिभिः स्यात् स्वरूपधारी स्फुरणं शिराभिः।
ग्रन्थिर्मेदोमांसभवस्त्वनर्त्तिर्मेदोभवः स्निग्धतमश्चलश्च॥ ५०॥
संशोधिते स्वेदितमश्मकाष्ठैः साङ्गुष्ठदण्डैर्विलयेदपक्वम्।
विपाच्य चोद्धृत्य भिषक् सकोषं शस्त्रेण दग्ध्वा व्रणवच्चिकित्सेत्।
अदग्ध ईषत्परिशेषितश्च प्रयाति भूयोऽपि शनैर्विवृद्धिम्।
तस्मादशेषः कुशलैः समन्ताच्छेद्यो भवेद्रौक्ष्य शरीरदेशान्॥
शेषे कृते पाकवशेन शोथैस्ततः क्षतोत्थः प्रसरेद्विसर्पः।
उपद्रवं तं प्रविचार्य्य तज्ज्ञस्तैर्भेषजैः पूर्व्वतरैर्यथोक्तैः॥
निवारयेदादित एव यत्नाद्विधानवित् स्वस्वविधिं विधाय।
ततः क्रमेणास्य यथाविधानं व्रणं व्रणज्ञस्त्वरया चिकित्सेत्॥ ५१॥
विवर्ज्जयेत् कुक्षुदराश्रितञ्च तथा गले मर्म्मणि संश्रितञ्च।
स्थूलः खरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम्॥ ५२॥
ग्रन्थ्यर्व्वुदानाञ्च यतोऽविशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद्भिषगर्व्वुदानि विधानविद् ग्रन्थिचिकित्सितेन॥ ५३॥
ताम्रा समूला पिडका भवेद्या सा चालजी नाम परिस्रुताम्रा।
रोगे चतश्चर्म्मनखान्तरे स्यान्मांसास्रदूषी भृशशोथपाकः॥
ज्वरान्विता वङ्क्षणकक्षजा या वर्त्तिर्निरर्त्तिः कठिनायता च।
विदारिका सा कफमारुताभ्यां तेषां यथादोषमुपक्रमः स्यात्॥
विस्रावणं स्निग्धकयोपनाहः पक्वेषु चैव व्रणवच्चिकित्सा॥ ५४॥

विस्फोटकाः सर्व्वशरीरगास्तु स्फोटाः सदाहा ज्वरतर्षयुक्ताः ॥
यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाभ्यां जनितास्तु कक्षाः ।
याश्चापराः स्युः पिड़काः प्रकीर्णाः
स्थूलाणुमध्या अपि पित्तजास्ताः ॥
क्षुद्रप्रमाणाः पिड़काः शरीरे सर्व्वाङ्गगाः सज्वरदाहतर्षाः ।
कण्डूयुताः सारुचिसप्रसेका रोमान्तिकाः पित्तकफात् प्रदिष्टाः ॥
याः सर्व्वगात्रेषु मसूरमात्रा मसूरिकाः पित्तकफात् प्रदिष्टाः ।
वीसर्पशान्त्यै विहिता क्रिया या
तां तासु कुष्ठे च हितां विदध्यात् ॥ ५५ ॥
वृषेऽनिलादैरष्टं यथो स्वलिङ्गैरन्त्रान् निरेति प्रविशेन्मुहुश्च ।
मूत्रेण पूर्णं मृदु मेदसा चेत्
स्निग्धञ्च विद्यात् कठिनञ्च शोथम् ॥ ५६ ॥
विरेचनाभ्यङ्गनिरूहलेपाः पक्वेषु चैव व्रणवच्चिकित्सा ।
स्यान्मूत्रमेदः कफजं विपाच्य विशोध्य सीव्यं व्रणवच्च पक्वम् ॥ ५७
क्रिमिक्षताद्विषमव्यवायप्रवाहनाद्युग्रत्कटुकाश्वपृष्ठैः ।
गुदस्य पार्श्वे पिड़का भृशार्त्तिः
पाकप्रभिन्ना तु भगन्दरः स्यात् ॥ ५८ ॥
विरेचनस्त्रैषणापाटनञ्च विशुद्धमार्गस्य च तैलदाहः ।
स्यात् क्षारसूत्रेण सुपाचितस्य भिन्नस्य चास्य व्रणवच्चिकित्सा ॥ ५९
जङ्घासु पिण्डेषु पदोपरिष्टात् स्यात् श्लीपदं मांसकफास्रदोषात् ।
शिराकफघ्नश्च विधिः समग्रस्तत्र ध्यते सर्षपलेपनञ्च ॥ ६० ॥
मन्दास्तु पित्तप्रबलाः प्रदुष्टा दोषाः सुतीव्रं तनुरक्तपाकम् ।
कुर्व्वन्ति शोथं ज्वरतर्षयुक्तं विसर्पिणं जालकगर्द्दभाख्यम् ॥ ६१ ॥

विलेपनं रक्तविमोक्षणञ्च विरेचनं कायशिरोगतञ्च ।
धात्रीप्रयोगान् शिशिरप्रदेहान् कुर्य्यात् सदा जालकगर्द्दभस्य ॥ ९२

एवंविधांश्चाप्यपरान् परीक्ष्य शोथप्रकाराननिलादिलिङ्गैः ।
शान्तिं नयेद्दोषहरैर्यथास्वमालेपनच्छेदनभेददाहैः ॥ ९३ ॥

प्रायोऽभिघातादनिलः सरक्तः शोथं सरागं प्रकरोति तत्र ।
वीसर्पनुन्मारुतरक्तनुच्च कार्य्यं विषघ्नं विषजे च कर्म्म ॥ ९४ ॥

तत्र श्लोकः ।

त्रिविधस्य दोषभेदात् सर्व्वार्द्धावयवगात्रभेदाच्च ।
श्वयथोर्विविधस्य तथा लिङ्गानि चिकित्सितञ्चोक्तम् ॥ ९५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
श्वयथुचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

अथात उदरचिकित्सितं व्याख्यास्याम ॥ …
स्माह भगवानात्रेयः ॥ १ ॥

सिद्धविद्याधराकीर्णे कैलासे नन्दनोपमे ।
तप्यमानं तपस्तीव्रं साक्षाद्धर्म्ममिव स्थितम् ॥
आयुर्व्वेदविदां श्रेष्ठं भिषग्विद्याप्रवर्त्तकम् ।
पुनर्व्वसुं जितात्मानमग्निवेशोऽब्रवीदिदम् ॥
भगवन्नुदरैर्मर्त्त्या दृश्यन्ते दुःखिता नराः ।

शुष्कवक्त्राः कृशैर्गात्रैराध्मातोदरकुक्षयः ॥
प्रणष्टाग्निबलाहाराः सर्व्वचेष्टास्वनीश्वराः ।
दीनाः प्रतिक्रियाभावाज्जहतोऽसूननाथवत् ॥
तेषामायतनं संख्यां प्राग्रूपाकृतिभेषजम् ।
यथावच्छ्रोतुमिच्छामि गुरुणा सम्यगीरितम् ॥ २ ॥
सर्व्वभूतहितायर्षिः शिष्येणैवं प्रचोदितः ।
सर्व्वभूतहितं वाक्यं व्याहर्त्तुमुपचक्रमे ॥ ३ ॥
अग्निदोषान्मनुष्याणां रोगसङ्घाः पृथग्विधाः ।
मलवृद्धा प्रवर्त्तन्ते विशेषेणोदराणि च ॥
मन्देऽग्नौ मलिनैर्भुक्तैरपाकाद्दोषसञ्चयः ।
प्राणाग्न्यपानान् संदूष्य मार्गान् रुद्ध्वाधरोत्तरान् ॥
त्वङ्मांसान्तरमागत्य कुक्षिमाध्मापयन् भृशम् ।
जनयत्युदरं तस्य हेतुं शृणु सलक्षणम् ॥ ४ ॥
अत्युष्णलवणक्षारविदाह्यम्लगराशनात् ।
मिथ्यासंसर्ज्जनाद्रुक्षविरुद्धाशुचिभोजनात् ॥
प्लीहार्शोग्रहणीदोषकर्षणात् कर्म्मविभ्रमात् ।
क्लिष्टानामप्रतीकाराद्रौक्ष्याद्वेगविधारणात् ॥
स्रोतसां दूषणादामात् संक्षोभादतिपूरणात् ।
अर्शोबालशकृद्रोधादन्त्रस्फुटनभेदनात् ।
अतिसञ्चितदोषाणां पापं कर्म्म च कुर्व्वताम् ।
उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः ॥ ५ ॥
शुष्काग्नेः स्वादुतो स्निग्धगुर्व्वन्नं पच्यते चिरात्
भुक्तं विदह्यते सर्व्वं शोषाङ्गोर्द्धं न वेत्ति च ॥

सहते नातिसौहित्यमीषच्छोफश्च पादयोः ।
अम्बुवृद्धलक्षयेऽल्पेऽपि व्यायामे श्वासमृच्छति ॥
वृद्धिः पुरीषनिचये रूक्षोदावर्त्तहेतुका ।
बस्तिसन्धौ रुगाध्मानं वर्द्धते पाट्यतेऽपि च ॥
आतन्यते च जठरं लघ्वल्पभोजनैरपि ।
राजीजन्म वलीनाश इति लिङ्गं भविष्यताम् ॥ ६ ॥
रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि सञ्चिताः ।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥ ७ ॥
कुक्षेराध्मानमाटोपः शोफः पादकरस्य च ।
मन्दाग्निः श्लक्ष्णगण्डत्वं कार्श्यं चोदरलक्षणम् ॥ ८ ॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ ९ ॥
रूक्षाल्पभोजनायासवेगोदावर्त्तकर्षणैः ।
वायुः प्रकुपितः कुक्षिहृद्बस्तिगुदमार्गगः ॥
हत्वाग्निं कफमुद्धूय तेन रुद्धगतिस्ततः ।
आचिनोत्युदरं जन्तोस्त्वङ्मांसान्तरमाश्रितः ॥ १० ॥

तस्य रूपाणि—कुक्षिपादपाणिश्वयथूदरविपाटनमनियतौ च वृद्धिह्रासौ कुक्षिपार्श्वशूलोदावर्त्ताङ्गमर्दपर्व्वभेदशुष्ककास-कार्श्यदौर्ब्बल्यारोचकाविपाकाः अधोगुरुत्वं वातवर्च्चोमूत्रसङ्गः श्यावारुणत्वञ्च नखनयनवदनत्वङ्मूत्रवर्च्चसामपि चोदरं तन्वसित-राजीशिरासन्ततमाहतमाध्मातदृतिशब्दवद्भवति । वायुश्चात्रोर्द्ध्व-मधस्तिर्य्यक् च सशूलशब्दश्चरति तद्वातोदरमिति विद्यात् ॥ ११

कट्वम्ललवणात्युष्णतीक्ष्णाग्न्यातपसेवनैः ।

विदाह्यजीर्णाध्यशनैश्चाशु पित्तं समाचितम् ॥
प्राप्यानिलकफौ रुद्ध्वा मार्गमुन्मार्गमास्थितम् ।
निहन्त्यामाशये वह्निं जनयत्युदरं ततः ॥ १२ ॥

तस्य रूपाणि—दाहज्वरतृष्णामूर्च्छातीसारभ्रमाः कटुकास्यत्वं हरितहारिद्रत्वञ्च नखनयनवदनत्वङ्मूत्रवर्च्चसामपि चोदरं नीलपीतहारिद्रहरितताम्रराजीशिरावनद्धं दह्यते दूयते धूप्यत ऊष्मायते खिद्यते क्लिद्यते मृदुस्पर्शं क्षिप्रपाकञ्च भवत्येतत् पित्तोदरमिति विद्यात् ॥ १३ ॥

अव्यायामदिवास्वप्नस्वाद्वतिस्निग्धपिच्छिलैः ।
दधिदुग्धोदकानूपमांसैश्चाप्यतिसेवितैः ॥
क्रुद्धेन श्लेष्मणा स्रोतःस्वावृतेष्वावृतोऽनिलः ।
तमेव पीड़यन् कुर्य्यादुदरं बहिरन्तरम् ॥ १४ ॥

तस्य रूपाणि—गौरवारोचकाविपाकाङ्गमर्द्दाः सुप्तिपाणिपादसुष्कोरुशोफोत्क्लेशनिद्राकासश्वासाः शुक्लत्वञ्च नखनयनवदनत्वङ्मूत्रवर्च्चसामपि चोदरं शुक्लराजीशिरासन्ततं गुरु स्तिमितं स्थिरं कठिनञ्च भवत्येतत् श्लेष्मोदरमिति विद्यात् ॥ १५ ॥

दुर्ब्बलाग्नेरपथ्यादिविरोधिगुरुभोजनात् ।
स्त्रीदत्तैश्च रजोरोमविण्मूत्रास्थिनखादिभिः ॥
विषैश्च मन्दैर्वाताद्याः कुपिताः सञ्चितास्त्रयः ।
शनैः कोष्ठे प्रकुर्व्वन्तो जनयन्त्युदरं नृणाम् ॥ १६ ॥

तस्य रूपाणि—सर्व्वेषामेव दोषाणां समस्तानि लिङ्गान्युपलभ्यन्ते वर्णाश्च सर्व्वे नखादिषूदरमपि च नानावर्णराजीशिरासन्ततं भवत्येतत् सन्निपातोदरमिति विद्यात् ॥ १७ ॥

अत्याशितस्य संक्षोभाद् यानयानातिचेष्टितैः ।
अतिव्यवायभाराध्ववमनव्याधिकर्षणैः ॥
वामपार्श्वाश्रितः प्लीहा च्युतः स्थानात् प्रवर्द्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत् ॥

तस्य प्लीहा कठिनो नीरुजो वर्द्धमानः कच्छपसंस्थान उपलभ्यते स चोपेक्षितः क्रमेण कुक्षिं जठरमग्न्यधिष्ठानञ्च परिक्षिपन्नुदरमभिनिर्वर्त्तयति ॥ १८ ॥

तस्य रूपाणि—दौर्बल्यारोचकाविपाकवर्च्चोमूत्रग्रहतमः-प्रवेशपिपासाङ्गमर्दच्छर्दि-मूर्च्छाङ्गसादकास-श्वासमृदुज्वराना-हाग्निनाशकार्श्यास्यवैरस्यवर्णभेदाः कोष्ठे वातशूलञ्चापि चोदर-मरुणवर्णमविवर्णं वा नीलहरितहारिद्रराजिमद्भवतीत्येवमेव यकृदपि दक्षिणपार्श्वस्थं कुर्य्यात् तुल्यहेतुलिङ्गौषधत्वात् । तस्य प्लीहजठर एवावरोध इत्येतद् यकृत्-प्लीहोदरमिति विद्यात् ॥ १९ ॥

पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे ।
उदावर्त्तैस्तथार्शोभिरन्त्रसंमूर्च्छनेन वा ॥
अपानो मार्गसंरोधाद्धत्वाग्निं कुपितोऽनिलः ।
वर्चःपित्तकफान् रुद्ध्वा जनयत्युदरं ततः ॥ २० ॥

तस्य रूपाणि—तृष्णादाहज्वरमुखतालुशोषोरुसादकास-श्वासदौर्बल्यारोचका-विपाकवर्च्चोमूत्र-सङ्गाध्मानच्छर्दिक्षवथु-शिरोहृन्नाभिगुदशूलान्यपि चोदरं मूढवातं स्थिरमरुणनील-राजीशिरावनद्धमराजिकं वा प्रायो नाभ्युपरि गोपुच्छवदभि-निर्वर्त्तते इत्येतद्बद्धगुदोदरमिति विद्यात् ॥ २१ ॥

शर्कराहणकाष्ठास्थिकण्टकैरन्नसंयुतैः।
भिद्येतान्त्रं यदा भुक्तैर्जृम्भयात्यशनेन वा॥
पाकं गच्छेद् रसस्तेभ्यश्छिद्रेभ्यः प्रस्रवेद् बहिः।
पूरयन् गुदमन्त्रञ्च जनयत्युदरं ततः॥ २२॥

तस्य रूपाणि—तदधो नाभेः प्रायो वर्द्धमानमुदकोदरं स्याद्-यथाबलञ्च दोषाणां रूपाणि दर्शयत्यपि चातुरः सलोहित-नीलपीतपिच्छिलकुणपगन्धामवर्च्चं उपवेशते हिक्काश्वास-कासतृष्णाप्रमेहारोचकाविपाकदौर्ब्बल्यपरीतश्च भवतेतच्छिद्रोदरमिति विद्यात्॥ २३॥

स्नेहपीतस्य मन्दाग्नेः क्षीणस्यातिकृशस्य च।
अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि संस्थितः॥
स्रोतःसु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः।
वर्द्धयेतां तदेवाम्बु स्वस्थानादुदराय तौ॥ २४॥

तस्य रूपाणि—निरन्नकाङ्क्षापिपासागुदस्रावशूलश्वास-कासदौर्ब्बल्यान्यपि चोदरं नानावर्णराजीशिरासन्ततमुदकपूर्ण-दृतिक्षोभसमस्पर्शं भवतीतेतदुदकोदरमिति विद्यात्॥ २५॥

तत्राचिरोत्पन्नमनुपद्रवमनुदकपूर्णमुदरं त्वरमाणश्चिकित्सेत्। उपेक्षितानां ह्येषां दोषाः स्वस्थानादपवृत्ता अपरिपाकाद् द्रवीभूताः सन्धीन् स्रोतांसि चोपक्लेदयन्ति स्वेदश्च बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्य्यगवतिष्ठमानस्तदेवोदकमाप्याययति। तत्र पिच्छोत्पत्तौ मण्डलमुदरं गुरु स्तिमितमाकोठितमशब्दं मृदुस्पर्शमपगतराजीकमाक्रान्तं नाभ्यामेवोपसर्पतीति॥ २६॥

ततोऽनन्तरमुदकप्रादुर्भावः । तस्य रूपाणि कुक्षेरतिमात्राभिवृद्धिः शिरान्तर्द्धानगमनमुदकपूर्णदृतिसंक्षोभसमस्पर्शश्च । तदातुरमुपद्रवाः स्पृशन्ति छर्द्द्यतीसारतमकतृष्णाश्वासकासहिक्का-दौर्ब्बल्यपार्श्वशूलारुचि-स्वरभेदमूत्रसङ्गादयस्तथाविधमचिकित्स्यं विद्यादिति ॥ २७ ॥

भवन्ति चात्र ।

वातात् पित्तात् कफात् प्रोक्तः सन्निपातात् तथोदकात् ।
परं परं कृच्छ्रतममुदरं भिषगादिशेत् ॥ २८ ॥
पक्षाद्बद्धगुदन्तूर्द्ध्वं सर्व्वं जातोदकं तथा ।
प्रायो भवत्यभावाय च्छिद्रान्त्रञ्चोदरं नृणाम् ॥ २९ ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ।
बलशोणितमांसाग्निपरिक्षीणञ्च वर्ज्जयेत् ॥ ३० ॥
श्वयथुः सर्व्वमर्म्मोत्थः श्वासो हिक्काऽरुचिस्तथा ।
मूर्च्छा च्छर्द्दिरतीसारो निहन्त्युदरिणं नरम् ॥ ३१ ॥
जन्मनैवोदरं सर्व्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ ३२ ॥
अजातशोथमरुणं सशब्दं नातिभारिकम् ।
सदा गुड़गुड़ावन्तं शिराजालगवाक्षितम् ॥
नाभिं विष्टभ्य वायुस्तु वेगं कृत्वा प्रणश्यति ।
हृन्नाभिवङ्क्षणकटीगुदप्रत्येकशूलिनः ॥
कर्कशं सृजतो वातं नातिमन्दे च पावके ।
बाधया विरसे चास्ये मूत्रेऽल्पे संहते विषि ॥
अजातोदकमित्येतैर्लिङ्गैर्विज्ञाय तत्त्वतः ।

उपक्रामेत् भिषग्दोषबलकालविशेषवित् ॥ ३३ ॥
वातोदरं बलवतः पूर्व्वं स्नेहैरुपाचरेत्।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम्।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात्।
सम्भवत्युदरं तस्मात् नित्यमेव विरेचयेत् ॥ ३४ ॥
शुद्धं संसृज्य च क्षीरं बलार्थं पाययेत् तु तम्।
प्रागुत्क्लेशान्निवर्त्त्यैवं बले लब्धे क्रमात् पयः ॥ ३५ ॥
यूषै रसैर्वा मन्दाम्ललवणैरेधितानलम्।
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेन्नरम् ॥ ३६ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्त्तिषु।
दीप्ताग्निं बद्धविड्वातं रूक्षमप्यनुवासयेत् ॥ ३७ ॥
तीक्ष्णाधोभागयुक्तोऽस्य निरूहो दाशमूलिकः।
वातघ्नाम्लशृतैरण्डतिलतैलानुवासनम् ॥ ३८ ॥
अविरेच्यन्तु यं विद्याद्दुर्ब्बलं स्थविरं शिशुम्।
सुकुमारं प्रकृत्याल्पदोषं वाथोल्वणानिलम् ॥
तं भिषक् शमनैः सर्पिर्यूषमांसरसौदनैः।
वस्त्यभ्यङ्गानुवासैश्च क्षीरैश्चोपाचरेद्बुधः ॥ ३९ ॥
पित्तोदरं तु बलिनं पूर्व्वमेव विरेचयेत्।
दुर्ब्बलन्त्वनुवास्यादौ शोधयेत् क्षीरवस्तिना।
संजाते बलकायाग्नौ पुनः स्निग्धं विरेचयेत्।
पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥

सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ।
सकफे वा समूत्रेण सवाते तिक्तसर्पिषा ॥
पुनः क्षीरप्रयोगश्च वस्तिकर्म्म विरेचनम् ।
क्रमेण ध्रुवमातिष्ठन् युक्तः पित्तोदरं जयेत् ॥ ४० ॥
स्निग्धस्विन्नविशुद्धन्तु कफोदरिणमातुरम् ।
संसर्ज्जयेत् कटुक्षारयुक्तैरन्नैः कफापहैः ॥
गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा ।
सक्षारैस्तैलपानैश्च शमयेत् तु कफोदरम् ॥ ४१ ॥
सन्निपातोदरे सर्व्वा यथोक्ताः कारयेत् क्रियाः ।
सोपद्रवन्तु निर्व्वृत्तं प्रत्याख्येयं विजानता ॥ ४२ ॥
उदावर्त्तरुजानाहैर्दाहमोहतृषाज्वरैः ।
गौरवारुचिकाठिन्यैश्चानिलादीन् यथाक्रमम् ॥
लिङ्गैः प्लीह्न्यधिका तृष्णा रक्तञ्च पित्तलक्षणैः ।
विद्यात् समस्तैः सर्व्वैस्तु सन्निपातं तथा भिषक् ॥
चिकित्सां संप्रकुर्व्वीत यथादोषं यथाबलम् ॥
स्नेहं स्वेदं विरेकञ्च निरूहमनुवासनम् ।
समीक्ष्य कारयेद्बाहौ वामे वा व्यधयेच्छिराम् ॥
षट्पलं पाययेत् सर्पिः पिप्पलीर्व्वा प्रयोजयेत् ।
सगुड़ां वाभयां वापि क्षारारिष्टगणांस्तथा ॥
एष क्रियाक्रमः प्रोक्तो योगान् संशमनान् शृणु ॥ ४३ ॥
पिप्पली नागरं दन्ती चित्रकं द्विगुणाभयम् ।
विड़ङ्गांशयुतं चूर्णमेतदुष्णाम्बुना पिबेत् ॥ ४४ ॥ *

* पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
विड़ङ्गांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ॥ इति पाठान्तरम् ।

विड़ङ्गं चित्रकं शुण्ठीं सघृतं सैन्धवं वचाम् ।
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ॥ ४५ ॥
रोहीतकलतानान्तु काण्डकानभयाजले ।
मूत्रे वाप्यनुयात्तच्च सप्तरात्रस्थितं पिबेत् ॥
कामला गुल्ममेहार्शःप्लीहसर्व्वोदरक्रिमीन् ।
तद्धन्याज्जाङ्गलरसैर्जीर्णे स्याच्चात्र भोजनम् ॥ ४६ ॥
रोहीतकत्वचः कृत्वा पलानि पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥
पलिकैः पञ्चकोलैस्तु तैः सर्व्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ।
तथा गुल्मोदरश्वासक्रिमिपाण्डुत्वकामलाः ॥ ४७ ॥
इति रोहितकघृतम् ।

अग्निकर्म्म च कुर्व्वीत भिषग्वातकफोल्वणे ।
पैत्तिके जीवनीयानि सर्पींषि क्षीरवस्तयः ॥
रक्तावसेकः संशुद्धिः क्षीरपानञ्च सर्पिषः ।
यूषैर्मांसरसैश्चापि दीपनीयरसान्वितैः ॥
लघून्यन्नानि संसृज्य दद्यात् प्लीहोदरे भिषक् ।
यकृति प्लीहवत् सर्व्वं तुल्यत्वाद् भेषजं मतम् ॥ ४८ ॥
स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम् ।
सतैललवणं दद्यान्निरूहं सानुवासनम् ॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ।
उदावर्त्तहरं कर्म्म कार्य्यं वातघ्नमेव च ॥ ४९ ॥

छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ।
जातं जातं जलं स्राव्यमेवं तद् यापयेद्भिषक् ॥ ५० ॥
तृष्णाकासज्वरार्त्तन्तु चीणमांसाग्निभोजनम् ।
वर्ज्जयेच्छ्वासिनं तद्वच्छूलिनं दुर्ब्बलेन्द्रियम् ॥ ५१ ॥
अम्लां दोषहराणादौ प्रदद्यादुदकोदरे ।
मूत्रयुक्तानि तीक्ष्णानि विविधचारवन्ति च ॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ।
द्रवेभ्यश्चोदकादिभ्यो नियच्छेदनुपूर्व्वशः ॥ ५२ ॥
सर्व्वमेवोदरं प्रायो दोषसङ्घातजं मतम् ।
तस्मात् त्रिदोषशमनीं क्रियां सर्व्वत्र कारयेत् ॥ ५३ ॥
दोषैः कुचौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति ।
तस्माद् योज्यानि भोज्यानि दीपनानि लघूनि च ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगद्विजान् ।
पयोमूत्रासवारिष्टान् मधु शीधूंस्तथा सुराम् ॥
यवागूमोदनं वापि यूषैरद्याद्रसैरपि ।
मन्दाम्लस्नेहकटुभिः पञ्चमूलोपसाधितैः ॥ ५४ ॥
औदकानूपजं मांसं शाकं पिष्टकृतांस्तिलान् ।
व्यायामाध्वदिवास्वप्नं यानयानञ्च वर्ज्जयेत् ॥
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरी तोयपानञ्च वर्ज्जयेत् ॥ ५५ ॥
नातिसान्द्रं हितं पाने स्वादु तक्रमपेलवम् ।
त्र्यूषणचारलवणैर्युक्तन्तु निचयोदरी ॥
वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।

शर्करामधुकोपेतं स्वादु पित्तोदरी पिबेत् ॥
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तूदकोदरी ॥
बद्धोदरी तु हवुषायमान्यजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ५६ ॥
शोफानाहार्त्तितृष्णमूर्च्छापीड़िते कारभं पयः ।
शुद्धानां चामदेहानां गव्यं छागं समाहिषम् ॥ ५७ ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं समैः ॥ ५८ ॥
वृश्चिकालीं वचां कुष्ठं पञ्चमूलीं पुनर्नवाम्
वर्षाभूं नागरं धान्यं जले पक्त्वावसेचयेत् ॥
पलाशं कत्तृणं रास्नां तद्वत् पक्त्वावसेचयेत् ।
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥ ५९ ॥
रूक्षाणां बहुवातानां तथा संशोधनार्थिनाम् ।
दीपनीयानि सर्पींषि जठरघ्नानि वक्ष्यते ॥ ६० ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
सक्षारैरर्द्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ॥
कल्कैर्द्विपञ्चमूल्यास्तु तुलार्द्धस्वरसेन च ।
दधिमण्डाढ़कोपेतं तत् सर्पिर्जठरापहम् ॥

श्वयथुं वातविष्टम्भं गुल्मानर्शांसि नाशयेत् ॥ ६१ ॥

इति पञ्चकोलघृतम् ।

नागरं त्रिफलाप्रस्थं घृतं तैलं तथाढ़कम् ।
मस्तुनः साधयित्वैतत् पिवेत् सर्व्वोदरापहम् ॥
कफमारुतसम्भूते गुल्मे चैतत् प्रशस्यते ॥ ६२ ॥

इति नागरघृतम् ।

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सचारं जठरी पिवेत् ॥ ६३ ॥

इति चित्रकघृतम् ।

यवकोलकुलत्थानां पञ्चमूलरसेन च ।
सुरासौवीरकाभ्याञ्च सिद्धं वापि पिवेद् घृतम् ॥ ६४ ॥

इति यवाद्यघृतम् ।

एभिः स्निग्धाय संजाते वले शान्ते च मारुते ।
स्रस्ते दोषाशये दद्यात् कल्पदृष्टं विरेचनम् ॥ ६५ ॥
पटोलमूलं रजनी विड़ङ्गं त्रिफलात्वचम् ।
कम्पिल्लकं नीलिनी च त्रिवृता चेति चूर्णयेत् ॥
षड़ाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वा पिवेत् ॥
विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलै रसैः ।
मण्डं पेयाञ्च पीत्वा च सव्योषं षड़हं पयः ॥
शृतं पिवेत् ततश्चूर्णं पिवेदेवं पुनः पुनः ।
हन्ति सर्व्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ।

पटोलाद्यमिदं चूर्णमुदरेषु प्रपूजितम् ॥ ६६ ॥

इति पटोलाद्यं चूर्णम् ।

गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम् ।
पिवेद्द्राक्षाम्बुगोमूत्रकोलककन्धुशीधुभिः ॥ ६७ ॥
यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा चित्रकं व्योषं स्वर्णक्षीरी सचित्रका ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥
विड़ङ्गञ्च समांशानि दन्त्या भागत्रयन्तथा ।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥
एतन्नारायणं नाम चूर्णं रोगगणापहम् ।
नैतत् प्राप्यातिवर्त्तन्ते रोगा विष्णुमिवासुराः ॥
तक्रेणोदरिभिः पेयं गुल्मिभिर्वदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥
दधिमण्डेन विट्सङ्गे दाड़िमाम्बुभिरर्शसैः
परिकर्त्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ॥
भगन्दरे पाण्डुरोगे श्वासे कासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ ६८ ॥

इति नारायणचूर्णम् ।

हवुषां काञ्चनक्षीरीं त्रिफलां कटुरोहिणीम् ।
नीलिनीं त्रायमाणाञ्च सातलां त्रिवृतां वचाम् ॥

सैन्धवं काललवणं पिप्पलीञ्चेति चूर्णयेत् ।
दाड़िमत्रिफलामांसरसमूत्रसुखोदकैः ॥
पेयोऽयं सर्व्वगुल्मेषु प्लीह्नि सर्व्वोदरेषु च ।
कुष्ठे श्विवे सरुजके सवाते विषमाग्निषु ॥
शोथार्शःपाण्डुरोगेषु कामलायां हलीमके ।
वातपित्तकफांश्चाशु विरेकात् संप्रसादयेत् ॥ ६९ ॥

इति हवुषाद्यचूर्णम् ।

नीलिनीं त्रिफलां व्योषं द्वौ क्षारौ लवणानि च ।
चित्रकञ्च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ ७० ॥

इति नीलिन्याद्यं चूर्णम् ।

क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धसहितं दधि ।
जातं मथित्वातो मात्रां त्रिवृत्सिद्धात् पिबेद्घृतात् ॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ।
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ॥
दधिमण्डाढ़के सिद्धात् स्नुक्क्षीरपलकल्कितात् ।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये ॥
एषाञ्चानुपिबेत्तैव पयो वा स्वादु वा रसम् ।
घृते जीर्णे विरिक्तस्तु कोष्णं नागरकैः शृतम् ॥
पिबेदम्बु, ततः पेयां यूषं कौलत्थिकं ततः ।
पिबेद्रूक्षस्त्र्यहन्त्वेवं पयोऽन्नं प्रतिभोजितः ॥
पुनः पुनः पिबेत् सर्पिरानुपूर्व्व्या तथैव च ।
घृतान्येतानि सिद्धानि विदध्यात् कुशलो भिषक् ॥
गुल्मानां गरदोषाणामुदराणाञ्च शान्तये ॥ ७१ ॥

पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।
गुल्मघ्नं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत् ॥
क्रमाग्निहृतदोषाणां जाङ्गलप्रतिभोजनम् ॥ ७२ ॥
दोषशेषनिवृत्त्यर्थं योगान् वक्ष्याम्यतः परम् ।
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ॥ ७३ ॥
मांसयुक्तं तथा हस्तिपिप्पलीविश्वभेषजम् ।
विडङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तैः पयः ॥
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ।
पिबेत् कषायं त्रिफलादन्तीरोहीतकैः शृतम् ॥
व्योषक्षारयुतं जीर्णे रसैरद्यात्तु जाङ्गलैः ।
मांसं वा भोजनं योज्यं सुधाक्षीरघृतान्वितम् ॥ ७४ ॥
क्षीरानुपानं गोमूत्रेणाभयां वा प्रयोजयेत् ।
सप्ताहं माहिषं मूत्रं क्षीरञ्चानन्नभुक् पिबेत् ॥
मासमौष्ट्रं पयश्छागं त्रीन् मासान् व्योषसंयुतम् ।
हरीतकीसहस्रं वा क्षीराशी वा शिलाजतु ॥
शिलाजतुविधानेन गुग्गुलुं वा प्रयोजयेत् ।
शृङ्गवेरार्द्रकरसः पाने क्षीरसमो हितः ॥ ७५ ॥
तैलं रसेन तेनैव सिद्धं दशगुणेन वा ।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे हितम् ॥
शूलानाहविबन्धेषु मस्तुयूषरसादिभिः ।
सरलामधुशिग्रूणां बीजेभ्यो मूलकस्य च ॥
तैलान्यभ्यङ्गपानार्थं शूलघ्नान्यनिलोदरे ।
स्नैमित्यारुचिहृल्लासे सत्याग्नौ मद्यपाय च ॥

अरिष्टान् दापयेत् चारान् कफस्थानस्थिरोदरे ।
श्लेष्मणो विलयार्थन्तु दोषं वीक्ष्य भिषग्वरः ॥ ७६ ॥
पिप्पलीं तिन्दुकं हिङ्गु नागरं हस्तिपिप्पलीम् ।
भल्लातकं शिग्रुफलं त्रिफलां कटुरोहिणीम् ॥
देवदारु हरिद्रे द्वे सरलातिविषे स्थिराम् ।
कुष्ठं मुस्तं तथा पञ्च लवणानि प्रकल्पय च ॥
दधिसर्पिर्वसामज्जतैलयुक्तानि दाहयेत् ।
अन्नादूर्द्धमतः क्षाराद् विड़ालपदकं पिवेत् ॥
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ।
हृद्रोगं श्वयथुं गुल्मं प्लीहार्शोजठराणि च ॥
विसूचिकामुदावर्त्तं वाताष्ठीलाञ्च नाशयेत् ।
चारञ्चाजकरीषाणां सृतं मूत्रैर्विपाचयेत् ॥ ७७ ॥
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च ॥
पिप्पलीं चित्रकं शुण्ठीं त्रिफलां त्रिवृतां वचाम् ।
द्वौ चारौ शातलां दन्तीं स्वर्णक्षीरीं विषाणिकाम् ॥
कोलप्रमाणां गुड़िकां पिवेत् सौवीरसंयुताम् ।
श्वयथाववियाके च प्रवृद्धे च दकोदरे ॥
भावितानां गवां मूत्रैः षष्टिकानान्तु तण्डुलैः ।
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥
पिवेदिक्षुरसञ्चानु जठराणां निवृत्तये ।
स्वं स्वं स्थानं व्रजन्त्येवं तथा पित्तकफानिलाः ॥ ७८ ॥
त्रिवृताशङ्खिनीदन्तीसुधापूतिकपल्लवैः ।
शाकं पक्त्वा प्रयुञ्जीत प्रागभक्तं गाढ़वर्चसि ॥

ततोऽस्मै शिथिलीभूतवर्च्चोदोषाय शास्त्रवित् ।
दद्यान्मूत्रयुतं क्षारं दोषशेषहरं परम् ॥ ७९ ॥
पार्श्वशूलमूत्रस्तम्भं हृदयस्य चापि मारुतम् ।
जनयेत् तस्य तत्तैलं बिल्वक्षारेण ना पिबेत् ॥ ८० ॥
तथाग्निमन्थश्योणाकपलाशतिलनालजैः ।
बलाकदल्यपामार्गक्षारैः प्रतीक्षशः स्रुतैः ॥
तैलं पक्त्वा भिषग् दद्यादुदराणां प्रशान्तये ।
निवर्त्तते चोदरिणां हृदयस्थानिलोद्भवः ॥ ८१ ॥
कफे वातेन पित्तेन ताभ्यां वाप्यावृतेऽनिले ।
बलिनस्त्वौषधयुतं तैलमेरण्डजं हितम् ॥ ८२ ॥
सुविरिक्तो नरो यस्तु पुनराध्मापितो भिषक् ।
सुस्निग्धैरम्ललवणैर्निरूहैस्तमुपाचरेत् ॥ ८३ ॥
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम् ।
तीक्ष्णैः सक्षारगोमूत्रैर्वस्तिभिस्तमुपाचरेत् ॥ ८४ ॥
क्रियातिवृत्ते जठरे त्रिदोषे चाप्रशाम्यति ।
ज्ञातीन् ससुहृदो दारान् ब्राह्मणान् नृपतीन् गुरून् ॥
अनुज्ञाप्य भिषक् कर्म्म विदध्यात् संशयं ब्रुवन् ।
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥
एवमाख्याय तस्येदमनुज्ञातः सुहृद्गणैः ।
पानभोजनसंयुक्तं विषमस्मै प्रयोजयेत् ॥ ८५ ॥
यस्मिन् वा कुपितः सर्पो विसृजेद्धि फले विषम् ।
भक्षयेत्तमुदरिणं प्रविचार्य्य भिषग्वरः ॥
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ॥

विषेणाशु प्रमाथित्वादाशु भिन्नः प्रवर्त्तते ।
विषेण हृतदोषं तं शीताम्बु परिषेचितम् ॥
पाययेत भिषग् दुग्धं यवागूं वा यथाबलम् ।
त्रिवृन्मण्डूकपर्णीश्च शाकं सयववास्तुकम् ।
भक्षयेत् कालशाकं वा स्वरसोदकसाधितम् ॥ *
निरम्ललवणस्नेहं खिन्नाखिन्नमनन्नभुक् ।
मासमेकं ततश्चैव तृषितः स्वरसं पिबेत् ॥
एवं विनिर्हृते दोषे शाकैर्मासात् परं ततः ।
दुर्ब्बलाय प्रयुञ्जीत प्राणभृत् कारभं पयः ॥ ८६ ॥
दूदन्तु शल्यहर्त्तॄणां कर्म्म स्याद् दृष्टकर्म्मणाम् ।
वामं कुक्षिं मापयित्वा नाभ्यधश्चतुरङ्गुलम् ॥
मात्रायुक्तेन शस्त्रेण पाटयेन्मतिमान् भिषक् ।
विपाट्यान्त्रं ततः पश्चाद्वीक्ष्य बद्धक्षतान्त्रयोः ॥
सर्पिषाभ्यज्य केशादीनवसृज्य विमोचयेत् ।
मूर्च्छनात् यच्च संमूढ़मन्त्रं यच्चावमोचयेत् ॥ ८७ ॥
छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकैः ।
बहुशः संगृहीतानि ज्ञात्वा छित्त्वा पिपीलिकान् ॥
प्रतियोगैः प्रवेश्यान्त्रं श्रेयैः सीवेदव्रणं ततः ।
तथा जातोदकं सर्व्वमुदरं व्यधयेद्भिषक् ॥
वामभागे त्वधो नाभेर्नाड़ीं दत्त्वा च गालयेत् ।
निःस्राव्य च विमृदैरतद्वेष्टयेद्वाससोदरम् ॥ ८८ ॥
तथा वस्तिविरेकाद्यैर्ग्लानं सर्व्वञ्च वेष्टयेत् ।

---

* स्वरसोदकसाधितमिति पाठान्तरम् ।

निःसृते लङ्घितः पेयामस्नेहलवणां पिवेत् ॥ ८६ ॥
अतः परन्तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः ।
त्रीन् मासान् पयसा पेयां पिवेत् त्रींश्चापि भोजयेत् ॥
श्यामाकं कोरदूष्यं वा पयसालवणं नरः ।
संवत्सरेणैव जयेत् प्राणस्यैव जलोदरम् ॥ ६० ॥
प्रयोगाणाञ्च सर्व्वेषामनुक्षीरं प्रयोजयेत् ।
दोषानुबन्धरक्षार्थं बलस्थैर्य्यार्थमेव च ॥
प्रयोगापचिताङ्गानां हितं ह्युदरिणां पयः ।
सर्व्वधातुक्षयार्त्तानां देवानाममृतं यथा ॥ ६१ ॥

तत्र श्लोकौ ।

हेतुं प्राग्रूपमष्टानां लिङ्गं व्याससमासतः ।
उपद्रवान् गरीयस्त्वं साध्यासाध्यत्वमेव च ॥
जाताजातास्बु लिङ्गानि चिकित्साञ्चोक्तवानृषिः ।
समासव्यासनिर्द्दिष्टैरुदराणां चिकित्सिते ॥ ६२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
उदरचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्द्दशोऽध्यायः।

अथातोऽर्शसां चिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

आसीनं मुनिमव्यग्रं कृतजाप्यं कृतक्षणम्।
पृष्टवानर्शसां मुक्तिमग्निवेशः पुनर्व्वसुम् ॥
प्रकोपहेतुं संस्थानं स्थानं लिङ्गं चिकित्सितम्।
साध्यासाध्यविभागञ्च तस्मै तन्मुनिरब्रवीत् ॥ २ ॥

इह खल्वग्निवेश द्विविधान्यर्शांसि, सहजानि कानिचित् कानिचिज्जातस्योत्तरकालजानि। तत्र वीजं गुदवलिवीजोपतप्तमायतनमर्शसां सहजानाम्। तत्र द्विविधो वीजोपतप्तौ हेतुः, मातापित्रोरपचारः, पूर्व्वकृतञ्च कर्म्म; तथान्येषामपि सहजातानां विकाराणाम्। तत्र सहजानि सहजातानि शरीरेणार्शांसीत्यधिमांसविकाराः ॥ ३ ॥

सर्व्वेषाञ्चार्शसां क्षेत्रं गुदस्यार्द्धपञ्चमाङ्गुलावकाशे त्रिभागान्तरास्तिस्रो गुदवलयः। केचित् तु भूयांसमेव देशमुपदिशन्त्यर्शसामपत्यपथशिश्नगलतालु-मुखनासाकर्णाक्षिवर्त्मानि त्वक् च, तदस्त्यधिमांसदेशतया, गुदवलिजानि त्वर्शांसीति संज्ञा तन्त्रे ऽस्मिन्। सर्व्वेषाञ्चार्शसामधिष्ठानं मेदो मांसं त्वक् च ॥ ४ ॥

तत्र सहजान्यर्शांसि कानिचिदणूनि कानिचिन्महान्ति कानिचिद्दीर्घाणि कानिचिद्ध्रस्वानि कानिचिद् वृत्तानि कानि-

चिद्विषमविसृतानि कानिचिदन्तःकुटिलानि कानिचिद्बहिः-कुटिलानि कानिचिज्जटिलानि कानिचिदन्तर्मुखानि यथास्वं दोषानुबन्धवर्णानि ॥ ५ ॥

तैरभिभूतो जन्मप्रभृति भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमूत्रपुरीषः शर्कराश्मरीमान् तथानियत-विबद्धमुक्तपक्वामशुष्कभिन्नवर्चा अन्तरान्तराश्वेतपाण्डुहरित-पीतरक्तारुणद्रवसान्द्रपिच्छिलकुणपगन्धामपुरीषोपवेशी नाभि-वस्तिवंक्षणोद्देशे प्रचुरपरिकर्त्तिकान्वितः सगुदशूलप्रवाहिकः परिहर्ष-प्रमेह-प्रसक्त-विष्टम्भाटोपान्त्रकूजोदावर्त्त-हृदयेन्द्रियोप-लेपः प्रचुरविबद्धशुक्ताम्लोद्गारः सुदुर्बलो दुर्बलाग्निरल्पशुक्रः क्रोधनो दुःखोपचारशीलः कासश्वासतमकतृष्णाहृल्लासच्छर्द्यर-रोचकाविपाकपीनसक्षवथुपरीतस्तैमिरिकः शिरःशूली क्षाम-भिन्नसंसक्तजर्ज्जरस्वरः कर्णरोगी शूनपाणिपादवदनाक्षिकूटः सज्वरः साङ्गमर्द्दः सर्व्वपर्व्वास्थिशूली चान्तरान्तरा पार्श्व-कुक्षिवस्तिहृदयपृष्ठत्रिकग्रहोपतप्तः प्रध्यानपरः परमालस-श्चेति। जन्मप्रभृत्यस्य हि गुदमार्गोपरोधाद्वायुरपानः प्रत्यारोहन् समानव्यानप्राणोदानान् पित्तश्लेष्माणौ च प्रको-पयति। एते सर्व्वे एव प्रकुपिताः पञ्च वायवः पित्तश्लेष्माणौ चार्शसमभिद्रवन्तः तान् विकारान् जनयन्तीत्युक्तानि सहजान्य-र्शांसि ॥ ६ ॥

अत ऊर्द्ध्वं जातस्योत्तरकालजातानि चार्शांसि व्याख्या-स्यामः गुरुमधुरशीताभिष्यन्दिविदाहिविरुद्धाजीर्णप्रमिताशना-सात्म्यभोजनाद्गव्यमात्स्यकौक्कुटवाराहमाहिषाजाविकपिशित-

भक्षणात् रूक्षशुष्कपूतिमांसपैष्टिकपरमान्नक्षीरदधिमण्डक-तिलगुडविकृतिसेवनान्माषयूषेक्षुरसपिण्याक-पिण्डालुक-शुष्क-शाकशुक्तलशुन-किलाटतक्रपिण्डक-विषमृणालशालूकक्रौञ्चा-दनकशेरुकशृङ्गाटकतरूट-विरूढनवशूकशमीधान्याममूलकोप-योगाद्गुरुफलशाकरागहरितकमर्द्दकवसाशिरस्पदपर्य्युषितपूति-शीतलसङ्कीर्णान्नाभ्यवहारान्मन्दकातिक्रान्तमद्यपानाद् व्यापन्न-गुरुसलिल-पानादतिस्नेहपानादसंशोधनाद्वस्ति-कर्म्मविभ्रमाद-व्यायामादव्यवायाद् दिवास्वप्नात् सुख-शयना-सनस्थानसेवना-च्चोपहताग्नेर्मलोपचयो भवत्यतिमात्रम् । तथोत्कटविषम-कठिनासनसेवनादुद्भ्रान्तयानोष्ट्रयानादतिव्यवायाद् वस्तिनेत्रा-सम्यक्प्रणिधानाद् गुदक्षणनादभीक्ष्णं शीताम्बुसंस्पर्शाच्चेल-लोष्टतृणादिघर्षणात् प्रततातिनिर्वाहणाद्वातमूत्रपुरीषवेगोदी-रणात् समुदीर्णवेगविनिग्रहात् स्त्रीणाञ्चामगर्भभ्रंशाद् गर्भोत्-पीड़नाद्विषमप्रसूतिभिश्च प्रकुपितो वायुरपानस्थमलमुपचित-मधोगमासाद्य गुदवलिष्वाधत्ते ततस्तु तान्यर्शांसि प्रादु-र्भवन्ति ॥ ७ ॥

सर्षप-मसूरमाषमुद्ग-मुकुष्टकयवकलायपिण्डटिण्टिकेरक-केवुतिन्दुककाकणन्तिकाकर्कन्धुविम्बीकदरकरीरोडुम्बरखर्ज्जूर-जाम्ववगोस्तनाङ्गुष्ठकशेरुकशृङ्गाटकदन्तशिखिशुकतुण्डजिह्वापद्म-मुकुलकर्णिकासंस्थानानि सामान्याद्वातपित्तकफप्रबलानि ॥८॥

तेषामयं विशेषः,—शुष्कम्लानकठिनपरुषरूक्षश्यावानि तीक्ष्णाग्राणि वक्राणि स्फुटितमुखानि विषमविसृतानि शूला-क्षेपभेदस्फुरणचिमिचिमिसंहर्षपरीतानि स्निग्धोष्णोपशयानि

प्रवाहिकाध्मानश्लिष्मवृषणवस्ति-वङ्क्षणाहृद्ग्रहाङ्गमर्द्द हृदयद्रव-प्रसेकानि प्रततविबन्धवातमूत्रवर्च्चांसूत्रकटीपृष्ठत्रिकपार्श्वकुक्षि-वस्तिशूल-शिरोऽभितापक्षवथूद्गारप्रतिश्यायकासोदावर्त्तायाम-शोषशोथमूर्च्छारोचकमुखवैरस्यतैमिर्य्यकण्डूनासाकर्णशङ्खशूल-स्वरोपघातकराणि श्यावारुणपरुषनखनयनवदनत्वङ्मूत्रपुरीषस्य वातोल्वणान्यर्शांसीति विद्यात् ॥ ९ ॥

भवतश्चात्र ।

कषायकटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशनं तीक्ष्णमद्यमैथुनसेवनम् ॥
लङ्घनं देशकालौ च शीतौ व्यायामकर्म्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ १० ॥

मृदुशिथिलसुकुमाराण्यस्पर्शसहानि रक्तपीतनीलकृष्णानि स्वेदोपक्लेदबहुलानि विस्रगन्धीनि तनुपीतरक्तस्राबीणि रुधिर-वर्णानि दाहकण्डूशूलनिस्तोदपाकवन्ति शीतोपशय्याभि संभिन्न-पीतहरितवर्चांसि पीतविस्रगन्धप्रचुरविण्मूत्राणि पिपासा-ज्वरतमकसंमोहभोजनद्वेषकराणि पीतनखनयनत्वङ्मूत्रपुरीषस्य पित्तोल्वणान्यर्शांसीति विद्यात् ॥ ११ ॥

भवतश्चात्र ।

कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥
विदाहि तीक्ष्णमुष्णञ्च सर्व्वं पानान्नभेषजम् ।
पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ १२ ॥

तत्र यानि प्रमाणवन्त्युपचितानि श्लक्ष्णानि स्पर्शासुखानि श्वेतपाण्डुपिच्छिलानि स्तब्धानि गुरूणि स्तिमितानि सुप्तानि स्थिरश्वयथूनि कण्डूबहुलानि बहुप्रततपिञ्जरश्वेतरक्तशुक्र-पिच्छास्रावीणि गुरुपिच्छिलश्वेतमूत्रपुरीषाणि रुक्षोष्णोप-शयानि प्रवाहिकातिमात्रोत्थानवङ्क्षणानाहवन्ति परिकर्त्तिका-हृल्लासनिष्ठीवनकासारोचकप्रतिश्यायगौरवच्छर्दिमूत्रकृच्छ्रशोष-शोथपाण्डुरोगशीतज्वराश्मरीशर्कराहृदयेन्द्रियोपलेपास्यमाधुर्य्य-प्रमेहकराणि तथा चिरकालानुबन्धीन्यतिमात्रमग्निमार्दवक्लैब्य-कराणामविकारकरप्रबलानि शुक्लनखनयनवदनत्वङ्मूत्रपुरीषस्य श्लेष्मोल्बणान्यर्शांसीति विद्यात् ॥ १३ ॥

भवन्ति चात्र ।

मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ॥ १४ ॥
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च ।
सर्व्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ १५ ॥
विष्टम्भोऽन्नस्य दौर्ब्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥
ग्रहणीदोषपाण्डूर्त्तेराशङ्का चोदरस्य च ।
पूर्व्वरूपाणि निर्द्दिष्टान्यर्शसामभिवृद्धये ॥ १६ ॥
अर्शांसि खलु जायन्ते नासन्निपतितैस्त्रिभिः ।
दोषैर्दोषविशेषैस्तु विशेषः कल्प्यतेऽर्शसाम् ॥ १७ ॥

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम्।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च॥ १८॥
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग् ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम्॥ १९॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्द्दिशेत्॥ २०॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते।
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा॥ २१॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च॥ २२॥
बाह्यायान्तु वलौ जातान्येकदोषोल्बणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च॥ २३॥
तेषां प्रशमने यत्नमाशु कुर्य्याद्विचक्षणः।
तान्याशु हि गुदं बद्ध्वा कुर्य्युर्बद्धगुदोदरम्॥ २४॥
तत्राहुरेके शस्त्रेण कर्त्तनं हितमर्शसाम्।
दाहं क्षारेण चाप्येके दाहमेके तथाग्निना॥
अस्त्येतद्भूरितन्त्रेण धीमता दृष्टकर्म्मणा।
क्रियते त्रिविधं कर्म्म भ्रंशस्तत्र सुदारुणः॥
पुंस्त्वोपघातः श्वयथुर्गुदे वेगविनिग्रहः।

आध्मानं दारुणं शूलं व्यथा रक्तातिवर्त्तनम् ॥
पुनर्व्विरोहो रूढ़ानां क्लेदो भ्रंशो गुदस्य वा ।
मरणं वा भवेच्छीघ्रं शस्त्रक्षाराग्निविभ्रमात् ॥ २५ ॥
यत् तु कर्म्म सुखोपायमल्पभ्रंशमदारुणम् ।
तदर्शसां प्रवक्ष्यामि समूलानां निवृत्तये ॥ २६ ॥
वातश्लेष्मोल्वणान्याहुः शुष्काण्यर्शांसि तद्विदः ।
प्रस्रावीणि तथार्द्राणि रक्तपित्तोल्वणानि च ।
ततः शुष्कार्शसां पूर्व्वं प्रवक्ष्यामि चिकित्सितम् ॥ २७ ॥
स्तब्धानि स्वेदयेत् पूर्व्वं शोथशूलान्वितानि च ।
चित्रकक्षारबिल्वानां तैलेनाभ्यज्य स्वेदयेत् ॥
यवमाषकुलत्थानां पुलाकानामयोऽथवा ।
गोखराश्वशकृत्पिण्डैस्तिलकल्कैस्तुषैस्तथा ॥
वचाशताह्वापिण्डैर्वा सुखोष्णैः स्नेहसंयुतैः ।
शक्तूनां पिण्डिकाभिर्वा स्निग्धानां तैलसर्पिषा ॥
शुष्कमूलकपिण्डैर्वा पिण्डैर्वा कार्ष्णगन्धिकैः ।
रास्नापिण्डैः सुखोष्णैर्वा सस्नेहैर्हांवुषैरपि ॥
दूष्टकस्य खराह्वायाः शाकैर्गृञ्जनकस्य वा ।
अभ्यज्य कुष्ठतैलेन स्वेदयेत् पोट्टलीकृतैः ॥
वृषार्कैरण्डबिल्वानां पत्रोत्क्वाथैश्च स्वेदयेत् ॥
त्रिफलाया मूलकस्य वेणूनां वरुणस्य च ।
अग्निमन्थस्य शिग्रूणां पत्रागाश्मन्तकस्य च ॥
जलेनोत्क्वाथ्य मूलार्त्तं सभ्यक्तमवगाहयेत् ।
कोलोत्क्वाथेऽथवा कोष्णे सौवीरकतुषोदके ॥

बिल्वक्वाथेऽथवा तक्रे दधिमण्डाम्लकाञ्जिके।
गोमूत्रे वा सुखोष्णे तं स्वभ्यक्तमवगाहयेत् ॥ २९ ॥
कृष्णासर्पवराहोष्ट्रजतुकावृषदंशजाम्।
वसामभ्यञ्जने दद्याद् धूपनञ्चार्शसां हितम् ॥
नृकेशाः सर्पनिर्म्मोको वृषदंशस्य चर्म्म च।
अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥
तुम्बुरूणि विडङ्गानि देवदार्व्वक्षतं घृतम्।
वृहती चाश्वगन्धा च पिप्पल्यः सुरसा घृतम् ॥
वराहवृषविट् चैव धूपनं शक्तवो घृतम्।
कुञ्जरस्य पुरीषञ्च घृतं सर्ज्जरसो रसः ॥ ३० ॥
हरिद्राचूर्णसंयुक्तं सुधाक्षीरं प्रलेपनम्।
गोपित्तपिष्टाः पिप्पल्यः सहरिद्राः प्रलेपनम् ॥
शिरीषबीजं कुष्ठञ्च पिप्पल्यः सैन्धवं गुड़ः।
अर्कक्षीरं सुधाक्षीरं त्रिफला च प्रलेपनम् ॥
पिप्पल्यश्चित्रकः श्यामा किण्वं मदनतण्डुलाः।
प्रलेपः कुक्कुटशकृद्धरिद्रागुड़संयुतः ॥
दन्तीश्यामामृतासङ्गः पारावतशकृद्गुड़ः।
प्रलेपः स्याद्गजास्थीनि निम्बो भल्लातकानि च ॥
प्रलेपः स्यादलं कोष्णो वासन्तकवसायुतः।
शूलश्वयथुहृद् युक्तस्तु लूकीवसया सह ॥
अर्कपत्रं सुधाकाण्डं कटुकालावुपल्लवाः।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ३१ ॥
अभ्यङ्गाद्याः प्रदेहान्ता य एते परिकीर्त्तिताः।

स्तम्भश्वयथुकण्डूर्त्तिशमनास्तेऽर्शसां हिताः ॥
प्रदेहान्तैरुपक्रान्ता गुदजाः प्रस्रवन्ति हि ।
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखम् ॥ ३२ ॥
शीतोष्णस्निग्धरूक्षैर्हि न व्याधिरुपशाम्यति ।
रक्ते दुष्टे भिषक् तस्माद्रक्तमेवावसेचयेत् ॥
जलौकोभिस्तथा शस्त्रैः सूचीभिर्वा पुनःपुनः ।
अवर्त्तमानरुधिरं रक्तार्शोभ्यः प्रवाहयेत् ॥ ३३ ॥
गुदश्वयथुशूलार्त्तं मन्दाग्निं पाययेत् तु तम् ।
वृषणं पिप्पलीमूलं पाठां हिङ्गु सचित्रकम् ॥
सौवर्चलं पुष्कराख्यमजाजीं बिल्वपेषिकाम् ।
विडं यमानीं हवुषां विडङ्गं सैन्धवं वचाम् ॥
तिन्तिड़ीकञ्च मण्डेन मद्येनोष्णोदकेन वा ।
तथार्शोग्रहणीदोषशूलानाहाद्विमुच्यते ॥ ३४ ॥
पाचनं पाययेद्वा तद् यद् वक्ष्याम्यतिसारिणे ।
सगुड़ामभयां वापि प्राशयेत् पौर्व्वभक्तिकीम् ॥
पाययेद्वा त्रिवृच्चूर्णं त्रिफलारससंयुतम् ।
हृते गुदाश्रये दोषे गुदजा यान्ति संक्षयम् ॥
गोमूत्राध्युषितां दद्यात् सगुड़ां वा हरीतकीम्
हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥
सनागरं चित्रकं वा शीधुयुक्तं प्रदापयेत् ।
दापयेच्चव्ययुक्तं वा शीधुं साजाजीचित्रकम् ॥
सुरां सपाठाहवुषां दद्यात् सौवर्चलान्विताम् ।
दधित्थं बिल्वसंयुक्तं युक्तं वा चव्यचित्रकम् ॥

भल्लातकयुतं वापि प्रदद्यात् तक्रतर्पणम्।
बिल्वनागरयुक्तं वा यमान्या चित्रकेण च॥
चित्रकं हवुषां हिङ्गुं दद्याद्वा तक्रसंयुतम्।
पञ्चकोलयुतं वापि तक्रमस्मै प्रदापयेत्॥ ३५॥
हवुषोपकुञ्चिका धान्यमजाजी कारवी शटी।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पली॥
यमानी चाजमोदा च तच्चूर्णं तक्रसंयुतम्।
मन्दाम्लकटुकं विद्वान् स्थापयेद् घृतभाजने॥
व्यक्ताम्लकटुकं जातं तक्रारिष्टं सुखप्रियम्।
प्रपिबेन्मात्रया कालेष्वन्नस्य तृषितस्त्रिषु॥
दीपनं रोचनं बल्यं कफवातानुलोमनम्।
गुदश्वयथुकण्डूर्त्तिनाशनं बलवर्द्धनम्॥ ३६॥

इति तक्रारिष्टम्।

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत्॥ ३७॥
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम्।
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा॥
सप्ताहं द्वादशाहं वा पक्षं मासमथापि वा।
बलकालविशेषज्ञो भिषक् तक्रं प्रयोजयेत्॥ ३८॥
अत्यर्थं मृदुकायाग्नेस्तक्रमेवावचारयेत्।
सायं वा लाजशक्तूनां दद्यात् तक्रावलेहिकाम्॥
जीर्णे तक्रे प्रदद्याद्वा तक्रपेयां ससैन्धवाम्।
तक्रानुपानं सस्नेहं तक्रौदनमतःपरम्॥

यूषैर्मांसरसैर्वापि भोजयेत् तक्रसंयुतैः ।
यूषे रसेन वापूर्वं तक्रसिद्धेन भोजयेत् ॥
कालक्रमज्ञः सहसा न च तक्रं निवर्त्तयेत् ।
तक्रप्रयोगो मासान्तः क्रमेणोपरमो हितः ॥
अपकर्षो यथोत्कर्षो न त्वन्नादपकृष्यते ।
शक्त्यागमनरक्षार्थं दार्ढ्यार्थमनलस्य च ॥
बलोपचयवर्णार्थमेष निर्द्दिश्यते क्रमः ।
रूक्षमर्द्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् ॥
तक्रं दोषाग्निबलवित् त्रिविधं तत् प्रयोजयेत् ।
हतानि न विरोहन्ति तक्रेण गुदजानि च ॥
भूमावपि निषिक्तं तत् दहेत् तक्रं तृणोपलम् ।
किं पुनर्दीप्तकायाग्नेः शुष्काण्यर्शांसि देहिनः ॥
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ।
तेन पुष्टिर्बलं वर्णः प्रहर्षश्चोपजायते ॥
वातश्लेष्मविकाराणां शतञ्चापि निवर्त्तते ।
नास्ति तक्रात् परं किञ्चिदौषधं कफवातजे ॥ ३९ ॥
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ।
शृङ्गवेरमजाजीञ्च कारवीं धान्यतुम्बुरुम् ॥
बिल्वं कर्कटकं पाठां पिष्ट्वा पेयां विपाचयेत् ।
फलाम्लां यमकैर्भृष्टां तां दद्याद् गुदजापहाम् ॥
एतैरेव खडान् कुर्य्यादेतैश्च विपचेज्जलम् ।
एतैश्चैव घृतं साध्यमर्शसां विनिवर्त्तये ॥ ४० ॥
शटीपलाशसिद्धां वा पिप्पल्या नागरेण वा ।

दद्याद् यवागूं तक्राम्लां मरिचैरवचूर्णिताम् ॥ ४१ ॥
शुष्कमूलकयूषं वा यूषं कौलत्थमेव वा।
दधित्थबिल्वयूषं वा सकुलत्थमुकुष्टकम् ॥ ४२ ॥
छागलं वा रसं दद्याद्घृतैरेभिर्विमिश्रितम्।
लावादीनां फलाम्लं वा सतक्रं ग्राहिभिर्युतम् ॥ ४३ ॥
रक्तशालिर्महाशालिः कलमो जाङ्गलः सितः।
शारदः षष्टिकश्चैव स्यादन्नविधिरर्शसाम् ॥
इत्युक्तो भिन्नशकृतामर्शसानां क्रियाक्रमः ॥ ४४ ॥
येऽत्यर्थं गाढ़शकृतस्तेषां वक्ष्यामि भेषजम् ॥
सस्नेहैः शक्तुभिर्युक्तां प्रसन्नां लवणीकृताम्।
दद्यान्मतूयखण्डिकां पूर्व्वं भक्षयित्वा सनागराम् ॥ ४५ ॥
गुड़ं सनागरं पाठां फलाम्लं पाययेच्च तम्।
गुड़ं घृतं यवक्षारं युक्तं वापि प्रयोजयेत् ॥
यमानीं नागरं पाठां दाड़िमस्य रसं गुड़म्।
सतक्रलवणं दद्याद्वातवर्च्चोऽनुलोमनम् ॥
दुःस्पर्शकेन बिल्वेन यमान्या नागरेण च।
एकैकेनापि संयुक्ता पाठा हन्त्यार्शसां रुजम् ॥
प्रागुक्तान् यमके भृष्टान् शक्तुभिश्चावचूर्णितान्।
करञ्जपल्लवान् दद्याद् वातवर्च्चोऽनुलोमनान् ॥
मदिरां वा सलवणां शीधुं सौवीरकं तथा।
सगुड़ामभयां वाथ प्राशयेत् पौर्व्वभक्तिकीम् ॥ ४६ ॥
पिप्पलीनागरक्षारकारवीधान्यजीरकैः।
फाणितेन च संयोज्य फलाम्लं साधयेद् घृतम् ॥

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
शृङ्गवेरयवक्षारौ तैः सिद्धं पाययेद् घृतम् ॥
चव्यचित्रकसिद्धं वा गुड़क्षारसमन्वितम्।
पिप्पलीमूलसिद्धं वा गुड़क्षारसमन्वितम् ॥
पिप्पलीपिप्पलीमूलदधिनागरधान्यकैः।
सिद्धं सर्पिर्विधातव्यं वातवर्चोविबन्धनुत् ॥ ४७ ॥
चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतद् व्यपोहति ॥ ४८ ॥

इति चव्याद्यघृतम्।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचयेत्।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति ॥ ४९ ॥

इति नागरादिघृतम्।

पिप्पलीं नागरं पाठां श्वदंष्ट्राञ्च पृथक् पृथक्।
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ॥
गण्डीरं पिप्पलीमूलं व्योषं चव्यञ्च चित्रकम्।

पिष्ट्वा कषाये विनयेत् पूते द्विपलिकं पृथक् ॥
पलानि सर्पिषस्तस्मिंश्चत्वारिंशत् प्रयोजयेत् ।
चाङ्गेरीस्वरसं तुल्यं सर्पिषो दधि षड्गुणम् ॥
मृदग्निना साधयेत्तत् सिद्धं सर्पिर्निधापयेत् ।
तदाहारे प्रयोक्तव्यं पाने प्रायोगिके विधौ ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥
कासहिक्कारुचिश्वाससूदनं पार्श्वशूलनुत् ।
बलपुष्टिकरं वर्ण्यमग्निसन्दीपनं परम् ॥ ५० ॥

इति पिप्पल्याद्यं घृतम् ।

सगुडां पिप्पलीयुक्तां घृतभृष्टां हरीतकीम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकीम् ॥
विड्वातकफपित्तानामानुलोम्येन निर्म्मले ।
गुदेऽर्शांसि प्रशाम्यन्ति पावकश्चाभिवर्द्धते ॥ ५१ ॥
बर्हितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ।
दक्षाणां वर्त्तकानाञ्च दद्याद्विड्वातसंग्रहे ॥ ५२ ॥
त्रिवृद्दन्तीपलाशानां चाङ्गेर्याश्चित्रकस्य च ।
यमके भर्ज्जितं दद्याच्छाकं दधिसमन्वितम् ॥
उपोदिकां तण्डुलीयं वीरां वास्तूकपल्लवान् ।
सुवर्च्चलां लोणिकां यवशाकमवल्गुजम् ॥
काकमाचीं रुहापर्णं महापर्णीं तथाम्लिकाम् ।
जीवन्तीशठिशाकञ्च शाकं गृञ्जनकस्य च ॥
दधिदाडिमसिद्धानि यमकैर्भर्ज्जितानि च ।

धान्यनागरयुक्तानि शाकान्येतानि दापयेत् ॥ ५३ ॥
गोधाश्वाविल्लोपाकमार्ज्जारोष्ट्रगवामपि ।
कूर्म्मशल्लकयोश्चैव साधयेच्छाकवद्रसान् ॥ ५४ ॥
रक्तशाल्योदनं दद्याद्रसैस्तैर्वातशान्तये ।
ज्ञात्वा वातोल्वणं रूक्षं मन्दाग्निं गुदजातुरम् ॥ ५५ ॥
मदिरां शर्कराजातां शीधुं तक्रं तुषोदकम् ।
अरिष्टं दधिमण्डं वा शृतं वा शिशिरं जलम् ॥
कण्टकार्य्या शृतं वापि शृतं नागरधान्यकैः ।
अनुपानं भिषग् दद्याद् वातवर्च्चोऽनुलोमनम् ॥ ५६ ॥
उदावर्त्तपरीता ये ये चात्यर्थं विरूक्षिताः ।
विलोमवाताः शूलार्त्तास्तेष्विष्टमनुवासनम् ॥ ५७ ॥
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥
पिष्ट्वा तैलं विपक्तव्यं पयसा द्विगुणेन च ।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम् ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्ब्बल्यमानाहं वङ्क्षणाश्रयम् ॥
पिच्छास्रावं गुदे शोफं वातवर्च्चोविनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत् तच्चानुवासनात् ॥ ५८ ॥
आनुवासनिकैः पिष्टैः सुखोष्णैः स्नेहसंयुतैः ।
द्रव्यैस्तैरौषधैर्देह्याः स्तब्धाः शूना गुदेरुहाः ॥
दिग्धास्तैः प्रस्रवन्त्याशु श्लेष्मपिच्छां सशोणिताम् ।
कण्डूः स्तम्भः सरुक् शोफः स्नुतानां विनिवर्त्तते ॥ ५९ ॥

निरूहं वा प्रयुञ्जीत सक्षीरं दाशमूलिकम्।
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः॥ ६० ॥

हरीतकीनां प्रस्थार्द्धं प्रस्थमामलकस्य च।
स्यात् कपित्थाद्दशपलं पलार्द्धेनेन्द्रवारुणी॥
विड़ङ्गं पिप्पली लोध्रं मरिचं सैलवालुकम्।
द्विपलांशं जलस्यैतच्चतुर्द्रोणे विपाचयेत्॥
द्रोणशेषे रसे तस्मिन् पूते शीते समावपेत्।
गुड़स्य द्विशतं तिष्ठेत् तत् पक्षं घृतभाजने॥
पक्षादूर्द्ध्वं भवेत् पेया ततो मात्रा यथाबलम्।
अस्याभ्यासादरिष्टस्य गुदजा यान्ति संक्षयम्॥
ग्रहणीपाण्डुहृद्रोगप्लीहगुल्मोदरापहः।
कुष्ठशोफारुचिहरो बलवर्णाग्निवर्द्धनः॥
सिद्धोऽयमभयारिष्टः कामलाश्वित्रनाशनः।
क्रिमिग्रन्थ्यर्ब्बुदव्यङ्गराजयक्ष्मज्वरान्तकृत्॥ ६१ ॥

इत्यभयारिष्टः।

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत्॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत्।
रसे चतुर्थशेषे तु पूते शीते समावपेत्॥
तुलां गुड़स्य तत् तिष्ठेन्मासार्द्धं घृतभाजने।
तन्मात्रया पिबेन्नित्यमर्शोभ्योऽपि प्रमुच्यते॥
ग्रहणीपाण्डुरोगघ्नं वातवर्च्चोऽनुलोमनम्।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिमं विदुः॥ ६२ ॥

इति दन्त्यरिष्टः।

हरीतकीफलप्रस्थं प्रस्थमामलकस्य च ।
विशालाया दधित्थस्य पाठाचित्रकमूलयोः ॥
द्वे द्वे पले समापोथ्य द्विद्रोणे साधयेदपाम् ।
पादावशेषे पूते च रसे तस्मिन् प्रदापयेत् ॥
गुड़स्यैकां तुलां वैद्यः तत् स्थाप्यं घृतभाजने ।
पक्षस्थितं पिवेदेनं ग्रहण्यर्शोविकारवान् ॥
हृत्पाण्डुरोगं प्लीहानं कामलां विषमज्वरम् ।
वर्चोमूत्रानिलकृतान् विवन्धानग्निमार्दवम् ॥
कासं गुल्ममुदावर्त्तं फलारिष्टो व्यपोहति ।
अग्निसन्दीपनो ह्येष कृष्णात्रेयेण भाषितः ॥ ६३ ॥

इति फलारिष्टः ।

दुरालभायाः प्रस्थन्तु चित्रकस्य वृषस्य च ।
पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥
दन्त्याश्च द्विपलान् भागान् जलद्रोणे विपाचयेत् ।
पादावशेषे पूते च सुशीते शर्कराशतम् ॥
दत्त्वा कुम्भे दृढ़े स्थाप्यं मासार्द्धं घृतभाविते ।
प्रलिप्ते पिप्पलीचव्यप्रियङ्गुक्षौद्रसर्पिषा ॥
तस्य मात्रां पिवेत् काले शार्करस्य यथावलम् ।
अर्शांसि ग्रहणीदोषमुदावर्त्तमरोचकम् ॥
शकृन्मूत्रानिलोद्गारविवन्धानग्निमार्दवम् ।
हृद्रोगं पाण्डुरोगञ्च सर्व्वमेतेन साधयेत् ॥ ६४ ॥

इति शर्करारिष्टः ।

नवस्यामलकस्यैकां कुर्य्याज्जर्ज्जरितां तुलाम् ।

कुरवांश्चास्य पिप्पल्यो विड़ङ्गं मरिचं तथा ॥
यवासः पिप्पलीमूलं क्रमुकं चव्यचित्रकौ ।
मञ्जिष्ठा नालुकं लोध्रं पलिकान्युपकल्पयेत् ॥
कुष्ठं दारुहरिद्राच सुराह्वः शारिवाद्वयम् ।
इन्द्राह्वं भद्रमुस्तञ्च कुर्य्यादर्द्धपलोन्मितान् ॥
चत्वारि नागपुष्पस्य पलान्यभिनवस्य च ।
द्रोणाभ्यामम्भसो द्वाभ्यां साधयित्वावतारयेत् ॥
द्रोणावशेषे पूते च शीते तस्मिन् समावपेत् ।
मृद्वीकाढ़काढ़करसं शीतं निर्य्यूहसंमितम् ॥
शर्करायाश्च भिन्नाया दद्याद्द्विगुणितां तुलाम् ।
कुसुमस्य रसस्यैकमर्द्धप्रस्थं नवस्य च ॥
त्वगेलाम्बुवपत्राम्बुसेव्यक्रमुककेशरान् ।
चूर्णयित्वा तु मतिमान् कार्षिकानत्र चावपेत् ॥
तत् सर्व्वं स्थापयेत् पक्षं सुचौक्षे घृतभाजने ।
प्रलिप्ते सर्पिषा किञ्चिच्छर्करागुरुधूपिते ॥
पक्षादूर्द्ध्वमरिष्टोऽयं कनको नाम विश्रुतः ।
पेयः स्वादुरसो हृद्यः प्रयोगाद्भक्तरोचनः ॥
अर्शांसि ग्रहणीदोषमानाहमुदरं ज्वरम् ।
हृद्रोगं पाण्डुतां शोथं गुल्मवर्च्चोविनिग्रहम् ॥
कासं श्लेष्मामयांश्चोग्रान् सर्व्वानेवापकर्षति ।
वलीपलितखालित्यं दोषजन्तु व्यपोहति ॥ ६५ ॥

इति कनकारिष्टः ।

पत्रभङ्गोदकैः शौचं कुर्य्यादुष्णेन चाम्भसा ।

इति शुष्कार्शसां सिद्धमुक्तमेतच्चिकित्सितम् ॥ ६६ ॥
चिकित्सितमतः सिद्धं स्राविणां संप्रचक्ष्यते ।
तत्रानुबन्धो द्विविधः श्लेष्मणो मारुतस्य च ॥ ६७ ॥
विट् श्यावं कठिनं रूक्षञ्चाधोवायुर्न वर्त्तते ।
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम् ॥
कट्यूरुगुदशूलञ्च दौर्ब्बल्यं यदि चाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥ ६८ ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम् ।
यद्यर्शसां घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम् ॥
गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ६९ ॥
स्निग्धशीतं हितं वाते रूक्षशीतं कफानुगे ।
चिकित्सितमिदं तस्मात् सम्प्रधार्य्य प्रयोजयेत् ॥ ७० ॥
पित्तश्लेष्माधिकं मत्वा शोधनेनोपपादयेत् ।
स्रवणञ्चाप्युपेक्षेत लङ्घनैर्वा समाचरेत् ॥ ७१ ॥
प्रवृत्तमादावर्शोभ्यो यो निगृह्णात्यबुद्धिमान् ।
शोणितं दोषमलिनं तद्रोगान् जनयेद्बहून् ॥
रक्तपित्तं ज्वरं तृष्णामग्निसादमरोचकम् ।
कामलां श्वयथुं शूलं गुदवङ्क्षणसंश्रयम् ॥
कण्डूरुःकोठपिड़काः कुष्ठं पाण्ड्वाह्वयं गदम् ।
वातमूत्रपुरीषाणां विबन्धं शिरसो रुजम् ॥
स्तैमित्यं गुरुगात्रत्वं तथान्यान् रक्तजान् गदान् ।
तस्मात् स्रुते दुष्टरक्ते रक्तसंग्रहणं हितम् ॥ ७२ ॥

हेतुलक्षणकालज्ञो बलशोणितकालवित् ।
कालं तावदुपेक्षेत यावन्नात्ययमाप्नुयात् ॥ ७३ ॥
अग्निसन्दीपनार्थञ्च रक्तसंग्रहणाय च ।
दोषाणां पाचनार्थञ्च परं तिक्तैरुपाचरेत् ॥ ७४ ॥
यत् तु प्रक्षीणदोषस्य रक्तं वातोल्वणस्य च ।
वर्त्तते स्नेहसाध्यं तत् पानाभ्यङ्गानुवासनैः ॥ ७५ ॥
यत् तु पित्तोल्वणं रक्तं घर्म्मकाले प्रवर्त्तते ।
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम् ॥ ७६ ॥
कुटजत्वङ्निर्य्यूहः सनागरः स्निग्धो रक्तसंग्रहणः ।
त्वग्दाड़िमस्य तद्वत् सनागरश्चन्दनरसश्च ॥
चन्दनकिराततिक्तधन्वयवासाः सनागराः क्वथिताः ।
रक्तार्शसां प्रशमना दार्व्वीत्वगुशीरनिम्बाश्च ॥
सातिविषा कुटजत्वक् फलञ्च रसाञ्जनं मधुयुतानि ।
रक्तापहानि दद्यात् पिपासवे तण्डुलजलेन ॥ ७७ ॥
कुटजत्वचो विपाच्यं पलशतमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादगतरसं तद्द्रव्यं पूतो रसस्ततो ग्राह्यः ॥
मोचरसः समङ्गः फलिनी च पलांशिकैस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥
पूतोत्क्वथितः सान्द्रः स रसो दर्व्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छगलीपयसा युक्ता पेया मण्डेन वा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥
रक्तार्शांस्यतिसारं रक्तं सासृक् रुजो निहन्त्याशु ।

बलवच्च रक्तपित्तं रसक्रियैषा जयत्युभयभागम् ॥ ७८ ॥

इति कुटजादिरसक्रिया ।

नीलोत्पलं समङ्गा मोचरसश्चन्दनं तिला लोध्रम् ।
पीत्वा छागलीपयसा भोज्यं पयसैव शाल्यन्नम् ॥
छागलीपयः प्रयुक्तं निहन्ति रक्तं सवास्तुकरसञ्च ।
धन्वविहङ्गमृगाणां रसो निरम्लः कदम्लो वा ॥
पाठा वत्सकबीजं रसाञ्जनं नागरं यमान्यश्च ।
बिल्वमिति चार्शसेषु्षितानि पेयानि सशूलेषु ॥
दार्व्वीकिराततिक्तं मुस्तं दुःस्पर्शकश्च रुधिरघ्नम् । ७८ ॥
रक्तेऽतिवर्त्तमाने शूले च घृतं विधातव्यम् ।
कुटजफलकल्कैः केशरनीलोत्पललोध्रधातकीकल्कैः ॥
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥
सर्पिः सदाड़िमरसं सयावशूकं शृतं जयत्याशु ।
रक्तं सशूलमथवा निदिग्धिकादुग्धिकासिद्धम् ॥ ८० ॥
लाजपेयां पीता चुक्रिकाकेशरोत्पलैः सिद्धा ।
हन्त्याशुस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥
ह्रीवेरबिल्वनागरनिर्य्यूहे साधितां सनवनीताम् ।
वृक्षाम्लदाड़िमाम्लामम्लीकाम्लां सकोलाम्लाम् ॥
गृञ्जनकसुरासिद्धां दद्याद् यमकेन भर्जितां पेयाम् ।
रक्तातिसारशूलप्रवाहिकाशोथनिग्रहणीम् ॥ ८१ ॥
काश्मर्य्यामलकानां सकर्व्बुदारफलाम्लानाम् ।
गृञ्जनकशाल्मलीकानां दुग्धिकानां चुक्रिकायाश्च ॥
न्यग्रोधशुङ्गकानां खड़ांस्तथा कोविदारपुष्पाणाम् ।

दध्नः सरेण सिद्धान् दद्याद्रक्ते प्रवृत्तेऽति ॥ ८२ ॥
सिद्धं पलाण्डुशाकं तक्रेणोपोदिकां सबदराम्लाम्।
रुधिरस्रुतौ प्रदद्यान्मसूरयूषञ्च तक्राम्लम् ॥
पयसा शृतेन यूषैः सतीनमुद्गाढ़कीमसूराणाम्।
भोजनमद्यादम्लैः शालिश्यामाककोद्रवजम् ॥
शशहरिणलावमांसैः कपिञ्जलैणेयकैः सुसिद्धैश्च।
भोजनमद्यान्मधुरैरम्लैरीषत् समरिचैर्वा ॥
दक्षशिखितित्तिरिरसैर्द्विककुदलोपाकजैश्च मधुराम्लैः।
अद्याद्रसैरतिवहेष्वर्शःस्वनिलोल्वणशरीरः ॥
रसखड़शाकयवागूसंयुक्तः केवलोऽथवा जयति।
रक्तमतिवर्त्तमानं वातञ्च पलाण्डुरुपयुक्तः ॥
छागान्तराधितरुणं सरुधिरमुपसाधितं बहु पलाण्डु।
व्यत्यासान्मधुराम्लं विट्शोणितसंचये देयम् ॥ ८३ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥८४॥
नवनीतघृतं छागं मांसं सषष्टिकः शालिः।
तरुणश्च सुरामण्डस्तरुणी च सुरा निहन्त्यस्रम् ॥ ८५ ॥
प्रायेण वातबहुलान्यर्शांसि भवन्त्यतिस्रुते रक्ते।
दुष्टेऽपि कफपित्ते तस्मादनिलोऽधिको ज्ञेयः ॥
दृष्ट्वा तु रक्तपित्तं प्रबलं कफवातलिङ्गमल्पञ्च।
शीताः क्रियाः प्रयोज्या यथेरिता वक्ष्यते चान्याः ॥ ८६ ॥
मधुकं सुपञ्चवल्कं बदरीत्वगुदम्बरधवपटोलम्।
परिषेचने प्रयोज्यं वृषककुभयवासनिम्बाश्च ॥ ८७ ॥

रक्तेऽतिवर्त्तमाने दाहे क्लेदे च सम्यगवगाह्याः ।
मधुकाम्रमृणालपद्मकचन्दनकुशकाशमूलनिष्क्वाथाः ॥
इक्षुरसमधुकवेतसनिर्य्यूहे शीतले पयसि वा तम् ।
अवगाहयेत् प्रदिग्धं पूर्व्वं तैलेन शिशिरेण ॥ ८८ ॥
दत्त्वा घृतं सशर्करमुपस्थदेशे त्रिकदेशे च ।
शिशिरजलस्पर्शसुखधारा संस्तम्भनी योज्या ॥
कदलीदलैरभिनवैः पुष्करपत्रैश्च शीतजलसिक्तैः ।
प्रच्छादनं मुहुर्मुहुरिष्टं पद्मोत्पलदलैश्च ॥
दूर्व्वाघृतं प्रदेहं शतधौतसहस्रधौतमपि सर्पिः ।
व्यजनपवनः सुशीतो रक्तस्रावं जयत्याशु ॥ ८९ ॥
समङ्गामधुकाभ्यां तिलमधुकाभ्यां रसाञ्जनघृताभ्याम् ।
सर्ज्जरसघृताभ्यां निम्बघृताभ्यां मधुघृताभ्याञ्च ॥
दार्व्वीत्वक्सर्पिर्भ्यां सचन्दनाभ्यामथोत्पलघृताभ्याम् ।
दाहे क्लेदे च गुदभ्रंशे गुदजाः प्रतिसारणीयाः स्युः ॥९०
आभिः क्रियाभिरथवा शीताभिर्यस्य न तिष्ठति रक्तम् ।
तं काले स्निग्धोष्णैर्मांसरसैस्तर्पयेन्मतिमान् ॥ ९१ ॥
अवपीड़कसर्पिर्भिः कोष्णैर्घृततैलिकैस्तथाभ्यङ्गैः ।
क्षीरघृततैलसेकैः कोष्णैः समुपाचरेच्चाशु ॥ ९२ ॥
कोष्णेन वातप्रबले घृतमण्डेनानुवासयेच्छीघ्रम् ।
पिच्छावस्तिं दद्यात् काले तस्याथवा सिद्धम् ॥ ९३ ॥
यवासकुशकाशानां मूलं पुष्पञ्च शाल्मलम् ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥
त्रिप्रस्थं सलिलस्यैतत् क्षीरप्रस्थं विपाचयेत् ।

क्षीरशेषं कषायञ्च पूतं कल्कैर्विमिश्रयेत् ॥
कल्काः शाल्मलिनिर्य्यासमङ्गाचन्दनोत्पलम् ।
वत्सकस्य च बीजानि प्रियङ्गुः पद्मकेशरम् ॥
पिच्छावस्तिरयं सिद्धः सघृतक्षौद्रशर्करः ।
प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः ॥ ९४ ॥

इति पिच्छावस्तिः ।

प्रपौण्डरीकं मधुकं पेष्यान् वस्तौ यथेरितान् ।
पिष्ट्वानुवासनं स्नेहं क्षीरद्विगुणितं पचेत् ॥ ९५ ॥
ह्रीवेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम् ।
पाठा सातिविषा बिल्वं धातकी देवदारु च ॥
दार्व्वी त्वङ्नागरं मांसी मुस्तं क्षारो यवाग्रजः ।
चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥
ऐकध्यं साधयेत् सर्व्वं तत् सर्पिः परमौषधम् ।
अर्शोऽतिसारग्रहणीपाण्डुरोगे ज्वरेऽरुचौ ॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्याध्माने प्रवाहणे ।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत् त्रिदोषनुत् ॥ ९६ ॥

इति ह्रीवेरादिघृतम् ।

अवाक्पुष्पी बला दार्व्वी पृश्निपर्णी त्रिकण्टकः ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एषां पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं सुरदारु च ॥
कलिङ्गाः शाल्मलं पुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रको मुस्तं प्रियङ्ग्वतिविषास्थिराः ॥

पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका।
बिल्वं मोचरसः पाठा भागाः कर्षसमाः पृथक्॥
चतुःप्रस्थमृतप्रस्थं कषायमवतारयेत्।
त्रिंशत्पलानि प्रस्थोऽत्र विज्ञेयो द्विपलाधिकः॥
सुनिषण्णकचाङ्गेर्य्योः प्रस्थौ द्वौ स्वरसस्य च।
सर्व्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत्॥
एतदर्शःस्वतीसारे रक्तस्रावे त्रिदोषजे।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च॥
उत्थाने चातिबहुशः शोथशूले गुदाश्रये।
मूत्रग्रहे मूढ़वाते मन्देऽग्नावरुचावपि॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम्।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम्॥ ६७॥

इति सुनिषण्णकचाङ्गेरीघृतम्।

भवन्ति चात्र।

व्यत्यासो मधुराम्लानां शीतोष्णानाञ्च योजितः।
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान्॥
त्रयो विकाराः प्रायेण ये परस्परहेतवः।
अर्शांसि चातिसारश्च ग्रहणीदोष एव च॥
एषामग्निबले हीने वृद्धिर्वृद्धे परिक्षयः।
तस्मादग्निबलं रक्ष्यमेषु त्रिषु विशेषतः॥ ६८॥
भृष्टैः शाकैर्यवागूभिर्यूषैर्मांसरसैः शुभैः।
क्षीरतक्रप्रयोगैश्च विविधैर्गुदजान् जयेत्॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये।

अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
यदतो विपरीतं स्यान्निदाने यत् प्रदर्शितम्।
गुदजाभिपरीतेन तत् सेव्यं न कदाचन ॥ ९९ ॥

तत्र श्लोकाः।

अर्शसां द्विविधं जन्म पृथगायतनानि च।
स्थानसंस्थानलिङ्गानि साध्यासाध्यत्वनिश्चयः ॥
अभ्यङ्गाः स्वेदनं धूमाः सावगाहाः प्रलेपनम्।
शोणितस्यावसेकश्च योगा दीपनपाचनाः ॥
पानान्नविधिरग्राश्च वातवर्च्चोऽनुलोमनः।
योगाः संशमनीयाश्च सर्पींषि विविधानि च ॥
वस्तयस्तक्रयोगाश्च वरारिष्टाः सशर्कराः।
शुष्कार्शसां प्रशमनाः स्राविणां लक्षणानि च ॥
द्विविधं सानुबन्धानां ताभ्याश्चेष्टं यदौषधम्।
रक्तसंग्रहणाः क्वाथाः पेयाश्च विविधात्मकाः ॥
स्नेहाहारविधिश्चाग्र्यो योगाश्च प्रतिसारणाः।
प्रक्षालनावगाहाश्च प्रदेहाः सेचनानिच ॥
अतिवृत्तस्य रक्तस्य विधातव्यं यदौषधम्।
तत् सर्व्वमिह निर्दिष्टं गुदजानां चिकित्सितम् ॥ १०० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सित-
स्थानेऽर्शश्चिकित्सितं नाम चतुर्द्दशोऽध्याय ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

अथातो ग्रहणीरोगचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा ।
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः ॥ २ ॥
शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते ॥ ३ ॥
यदन्नं देहधात्वोजोबलवर्णादिपोषकम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ४ ॥
अन्नमादानकर्म्मा तु प्राणः कोष्ठं प्रकर्षति ।
तद्द्रवैर्भिन्नसङ्घातं स्नेहेन मृदुतां गतम् ॥
समानेनावधूतोऽग्निरुदीर्य्यः पवनेन तु ।
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥ ५ ॥
एवं रसमलायान्नमाशयस्थमधःस्थितः ।
पचत्यग्निर्यथा स्थाल्यामोदनायाम्बु तण्डुलम् ॥ ६ ॥
अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः ।
मधुराद्यात् कफो भावात् फेनभाव उदीर्य्यते ॥
परन्तु पच्यमानस्य विदग्धस्याम्लभावतः ।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्य्यते ॥
पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना ।
परिपिण्डितपक्वस्य वायुः स्यात् कटुभावतः ॥ ७ ॥

अन्नमिष्टं ह्युपहृतमिष्टैर्गन्धादिभिः पृथक् ।
देहे प्रीणाति गन्धादीन् घ्राणादीनिन्द्रियाणि च ॥ ८ ॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि ॥
यथास्वैरेव पुष्यन्ते देहे द्रव्यगुणाः पृथक् ।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः ॥ ९ ॥
सप्तभिर्देहधातारो धातवो द्विविधं पुनः ।
यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादतः ॥ १० ॥
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ।
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः ॥ ११ ॥
रसात् स्तन्यं स्त्रिया रक्तमसृजः कण्डराः शिराः ।
मांसाद्वसा त्वचः षट् च मेदसः स्नायुसम्भवः ॥ १२ ॥
किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः ।
पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः ॥
स्यात् किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट्त्वचाम् ।
प्रसादकिट्टे धातूनां पाकादेवाविगर्हितः ॥
परस्परोपसंस्तम्भाद्धातो देहे परस्परम् ।
वृष्यादीनां प्रभावस्तु पुष्णाति बलमाशु हि ॥
षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्त्तनम् ।
सन्तत्या भोज्यधातूनां परिवर्त्तस्तु चक्रवत् ॥ १३ ॥
इत्युक्तवन्तमाचार्य्यं शिष्यस्त्विदमचोदयत् ।
रसाद्रक्तं विसदृशात् कथं देहेऽभिजायते ॥
रसस्य च न रागोऽस्ति स कथं याति रक्तताम् ।

द्रवाद्रक्तात् स्थिरं मांसं कथं तज्जायते नृणाम् ॥
द्रवधातोः स्थिरात् मांसान्मेदसः सम्भवः कथम् ।
श्लक्ष्णाभ्यां मांसमेदोभ्यां खरत्वं कथमस्थिषु ॥
खरेष्वस्थिषु मज्जा च केन स्निग्धो मृदुस्तथा ।
मज्ज्ञश्च परिणामेन यदि शुक्रं प्रवर्त्तते ॥
सर्व्वदेहगतं शुक्रं प्रवदन्ति मनीषिणः ।
तथास्थिमध्यमज्ज्ञश्च शुक्रं भवति देहिनाम् ॥
छिद्रं न दृश्यतेऽस्थ्नाञ्च तन्निःसरति वा कथम् ॥ १४ ॥
एवमुक्तस्तु शिष्येण गुरुः प्राहेदमुत्तरम् ॥
तेजो रसानां सर्व्वेषां मनुजानां यदुच्यते ।
पित्तोष्मणः स रागेण रसो रक्तत्वमृच्छति ॥
वायम्बु तेजसा रक्तमुष्मणा चाभिसंयुतम् ।
स्थिरतां प्राप्य मांसं स्यात् स्वोष्मणा पक्कमेव तत् ॥
स्वतेजोऽम्बुगुणस्निग्धोद्रिक्तं मेदोऽभिजायते ।
पृथिव्यप्ग्न्यनिलादीनां सङ्घातः स्वोष्मणा कृतः ॥
खरत्वं प्रकरोत्यस्य जायतेऽस्थि ततो नृणाम् ।
करोति तत्र शौषिर्य्यमस्थ्नां मध्ये समीरणः ॥
मेदसास्थीनि पूर्य्यन्ते स्नेहो मज्जा ततः स्मृतः ।
तस्मान्मज्ज्ञस्तु यः स्नेहः शुक्रं सञ्जायते ततः ॥
वाय्वाकाशादिभिर्भावैः शौषिर्य्यं जायतेऽस्थिषु ।
तेन स्रवति तच्छुक्रं नवात् कुम्भादिवोदकम् ॥
स्रोतोभिः स्यन्दते देहात् समन्ताच्छुक्रवाहिभिः ।
हर्षणोदीरितं वेगात् सङ्कल्पाच्च मनोभवात् ॥

विलीनं घृतवद् व्यायामोष्मणा स्थानविच्युतम् ।
वस्तौ संभृत्य निर्याति स्थलान्निम्नमिवोदकम् ॥ १५ ॥
व्यानेन रसधातुर्हि विक्षेपोचितकर्म्मणा ।
युगपत् सर्व्वतोऽजस्रं देहे विक्षिप्यते सदा ॥
क्षिप्यमाणः खवैगुण्याद्रसः सज्जति यत्र सः ।
तस्मिन् विकारान् कुरुते विवर्षमिव तोयदः ॥
दोषाणामपि चैवं स्यात्तत्र देशे प्रकोपणम् ।
इति भौतिकधात्वन्नपक्तॄणां कर्म्म भाषितम् ॥ १६ ॥
अन्नस्य पक्ता सर्व्वेषां पक्तॄणामधिपो मतः ।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥
तस्मात् तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।
पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ १७ ॥
यो हि भुङ्क्ते विधिं त्यक्त्वा ग्रहणीदोषजान् गदान् ।
स लौल्याल्लभते शीघ्रं वक्ष्यन्तेऽतः परन्तु ये ॥ १८ ॥
भोजनादजीर्णातिभोजनाद्विषमाशनात् ।
असात्म्यगुरुशीतातिरूक्षसंदुष्टभोजनात् ॥
विरेकवमनस्नेहविभ्रमाद्व्याधिकर्षणात् ।
देशकालर्त्तुवैषम्याद्वेगानाञ्च विधारणात् ॥
दुष्यत्यग्निः स दुष्टोऽन्नं न तत् पचति लघ्वपि ।
अपच्यमानं शुक्तत्वं यात्यन्नं विषताञ्च तत् ॥ १९ ॥
तस्य लिङ्गमजीर्णस्य विष्टम्भः सदनं तथा ।
शिरसो रुक् च मूर्च्छा च भ्रमः पृष्ठकटीग्रहः ॥
जृम्भाङ्गमर्द्दस्तृष्णा च ज्वरश्छर्द्दिः प्रवाहणम् ।

अरोचकोऽविपाकश्च घोरमन्नं विषञ्च तत् ॥
पित्तेन सह संसृष्टं दाहतृष्णामुखामयान् ।
जनयत्यम्लपित्तञ्च पित्तजांश्चापरान् गदान् ॥
यक्ष्मपीनसमेहादीन् कफजान् कफसङ्गतम् ।
करोति वातसंसृष्टं वातजांश्चापरान् गदान् ॥
मूत्ररोगांश्च मूत्रस्थं कुक्षिरोगान् शकृद्गतम् ।
रसादिभिश्च संसृष्टं कुर्य्याद्रोगान् रसादिजान् ॥ २० ॥
विषमो धातुवैषम्यं करोति विषमं पचन् ।
तीक्ष्णो मन्देन्धनो धातून् विशोषयति पावकः ॥
युक्तं भुक्तवतो युक्तो धातुसाम्यं समं पचन् ।
दुर्ब्बलो विदहत्यन्नं तद्यात्यूर्द्ध्वमधोऽपि वा ॥
अधस्तु पक्वमामं वा प्रवृत्तं ग्रहणीगदः ।
उच्यते सर्व्वमेवान्नं प्रायो ह्यस्य विदह्यते ॥
अतिसृष्टं विबद्धं वा द्रवं तदुपवेश्यते ।
तृष्णारोचकवैरस्यप्रसेकतमकान्वितः ॥
शूनपादकरः सास्थिपर्व्वरुक् छर्द्दनं ज्वरः ।
लोहामगन्धितिक्ताम्ल उद्गारश्चास्य जायते ॥ २१ ॥
पूर्व्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ॥ २२ ॥
अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता ।
नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता ॥
अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः ।
दुर्ब्बलाग्निबलाद् दुष्टा त्वाममेव विमुञ्चति ॥ २३ ॥

वातात् पित्तात् कफाच्च स्यात् तद्रोगस्त्रिविध एव च।
हेतुं लिङ्गं चिकित्साञ्च शृणु तस्य पृथक् पृथक् ॥ २४ ॥
कषायकटुतिक्तातिरुक्षशीताल्पभोजनैः।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान्।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥
कण्ठास्यशोषः क्षुत् तृष्णा तिमिरं कर्णयोः स्वनः।
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विसूचिका ॥
हृत्पीड़ा कार्श्यदौर्ब्बल्यं वैरस्यं परिकर्त्तिका।
गृद्धिः सर्व्वरसानाञ्च मनसः सदनं तथा ॥
जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत्।
पुनः पुनः सृजेद्वर्चः कासश्वासार्द्दितोऽनिलात् ॥ २५ ॥
कट्वजीर्णविदाह्यम्लक्षारादैः पित्तमुल्वणम्।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम्।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृड़र्द्दितः ॥ २६ ॥
गुर्व्वतिस्निग्धशीतादिभोजनादतिभोजनात्।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः।
आस्योपदेहमाधुर्य्यकासष्ठीवनपीनसाः ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु।

दृष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥
भिन्नामश्लेष्मभूयिष्ठगुरुवर्च्चःप्रवर्त्तनम् ।
अकृशस्यापि दौर्ब्बल्यमालस्यञ्च कफात्मके ॥ २७ ॥
यस्याग्निः पूर्व्वमुद्दिष्टो रोगानीके चतुर्व्विधः ।
तच्चापि ग्रहणीदोषं समवज्जं प्रचक्षते ॥ २८ ॥
पृथग्वातादिनिर्द्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोषं निर्द्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥ २९ ॥
ग्रहणीमाश्रितं दोषं विदग्धाहारमूर्च्छितम् ।
सविष्टम्भप्रसेकार्त्तिविदाहारुचिगौरवैः ॥
आमलिङ्गान्वितं ज्ञात्वा सुखोष्णेनाम्बुनोद्धरेत् ।
फलानां वा कषायेण पिप्पलीसर्षपैस्तथा ॥
लीनं पक्काशयस्थं वाप्यामं स्राव्यं सदीपनैः ।
शरीरानुगते सामे रसे लङ्घनपाचनम् ॥
विशुद्धामाशयायास्मै पञ्चकोलादिभिः शृतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान् ॥ ३० ॥
ज्ञात्वा तु परिपक्वामं मारुतग्रहणीगदम् ।
दीपनीययुतं सर्पिः पाययेताल्पशो भिषक् ॥
किञ्चित् सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ।
द्व्यहं त्र्यहं वा संस्निह्य स्विन्नाभ्यक्तं निरूहयेत् ॥
तत एरण्डतैलेन सर्पिषा तैलकेन वा ।
सक्षारेणाग्निले शान्ते स्रस्तदोषं विरेचयेत् ॥
शुद्धं रूक्षाशयं ज्ञात्वा सर्व्वशश्चानुवासयेत् ।
दीपनीयाम्लवातघ्नसिद्धतैलेन मात्रया ॥

निरूढञ्च विरिक्तञ्च सम्यक् चैवानुवासितम्।
लघ्वन्नप्रतिसंभुक्तं सर्पिरभ्यासयेत् पुनः॥ ३१॥
द्वे पञ्चमूल्यौ सरलं देवदारु सनागरम्।
पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥
शणबीजं यवान् कोलान् कुलत्थान् सुषवीन्तथा
पाचयेदारनालेन दध्ना सौवीरकेण वा॥
चतुर्भागावशेषेण पचेत् तेन घृताढ़कम्।
स्वर्ज्जिकायावशूकाख्यौ क्षारौ दत्त्वा च युक्तितः॥
सैन्धवौद्भिदसामुद्रविड़ानां रोमकस्य च।
ससौवर्च्चलपाक्यानां भागान् द्विपलिकान् पृथक्॥
विनीय चूर्णितान् सिद्धात् ततो द्वे द्वे पले पिबेत्।
करोत्यग्निं बलं वर्णं वातघ्नं भक्तपाचनम्॥ ३२॥
इति दशमूलाद्यं घृतम्।
त्र्यूषणत्रिफलाकल्कं बिल्वमात्रे गुड़ात् पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत्॥ ३३॥
इति त्र्यूषणाद्यं घृतम्।
पञ्चमूलाभयाजाजीपिप्पलीमूलसैन्धवैः।
विड़ङ्गत्र्यूषणशटीरास्नाक्षारद्वयैर्घृतम्॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च।
शुष्कमूलककोलाम्बुचुक्रिकादाड़िमस्य च॥
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः।
काञ्जिकेन च तत् पक्वमग्निदीप्तिकरं परम्॥
शूलगुल्मोदरश्वासकासानिलकफापहम्।

सबीजपूरकरसं सिद्धं वा पाययेद् घृतम् ॥
तैलमभ्यञ्जनार्थञ्च सिद्धमेतैः प्रयोजयेत् ।
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ॥
वाते श्लेष्माहृते सामे कफे वा वायुनोद्धते ॥ ३४ ॥

इति पञ्चमूलाद्यं घृतं तैलं चूर्णञ्च ।

मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥
परीक्ष्यैवं पुरा सामं निरामञ्चामदोषिणाम् ।
विधिनोपाचरेत् सम्यक् पाचनेनेतरेण वा ॥ ३५ ॥
चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषं हिङ्गजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुडिका मातुलुङ्गस्य दाडिमस्य रसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ ३६ ॥

इति चित्रकाद्यगुडिका ।

नागरातिविषामुस्तक्वाथः स्यादामपाचनः ।
मुस्तान्तकल्कः पथ्या वा नागरञ्चोष्णवारिणा ॥
देवदारुवचामुस्तनागरातिविषाभयाः ।
वारुणामासुतास्तोये कोष्णे वाल्लवणाः पिबेत् ॥
वर्चःसामे सशूले च पिबेद्वा दाडिमाम्बुना ।
विडेन लवणं पिष्टं बिल्वं चित्रकनागरम् ॥
सामे वा सकफे वाते कोष्ठशूलकरे पिबेत् ।
कलिङ्गहिङ्गतिविषावचासौवर्चलाभयाः ॥
छर्द्द्यर्शोग्रन्थिशूलेषु पिबेदुष्णेन वारिणा ।

पथ्यासौवर्च्चलाजाजीचूर्णं मरिचसंयुतम् ॥
अभयां पिप्पलीमूलं वचां कटुकरोहिणीम् ।
पाठां वत्सकवीजानि चित्रकं विश्वभेषजम् ॥
पिवेन्निष्क्वाथ्य चूर्णानि कृत्वा कोष्णेन वारिणा ।
पित्तश्लेष्माभिभूतायां ग्रहण्यां शूलनुद्धितम् ॥
सामे सातिविषं व्योषं लवणक्षारहिङ्गुमत् ।
निःक्वाथ्य पाययेच्चूर्णं कृत्वा वा कोष्णवारिणा ॥ ३७ ॥
पिप्पलीं नागरं पाठां शारिवां वृहतीद्वयम् ।
चित्रकं कौटजं वीजं लवणान्यथ पञ्च च ॥
तच्चूर्णं सयवक्षारं दध्युष्णाम्बुसुरादिभिः ।
पिवेदग्निविवृद्ध्यर्थं कोष्ठवातहरं नरः ॥ ३८ ॥

इति पिप्पल्याद्यं चूर्णम् ।

मरिचाम्बष्ठावृक्षाम्लकुञ्चिकाः कुड़वाः पृथक् ।
दधाम्लवेतसफलाजीमांश्चापि पलांशिकान् ॥
सौवर्च्चलं विड़ं पाक्यं यवक्षारं ससैन्धवं ।
शटीपुष्करमूलानि हिङ्गु हिङ्गुशिराटिका ॥
तत् सर्व्वमेकतः सूक्ष्मं चूर्णं कृत्वा प्रयोजयेत् ।
हितं वाताभिभूतायां ग्रहण्यामरुचौ तथा ॥ ३९ ॥

इति मरिचाद्यं चूर्णम् ।

चतुर्णां प्रस्थमम्लानां त्र्यूषणस्य पलत्रयम् ।
लवणानाञ्च चत्वारि शर्करायाः पलाष्टकम् ॥
संचूर्ण्य शाकसूपान्नरागादिष्ववचारयेत् ।
कासाजीर्णारुचिश्वासहृत्पाण्ड्वामयशूलनुत् ॥ ४० ॥

चव्यत्वक्पिप्पलीमूलधातकीव्योषचित्रकान् ।
कपित्थं बिल्वमम्बष्ठां शाल्मलं हस्तिपिप्पलीम् ॥
शिलोद्भेदं तथाजाजीं पिष्ट्वा बदरसम्मिताम् ।
घृतेन भर्ज्जितां दध्ना यवागूं साधयेद्भिषक् ॥
रसैः कपित्थचुक्रीकावृक्षाम्लैर्दाड़िमस्य च ।
सर्व्वातिसारग्रहणीरोगार्शःशोहनाशिनीम् ॥ ४१ ॥
पञ्चकोलकयूषश्च मूलकानाञ्च सोषणः ।
स्निग्धो दाड़िमतक्राम्लो जाङ्गलः संस्कृतो रसः ॥
क्रव्यादस्य रसः शस्तो भोजनार्थे सदीपनः ।
तक्रारनालमद्यानि पानार्थेऽरिष्ट एव च ॥ ४२ ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
श्रेष्ठं मधुरपाकित्वान्न च पित्तं प्रकोपयेत् ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥
तस्मात् तक्रप्रयोगा ये जठराणां तथार्शसाम् ।
विहिता ग्रहणीदोषे सर्व्वशस्तान् प्रयोजयेत् ॥ ४३ ॥
यमान्यामलकं पथ्या मरिचं त्रिपलांशिकम् ।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत् ॥
तक्रकं सासुतं जातं तक्रारिष्टं पिबेन्नरः ।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम् ॥ ४४ ॥

इति तक्रारिष्टः ।

स्वस्थानगतमुत्क्लिष्टमग्निनिर्व्वापकं भिषक् ।
पित्तं ज्ञात्वा विरेकेण निर्हरेद्वमनेन वा ॥

अविदाहिभिरन्नैश्च लघुभिस्तिक्तसंयुतैः ।
जाङ्गलानां रसैर्य्यूषैर्मुद्गादीनां खड़ैरपि ॥
दाड़िमाम्लैः ससर्पिष्कैर्दीपनग्राहिसंयुतैः ।
तस्याग्निं दीपयेच्चूर्णैः सर्पिर्भिश्चापि तिक्तकैः ॥ ४५ ॥
चन्दनं पद्मकोशीरं पाठां मूर्व्वां कुटन्नटम् ।
षड्ग्रन्थाशारिवास्फोतासप्तपर्णाटरूषकान् ॥
पटोलोडुम्बराश्वत्थवटप्लक्षकपीतनान् ।
कटुकारोहिणीं मुस्तं निम्बञ्च द्विपलांशिकम् ॥
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत् ।
किराततिक्तेन्द्रयववीरामागधिकोत्पलैः ॥
कल्कैरक्षसमैः पेयं तत् पित्तग्रहणीगदे ।
तिक्तकं यद् घृतञ्चोक्तं कौष्ठिके तच्च दापयेत् ॥ ४६ ॥
इति चन्दनाद्यं घृतम् ।

नागरातिविषे मुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥
पिवेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥
अर्शांसि च गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ ४७ ॥
इति नागराद्यं चर्णम् ।

भूनिम्बकटुकव्योषमुस्तकेन्द्रयवान् समान्
द्वौ चित्रकाद्वत्सकत्वग् भागान् षोड़श चूर्णयेत् ॥
गुड़शीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।

कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ॥ ४८ ॥

इति भूनिम्बाद्यं चूर्णम्।

वचामतिविषां पाठां सप्तपर्णीं रसाञ्जनम्।
श्योणाकोदीच्यकट्वङ्गवत्सकत्वग्दुरालभाः ॥
दार्व्वीं पर्पटकं पाठां यमानीं मधुशिग्रुकम्।
पटोलपत्रं सिद्धार्थान् यूथिकां जातिपल्लवान् ॥
जम्ब्वाम्रबिल्वमध्यानि निम्बशाकफलानि च।
तद्रोगशममन्विच्छन् भूनिम्बाद्येन योजयेत् ॥ ४९ ॥

किराततिक्तं षड्ग्रन्था त्रायमाणा कटुत्रिकम्।
चन्दनं पद्मकोशीरं दार्व्वीं त्वक् कटुरोहिणी ॥
कुटजत्वक्फलं मुस्तं यमानी देवदारु च।
पटोलनिम्बपत्रैलासौराष्ट्रातिविषात्वचः ॥
मधुशिग्रोश्च बीजानि मूर्व्वा पर्पटकं तथा।
तच्चूर्णं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान्।
कामलां पाण्डुरोगञ्च मुखरोगञ्च नाशयेत् ॥ ५० ॥

इति किराताद्यं चूर्णम्।

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तिक्तैश्चाग्निं विवर्द्धयेत् ॥
प्रलाशं चित्रकं चव्यं मातुलुङ्गं हरीतकीम्।
पिप्पलीं पिप्पलीमूलं पाठां नागरधान्यकम् ॥
कार्षिकाण्युदकप्रस्थे पक्त्वा पादावशेषिते।
पानार्थं तत् प्रयुञ्जीत यवागूं तैश्च साधिताम् ॥ ५१ ॥

शुष्कमूलकयूषेण कौलत्थेनाथवा पुनः ।
कट्वम्लक्षारपटुना लघून्यन्नानि भोजयेत् ॥
अम्लञ्चानुपिवेत् तक्रं तक्रारिष्टमथापि वा ।
मदिरां मध्वरिष्टं वा निगदं शीधुमेव वा ॥ ५२ ॥
द्रोणं मधूकपुष्पाणां विड़ङ्गञ्च ततोऽर्द्धतः ।
चित्रकस्य ततोऽर्द्धञ्च तथा भल्लातकाढ़कम् ॥
मञ्जिष्ठात्रिपलञ्चैव त्रिद्रोणेऽपां विपाचयेत् ।
द्रोणशेषञ्च तच्छीतं मध्वर्द्धाढ़कसंयुतम् ॥
एलामृणालागुरुभिश्चन्दनेन च रूषिते ।
कुम्भे मासस्थितं जातमासवं तं प्रयोजयेत् ॥
ग्रहणीं दीपयत्येष वृंहणोऽनिलरोगजित् ।
शोथकुष्ठकिलासानां प्रमेहाणाञ्च नाशनः ॥ ५३ ॥

इति मधूकासवः ।

मधूकपुष्पस्वरसं शृतमर्द्धक्षयीकृतम् ।
क्षौद्रपादयुतं शीतं पूर्व्ववत् सन्निधापयेत् ॥
तं पिवन् ग्रहणीदोषान् जयेत् सर्व्वान् हिताशनः ।
तद्वद् द्राक्षेक्षुकाश्मर्य्यस्वरसानासुतान् पिवेत् ॥ ५४ ॥
दुरालभायाः प्रस्थौ द्वौ प्रस्थमामलकस्य च ।
युक्तौ चित्रकदन्त्योर्हि प्रत्यग्रञ्चाभयाशतम् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा शीतं द्रोणावशेषितम् ।
सगुड़द्विशतं पूतं मधुनः कुड़वायुतम् ॥
तद्वत् प्रियङ्गोः पिप्पल्या विड़ङ्गानाञ्च चूर्णितैः ।
कुड़वैर्घृतकुम्भस्थं पक्षादूर्द्ध्वं पिवेन्नरः ॥

ग्रहणीपाण्डुरोगार्शःकुष्ठवीसर्पमेहनुत् ।
स्वरवर्णकरश्चैष रक्तपित्तकफापहः ॥ ५५ ॥

इति दुरालभासवः ।

द्विपञ्चमूल्यौ रजनी वीरर्षभकजीवकान् ।
पृथक् पञ्च पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
द्रोणशेषे रसे पूते गुडस्य द्विशतं भिषक् ।
चूर्णितान् कुड़वार्द्धांशान् प्रक्षिपेच्च समाक्षिकान् ॥
प्रियङ्गुमुस्तमञ्जिष्ठाविड़ङ्गमधुकप्लवान् ।
लोध्रं शावरकञ्चैव मासार्द्धस्थं पिवेत्तु तम् ॥
एष मूलासवः सिद्धो दीपनो रक्तपित्तजित् ।
आनाहकफहृद्रोगपाण्डुरोगाङ्गसादनुत् ॥ ५६ ॥

इति मूलासवः ।

प्रास्थिकीं पिप्पलीं पिष्ट्वा गुडं मध्यं विभीतकात् ।
उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत् ॥
तस्मात् पलं सुजातात्तु सलिलाञ्जलिसंयुतम् ।
पिवेत् पिण्डासवो ह्येष रोगानीकविनाशनः ॥
स्वस्थोऽपेत्रनं पिवेन्मासं नरः सिद्धरसायनम् ।
इच्छंस्तेषामनुत्पत्तिं रोगाणां ये प्रकीर्त्तिताः ॥ ५७ ॥

इति पिण्डासवः ।

नवे पिप्पलीमध्वक्ते कलसेऽगुरुधूपिते ।
मध्वाढ़कं जलसमं चूर्णानीमानि दापयेत् ॥
कुड़वार्द्धं विड़ङ्गानां पिप्पल्याः कुड़वं तथा ।
चतुर्थकांशां त्वक्क्षीरीं केशरं मरिचानि च ॥

त्वगेलापत्रकशटीकमुकातिविषावनम्।
हरेणुवेलुकतेजोह्वापिप्पलीमूलचित्रकान्॥
कार्षिकांस्तान् स्थितं मासमत ऊर्द्ध्वं प्रयोजयेत्।
मन्दं सन्दीपयत्यग्निं करोति विषमं समम्॥
हृत्पाण्डुग्रहणीरोगकुष्ठार्शःश्वयथुज्वरान्।
वातश्लेष्मामयांश्चान्यान् मध्वरिष्टो व्यपोहति॥ ५८॥
इति मध्वरिष्टः।

समूलां पिप्पलीं चारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभयारास्नाशठीमरिचनागरम्॥
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना।
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम्॥ ५९॥
इति पिप्पल्याद्यं चूर्णम्।

एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते।
गौल्मिकं षट्पलं प्रोक्तं भल्लातकघृतञ्च यत्॥ ६०॥
विड़ं कालोत्थलवणं सर्जिकायावशूकजम्।
सप्तलां कण्टकारीञ्च चित्रकञ्चेति दाहयेत्॥
सप्तकृत्वः स्रुतस्याथ चारस्याद्धाढ़केन तु।
आढ़कं सर्पिषः पक्त्वा पिबेदग्निविवर्द्धनम्॥ ६१॥
इति चारघृतम्।

समूलां पिप्पलीं पाठां चव्येन्द्रयवनागरम्।
चित्रकातिविषे हिङ्गु श्वदंष्ट्रां कटुरोहिणीम्॥
वचाञ्च कार्षिकान् पञ्चलवणानां पलानि च।
दध्नः प्रस्थद्वये तैलसर्पिषोः कुड़वद्वये॥

चूर्णीकृतानि निष्क्वाथ्य शनैरन्तर्गते रसे ।
अन्तर्धूमं ततो दग्ध्वा चूर्णं कृत्वा घृताप्लुतम् ॥
खादेत् पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ।
वातश्लेष्मामयान् सर्व्वान् हन्याद्विषगरांश्च सः ॥ ६२ ॥
भल्लातकं त्रिकटुकं त्रिफलां लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
सक्षारः सर्पिषा पीतो भोज्ये वाप्यवचारितः ।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ ६३ ॥
दुरालभाकरञ्जौ च सप्तपर्णं सवत्सकम् ।
षड्ग्रन्थां मदनं मूर्व्वां पाठामारग्वधं तथा ॥
गोमूत्रेण समांशानि कृत्वा चूर्णानि दाहयेत् ।
दग्ध्वा च तं पिबेत् क्षारं ग्रहणीबलवर्द्धनम् ॥ ६४ ॥
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्द्धनः ॥ ६५ ॥
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ।
मुस्तञ्च वस्तमूत्रेण सिद्धः क्षारोऽग्निवर्द्धनः ॥ ६६ ॥
चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात् ।
वार्त्ताक्याः कुडवञ्चार्कादष्टौ द्वे चित्रकात् पले ॥
दग्धानि वार्त्ताकुरसे गुड़िका भोजनोत्तराः ।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ॥
विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ।
इत्येषा क्षारगुड़िका कृष्णात्रेयेण कीर्त्तिता ॥ ६७ ॥

इति क्षारगुड़िका ।

वत्सकातिविषे पाठां दुःस्पर्शं हिङ्गु चित्रकम्।
चूर्णीकृत्य पलाशाग्रक्षारे मूत्रस्रुते पचेत्॥
आयसे भाजने सान्द्रात् तस्मात् कोलं सुखाम्बुना।
मद्यैर्वा ग्रहणीदोषे शोथार्शःपाण्डुमान् पिबेत्॥ ६८॥
त्रिफलां कटभीं चव्यं बिल्वमध्यमयोरजः।
रोहिणीं कटुकां कुष्ठं मुस्तं पाठाञ्च हिङ्गु च॥
मधुकं मुष्ककयवक्षारौ त्रिकटुकं वचाम्।
विडङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ॥
मूर्व्वाजमोदेन्द्रयवान् गुडूचीं देवदारु च।
कार्षिकं लवणानाञ्च पञ्चानां पलिकान् पृथक्॥
भागान् दध्नि त्रिकुडवे घृततैलेन मूर्च्छितान्।
अन्तर्धूमं शनैर्दग्ध्वा तस्मात् पाणितलं पिबेत्॥
सर्पिषा कफवातार्शोग्रहणीपाण्डुरोगवान्।
प्लीहमूत्रग्रहश्वासहिक्काकासक्रिमिज्वरान्॥
शोषातिसारश्वयथुप्रमेहान् ब्रध्नांस्तथा।
हन्यात् सर्व्वविषञ्चैव क्षारोऽग्निजननो वरः॥
जीर्णे रसैर्वा मधुरैरश्नीयात् पयसा सह॥ ६९॥
त्रिदोषे विधिवद्वैद्यः पञ्च कर्म्माणि कारयेत्।
घृतक्षारासवारिष्टान् दद्याच्चाग्निविवर्द्धनान्॥
क्रिया या चानिलादीनां निर्द्दिष्टा ग्रहणीं प्रति।
व्यत्यासात् तां समस्ताञ्च कुर्य्याद्दोषविशेषवित्॥ ७०॥
स्वेदनं स्नेहनं शुद्धिर्लङ्घनं दीपनञ्च यत्।
चूर्णानि मधुरक्षारमध्वरिष्टसुरासवाः॥

तन्त्रप्रयोगा विविधा दीपनानाञ्च सर्पिषाम् ।
यन्नणीदोषिभिः सेव्याः क्रियाञ्चावश्यिकीं शृणु ॥ ७१ ॥
ष्ठीवनं श्लैष्मिके रुक्षं दीपनं तिक्तसंयुतम् ।
सक्तद्रुक्षं सकृतस्निग्धं कृशे बहुकफे हितम् ॥ ७२ ॥
परीक्ष्यामं शरीरस्य दीपनं स्नेहसंयुतम् ।
दीपनं बहुपित्तस्य तिक्तं मधुरसंयुतम् ॥ ७३ ॥
बहुवातस्य तु स्नेहलवणाम्लयुतं हितम् ।
सन्धुचति यथा वह्निरेषां विधिवदिन्धनैः ॥ ७४ ॥
स्नेहमेव परं विद्याद् दुर्ब्बलानां प्रदीपनम् ।
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्व्वपि ॥ ७५ ॥
मन्दाग्निरविपक्वन्तु पुरीषं योऽतिसार्य्यते ।
दीपनीयौषधैर्युक्तां घृतमात्रां पिवेत् तु सः ॥
तया समानः पवनः प्रसन्नो मार्गमाश्रितः ।
अग्नेः समीपचारित्वादाशु प्रकुरुते बलम् ॥
काठिन्याद् यः पुरीषन्तु कृच्छ्रान्मुञ्चति मानवः ।
सघृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिवेत् ॥
रौक्ष्यान्मन्दे पिवेत् सर्पिस्तैलं वा दीपनैर्युतम् ।
अतिस्नेहात्तु मन्देऽग्नौ चूर्णारिष्टासवा हिताः ॥
भिन्ने गुदोपलेपात्तु मले तैलसुरासवाः ।
उदावर्त्तात्तु मन्देऽग्नौ निरूहाः स्नेहवस्तयः ॥
दोषवृद्ध्या तु मन्देऽग्नौ शुद्धो दोषविधिं चरेत् ।
व्याधियुक्तस्य मन्दे तु सर्पिरेवाग्निदीपनम् ॥
उपवासाच्च मन्देऽग्नौ यवागूभिः पिवेद्घृतम् ।

अन्नावपीड़िते चालं दीपनं वृंहणञ्च तत् ॥ ७६ ॥
दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान् नरान् ।
प्रसहानां रसैः साम्लै र्भोजयेत् पिशिताशिनाम् ॥
लघुतीक्ष्णोष्णशोधित्वाद्दीपयन्त्याशु तेऽनलम् ।
मांसोपचितमांसत्वात् तथाशुतरवृंहणाः ॥ ७७ ॥
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वातीन्धनावृतः ॥
स्नेहान्नपानैर्विविधैश्चूर्णारिष्टसुरासवैः ।
प्रयुक्तैर्भिषजा सम्यग्बलमग्नेः प्रवर्द्धते ॥
यथा हि सारदार्व्वग्निः स्थिरः सन्तिष्ठते चिरम् ।
स्नेहान्नविधिभिस्तद्वदन्तरग्निर्भवेत् स्थिरः ॥ ७८ ॥
हितं जीर्णे मितञ्चाश्नंश्चिरमारोग्यमश्नुते ।
अवैषम्येण धातूनामग्निवृद्धौ यतेत ना ॥
समैर्दोषैः समो मध्ये देहस्योष्माग्निसंस्थितः ।
पचत्यन्नं तदारोग्यपुष्ट्यायुर्बलवर्द्धनम् ॥
दोषैर्मन्दोऽतिवृद्धो वा विषमैर्जनयेद्गदान् ।
पाच्यं मन्दस्य तत्रोक्तमतिवृद्धस्य वक्ष्यते ॥ ७९ ॥
नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् ।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥
तथा लब्धबलो देहे विरूक्षे सानिलोऽनलः ।
परिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्म्मुहुः ॥
पक्त्वान्नं स ततो धातून् शोणितादीन् पचत्यपि ।
ततो दौर्ब्बल्यमातङ्कान् मृत्युञ्चोपनयेन्नरम् ॥

भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति।
तट्‌श्वासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः॥ ८०॥
तमत्यग्निं गुरुस्निग्धशीतमधुरविज्जलैः।
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्॥ ८१॥
कृशरां पायसं स्निग्धं पैष्टिकं गुडवैकृतम्।
अद्यात् तथौदकानूपपिशितानि घृतानि च॥
मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचरांस्तथा।
आविकञ्च घृतं मांसमद्यादत्यग्निवारणम्॥
यवागूं समधूच्छिष्टां घृतं वा क्षुधितः पिबेत्।
गोधूमचूर्णमन्थं वा व्यथयित्वा शिरां पिबेत्॥
पयो वा शर्करां सर्पिर्जीवनीयौषधैः शृतम्।
फलानि तैलयोनीनां मृत्‌कुञ्चाश्च सशर्कराः॥
मार्द्दवं जनयन्त्यग्नेः स्निग्धा मांसरसास्तथा।
पिबेच्छीताम्बुना सर्पिर्मधूच्छिष्टेन वा युतम्॥
गोधूमचूर्णं पयसा ससर्पिष्कं पिबेन्नरः।
आनूपरससिद्धान् वा व्रीन् स्नेहांस्तैलवर्ज्जितान्॥
पयसा समितां वापि घनां निःस्नेहसंयुताम्।
नारीस्तनेन संयुक्तां पिबेदौडुम्बरीं त्वचम्।
ताभ्यां वा पायसं सिद्धमद्यादत्यग्निशान्तये॥ ८२॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम्।
असकृत् पित्तशान्त्यर्थं पायसं प्रतिभोजनम्॥ ८३॥

यत्किञ्चिन्मधुरं मेध्यं श्लेष्मलं गुरु भोजनम् ।
तदत्यग्निर्हितं सर्व्वं भुक्त्वा च स्वपनं दिवा ॥
मेध्यान्यन्नानि सोऽत्यग्नावप्रतान्तः समश्नुते ।
न तन्निमित्तमाप्नोति व्यसनं पुष्टिमेति सः ॥ ८४ ॥
कफे वृद्धे जिते पित्ते मारुते चानलः समः ।
समधातोः पचत्यन्नं पुष्ट्यायुर्बलवृद्धये ॥ ८५ ॥

भवन्ति चात्र ।

पथ्यापथ्यमिहैकत्र भुक्तं समशनं मतम् ।
विषमं बहु चाल्पं वाप्यप्राप्तातीतकालयोः ॥
भुक्तं पूर्व्वान्नशेषे तु पुनरध्यशनं मतम् ।
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ॥८६
प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ।
दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत् ॥
तस्मिन् विबुद्धे स्रोतांसि स्फुटत्वं यान्ति सर्व्वशः ।
व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ॥
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः ।
अक्लिन्नेष्वन्नमासिक्तमन्यत् तेषु न दुष्यति ॥
अविदग्ध इव क्षीरे क्षीरमन्यद्विमिश्रितम् ।
नैव दुष्यति तेनैव समं सम्पद्यते यथा ॥ ८७ ॥
रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ।
यान्ति कोष्ठे च विक्लेदं संवृते देहधातवः ॥
क्लिन्नेष्वन्यदपक्वेषु तेष्वासिक्तं प्रदुष्यति ।
विदग्धेषु पयःस्वन्यत् पयस्तप्तेष्विवार्पितम् ॥

नैशेष्वाहारजातेषु नाविपक्केषु बुद्धिमान् ।
तस्मादन्यत् समश्नीयात् पालयिष्यन् बलायुषी ॥ ८८ ॥

तत्र श्लोकाः ।

अन्तरग्निगुणा देहं यथा सन्धारयेच्च सः ।
यथान्नं पच्यते यच्च यथाहारः करोत्यपि ॥
येऽग्नयो यांश्च पुष्यन्ति यावन्तो ये पचन्ति यान् ।
रसादीनां क्रमोत्पत्तिर्मलानां तेभ्य एव च ॥
वृष्याणामाशुकृद्धेतुर्धातुकालोद्भवक्रमः ।
रोगैकदेशकृद्धेतुरन्तरग्निर्यथाधिकः ॥
सन्दुष्यति यथादुष्टो यान् रोगान् जनयत्यपि ।
ग्रहणी या समासाच्च ग्रहणीदोषलक्षणम् ॥
पूर्व्वरूपं पृथक् चैव व्यञ्जनं सचिकित्सितम् ।
चतुर्व्विधस्य निर्द्दिष्टा तथा चावस्थिकी क्रिया ॥
जायते च यथात्यग्निर्यच्च तस्य चिकित्सितम् ।
उक्तवानिह तत् सर्व्वं ग्रहणीदोषके मुनिः ॥ ८९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ग्रहणीरोगचिकित्सितं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः ।

अथातः पाण्डुरोगचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ २ ॥
दोषाः पित्तप्रधानास्तु यस्य कुप्यन्ति धातुषु ।
शैथिल्यं तस्य धातूनां गौरवञ्चोपजायते ॥
ततो वर्णबलस्नेहा ये चान्येऽप्योजसो गुणाः ।
व्रजन्ति क्षयमत्यर्थं दोषदूष्यप्रदूषणात् ॥
सोऽल्परक्तोऽल्पमेदस्को निःसारः शिथिलेन्द्रियः ।
वैवर्ण्य भजते तस्य हेतुं शृणु सलक्षणम् ॥ ३ ॥
क्षाराम्ललवणात्युष्णविरुद्धासात्म्यभोजनात् ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात् ॥
विदग्धेऽन्ने दिवास्वप्नाद्व्यायामान्मैथुनात् तथा ।
प्रतिकर्म्मर्त्तुवैषम्याद् वेगानाञ्च विधारणात् ॥
कामचिन्ताभयक्रोधशोकोपहतचेतसः ।
समुदीर्णं यथा पित्तं हृदये समवस्थितम् ॥
वायुना बलिना क्षिप्तं स्रोतोभिर्दशभिः स्रुतम् ।
प्रपन्नं केवलं देहं त्वङ्मांसान्तरमाश्रितम् ॥
प्रदुष्य कफवातासृगत्वङ्मांसानि करोति तत् ।
वर्णान् हरितहारिद्रान् पाण्डून् बहुविधांस्त्वचि ॥

स पाण्डुरोग इत्युक्तस्तस्य लिङ्गं भविष्यतः ।
हृदयस्पन्दनं रौक्ष्यं स्वेदाभावः श्रमस्तथा ॥ ४ ॥
सम्भूतेऽस्मिन् भवेत् सर्व्वः कर्णक्ष्वेडी हतानलः ।
दुर्ब्बलः सदनोऽन्नद्विट् श्रमभ्रमनिपीड़ितः ॥
गात्रशूलज्वरश्वासगौरवारुचिमान् नरः ।
मृदितैरिव गात्रैश्च पीड़ितोन्मथितैरिव ॥
शूनाक्षिकूटो हरितः शीर्णलोमा हतप्रभः ।
कोपनः शिशिरद्वेषी निद्रालुः ष्ठीवनोऽल्पवाक् ॥
पिण्डिकोद्वेष्टकट्यूरुपादरुक्सदनानि च ।
स्फुरणारोहणायासैर्विशेषश्चास्य वक्ष्यते ॥ ५ ॥
आहारैरुपचारैश्च वातलैः कुपितोऽनिलः ।
जनयेत् कृष्णपाण्डुत्वं तथा रूक्षारुणाङ्गताम् ॥
अङ्गमर्द्दं ज्वरं तोदं कम्पं पार्श्वशिरोरुजम् ।
वर्च्चःशोषास्यवैरस्यशोफानाहबलक्षयान् ॥ ६ ॥
पित्तलस्त्वाचितं पित्तं यथोक्तैः स्वैः प्रकोपनैः ।
दूषयित्वा तु रक्तादीन् पाण्डुरोगाय कल्पते ॥
स पीतो हरिताभो वा ज्वरदाहसमन्वितः ।
छर्द्दिमूर्च्छापिपासार्त्तः पीतमूत्रशकृन्नरः ॥
स्वेदनः शीतकामश्च न चान्नमभिनन्दति ।
कटुकास्यो न चास्योष्णामुपशेतेऽम्लमेव च ॥
उद्गारोऽम्लो विदाहश्च विदग्धान्नस्य जायते ।
दौर्गन्ध्यं भिन्नवर्च्चस्त्वं दौर्ब्बल्यं तम एव च ॥ ७ ॥
विवृद्धः श्लेष्मलैः श्लेष्मा पाण्डुरोगं स पूर्व्ववत् ।

करोति गौरवं तन्द्रां छर्द्दिं श्वेतावभासताम् ॥
प्रसेकं लोमहर्षञ्च सादं मूर्च्छां भ्रमक्लमम् ।
श्वासकासौ तथालस्यमरुचिं वाक्स्वरग्रहम् ॥
शुक्लमूत्राक्षिवर्च्चस्त्वं कटुरूक्षोष्णकामताम् ।
श्वयथुं लवणाख्यत्वमिति * पाण्ड्वामयः कफात् ॥ ८ ॥
सर्व्वान्नसेविनः सर्व्वे दुष्टा दोषास्त्रिदोषजम् ।
त्रिदोषलिङ्गं कुर्व्वन्ति पाण्डुरोगं सुदुःसहम् ॥ ९ ॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्तमूषरा मधुराः कफम् ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद् भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्य्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ।
क्रिमिकोष्ठोऽतिसार्य्येत मलं सासृक् कफान्वितम् ॥ १० ॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ।
कालप्रकर्षाच्छूनानां यश्च पीतानि पश्यति ॥
बद्धाल्पविट् सहरितं सकफं योऽतिसार्य्यते ।
दीनः श्वेतातिदिग्धाङ्गश्छर्द्दिमूर्च्छातृड़र्द्दितः ॥
स नास्त्यसृक्क्षयाद् यश्च पाण्डुः श्वेतत्वमाप्नुयात् ।
इति पञ्चविधस्योक्तं पाण्डुरोगस्य लक्षणम् ॥ ११ ॥
पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ।

* मधुराख्यत्वमिति पाठान्तरम् ।

तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥
हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः ।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥
कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला ।
कृष्णनेत्रशकृन्मूत्रो भृशं शूनश्च मानवः ॥
सरक्ताक्षिमुखच्छर्द्दिर्विण्मूत्रो यश्च ताम्यति ।
दाहारुचितृडानाहतन्द्रामोहसमन्वितः ।
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान् विपद्यते ॥ १२ ॥
साध्यानामितरेषान्तु प्रवक्ष्यामि चिकित्सितम् ॥
तत्र पाण्ड्वामयी स्निग्धस्तीक्ष्णैरूर्द्धानुलोमिकैः ।
संशोध्यो मृदुभिस्तिक्तैः कामलावान् विरेचनैः ॥
ताभ्यां संशुद्धकोष्ठाभ्यां पथ्यान्यन्नानि दापयेत् ।
शालीन् सयवगोधूमान् पुराणान् यूषसंहितान् ॥
मुद्गाढकीमसूरैश्च जाङ्गलैश्च रसैर्हितैः ।
यथादोषं विशिष्टञ्च तयोर्भैषज्यमाचरेत् ॥
पञ्चगव्यं महातिक्तं कल्याणकमथापि वा ।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे ॥ १३ ॥
दाड़िमात् कुड़वं धान्यात् कुड़वार्द्धं पलं पलम् ।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका तथा ॥
तैर्कल्कैर्विंशत् पलं कल्कैर्घृतस्य सलिलाढ़के ।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्त्तिनुत् ॥

दीपनं श्वासकासघ्नं मूढ़वाते च शस्यते।
दुःखप्रसविनीनाञ्च बन्ध्यानाञ्चैव गर्भदम् ॥ १४ ॥

इति दाड़िमाद्यं घृतम्।

कटुकां रोहिणीं मुस्तं हरिद्रे वत्सकात् फलम्।
पटोलं चन्दनं मूर्व्वां त्रायमाणां दुरालभाम ॥
सपिप्पलीं पर्पटकं भूनिम्बं देवदारु च।
पिष्ट्वाक्षमात्रैस्तैः सर्पिःप्रस्थं क्षीराढ़के पचेत् ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम्।
अर्शांस्यसृग्दरञ्चैव हन्ति विस्फोटकांस्तथा ॥ १५ ॥

इति कटुकाद्यं घृतम्।

पथ्याशतरसे पथ्यावृन्ताद्धशतकल्कवान्।
प्रस्थः सिद्धो घृतात् पेयः सपाण्ड्वामयगुल्मनुत् ॥ १६ ॥

इति पथ्याघृतम्।

दन्त्याः शतपलरसे * पिष्टैर्दन्तीपलाष्टभिः।
तद्वत् प्रस्थो घृतात् सिद्धः प्लीहपाण्डुत्तिंशोफजित् ॥ १७ ॥

इति दन्तीघृतम्।

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः ॥ १८ ॥

इति द्राक्षाघृतम्।

हरिद्रात्रिफलानिम्बबलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ १९ ॥

इति हरिद्राघृतम्।

---

* दन्त्याश्चतुःपलरस इति पाठान्तरम्।

गोमूत्रद्विगुणो दार्व्वीकल्काच्चद्वयसाधितः।
दार्व्व्याः पञ्चपलक्काथे कल्के कालीयकेऽपरः॥
माहिषाज्यस्य तु प्रस्थः पूर्व्वः पूर्व्वे परे परः।
स्नेहैरेभिरुपक्रम्य स्निग्धं मत्वा विरेचयेत्॥
पयसा मूत्रयुक्तेन बहुशः केवलेन वा।
दन्तीफलरसे कोष्णे काश्मर्य्याञ्जलिना शृतम्॥
द्राक्षाञ्जलिं मृदित्वा वा दद्यात् पाण्ड्वामयापहम्।
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिकः पिवेत्॥ २०॥
कफपाण्डुस्तु गोमूत्रयुक्तां क्लिन्नां हरीतकीम्।
आरग्वधं रसेनेक्षोर्विदार्य्यामलकस्य च॥
सव्यूषणं बिल्वपत्रं पिवेद्वा कामलापहम्।
दन्तार्द्धपलकल्कं वा द्विगुडं शीतवारिणा॥ २१॥
पिवेद्वा कामलावान् ना त्रिवृतां त्रिफलारसैः।
विशालात्रिफलामुस्तकुष्ठदारुकलिङ्गकान्॥
कर्षोन्मितानतिविषां कर्षार्द्धाश्च प्रदापयेत्।
कर्षौ मधुरसाया द्वौ सर्व्वमेतत् सुखाम्बुना॥
मृदितं तं रसं पूतं पीत्वा लिह्याच्च मध्वनु।
कासं श्वासं ज्वरं दाहं पाण्डुरोगमरोचकम्॥
गुल्मानाहामवातांश्च रक्तपित्तञ्च नाशयेत्॥ २२॥
त्रिफलाया गुडूच्या वा दार्व्व्या निम्बस्य वा रसम्।
शीतं मधुयुतं प्रातः कामलार्त्तः पिवेन्नरः॥
चौरं मूत्रं पिवेत् पक्षं गव्यं माहिषमेव वा।
पाण्डुर्गोमूत्रयुक्तं वा सप्ताहं त्रिफलारसम्॥

तरुजान् ज्वलितान् मूत्रे निर्व्वाप्यामृद्य चाङ्कुरान्।
मातुलुङ्गस्य तत् पूतं पाण्डुशोथहरं पिबेत्॥ २३॥
स्वर्णक्षीरीं त्रिवृच्छ्यामे भद्रदारु सनागरम्।
गोमूत्राञ्जलिना पिष्टं मूत्रे वा क्वथितं पिबेत्॥
क्षीरमेभिः शृतं वापि पिबेद्दोषानुलोमनम्॥ २४॥
हरीतकीं मूत्रयुतां प्रयोगेणाशवा पिबेत्।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा पाययेद् भिषक्॥ २५॥
त्र्यूषणत्रिफलामुस्तविड़ङ्गचित्रकाः समाः।
नवायोरजसो भागास्तच्चूर्णं क्षौद्रसर्पिषा॥
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम्।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम्॥ २६॥

इति नवायसं चूर्णम्।

गुड़नागरमण्डूरतिलांशान् मानतः समान्।
पिप्पलीद्विगुणां कुर्य्याद् गुटिकां पाण्डुरोगिणे॥ २७॥
त्रिफलां त्र्यूषणं मुस्तं विड़ङ्गं चव्यचित्रकौ।
दार्व्वीं त्वङ्माक्षिको धातुर्ग्रन्थिकौ देवदारु च॥
एषां द्विपलिकान् भागांश्चूर्णं कुर्य्यात् पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम्॥
गोमूत्रेऽष्टगुणे पक्त्वा तस्मिंस्तत् प्रक्षिपेत् पुनः।
उडुम्बरसमान् कृत्वा वटकांस्तान् यथाग्निना॥
उपयुञ्जीत तक्रेण जीर्णे सात्म्यं च भोजनम्।

मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥
कुष्ठान्यजरकं मेहमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहं प्लीहानं शमयन्ति च ॥ २८ ॥

इति मण्डूरवटकाः ।

ताप्याद्रिजतुरूप्याश्मोमलाः पञ्च पलाः पृथक् ।
चित्रकस्त्रिफलाव्योषविड़ङ्गैः पालिकैः सह ॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः ।
अभ्यस्यास्त्वक्षमात्रा हि जीर्णे नियमिताग्निना ॥
कुलत्यकाकमाच्यादिकपोतपरिहारिणा ॥ २९ ॥
त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागश्चित्रकमूलस्य विड़ङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ।
माक्षिकस्य च शुद्धस्य लोहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्व्वं सूक्ष्मचूर्णितम् ।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ॥
उडुम्बरसमां मात्रां ततः खादेद् यथाग्निना ।
दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम् ॥
वर्ज्जयित्वा कुलत्थानि काकमाचीं कपोतकम् ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥
रसायनमिदं श्रेष्ठं सर्व्वरोगहरं शिवम् ।
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम् ।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ३० ॥

इति योगराजः ।

कौटजत्रिफलानिम्बपटोलघननागरैः।
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा।
त्वक्क्षीरीपिप्पलीधात्रीकटुकाख्याः पलोन्मिताः॥
निदिग्धयाः फलमूलाभ्यां पलं युक्त्या त्रिगन्धकम्।
मधुत्रिपलसंयुक्तं कुर्य्यादक्षसमान् गुड़ान्॥
दाड़िमाम्बुपयःपक्षिरसतोयसुरासवान्।
तान् भक्षयित्वानुपिवेन् निरन्नो भुक्त एव वा॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरान्।
पूतिहृत्कुक्षमूत्राग्निदोषशोथगरोदरान्॥
कामासृग्दरपित्तासृक्शोषगुल्मज्वरामयान्।
ते च सर्व्वव्रणान् हन्युः सर्व्वरोगहराः शिवाः॥ ३१॥

इति शिलाजतुवटकाः।

पुनर्नवा त्रिवृद्व्योषविड़ङ्गं दारु चित्रकम्।
कुष्ठं हरिद्रे त्रिफला दन्ती चव्यं कलिङ्गकाः॥
कटुका पिप्पलीमूलं मुस्तञ्चेति पलोन्मितम्।
मण्डूरं द्विगुणं चूर्णाद् गोमूत्रे द्व्याढ़के पचेत्॥
कोलवद् गुड़िकाः कृत्वा तक्रेणालोड्य ना पिवेत्।
ताः पाण्डुरोगं प्लीहानमर्शांसि विषमज्वरम्॥
श्वयथुं ग्रहणीदोषं हन्युः कुष्ठं क्रिमींस्तथा॥ ३२।

इति पुनर्नवामण्डूरम्।

दार्व्वीत्वक् त्रिफला व्योषं विड़ङ्गमयसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान्॥

तुल्या अयोरजःपथ्याहरिद्राः क्षौद्रसर्पिषा ।
चूर्णिताः कामली लिह्याद् गुडक्षौद्रेण वाभयाम् ॥
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरजः ।
चूर्णितं क्षौद्रसर्पिर्भ्यां लेहयेत् कामलापहम् ॥ ३३ ॥
त्रिफलांशां तुगाक्षीरीं नागरं मधुयष्टिकाम् ।
प्रास्थिकीं पिप्पलीं द्राक्षां शर्करार्द्धतुलां तथा ॥
धात्रीफलरसद्रोणे चूर्णितं लेहवत् पचेत् ।
शीतान् मधुप्रस्थयुतान् लिह्यात् पाणितलं ततः ॥
हलीमकं पाण्डुरोगं कामलाञ्चैव नाशयेत् । ३४ ॥

इति धात्र्यवलेहः

त्र्यूषणं त्रिफला चव्यं चित्रको देवदारु च ।
विडङ्गान्यथ मुस्तञ्च वतुसकश्चेति चूर्णयेत् ॥
मण्डूरतुल्यं तच्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ।
शनैः सिद्धास्तथा शीताः कार्य्याः कर्षसमा गुड़ाः ॥
यथाग्नि भक्षणीयास्ते प्लीहपाण्ड्वामयापहाः ।
ग्रहण्यर्शोनुदश्चैव तक्रवाद्याशिनः स्मृताः ॥ ३५ ॥

इति मण्डूरवटकाः ।

मञ्जिष्ठा रजनी द्राक्षा बलामूलान्ययोरजः ।
लोध्रञ्चैतेषु गौड़ः स्यादरिष्टः पाण्डुरोगिणाम् ॥ ३६ ॥

इति गौड़ोऽरिष्टः ।

बीजकात् * षोड़शपलं विशालायाश्च विंशतिः ॥
द्राक्षायाः पञ्च लाक्षायाः सप्त द्रोणे जलस्य तत् ।

* जीरकादिति पठित्वा केचिदिदं जीरकारिष्टमित्याहुः ।

साध्यं पादावशेषे तु पूतशीते समावपेत् ॥
शर्करायास्तुलां प्रस्थं माक्षिकस्य च कार्षिकम् ।
व्योषव्याघ्रनखोशीरं क्रमुकं सैलवालुकम् ।
मधूकं कुष्ठमित्येतच्चूर्णितं घृतभाजने ॥
यवेषु दशरात्रस्थं ग्रीष्मे द्विः शिशिरे स्थितम् ।
पिबेत् तद्ग्रहणीपाण्डुरोगार्शःशोथगुल्मनुत् ॥
मूत्रकृच्छ्राश्मरीमेहकामलासन्निपातनुत् ॥ ३७ ॥

इति बीजकारिष्टम् ।

धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक् ।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वायुतम् ॥
शर्करार्द्धतुलोन्मिश्रं पक्षं स्निग्धघटे स्थितम् ।
प्रपिबेन्मात्रया प्रातर्जीर्णे मितहिताशनः ॥
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान् ।
कासहिक्कारुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत् ॥ ३८ ॥

इति धात्र्यरिष्टः ।

स्थिरादिभिः शृतं तोयं पानाहारे प्रशस्यते ।
पाण्डूनां कामलार्त्तानां मृद्वीकामलकाद्रसः ॥ ३९ ॥
पाण्डुरोगप्रशान्त्यर्थमिदमुक्तं चिकित्सितम् ।
विकल्प्यमेतद्भिषजा पृथग्दोषबलं प्रति ॥
वातिके स्नेहभूयिष्ठं पैत्तिके तिक्तशीतलम् ।
श्लैष्मिके कटुरूक्षोष्णं मिश्रं स्यात् सान्निपातिके ॥
निपातयेच्छरीरात्तु मृत्तिकां भक्षितां भिषक् ।
युक्तिज्ञः शोधनैस्तीक्ष्णैः प्रसमीक्ष्य बलाबलम् ॥

शुष्ककायस्य सर्पींषि बलाधानानि योजयेत् ॥ ४० ॥
व्योषं बिल्वं हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ।
मुस्तान्ययोरजः पाठा विड़ङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षारैस्तैः समैर्घृतम् ।
साधयित्वा पिवेद्युक्त्या नरो मृद्दोषपीड़ितः ॥
तद्वत् केशरयष्ट्याह्वपिप्पलीक्षारशाद्वलैः ॥ ४१ ॥
मृद्भक्षणाद्दातुरस्य लौल्यादविनिवर्त्तिनः ।
द्वेषार्थं भावितां कामं दद्यात् तद्दोषनाशनैः ॥
विड़ङ्गैलातिविषया निम्बपत्रेण पाठया ।
वार्त्ताकैः कटुरोहिण्या कौटजैर्मूर्व्वयापि वा ॥
यथादोषं प्रकुर्व्वीत भेषजं पाण्डुरोगिणाम् ।
क्रियाविशेष एषोऽस्य मतो हेतुविशेषतः ॥ ४२ ॥
तिलपिष्टनिभं यस्तु कामलावान् सृजेन्मलम् ।
श्लेष्मणा रुद्धमार्गं तं कफपित्तहरैर्जयेत् ॥ ४३ ॥
रूक्षशीतगुरुस्वादुव्यायामैर्वेगनिग्रहैः ।
कफसंमूर्च्छितो वायुः स्थानात् पित्तं क्षिपेद्बली ॥
हारिद्रमूत्रनेत्रत्वक् श्वेतवर्च्चास्तदा नरः ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥
दौर्ब्बल्याल्पाग्निपार्श्वार्त्तिहिक्काश्वासारुचिज्वरैः ।
क्रमेणाल्पेन सज्येत पित्ते शाखासमाश्रिते ॥ ४४ ॥
बर्हितित्तिरिदक्षाणां रुक्षाम्लकटुकै रसैः ।
शुष्कमूलककौलत्थैर्यूषैश्चान्नानि भोजयेत् ॥
मातुलुङ्गरसं क्षौद्रपिप्पलीमरिचान्वितम् ।

सनागरं पिबेत् पित्तं तथाप्नोति स्वमाशयम् ॥ ४५ ॥
कटुतीक्ष्णोष्णलवणैर्भृशोऽम्लैश्चाप्युपक्रमः।
आपित्तरोगाच्च कृतो वायोश्चाप्रशमाद्भवेत् ॥
स्वस्थानमागते पित्ते पुरीषे पित्तरञ्जिते।
निवृत्तोपद्रवस्यास्य पूर्व्वः कामलिको विधिः ॥ ४६ ॥
यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ॥
स्त्रीष्वहर्षोऽङ्गमर्द्दश्च श्वासस्तृष्णारुचिर्भ्रमः।
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥ ४७ ॥
गुडूचीस्वरसक्षीरसाधितं माहिषं घृतम्।
स पिबेत् त्रिवृतां स्निग्धो रसेनामलकस्य तु ॥
विरिक्तो मधुरप्रायं भजेत् पित्तानिलापहम्।
द्राक्षालेहं च पूर्व्वोक्तं सर्पींषि मधुराणि च ॥
यापनान् क्षीरवस्तींश्च शीलयेत् सानुवासनान्।
मार्द्वीकारिष्टयोगांश्च पिबेद् युक्त्याग्निवृद्धये ॥
कासिकञ्चाभयालेहं पिप्पलीं मधुकं बलाम्।
पयसा वा प्रयुञ्जीत यथादोषं यथाबलम् ॥ ४८ ॥

तत्र श्लोकौ।

पाण्डोः पञ्चविधस्योक्तं हेतुलक्षणभेषजम्।
कामला द्विविधा तेषां साध्यासाध्यत्वमेव च ॥
तेषां विकल्पो यश्चान्यो महाव्याधिर्हलीमकः।
तस्य चोक्तं समासेन लक्षणं सचिकित्सितम् ॥ ४९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
पाण्डुरोगचिकित्सितं नाम षोड़शोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

अथातो हिक्काश्वासचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

वैदेहीकार्थतत्त्वज्ञमात्रेयमृषिसुत्तमम् ।
अपृच्छत् संशयं धीमानग्निवेशः कृताञ्जलिः ॥
य इमे द्विविधाः प्रोक्तास्त्रिदोषास्त्रिप्रकोपणाः ।
रोगा नानात्मकास्तेषां कः को भवति दुर्ज्जयः ॥ २ ॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः ।
उवाच परमप्रीतः परमार्थविनिश्चयम् ॥
कामं प्राणहरा रोगा बहवो न तु ते तथा ।
यथा श्वासश्च हिक्का च प्राणानाशु निकृन्ततः ॥
अन्यैरप्युपसृष्टस्य रोगैर्जन्तोः पृथग्विधैः ।
अन्ते सञ्जायते हिक्का श्वासो वा तीव्रवेदनः ॥
कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ ।
हृदयस्य रसादीनां धातूनाञ्चोपशोषणौ ॥
तस्मात् साधारणावेतौ मतौ मम सुदुर्ज्जयौ ।
मिथ्योपचरितौ क्रुद्धौ हत आशीविषाविव ॥
पृथक् पञ्चविधावेतौ निर्द्दिष्टौ रोगसंग्रहे ।
तयोः शृणु समुत्थानं लिङ्गञ्च सभिषग्जितम् ॥ ३ ॥
रजसा धूमवाताभ्यां शीतस्थानाम्बुसेवनात् ।
आयामाद् ग्राम्यधर्म्माध्वरूक्षान्नविषमाशनात् ॥

आमप्रदोषादानाहाद्रौच्यादत्यपतर्पणात्।
मर्म्माभिघातादू दौर्ब्बल्याद्द्वन्द्वात् शुद्ध्यतियोगतः॥
अतीसारज्वरच्छर्द्दिप्रतिश्यायक्षयक्षतात्।
रक्तपित्तादुदावर्त्ताद्विसूच्यलसकादपि॥
पाण्डुरोगाद्विषाच्चैव प्रवर्त्तन्ते गदाविमौ।
निष्पावमाषपिण्याकतिलतैलनिषेवणात्॥
पिष्टशालूकविष्टम्भिविदाहिगुरुभोजनात्।
जलजानूपपिशितदध्यामक्षीरसेवनात्॥
अभिष्यन्द्युपचाराच्च श्लेष्मलानाञ्च सेवनात्।
कण्ठोरसोः प्रतीघातान्विबन्धैश्च पृथग्विधैः॥
मारुतः प्राणवाहीनि स्रोतांस्याविश्य कुप्यति।
उरस्थः कफमुद्धूय हिक्काश्वासान् करोति सः॥
घोरान् प्राणोपरोधाय प्राणिनां पञ्च पञ्च च॥ ४॥
उभयोः पूर्व्वरूपाणि शृणु वक्ष्याम्यतः परम्।
कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता॥
हिक्कानां पूर्व्वरूपाणि कुक्षेराटोप एव च॥
आनाहः पार्श्वशूलञ्च पीड़नं हृदयस्य च।
प्राणस्य च विलोमत्वं श्वासानां पूर्व्वलक्षणम्॥ ५॥
प्राणोदकान्नवाहीनि स्रोतांसि सकफोऽनिलः।
हिक्काः करोति संरुध्य तासां लिङ्गं पृथक् शृणु॥ ६॥
क्षीणमांसबलप्राणतेजसः सकफोऽनिलः।
गृहीत्वा सहसा कण्ठमुच्चैर्घोषवतीं भृशम्॥
करोति सततं हिक्कामेकद्विविगुणां तथा।

प्राणः स्रोतांसि मर्म्माणि संरुध्योष्माणमेव च ॥
संज्ञां मुष्णाति गात्रस्य स्तम्भं सञ्जनयत्यपि ।
मार्गञ्चैवान्नपानानां रुणद्ध्युपहतस्मृतेः ॥
साश्रुविप्लुतनेत्रस्य स्तब्धशङ्खच्युतभ्रुवः ।
सक्तजल्पप्रलापस्य निर्वृतिं नाधिगच्छतः ॥
महातेजा महावेगा महाशब्दा महाबला ।
महाहिक्केति सा नृणां सद्यः प्राणहरा मता ॥ ७ ॥

इति महाहिक्का ।

हिक्कते यः प्रवृद्धस्तु कृशो दीनमना नरः ।
जर्ज्जरेणोरसा कृच्छ्रं गम्भीरमनुनादयन् ॥
संक्षिपन् जृम्भमाणश्च तथाङ्गानि प्रसारयन् ।
पार्श्वे चोभे समायम्य कूजन् स्तम्भरुगर्द्दितः ॥
नाभेः पक्वाशयाद्वापि हिक्का चास्योपजायते ।
क्षोभयन्ती भृशं देहं नामयन्तीव ताम्यतः ॥
रुणद्ध्युच्छ्वासमार्गन्तु प्रनष्टबलचेतसः ।
गम्भीरा नाम सा तस्य हिक्का प्राणान्तिकी मता ॥ ८ ॥

इति गम्भीरा हिक्का ।

व्यपेता जायते हिक्का यान्नपाने चतुर्व्विधे ।
आहारपरिणामान्ते भूयश्च लभते बलम् ॥
प्रलापच्छर्द्द्यतीसारतृष्णार्त्तस्य विचेतसः ।
जृम्भिणो विप्लुताक्षस्य शुष्कास्यस्य विनामिनः ॥
पर्य्याध्मातस्य हिक्का या जत्रुमूलादसन्तता ।
सा व्यपेतेति विज्ञेया हिक्का प्राणोपरोधिनी ॥ ९ ॥

इति व्यपेता वा यमिका हिक्का ।

क्षुद्रवातो यदा कोष्ठाद्व्यायामपरिघट्टितः।
कण्ठं प्रपद्यते हिक्कां क्षुद्रां संजनयेत् तदा॥
अतिदुःखा न सा नोरःशिरोमर्म्मप्रबाधिनी।
न चोच्छ्वासान्नपानानां मार्गमावृत्य तिष्ठति॥
वृद्धिमायस्यतो याति भुक्तमात्रे च मार्द्दवम्।
यतः प्रवर्त्तते पूर्व्वं तत एव निवर्त्तते॥
हृदयं क्लोम कण्ठञ्च तालुकञ्च समाश्रिता।
मृद्वी सा क्षुद्रहिक्केति नृणां साध्या प्रकीर्त्तिता॥ १०॥

इति क्षुद्रहिक्का।

सहसात्यम्बुयुक्तैः पानान्नैः पीड़ितोऽनिलः।
ऊर्द्ध्वं प्रपद्यते कोष्ठात् मद्यैर्वातिमदप्रदैः॥
तथातिरोषभाष्याध्वहास्यभारातिवर्त्तनैः।
वायुः कोष्ठगतो धावन् पानभोज्यप्रपीड़ितः॥
उरःस्रोतः समाविश्य कुर्य्याद्धिक्कां ततोऽन्नजाम्।
तथाशनैरसम्बद्धं क्षुवंश्चापि स हिक्कते॥
न मर्म्मबाधाजननी नेन्द्रियाणां प्रबाधिनी।
हिक्का पीते तथा भुक्ते शमं याति च साऽन्नजा॥ ११॥

इत्यन्नजा हिक्का।

अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्॥
यमिका च प्रलापार्त्तितृष्णामोहसमन्विता।
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः॥

तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ १२ ॥
यदा स्रोतांसि संरुध्य मारुतः कफपूर्व्वकः ।
विष्वग् व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥ १३ ॥
उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।
विकृताक्षाननो बद्धमूत्रवर्च्चा विशीर्णवाक् ॥
दीनः प्रश्वसितञ्चास्य दूराद्विज्ञायते भृशम् ।
महाश्वासोपसृष्टः स क्षिप्रमेव विपद्यते ॥ १४ ॥
इति महाश्वासः ।
ऊर्द्ध्वं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः ।
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्द्दितः ॥
ऊर्द्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः ।
प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ितः ॥
ऊर्द्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते ।
मुह्यतस्ताम्यतश्चोर्द्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥ १५ ॥
इत्यूर्द्ध्वश्वासः ।
यस्तु श्वसिति विच्छिन्नं सर्व्वप्राणेन पीड़ितः ।
न वा श्वसिति दुःखार्त्तो मर्म्मच्छेदरुगर्द्दितः ॥
आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना ।
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन् नरः ।
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ १६ ॥
इति छिन्नश्वासः ।

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते ।
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीड़कम् ॥
प्रताम्यति स वेगेन कासते सन्निरुध्यते ।
प्रमोहं कासमानश्च स गच्छति मुहुर्म्मुहुः ॥
श्लेष्मण्यमुच्यमाने च भृशं भवति दुःखितः ।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम् ॥
तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ।
न चापि लभते निद्रां शयानः श्वासपीड़ितः ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान् ।
विशुष्कास्यो मुहुः श्वासी मुहुश्चैवावधम्यते ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च प्रवर्द्धते ।
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ १७ ॥

इति तमकश्वासः ।

ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम् ।
उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥
तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ।
मज्जतस्तमसीवास्य विद्यात् सन्तमकन्तु तम् ॥ १८ ॥

इति प्रतमकसन्तमकश्वासौ ।

रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ।

क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥
हिनस्ति न स गात्राणि न च दुःखो यथेतरे ।
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥
इन्द्रियाणां व्यथां नापि काञ्चिदापादयेद्रुजम् । १९ ॥

इति क्षुद्रश्वासः ।

स साध्य उक्तो बलिनः सर्व्वे चाव्यक्तलक्षणाः ।
इति श्वासाः समुद्दिष्टाः हिक्काश्चैव स्वलक्षणैः ॥ २० ॥
एषां प्राणहरा वर्ज्या घोरास्ते ह्याशुकारिणः ॥
भेषजैः साध्ययाप्यांस्तु क्षिप्रं भिषगुपाचरेत् ।
उपेक्षिता दहेयुर्हि शुष्कं कक्षमिवानलः ॥ २१ ॥
कारणस्थानमूलैक्यादेकमेव चिकित्सितम् ।
द्वयोरपि यथादृष्टमृषिभिस्तन्निबोधत ॥ २२ ॥
हिक्काश्वासार्द्दितं स्निग्धैरादौ स्वेदैरुपाचरेत् ।
आक्तं लवणतैलेन नाडीप्रस्तरसङ्करैः ॥
तैरस्य ग्रथितः श्लेष्मा स्रोतःस्वपि विलीयते ।
खानि मार्द्दवमायान्ति ततस्चाप्यनुलोमताम् ॥
यथाद्रिकुञ्जेष्वर्कांशुतप्तं विष्यन्दते हिमम् ।
श्लेष्मा तप्तः स्थिरो देहे स्वेदैर्विष्यन्दते तथा ॥
स्विन्नं ज्ञात्वा ततस्तूर्णं भोजयेत् स्निग्धमोदनम् ।
मत्स्यानां शूकराणां वा रसैर्दध्युत्तरेण वा ॥
ततः श्लेष्मणि संवृद्धे वमनं पाययेत् तु तम् ।
पिप्पलीसैन्धवक्षौद्रैर्युक्तं वाताविरोधि यत् ॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।

स्रोतःसु हि विशुद्धेषु चरत्यविहतोऽनिलः ॥ २३ ॥
लीनश्च दोषशेषः स्याद् धूमैस्तं निर्हरेद्बुधः ।
हरिद्रां यवमेरण्डमूलं लाक्षां मनःशिलाम् ॥
सदेवदार्व्वलं मांसीं पिष्ट्वा वर्त्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद्धूमं यवैर्वा घृतसंयुतैः ॥
मधूच्छिष्टं सर्ज्जरसं घृतं मल्लकसंपुटे ।
कृत्वा धूमं पिबेच्छृङ्गं बालं वा स्नायु वा गवाम् ॥
श्योणाकवर्द्धमानानां नाड़ीं शुष्कां कुशस्य वा ।
पद्मकं गुग्गुलुं लोध्रं शल्लकीं वा घृताप्लुताम् ॥ २४ ॥
स्वरक्षीणातिसारास्रक्पित्तदाहानुबन्धजान् ।
मधुरस्निग्धशीताद्यैर्हिक्काश्वासानुपाचरेत् ॥ २५ ॥
न स्वेद्याः पित्तदाहार्त्ता रक्तस्वेदातिवर्त्तिनः ।
क्षीणधातुबला रूक्षा गर्भिण्यश्चापि पित्तलाः ॥ २६ ॥
कामं कण्ठमुरः कोष्णैः स्नेहसेकैः सशर्करैः ।
उत्कारिकोपनाहैश्च स्वेदयेन्मृदुभिः क्षणम् ॥
तिलोमामाषगोधूमचूर्णैर्वातहरैः सह ।
स्नेहैश्चोत्कारिका साम्लैः सक्षीरैर्वा कृता हिता ॥ २७ ॥
नवज्वरामदोषेषु रूक्षस्वेदं विलङ्घनम् ।
समीक्ष्योल्लेखनं वापि कारयेल्लवणाम्बुना ॥
अतियोगाद्धतं वातं दृष्ट्वा वातहरैर्भिषक् ।
रसाद्यैर्नातिशीतोष्णैरभ्यङ्गैश्च शमं नयेत् ॥ २८ ॥
उदावर्त्ते तथाध्माने मातुलुङ्गाम्लवेतसैः ।
हिङ्गुपीलुविड़ैश्चान्नं युक्तं स्यादनुलोमनम् ॥ २९ ॥

हिक्काश्वासामयी त्वेको बलवान् दुर्ब्बलोऽपरः ।
कफाधिकस्तथैवैको रूक्षो बह्वनिलोऽपरः ॥
कफाधिके बलस्थे च वमनं सविरेचनम् ।
कुर्य्यात् पथ्याशिने धूमलेहादि शमनं ततः ॥
वातिकान् दुर्ब्बलान् बालान् वृद्धांश्चानिलसूदनैः ॥
तर्पयेदेव शमनैः स्नेहयूषरसादिभिः ॥ ३० ॥
अनुत्क्लिष्टकफास्विन्नदुर्ब्बलानां विशोधनात् ।
वायुर्लब्धास्पदो मर्म्म संशोष्याशु हरेदसून् ॥
दृढान् बहुकफांस्तस्माद्रसैरानूपवारिजैः ।
तृप्तान् विशोधयेत् स्विन्नान् बृंहयेदितरान् भिषक् ॥ ३१॥
बर्हितित्तिरिदक्षाश्च जाङ्गलाश्च मृगद्विजाः ।
दशमूलीरसे सिद्धाः कौलत्थे वा रसे हिताः ॥ ३२ ॥
निदिग्धिकां बिल्वमध्यं कर्कटाख्यां दुरालभाम् ।
त्रिकण्टकं गुडूचीञ्च कुलत्थांश्च सचित्रकान् ॥
जले पक्त्वा रसः पूतः पिप्पलीघृतभर्ज्जितः ।
सनागरः सलवणः स्याद् यूषो भोजने हितः ॥
रास्नां बलां पञ्चमूलं ह्रस्वं मुद्गान् सचित्रकान् ।
पक्त्वाम्भसि रसे तस्मिन् यूषः साध्यश्च पूर्व्ववत् ॥
पल्लवान् मातुलुङ्गस्य निम्बस्य कूलकस्य च ।
पक्त्वा मुद्गांश्च सव्योषान् क्षारयूषं विपाचयेत् ॥
दत्त्वा सलवणं क्षारं शिग्रूणि मरिचानि च ।
युक्त्या संसाधितो यूषो हिक्काश्वासविकारनुत् ॥
कासमर्द्दकपत्राणां यूषः शोभाञ्जनस्य च ।

शुष्कमूलकयूषश्च हिक्काश्वासनिबर्हणः ॥
सदधिव्योषसर्पिष्को यूषो वार्त्ताकजो हितः ॥ ३३ ॥
शालिषष्टिकगोधूमयवान्नान्यनवानि च ॥
हिङ्गुसौवर्च्चलाजाजीविड़पौष्करचित्रकैः ।
सिद्धा कर्कटशृङ्ग्या च यवागूः श्वासहिक्किनाम् ॥
दशमूलीशटीरास्नापिप्पलीबिल्वपौष्करैः ।
शृङ्गीतामलकीभार्गीगुडूचीनागरर्द्धिभिः ॥
यवागूं विधिना सिद्धां कषायं वा पिबेन्नरः ।
कासहृद्ग्रहपार्श्वार्त्तिहिक्काश्वासप्रशान्तये ॥ ३४ ॥
पुष्कराह्वशटीव्योषमातुलुङ्गाम्लवेतसैः ।
योजयेदन्नपानानि ससर्पिर्विड़हिङ्गुभिः ॥
दशमूलस्य वा क्वाथमथवा देवदारुणः ।
तृषितो मदिरां वापि हिक्काश्वासी पिबेन्नरः ॥
पाठां मधुरसां रास्नां सरलं देवदारु च ।
प्रक्षाल्य जर्ज्जरीकृत्य सुराभाण्डे निधापयेत् ॥
तन्मन्दलवणां कृत्वा भिषक् प्रसृतिसम्मितम् ।
पाययेत् तु ततो हिक्का श्वासश्चैवोपशाम्यति ॥
हिङ्गु सौवर्च्चलं कोलं समङ्गां पिप्पलीं बलाम् ।
मातुलुङ्गरसे पिष्टमारनालेन वा पिबेत् ॥
सौवर्च्चलं नागरञ्च भार्गीं द्विशर्करायुतम् ।
उष्णाम्बुना पिबेदेतद्धिक्काश्वासविकारनुत् ॥
भार्गीनागरयोः कल्कं मरिचक्षारयोस्तथा ।
पीतद्रुचित्रकास्फोतामूर्व्वाणाञ्चाम्बुना पिबेत् ॥ ३५ ॥

मधूलिका तुगाक्षीरी नागरं पिप्पली तथा।
उत्कारिका घृते सिद्धा श्वासे पित्तानुबन्धजे॥
श्वाविधं शशमांसञ्च शल्लकस्य च शोणितम्।
पिप्पलीघृतसिद्धानि श्वासे वातानुबन्धजे॥
सुवर्च्चलारसो दुग्धं, घृतं त्रिकटुकायुतम्।
शाल्योदनश्चानुपानं वातपित्तानुगे हितम्॥
सिरीषपुष्पस्वरसः सप्तपर्णस्य वा पुनः।
पिप्पलीमधुसंयुक्तः कफपित्तानुगे हितः॥
मधुकं पिप्पलीमूलं गुड़ो गोशकृतो रसः।
घृतं क्षौद्रं श्वासकासहिक्काभिष्यन्दिनां हितम्॥ ३६॥
खराश्वोष्ट्रवराहाणां मेषस्य च गजस्य च।
शकृद्रसं बहुकफेष्वेकैकं मधुना पिबेत्॥
क्षारं वाप्यश्वगन्धाया लेहयेत् क्षौद्रसर्पिषा।
मयूरपादनालं वा शललं शल्लकस्य वा॥
श्वाविद्गोधर्क्षचाषाणां रोमाणि कुररस्य वा।
एकद्विशफशृङ्गाणि चर्म्मास्थीनि खुरांस्तथा॥
सर्व्वाणोकैकशो वापि दग्ध्वा क्षौद्रघृतान्वितम्।
चूर्णं लीढ्वा जयेत् कासं हिक्कां श्वासञ्च दारुणम्॥
एते हि कफसंरुद्धगतिप्राणप्रकोपहाः।
तस्मात् तन्मार्गशुद्ध्यर्थं देया लेहा न निष्कफे॥ ३७॥
कासिने छर्द्दनं दद्यात् स्वरभङ्गे च बुद्धिमान्।
वातश्लेष्महरैर्युक्तं तमके तु विरेचनम्॥
उदीर्य्यते भृशतरं मार्गरोधाद्वहज्जलम्।

यथा तथानिलस्तस्य मार्गं नित्यं विशोधयेत् ॥ ३८ ॥
शटीचोरकजीवन्तीत्वङ्मुस्तं पुष्कराह्वयम् ।
सुरसं तामलक्येला पिप्पल्यगुरुनागरम् ॥
बालकञ्च समं चूर्णं कृत्वाष्टगुणशर्करम् ।
सर्व्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत् ॥ ३९ ॥
इति शट्यादि चूर्णम् ॥

मुक्ताप्रवालवैदूर्य्यं शङ्खः स्फटिकमञ्जनम् ।
ससारकाचगन्धार्कसूक्ष्मैलालवणद्वयम् ॥
ताम्रायोरजसी रूप्यं सौगन्धिककशेरुकम् ।
जातीफलं शणाद्बीजमपामार्गस्य तण्डुलाः ॥
एषां पाणितलं चूर्णं तुल्यानां क्षौद्रसर्पिषा ।
हिक्कां श्वासञ्च कासञ्च लीढ़माशु नियच्छति ॥
अञ्जनात् तिमिरं काचं नीलिकां पिष्टकं तमः ।
पिल्लं कण्डमभिष्यन्दमर्म्मचैव प्रणाशयेत् ॥ ४० ॥
इति मुक्ताद्यचूर्णम् ।

शटीपुष्करमूलानां चूर्णमामलकस्य च ।
मधुना संयुतं लेह्यं चूर्णं वा काललौहजम् ॥
सशर्करां तामलकीं द्राक्षां गोऽश्वशकृद्रसम् ।
तुल्यं गुड़ं नागरञ्च प्राशयेत् नावयेत् तथा ॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ।
नावयेच्चन्दनं वापि नारीक्षीरेण संयुतम् ॥
सुखोष्णं घृतमण्डं वा सैन्धवेनावचूर्णितम् ।
नावयेन्मक्षिकाविष्ठामलक्तकरसेन वा ॥

स्त्रियाः स्तन्येन सिद्धं वा सर्पिर्मधुरकैरपि ।
पीतं नस्तो निषिक्तं वा सद्यो हिक्कां नियच्छति ॥
सक्तदुष्णं सकृच्छीतं व्यत्यासाद्धिक्किनां पयः ।
पाने नस्तःक्रियायां वा शर्करामधुसंयुतम् ॥ ४१ ॥
अधोभागे घृतं सिद्धं सद्यो हिक्कां नियच्छति ।
पिप्पलीमधुयुक्तौ वा रसौ धात्रीकपित्थयोः ॥
लाक्षालाजमधुद्राक्षापिप्पल्यश्वशकृद्रसान् ।
लिह्यात् कोलं मधुद्राक्षापिप्पलीनागराणि वा ॥
शीताम्बुसेकः सहसा त्रासो विस्मापनं भयम् ।
क्रोधहर्षप्रियोद्वेगा हिक्काप्रच्यवना मताः ॥ ४२ ॥
हिक्काश्वासविकाराणां निदानं यत् प्रकीर्त्तितम् ।
वर्ज्ज्यमारोग्यकामैस्तद्धिक्काश्वासविकारिभिः ॥ ४३ ॥
शुष्कक्षीणकफोरस्का हिक्काश्वासानुबन्धिनः ।
प्रकृत्या रूक्षदेहा ये सर्पिर्भिस्तानुपाचरेत् ॥ ४४ ॥
दशमूलरसे सर्पिर्दधिमण्डेन साधयेत् ।
कृष्णासौवर्च्चलक्षारवयःस्थाहिङ्गुचोरकैः ॥
कायस्थया च संसिद्धं हिक्काश्वासौ प्रणाशयेत् ॥ ४५ ॥

इति दशमूलाद्यघृतम् ।

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ।
भूतीकं पौष्करं मूलं पलाशश्चित्रकः शटी ॥
सौवर्च्चलं तामलकी सैन्धवं बिल्वपेशिका ।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः ॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोये चतुर्गुणे ।

एतद् यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः ॥
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव च ॥ ४६ ॥

इति तेजोवत्यादिघृतम्।

मनःशिलासर्ज्जरसलाक्षारजनिपद्मकैः।
मञ्जिष्ठैलैश्च कर्षांशैः प्रस्थः सिद्धो घृतादिह ॥ ४७ ॥

इति मनःशिलादि घृतम्।

जीवनीयोपसिद्धं वा सक्षौद्रं लेहयेद् घृतम्।
वासाघृतं दाधिकं वा पिबेत्त्र्यूषणमेव च ॥ ४८ ॥
यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम्।
भेषजं पानमन्नं वा तद्धितं श्वासहिक्किने ॥
वातकृद्वा कफहरं कफकृद्वानिलापहम्।
कार्य्यं नैकान्तिकं ताभ्यां प्रायः श्रेयोऽनिलापहम् ॥
सर्व्वेषां वृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत्।
अवश्यं शमनेऽपायो भृशोऽशक्यश्च कर्षणे ॥
तस्माच्छुद्धानशुद्धांश्च शमनैर्वृंहणैरपि।
हिक्काश्वासार्द्दितान् जन्तून् प्रायशः समुपाचरेत् ॥ ४९ ॥

तत्र श्लोकः।

दुर्ज्जयत्वे समुत्पत्तौ क्रियैकत्वे च कारणम्।
लिङ्गं पथ्यञ्च हिक्कानां श्वासानाञ्चेह दर्शितम् ॥ ५० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
हिक्काश्वासचिकित्सितं नाम सप्तदशोऽध्यायः ॥१७॥

# अष्टादशोऽध्यायः ।

अथातः कासचिकित्सितं व्याख्यास्याम इति ह

स्माह भगवानात्रेयः ॥ १ ॥

तपसा तेजसा धृत्या श्रिया च परयान्वितः ।
आत्रेयः कासशान्त्यर्थमिदमाह चिकित्सितम् ॥ २ ॥
वातादिजास्त्रयो ये च क्षतजः क्षयजस्तथा ।
पञ्चैते स्युर्नृणां कासा वर्द्धमानाः क्षयप्रदाः ॥ ३ ॥
पूर्व्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥
अधःप्रतिहतो वायुरूर्द्ध्वस्रोतःसमाश्रितः ।
उदानभावमापन्नः कण्ठे सक्तस्तथोरसि ॥
आविश्य शिरसः खानि सर्व्वाणि प्रतिपूरयन् ।
आभञ्जन्नाक्षिपन् देहं हनुमन्ये तथाक्षिणी ॥
नेत्रपृष्ठमुरःपार्श्वे निर्भुज्य स्तम्भयंस्ततः ।
शुष्को वा सकफो वापि कासनात् कास उच्यते ॥
प्रतिघातविशेषेण तस्य वायोः सरंहसः ।
वेदनाशब्दवैशेष्यं कासानामुपजायते ॥ ५ ॥
रूक्षशीतकषायाल्पप्रमितानशनं स्त्रियः ।
वेगधारणमायासो वातकासप्रवर्त्तकाः ॥ ६ ॥
हृत्पार्श्वोरःशिरःशूलस्वरभेदकरो भृशम् ।
शुष्कोरःकण्ठवक्त्रस्य हृष्टलोम्नः प्रताम्यतः ॥

निर्घोषदैन्यस्तनामास्यदौर्ब्बल्यक्षोभमोहकृत् ।
शुष्कः कासः कफं शुष्कं कृच्छ्रान्मुक्त्वाल्पतां व्रजेत् ॥
स्निग्धाम्ललवणोष्णैश्च भुक्तपीतैश्च शाम्यति ।
ऊर्द्ध्ववातस्य जीर्णेऽन्ने वेगवान् मारुतो भवेत् ॥ ७ ॥
कटुकोष्णविदाह्यम्लक्षाराणामतिसेवनम् ।
पित्तकासकरं क्रोधः सन्तापश्चाग्निसूर्य्यजः ॥ ८ ॥
पीतनिष्ठीवनाक्षित्वं तिक्तास्यत्वं स्वरामयः ।
उरोधूमायनं तृष्णा दाहो मोहोऽरुचिर्भ्रमः ॥
प्रततं कासमानश्च ज्योतींषीव च पश्यति ।
श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिके ॥ ९ ॥
गुर्व्वभिष्यन्दिमधुरस्निग्धस्वप्नाविचेष्टनैः ।
वृद्धः श्लेष्मानिलं रुद्ध्वा कफकासमुदीरयेत् ॥ १० ॥
मन्दाग्नित्वारुचिच्छर्द्दिपीनसोत्क्लेशगौरवैः ।
लोमहर्षास्यमाधुर्य्यक्लेदसंसदनैर्युतम् ॥
बहुलं मधुरं स्निग्धं निष्ठीवति घनं कफम् ।
कासमानो ह्यरुग्वक्षः सम्पूर्णमिव मन्यते ॥ ११ ॥
अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ।
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत् ॥ १२ ॥
स पूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम् ।
कण्ठेन रुजतात्यर्थं विरुग्णेनेव चोरसा ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीड़ाभितापिना ॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीड़ितः ।

पारावत इवाकूजन् कासवेगात् च्चतोद्भवात् ॥ १३ ॥
विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्।
घृणिनां शोचतां नॄणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताः च्चयजं कासं कुर्य्युर्देहच्चयप्रदम् ॥ १४ ॥
दुर्गन्धं हरितं रक्तं ष्ठीवेत् पूयोपमं कफम्।
कासमानश्च हृदयं स्थानभ्रष्टं स मन्यते ॥
अकस्मादुष्णशीतार्त्तो बह्वाशी दुर्ब्बलः क्रुशः।
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनः ॥
पाणिपादतलौ श्लक्ष्णौ घृणावानभ्यसूयकः।
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः ॥
भिन्नसंघातवर्च्चस्त्वं स्वरभेदोऽनिमित्ततः।
इत्येष च्चयजः कासः च्चीणानां देहनाशनः ॥ १५ ॥
साध्यो बलवतां वा स्याद् याप्यस्त्वेवं च्चतोत्थितः।
नवौ कदाचित् सिध्येतामेतौ पादगुणान्वितौ।
स्थविराणां जराकासः सर्व्वो याप्यः प्रकीर्त्तितः ॥ १६ ॥
त्रीन् साध्यान् साधयेत् पूर्व्वान् पथ्यैर्याप्यांस्तु यापयेत्।
चिकित्सामत ऊर्द्ध्वन्तु शृणु कासनिबर्हिणीम् ॥ १७ ॥
रूच्चस्यानिलजं कासमादौ स्नेहैरुपाचरेत्।
सर्पिर्भिर्वस्तिभिः पेया यूषच्चीररसादिभिः ॥
वातघ्नसिद्धैः स्नेहाद्यैर्धूमैर्लेहैश्च युक्तितः।
अभ्यङ्गैः परिषेकैश्च स्निग्धैः स्वेदैश्च बुद्धिमान् ॥
वस्तिभिर्बद्धविड्वातं शुष्कोर्द्ध्वं च्चौद्ध्वभक्तिकैः।
घृतैः सपित्तं सकफं जयेत् स्नेहविरेचनैः ॥ १८ ॥

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ १९ ॥

इति कण्टकारीघृतम् ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
धान्यपाठावचारास्नायष्ट्याह्वक्षारहिङ्गुभिः ॥
कोलमात्रैर्घृतप्रस्थाद्दशमूलीरसाढ़के ।
सिद्धाच्चतुर्थिकां पीत्वा पेयां मण्डं पिवेदनु ॥
तच्छ्वासकासहृत्पार्श्वग्रहणीदोषगुल्मनुत् ।
पिप्पल्याद्यं घृतञ्चैतदात्रेयेण प्रकीर्त्तितम् ॥ २० ॥

इति पिप्पल्यादिघृतम् ।

त्र्यूषणं त्रिफलां द्राक्षां काश्मर्य्याणि परूषकम् ।
द्वे पाठे देवदार्व्वृद्धिं स्वगुप्तां चित्रकं शटीम् ॥
व्याघ्रीं तामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टकं विदारीञ्च पिष्ट्वा कर्षसमान् घृतात् ॥
प्रस्थं चतुर्गुणक्षीरे सिद्धं कासहरं पिवेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
त्र्यूषणाद्यन्तु विख्यातमेतद् घृतमनुत्तमम् ॥ २१ ॥

इति त्र्यूषणाद्यं घृतम् ।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ।
पलिकान् मानिकांशांस्त्रीन् कुलत्थान् बदरान् यवान् ॥
तुलार्द्धञ्चाजमांसस्य पादशेषेण तेन च ।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥

सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः ।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥
पञ्चकासान् शिरःकम्पं शूलं वङ्क्षणयोनिजम् ।
सर्व्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्द्ध्वानिलान् जयेत् ॥ २२ ॥

इति रास्नाघृतम् ।

विड़ङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।
भार्गी क्षारश्च तच्चूर्णं पिवेद्वा घृतमात्रया ॥
सकफेऽनिलजे कासे श्वासे हिक्काहताग्निषु ।
द्वौ क्षारौ पञ्चकोलानि पञ्चैव लवणानि च ॥
शटीनागरकोदीच्यकल्कं वा वस्त्रगालितम् ।
पाययेत्तद् घृतोन्मिश्रं वातकासनिवर्हणम् ॥
दुरालभां शटीं द्राक्षां शृङ्गवेरं सितोपलाम् ।
लिह्यात् कर्कटशृङ्गीञ्च कासे तैलेन वातजे ॥
दुःस्पर्शां पिप्पलीं मुस्तं भार्गीं कर्कटकीं शटीम् ।
पुराणगुड़तैलाभ्यां चूर्णितं वापि लेहयेत् ।
विड़ङ्गं सैन्धवं कुष्ठं व्योषं हिङ्गु मनःशिलाम् ॥
हिक्काश्वासे च कासे च लिह्यात् क्षौद्रघृताप्लुतान् ॥ २३ ॥
चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम् ।
शटीं पुष्करमूलञ्च श्रेयसीं सुरसां वचाम् ॥
भार्गीं छिन्नरुहां रास्नां कर्कटाह्वाञ्च कार्षिकान् ।
कल्कान् निदिग्धार्द्धतुलां निक्काथ्य पलविंशतिम् ॥
दत्त्वा मत्स्यण्डिकायाश्च घृताच्च कुड़वं पचेत् ।
सिद्धं शीतं पृथक् क्षौद्रपिप्पलीकुड़वान्वितम् ॥

चतुष्पलं तुगाक्षीर्य्याश्च णीतं तत्र दापयेत्।
लेहयेत् कासहृद्रोगश्वासगुल्मनिवारणम्॥ २४॥

इति चित्रकादिलेहः।

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान्॥
भार्गीं पुष्करमूलञ्च द्विपलांशं यवाढ़कम्।
हरीतकीशतं भद्रं जले पञ्चाढ़के पचेत्॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम्।
पचेद् गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात्॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद्द्वे चाभये नित्यमतः खादेद्रसायनात्॥
तद्बलीपलितं हन्ति वर्णायुर्बलवर्द्धनम्।
पञ्च कासान् क्षयं श्वासं हिक्काञ्च विषमज्वरान्॥
हन्यात् तथार्शोग्रहणीहृद्रोगारुचिपीनसान्।
अगस्त्यविहितं श्रेष्ठं रसायनमिदं शुभम्॥ २५॥

इत्यगस्त्यहरीतकी।

सैन्धवं पिप्पलीं भार्गीं शृङ्गवेरं दुरालभाम्।
दाड़िमाम्लेन कोष्णेन भार्गीनागरमम्बुना॥
पिवेत् खदिरसारं * वा मदिरादधिमस्तुभिः।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम्॥ २६॥
शिरसः पीड़ने स्रावे नासाया हृदि ताम्यति।
कासप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत्॥

* बदरसारमिति पाठान्तरम्।

दशाङ्गुलोन्मितां नाड़ीमथवाष्टाङ्गुलोन्मिताम् ।
शरावसंपुटे छिद्रे कृत्वा जिह्मां विचक्षणः ॥
वैरेचनं मुखेनैव कासवान् धूममापिबेत् ।
तमुरः केवलं प्राप्तं मुखेनैवोद्वमेत् पुनः ॥
स ह्यस्य तैक्ष्ण्यात्तद्विक्लेद्य श्लेष्माणमुरसि स्थितम् ।
निष्कृष्य शमयेत् कासं वातश्लेष्मसमुद्भवम् ॥
मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं तस्यानु च क्षीरं सुखोष्णं सगुड़ं पिबेत् ॥
एष कासान् पृथग्दोषसन्निपातसमुद्भवान् ।
धूमो हन्यादसंसिद्धानन्यै र्योगशतैरपि ॥
प्रपौण्डरीकं मधुकं शार्ङ्गेष्टां समनःशिलाम् ।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥
कृत्वा वर्त्तिं पिबेद्धूमं क्षौमचेलानुवर्त्तिताम् ।
घृताक्तामनु च क्षीरं गुड़ोदकमथापि वा ॥
मनःशिलैलामरिचक्षाराञ्जनकुटन्नटैः ।
वंशलोचनसैव्यालक्षौमलक्तकरोहिषैः ॥
पूर्व्वकल्पेन धूमोऽयं सानुपानो विधीयते ।
आलं मनःशिला तद्वत् पिप्पलीनागरैः सह ॥
त्वगेङ्गुदी वृहत्यौ च तालमूली मनःशिला ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः ॥ २७ ॥
धान्वानूपौदकैः शालियवगोधूमषष्टिकान् ॥
रसैर्मांसात्मगुप्तानां यूषैर्वा भोजयेद्धितान् । २८ ॥
यमानीपिप्पलीबिल्वशटीचित्रकपुष्करैः ।

रास्नाजाजीपृथक्पर्णीपलाशतिक्तभेषजैः ॥
स्निग्धाम्ललवणां सिद्धां पेयामनिलजे पिबेत् ।
कटीहृत्पार्श्वकोष्ठार्त्तिश्वासहिक्काप्रणाशिनीम् ॥
दशमूलीरसे तद्वत् पञ्चकोलगुड़ान्विताम् ।
सिद्धां समतिलां दद्यात् क्षीरे वापि ससैन्धवाम् ॥
मातुलुङ्गकौक्कुटवाराहैरामिषैर्वा घृतान्विताम् ।
ससैन्धवां पाययेत यवागूं वातकासिनम् ॥ २९ ॥
वास्तूको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च ।
शस्यन्ते वातकासेषु स्वाद्वम्ललवणानि च ॥ ३० ॥
पित्तकासेतु सकफे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्य्यमधुकक्वथितैर्जलैः ॥
यष्ट्याह्वफलकल्कैर्वा विदारीक्षुरसायुतैः ।
हृतदोषस्ततः शीतं मधुरञ्च भजेत् क्रमम् ॥
पैत्ते कासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥
स्निग्धशीतस्तनुकफे रूक्षशीतः घने कफे ।
क्रमः कार्य्यः परं भोज्यैः स्नेहैर्लेहैश्च शस्यते ॥ ३१ ॥
शृङ्गाटकं पद्मबीजं नीली सारिवाः पिप्पली ।
पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्व्वामहौषधम् ॥
लाजामृताफलं द्राक्षा त्वक् क्षीरी पिप्पली सिता ।
पिप्पली पद्मकं द्राक्षा बृहत्याश्च फलाद्रसः ॥

खर्ज्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते ।
घृतक्षौद्रयुता लेहाः श्लोकार्द्धैः पित्तकासिनाम् ॥
शर्कराचन्दनद्राक्षामधुधात्रीफलोत्पलैः ।
पैत्ते समुस्तमरिचः सकफे सघृतोऽनिले ॥
मृद्वीकार्द्धशतं त्रिंशत् पिप्पलीः शर्करापलम् ।
लेहयेन्मधुना गोर्ल्या क्षीरे पक्त्वा शकृद्रसम् ॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।
लाजामुस्तशटीरास्नाधात्रीफलविभीतकैः ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहः कासविनाशनः ।
श्वासं हिक्कां क्षयञ्चैव हृद्रोगञ्च प्रणाशयेत् ॥
पिप्पल्यामलकं द्राक्षां लाक्षां लाजान् सितोपलाम् ।
क्षीरे पक्त्वा घनं शीतं लिह्यात् क्षौद्राष्टभागिकम् ॥
विदारीक्षुमृणालानां रसान् क्षीरं सितोपलाम् ।
पिबेद् वा मधुसंयुक्तं पित्तकासहरं परम् ॥ ३२ ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैर्व्वा तिक्तकैर्मात्रया हिताः ॥
घनश्लेष्मणि लेहास्तु तिक्ता मधुरसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षूणां रसाः पयः ।
सर्व्वञ्च मधुरं शीतमविदाहि प्रशस्यते ॥ ३३ ॥
काकोलीवृहतीमेदायुग्मैः सवृषनागरैः ।
पित्तकासे रसान् क्षीरं यूषांश्चाप्युपकल्पयेत् ॥ ३४ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।

कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥
सितास्थिरापृश्निपर्णीश्रावणीबृहतीयुगैः।
वीरर्षभककाकोलीतामलक्यृद्धिजीवकैः ॥
शृतं पयः पिबेत् कासी ज्वरी दाही क्षतक्षयी ॥ ३५ ॥
तज्जं वा साधयेत् सर्पिः सक्षीरेक्षुरसं भिषक्।
जीवकाद्यैर्मधुरकैः फलैश्चाभिषुकादिभिः ॥
कल्कैस्त्रिकार्षिकैः सिद्धे पूतशीते प्रदापयेत्।
शर्करापिप्पलीचूर्णं त्वक्क्षीर्य्या मरिचस्य च ॥
शृङ्गाटकस्य चावाप्य क्षौद्रगर्भान् पलोन्मितान्।
गुडान् गोधूमचूर्णेन कृत्वा खादेद्धिताशनः ॥
शुक्रासृग्दोषशोषेषु कासे क्षीणक्षतेषु च ॥ ३६ ॥
शर्करानागरोदीच्यं कण्टकारीं शटीं समाम्।
पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम् ॥ ३७ ॥
महिष्यजाविगोक्षीरधात्रीफलरसैः समैः।
सर्पिः सिद्धं पिबेद् युक्त्या पित्तकासनिबर्हणम् ॥ ३८ ॥
बलिनं वमनैरादौ शोधयेत् कफकासिनम्।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥ ३९ ॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥
धान्वबैल्वरसैः स्नेहैः तिलसर्षपबिल्वजैः।
मध्वम्लोष्णाम्बु तक्रं वा मद्यं वा निगदं पिबेत् ॥ ४० ॥
पौष्करारग्वधं मूलं पटोलं तैर्निशास्थितम्।
जलं मधुयुतं पेयं कालेष्वन्नस्य त्रिषु ॥

कट्फलं कत्तृणं भार्गी मुस्तं धान्यवचाभयाः ।
शुण्ठी पर्पटकः शृङ्गी सुराह्वञ्च शृतं जले ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूने श्वासहिक्काज्वरेषु च ॥
पाठां शुण्ठीं शटीं मूर्व्वां गवाक्षीं मुस्तपिप्पलीम् ।
पिष्ट्वाऽघर्म्माम्बुना हिङ्गुसैन्धवाभ्यां युतं पिवेत् ॥
नागरातिविषामुस्तं शृङ्गीकर्कटकस्य च ।
हरीतकीं शटीञ्चैव तेनैव विधिना पिवेत् ॥ ४१ ॥
तैले भृष्टञ्च पिप्पल्याः कल्कार्द्धं ससितोपलम् ।
पिवेद्वा श्लेष्मकासघ्नं कुलत्थसलिलाप्लुतम् ॥ ४२ ॥
कासमर्द्दाश्वविड्भृङ्गराजी वार्त्ताकजा रसाः ।
सक्षौद्राः कफकासघ्नाः सुरसस्यासितस्य च ॥ ४३ ॥
देवदारु शटी रास्ना कर्कटाख्या दुरालभा ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
पथ्या तामलकी धात्री भद्रमुस्तानि पिप्पली ।
देवदार्व्वभया मुस्तं पिप्पली विश्वभेषजम् ॥
विशाला पिप्पली मुस्तं त्रिवृता चेति लेहयेत् ।
चतुरो मधुना लेहान् कफकासहरान् भिषक् ॥ ४४ ॥
सौवर्च्चलाभयाधात्रीपिप्पलीक्षारनागरम् ।
चूर्णितं सर्पिषा वातकफकासहरं पिवेत् ॥ ४५ ॥
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।

पुष्कराह्वशटीबिल्वसुरसव्योषहिङ्गुभिः ॥
पेयानुपेयं तत् पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्व्वेषु कफवातात्मकेषु च ॥ ४६ ॥
इति दशमूलादिघृतम्।

समूलपत्रशाखायाः कण्टकार्य्या रसाढके।
घृतप्रस्थं बलाव्योषविड़ङ्गशठिचित्रकैः*॥
सौवर्च्चलयवक्षारबिल्वामलकपौष्करैः।
वृश्चीरवृहतीपथ्यायमानीदाड़िमर्द्धिभिः॥
द्राक्षापुनर्नवाचव्यदुरालभाम्लवेतसैः।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तत् सर्व्वकासेषु हिक्काश्वासेषु शस्यते।
कण्टकारीघृतं ह्येतत् कफव्याधिनिसूदनम् ॥ ४७ ॥
इति कण्टकारीघृतम्।

कुलत्थरससंयुक्तं पञ्चमूलशृतं † घृतम्।
पाययेत् कफजे कासे हिक्काश्वासे च शस्यते ॥ ४८ ॥
इति कुलत्थादि घृतम्।

धूमांस्तानेव दद्याच्च ये प्रोक्ता वातकासिनाम्।
कोशातकीफलान्मध्यं पिवेद्वा समनःशिलम् ॥ ४९ ॥
तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजे।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥
वाते कफानुबन्धे तु कुर्य्यात् कफहरीं क्रियाम्।

* पिप्पलीमूलपौष्करैरिति पाठान्तरम्।
† पञ्चकोलशृतमिति वा पाठः।

पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥ ५० ॥
आर्द्रे विरूक्षणं शुष्के स्निग्धं वातकफात्मके ।
कासेऽन्नपानं कफजे सपित्ते तिक्तसंयुतम् ॥ ५१ ॥
कासमात्ययिकं मत्वा क्षतजं त्वरया जयेत् ।
मधुरैर्जीवनीयैश्च बलमांसविवर्द्धनैः ॥ ५२ ॥
पिप्पलीमधुकं लिङ्गं कार्षिकं ससितोपलम् ।
प्रास्थिकं गव्यमाजञ्च क्षीरमिक्षुरसस्तथा ॥
यवगोधूममृद्वीकाचूर्णमामलकाद्रसः ।
तैलञ्च प्रसृतांशानि तत् सर्व्वं मृदुनाग्निना ॥
पचेल्लेहं घृतक्षौद्रयुक्तः स क्षतकासहा ।
श्वासहृद्रोगकार्श्येषु हितो वृद्धाल्परेतसी ॥ ५३ ॥
इति पिप्पल्यादि लेहः ।

क्षतकासाभिभूतानां वृत्तिः स्यात् पित्तकासिकी ।
क्षीरसर्पिर्मधुप्राया संसर्गे तु विशेषणम् ॥
वातपित्तार्द्दितेऽभ्यङ्गो गात्रभेदे घृतैर्हितः ।
तैलैर्मारुतरोगघ्नैः पीड्यमाने च वायुना ॥
हृत्पार्श्वार्त्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ।
सदाहं कासिनो रक्तं ष्ठीवतः सबलेऽनले ।
मांसोचितेभ्यः क्षामेभ्यो लावादीनां रसा हिताः ।
तृष्णार्त्तानां पयश्छागं शरमूलादिभिः शृतम् ॥
रक्ते स्रोतोभ्य आस्याद्वाप्यागते क्षीरजं घृतम् ।
नस्यं पानं यवागूर्वा श्रान्ते क्षामे हतानले ॥
स्तम्भायामेषु महतीं मात्रां वा सर्पिषः पिबेत् ।

कुर्य्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥ ५४ ॥
निवृत्ते चतदोषे तु कफे वृद्ध उरःचते ।
दाल्यते कासिनो यस्य स धूमान् ना पिवेदिमान् ॥
द्वे मेदे मधूकं द्वे च बले तैः चौमलक्तकैः ।
वर्त्तितैर्धूममापीय जीवनीयघृतं पिवेत् ॥
मनःशिलापलाशाजगन्धात्वक्‌चीरिनागरैः ।
भावयित्वा पिवेत् चौमं शर्करेचुगुड़ोदकम् ॥
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ।
ससर्पिष्कं पिवेद्धूमं तित्तिरिप्रतिभोजनम् ॥
भावितं जीवनीयैर्वा कुलिङ्गाण्डरसायुतैः ।
चौमं धूमं पिवेत् चीरं शृताम्बायोगुड़ैरनु ॥ ५५ ॥
सम्पूर्णरूपं चयजं दुर्ब्बलस्य विवर्ज्जयेत् ।
नवोत्थितं बलवतः प्रत्याख्यायाचरेत् क्रियाम् ॥ ५६ ॥
तस्मै वृंहणमेवादौ कुर्य्यादग्नेश्च दीपनम् ।
बहुदोषाय सस्नेहं मृदु दद्यात् विरेचनम् ॥
शम्पाकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥
सर्पिः सिद्धं पिवेद् युक्त्या चीणदेहविशोधनम् ॥ ५७ ॥
पित्ते कफे च संचीणे परिचीणेषु धातुषु ।
घृतं कर्कटकीचीरद्विबलासाधितं पिवेत् ॥
विदारीभिः कदम्बैर्वा तालशस्यैस्तथा शृतम् ।
घृतं पयश्च मूत्रस्य वैवर्णे कृच्छ्रनिर्गमे ॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवंक्षणे ।

घृतमण्डेन मधुनानुवास्यो मिश्रकेण वा ॥
जाङ्गलैः प्रतिभुक्तस्य वर्त्तकाद्या बिलेशयाः ।
क्रमशः प्रसहाश्चैव प्रयोज्याः पिशिताशिनः ॥
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।
कफं शुद्धैश्च तैः पुष्टिं कुर्य्यात् सम्यग् वहन् रसः ॥ ५८ ॥
द्विपञ्चमूलीत्रिफलाचविकाभार्गिचित्रकैः ।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥
शृते नागरदुःस्पर्शापिप्पलीशठिपौष्करैः ।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीड़ितः ॥ ५९ ॥
इति द्विपञ्चमूल्यादिघृतम् ।
गुड़ूचीं त्रिफलां मूर्व्वां हरिद्रां श्रेयसीं वचाम् ।
निदिग्धिकां कासमर्द्दं पाठां चित्रकनागरम् ॥
जले चतुर्गुणे पक्त्वा पादशेषेण तत् समम् ।
सिद्धं सर्पिः पिबेद् गुल्मश्वासार्त्तिक्षयकासनुत् ॥ ६० ॥
इति गुड़ूच्यादिघृतम् ।
कासमर्द्दाभयामुस्तपाठाकट्फलनागरैः ।
पिप्पलीकटुकाद्राक्षाकाश्मर्य्यसुरसैस्तथा ॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढ़के ।
पचेच्छोषज्वरप्लीहसर्व्वकासहरं शिवम् ॥ ६१ ॥
इति कासमर्द्दादिघृतम् ।
धात्रीफलैः क्षीरसिद्धैः सर्पिर्वाप्यवचूर्णितम् ।

द्विगुणे दाड़िमरसे सिद्धं वा व्योषसंयुतम् ॥
पिवेदुपरि भक्तस्य यवक्षारघृतं नरः।
पिप्पलीगुड़सिद्धं वा छागक्षीरयुतं घृतम् ॥
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम्।
स्यर्दोषबद्धकोष्ठोरःस्रोतसाञ्च विशुद्धये ॥ ६२ ॥
हरीतकीयवक्काथद्व्याढ़के विंशतिं पचेत्।
स्विन्ना मृदित्वा तास्तस्मिन् पुराणगुड़षट्पलम् ॥
दद्यान्मनःशिलाकर्षं कर्षार्द्धञ्च रसाञ्जनम्।
कुड़वार्द्धञ्च पिप्पल्याः स लेहः श्वासकासनुत् ॥ ६३ ॥
इति हरीतकीलेहः।

श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः।
श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा ॥
एरण्डपत्रक्षारं वा व्योषतैलगुड़ान्वितम्।
लिह्यादेतेन विधिना सुरसैरण्डपत्रजम् ॥
द्राक्षापद्मकवार्त्ताकुपिप्पलीः क्षौद्रसर्पिषा।
लिह्यात् त्र्यूषणचूर्णं वा पुराणगुड़सर्पिषा ॥
चित्रकं त्रिफलाजाजीकर्कटाख्यं कटुत्रिकम्।
द्राक्षाञ्च क्षौद्रसर्पिर्भ्यां लिह्याद्द्याद् गुड़ेन वा ॥ ६४ ॥
पद्मकं त्रिफलां व्योषं विड़ङ्गं सुरदारु च।
बलां रास्नाञ्च तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
सर्व्वैरेभिः समं चूर्णैः पृथक् क्षौद्रं घृतं सिताम्।
विमथ्य लेहयेल्लेहं सर्व्वकासहरं शिवम् ॥ ६५ ॥
इति पद्मकादिलेहः।

जीवन्तीं मधुकं पाठां त्वक्क्षीरीं त्रिफलां शटीम् ।
मुस्तैले पिप्पलीं द्राक्षां द्वे बृहत्यौ वितुन्नकम् ॥
शारिवां पौष्करं मूलं कर्कटाख्यं रसाञ्जनम् ।
पुनर्नवां लोहरजस्त्रायमाणां यमानिकाम् ॥
भार्गीं तामलकीमृद्धिं विड़ङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥
चूर्णीकृत्य समांशानि लेहयेत् क्षौद्रसर्पिषा ।
चूर्णात् पाणितलं पञ्च कासानेतद् व्यपोहति ॥ ६६ ॥
इति जीवन्त्याद्यं चूर्णमवलेहश्च ।
लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ।
सर्व्वकासहरं श्रेष्ठं लेहं कासार्हितो नरः ॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
स्वरोपघाते कासे च लेहमेतं प्रयोजयेत् ॥ ६७ ॥
पत्रकल्कं घृतैर्भृष्टं तिल्वकस्य सशर्करम् ।
पेया चोत्कारिका च्छर्द्दिस्तृट्कासामातिसारनुत् ॥
गौरसर्षपगण्डीरविड़ङ्गव्योषचित्रकान् ।
साभयान् साधयेत् तोये यवागूं तेन चाम्भसा ॥
ससर्पिर्लवणां कासे हिक्काश्वासे सपीनसे ।
पाण्ड्वामये क्षये शोषे कर्णशूले च शस्यते ॥ ६८ ॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्व्वकासे भिषग्जितम् ॥ ६९ ॥
वातघ्नौषधनिःक्वाथं क्षीरं यूषान् रसानपि ।
वैष्किरान् प्रातुदान् वैलान् दापयेत् क्षयकासिने ॥

क्षतकासे च ये धूमाः सानुपाना निदर्शिताः।
क्षयकासेऽपि तानेव यथावस्थं प्रयोजयेत्॥
दीपनं वृंहणञ्चैव स्रोतसाञ्च विशोधनम्।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्व्वं हितं भवेत्॥ ७० ॥
सन्निपातोद्भवो ह्येष क्षयकासः सुदारुणः।
सन्निपातहितं तस्मात् कार्य्यमत्र भिषग्जितम्॥
दोषानुबलयोगाच्च भवेद्रोगबलाबलम्।
कासेष्वेषु गरीयांसं जानीयादुत्तरोत्तरम्॥ ७१ ॥

तत्र श्लोकौ।

भोज्यं पानानि सर्पींषि लेहाश्च सह पानकैः।
क्षीरं सर्पिर्गुड़ा धूमाः कासभैषज्यसंग्रहः॥
संख्या निमित्तं रूपाणि साध्यासाध्यत्वमेव च।
कासानां भेषजं प्रोक्तं गरीयस्त्वञ्च कासिनाम्॥ ७२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
कासचिकित्सितं नाम अष्टादशोऽध्यायः॥ १८ ॥

# ऊनविंशोऽध्यायः ।

अथातोऽतीसारचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

भगवन्तं खल्वात्रेयं कृताह्निकं हुताग्निहोत्रमासीनमृषि-गणपरिवृतं हिमवतः पार्श्वे विनयादुपेत्याभिवाद्याग्निवेश उवाच—भगवन्नतीसारस्य प्रागुत्पत्तिनिमित्तलक्षणोपशमनानि तु प्रजानुग्रहार्थमाख्यातुमर्हसीति ॥ २ ॥

अथ भगवान् पुनर्व्वसुरात्रेयस्तदग्निवेशवचनमनुनिशम्योवाच—श्रूयतामग्निवेश सर्व्वमेतदखिलेन व्याख्यायमानम् । आदिकाले खलु यज्ञेषु पशवः समालभनीया बभूवुर्नालम्भाय प्रक्रियन्ते स्म । ततो दक्षयज्ञं प्रत्यवरकालं मनोः पुत्राणां नरिष्यन्नाभागेक्ष्वाकुविशाशययात्यादीनाञ्च क्रतुषु पशूनामेवाभ्यनुज्ञानात् पशवः प्रोक्षणमेवापुः । अतः प्रत्यवरकालं पृषध्रेण दीर्घसत्रेण यजता पशूनामलाभाद्गवामालम्भः प्रवर्त्तितः, तद् दृष्ट्वा प्रव्यथिता भूतगणाः । तेषाञ्चोपयोगादुपाकृतानां गवां गौरवादौष्ण्यादसात्म्यत्वादशस्तोपयोगात् स्वादुपयोगाच्चोपहताग्नीनामुपहतमनसाञ्चातीसारः पूर्व्वमुत्पन्नः पृषध्रयज्ञे ॥ ३

अथावरकालं वातलस्य वातातपव्यायामातिमात्रनिषेविणो रूक्षाल्पप्रमिताशिनस्तीक्ष्णमद्यव्यवायनित्यस्योदावर्त्तयतश्च वेगान् वायुः प्रकोपमापद्यते पक्ता चोपहन्यते । स वायुः प्रकुपितोऽम्नावुपहते मूत्रस्वेदौ पुरीषाशयमुपहृत्य ताभ्यां पुरीषं द्रवीकृत्यातीसाराय कल्पते ॥ ४ ॥

तस्य रूपाणि विज्जलमामविप्लुतमवसादि रूक्षं द्रवं सशूल-मामगन्धमीषच्छब्दं वा विबद्धमूत्रवातमतिसार्य्यते पुरीषं। वायु-श्चान्तःकोष्ठे सशब्दशूलस्तिर्य्यक् चरति विबद्ध इत्यामातिसारो वातात्। पक्वं विबद्धमल्पाल्पं सशब्दशूलफेनपिच्छापरिकर्त्तिकं हृष्टरोमा विनिश्वसन् शुष्कमुखः कट्यूरुत्रिकजानुपृष्ठपार्श्वशूली भ्रष्टगुदो मुहुर्मुहुर्विग्रथितमुपवेश्यते पुरीषं वातात्। तमाहु-रनुग्रथितकमित्येके वातानुग्रथितवर्च्चस्त्वात् ॥ ५ ॥

पित्तलस्य पुनरम्ललवणकटुकक्षारोष्णतीक्ष्णातिमात्रनिषे-विणः प्रतताग्निसूर्य्यसन्तापोष्णमारुतोपहतगात्रस्य क्रोधेर्षा-बहुलस्य पित्तं प्रकोपमापद्यते। तत् प्रकुपितं द्रवत्वादुष्माण-मुपहत्य पुरीषाशयमाश्रितमौष्ण्याद्द्रवत्वात् सरत्वाच्च भित्वा पुरीषमतिसाराय कल्पते ॥ ६ ॥

तस्य रूपाणि हारिद्रं हरितं नीलं कृष्णं रक्तपित्तोपगत-मतिदुर्गन्धमतिसार्य्यते पुरीषं, तृष्णादाहस्वेदमूर्च्छाशूलब्रध्न-सन्तापपाकपरीत इति पित्तातिसारः ॥ ७ ॥

श्लेष्मलस्य तु गुरुमधुरशीतस्निग्धोपसेविनः सम्पूरकस्या-चिन्तयतो दिवास्वप्नपरस्यालसस्य श्लेष्मा प्रकोपमापद्यते। स स्वभावाद् गुरुमधुरशीतस्निग्धस्य पुंसोऽग्निमुपहत्य सौम्य-स्वभावात् पुरीषाशयमुपगत्योपक्लेद्य पुरीषमतिसाराय कल्पते ॥ ८ ॥

तस्य रूपाणि स्निग्धं श्वेतं पिच्छिलं तन्तुमदामं गुरु दुर्गन्धमनुबद्धशूल-मत्यल्पमभीक्ष्ण-मतिसार्य्यते सप्रवाहिकं गुरुतरं गुरूदरगुदवस्तिवंक्षणदेशः कृतापकृतसञ्ज्ञः सलोम-

हर्षः सोत्क्लेशो निद्रालस्यपरीतः सदनोऽन्नद्वेषी चेति श्लेष्मातिसारः ॥ ९ ॥

अतिशीतस्निग्धरूक्षोष्णगुरुखरकठिनविशदविषमविरुद्धासात्म्यभोजनादभोजनात् कालातीतभोजनाच्च यत्किञ्चिदभ्यवहरणात् प्रदुष्टमद्यपानीयपानादतिमद्यपानीयपानादसंशोधनात् प्रतिकर्म्मणां विषमगमनादनुपचाराज्ज्वलनादित्यपवनसलिलातिसेवनादस्वप्नादतिस्वप्नाद्वेगविधारणादृतुविपर्य्ययादयथाबलमारम्भाद्भयशोकचिन्तोद्वेगातियोगात् क्रिमिशोथज्वरार्शोविकारातिकर्षणैर्व्यापन्नाग्नेस्त्रयो दोषाः प्रकुपिता भूय एवाग्निमुपहत्य पक्वाशयमनुप्रविश्यातीसारं सर्व्वदोषलिङ्गं जनयन्ति ॥१०॥

अपि च शोणितादीन् धातूनतिप्रदुष्टान् दूषयन्तो धातुदोषस्वभावकृतानतीसारवर्णानुपदर्शयन्ति । तत्र शोणितादिषु धातुष्वतिप्रदुष्टेषु हारिद्रहरितनीलमाञ्जिष्ठमांसधावनसङ्काशं रक्तं कृष्णं श्वेतं वा वराहमेदःसदृशमनुबद्धवेदनमवेदनं वा समासव्यासादुपवेश्यते शकृद् । सहृद् ग्रथितमामं शकृदपि वा पक्वमनतिक्षीणमांसशोणितबलो मन्दाग्निविहतमुखरसश्च तादृशमातुरं कृच्छ्रसाध्यं विद्यात् । एभिर्वर्णैरतिसार्य्यमाणं सोपद्रवमातुरमसाध्योऽयमिति प्रत्याचक्षीत । तद्यथा—क्वाथशोणिताभं यकृत्पिण्डोपमं मेदोमांसोदकसदृशं दधिघृत-मज्जतैलवसाक्षीर-वेशवाराभमतिनील-मतिरक्तमतिकृष्णमुदकमिवाच्छं पुनर्मेचकाभमतिस्निग्धं हरिताभं नीलकषायवर्णं कर्व्वूरवर्णमाविलं पिच्छिलं तन्तुमदामं चन्द्रकोपगतमतिकुणपपूतिपूयगन्धयाममतुस्यगन्धि मक्षिकाक्रान्तं

क्वथितबहुधातुस्रावमल्पपुरीषमपुरीषं वातिसाध्यमानां तृष्णा-दाहज्वरभ्रमतमोहिक्काश्वासानुबन्धमतिवेदनमवेदनं वा स्रस्त-पक्वगुदं पतितगुदवलिं मुक्तनालमतिक्षीणबलमांसशोणितं सर्व्वपर्व्वास्थिशूलिनमरोचकारति-प्रलापसंमोहपरीतं सहसो-परतविकारमतिसारिणमचिकित्स्यं विद्यादिति सन्निपाता-तिसारः॥ ११ ॥

तमसाध्यमसाध्यतामसंप्राप्तं चिकित्सेद् यथाप्रधानेनोप-क्रमेण हेतूपशयदोषविशेषपरीक्षया चेति॥ १२ ॥

भवन्ति चात्र।

आगन्तू द्वावतीसारौ मानसौ भयशोकजौ।
यौ तयोर्लक्षणं वायोर्यदतीसारलक्षणम्॥ १३ ॥
मारुतो भयशोकाभ्यां शीघ्रं हि परिकुप्यति।
तयोः क्रिया वातहरी हर्षणाश्वासनानि च॥
इत्युक्ताः षड़तीसाराः साध्यानां साधनन्त्वतः।
प्रवक्ष्याम्यनुपूर्व्वेण यथावत् तन्निबोधत॥ १४ ॥
दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।
अतीसाराय कल्पन्ते भूयस्तान् संप्रवर्त्तयेत्॥
न तु संग्रहणं देयं पूर्व्वमामातिसारिणे।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून्॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा॥ १५ ॥
तस्मादुपेक्षेतोत्क्लिष्टान् वर्त्तमानान् स्वयं मलान्।
कृच्छ्रं वा वहतां दद्यादभयां संप्रवर्त्तिनीम्॥

तथा प्रवाहिते दोषे प्रशाम्यत्युदरामयः।
जायते देहलघुता जठराग्निश्च वर्द्धते॥ १६॥
प्रमथ्यां मध्यदोषेभ्यो दद्याद्दीपनपाचनीम्।
लङ्घनञ्चाल्पदोषाणां प्रशस्तमतिसारिणाम्॥ १७॥
पिप्पली नागरं धान्यं भूतीकमभया वचा।
ह्रीवेरं भद्रमुस्तानि बिल्वं नागरधान्यकम्॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम्॥
वचाप्रतिविषाभ्यां वा मुस्तपर्पटकेन वा।
ह्रीवेरशृङ्गवेराभ्यां पक्वं वा पाययेज्जलम्॥ १८॥
युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत्।
तथा स शीघ्रमाप्नोति रुचिमग्निबलं बलम्॥ १९॥
तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा।
सुरया मधुना वादौ यथासात्म्यमुपाचरेत्॥
यवागूभिर्विलेपीभिः खडैर्यूषै रसौदनैः।
दीपनग्राहिसंयुक्तैः क्रमश्च स्यादतः परम्॥ २०॥
शालपर्णीं पृश्निपर्णीं बृहतीं कण्टकारिकाम्।
बलाश्वदंष्ट्राबिल्वानि पाठां नागरधान्यकम्॥
शटीं पलाशं हपुषां वचाजीरकपिप्पलीः।
यमानीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्॥
वृक्षाम्लं दाडिमञ्चाम्लं सहिङ्गु बिडसैन्धवम्।
प्रयोजयेदन्नपाने विधिना सूपकल्पितम्॥
वातश्लेष्महरो ह्येष गणो दीपनपाचनः।

ग्राही बल्यो रोचनश्च तस्माच्छ्लोऽतिसारिणाम् ॥ २१ ॥
आमे परिणते यस्तु विबद्धमतिसार्य्यते।
सशूलपिच्छमल्पाल्पं बहुशः सप्रवाहिकम् ॥
तं मूलकानां यूषेण बदराणामथापि वा।
उपोदिकायाः चौरिण्या यमान्या वास्तुकस्य च ॥
सुवर्च्चलायाश्चञ्चोर्वा शाकेनावल्गुजस्य वा।
शव्याः कर्कारुकाणां वा जीवन्त्याश्चिर्भिटस्य वा ॥
लोणिकायाः सपाटायाः शुष्कशाकेन वा पुनः।
दधिदाड़िमसिद्धेन बहुस्नेहेन भोजयेत् ॥ २२ ॥
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सरोऽम्लस्नेहाढ्यः खड़ो हन्यात् प्रवाहिकाम् ॥ २३ ॥
यवानां मुद्गमाषाणां शालीनाञ्च तिलस्य च।
कोलानां बालबिल्वानां काम्लं यूषं * प्रकल्पयेत् ॥
ऐकध्यं यमके भृष्टं दधिदाड़िमसाधितम्।
वर्च्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥
दध्नः सरं वा यमके भृष्टं सगुड़नागरम्।
सुरां वा यमके भृष्टां व्यञ्जनार्थे प्रदापयेत् ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा।
लोपाकरसमम्लं वा स्निग्धाम्लं कच्छपस्य वा ॥
बर्हितित्तिरिदक्षाणां वर्त्तकानां तथा रसः।
स्निग्धोष्णाः शालयश्चाग्र्या वर्च्चःक्षयरुजापहाः ॥
मत्स्याधिरसं पूत्वा रक्तं मेषस्य चोभयम्।

---

* धान्ययूषमिति पाठान्तरम्।

पचेद्दाड़िमसाराम्लं सधान्यस्नेहनागरम् ॥
भोजने रक्तशालीनां तेनाद्यात् प्रपिबेच्च तम्।
तथा वर्चःचयकृतैर्व्याधिभिर्विप्रमुच्यते ॥ २४ ॥
गुदनिःसरणे शूले पानमम्लस्य सर्पिषः।
प्रशस्यते निरामाणामथवाप्यनुवासनम् ॥ २५ ॥
चाङ्गेरीकोलदध्यम्लनागरचारसंयुतम्।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥ २६ ॥

इति चाङ्गेरीघृतम्।

सचव्यपिप्पलीमूलं सव्योषगुड़दाड़िमम्।
पेयमम्लं घृतं युक्त्या सजाजीधान्यनागरम् ॥ २७ ॥

इति गुदभ्रंशे चव्यादिघृतम्।

दशमूल्युपसिद्धं वा सबिल्वमनुवासनम्।
शटीशताह्वाकुष्ठैर्वा वचया चित्रकेण वा ॥ २८ ॥
स्तब्धभ्रष्टगुदे पूर्व्वं स्नेहस्वेदौ प्रयोजयेत् ॥
सुस्विन्नं तं मृदूभूतं पिचुना संप्रवेशयेत् ॥ २९ ॥
विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः।
सरक्तपिच्छस्तृष्णार्त्तः चीरसौहित्यमर्हति ॥
यमकस्योपरि चीरं धारोष्णं वा पिबेत् स ना।
शृतमेरण्डमूलेन बालबिल्वेन वा पुनः ॥
एवं चीरप्रयोगेण रक्तं पिच्छा च शाम्यति।
शूलं प्रवाहिका चैव विबन्धश्चोपशाम्यति ॥ ३० ॥

पित्तातिसारं पुनर्निदानोपशयाकृतिभिरामान्वयमुपलभ्य यथाबलं लङ्घनपाचनाभ्यामुपाचरेत्। तृष्यतस्तु मुस्तपर्पट-

कोशीरशारिवाचन्दनकिराततिक्तकोदीच्य-वारिभिरुपचारः। लङ्घितस्य तस्य चाहारकाले बलातिबलासूर्पपर्णीशालपर्णीपृश्नि-पर्णीवृहती-कण्टकारिकाशतावरीश्वदंष्ट्रानिर्य्यूहसंयुक्तेन यथा-सात्म्यं यवागूमण्डादिना तर्पणादिना वा क्रमेणोपचारः। मुद्ग-मसूरहरेणुमुकुष्टकाढ़कीयूषैर्वा लावकपिञ्जलशशहरिणैनकाल-पुच्छकरसैरीषदम्लैरनम्लैर्वा क्रमशोऽग्निं सन्धुक्षयेत्। अनुबन्धे त्वस्य दीपनीयपाचनीयोपशमनीयसंग्रहणीयान् योगान् प्रयो-जयेदिति॥ २१॥

भवन्ति चात्र।

सक्षौद्रातिविषां पिष्ट्वा वत्सकस्य फलत्वचम्।
पिबेत् पित्तातिसारघ्नं तण्डुलोदकसंयुतम्॥ २२॥
किराततिक्तकं मुस्तं वत्सकः सरसाञ्जनः।
बिल्वं दारुहरिद्राच ह्रीवेरं सदुरालभम्॥
चन्दनञ्चामृणालञ्च नागरं लोध्रमुत्पलम्।
तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्॥
नागरं धातकीपुष्पमुत्पलं दाड़िमत्वचः।
कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभाः॥
योगाः षड़ेते सक्षौद्रास्तण्डुलोदकसंयुताः।
पेयाः पित्तातिसारघ्नाः श्लोकार्द्धेन निदर्शिताः॥ २३॥
जीर्णौषधानां शस्यन्ते यथायोगोपकल्पितैः।
रसैः सांग्राहिकैर्युक्ताः पुराणा रक्तशालयः॥ २४॥
पित्तातिसारी दीप्ताग्निः क्षिप्रं समुपशाम्यति।
अजाक्षीरप्रयोगेण बलं वर्णञ्च वर्द्धते॥

बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति ।
पैत्तिको यद्यतीसारः पयसा तं विरेचयेत् ॥
पलाशफलनिर्य्यूहं पयसा पाययेत तम् ।
ततोऽनुपाययेत् कोष्णं क्षीरमेव यथाबलम् ॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ।
पलाशवत् प्रयोज्या वा त्रायमाणा विशोधिनी ॥ ३५ ॥
संसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्त्तते ।
स्रुतदोषस्य तं शीघ्रं यथावदनुवासयेत् ॥
शतपुष्पावरीभ्याञ्च पयसा मधुकेन च ।
तैलपादं घृतं सिद्धं सबिल्वमनुवासनम् ॥ ३६ ॥
कृतानुवासनस्यास्य कृतसंसर्ज्जनस्य च ।
वर्त्तते यद्यतीसारः पिच्छावस्तिरतः परम् ॥
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः ।
कृष्णमृत्तिकयालिप्य स्वेदयेद् गोमयाग्निना ॥
सुशुष्कां मृत्तिकां ज्ञात्वा तानि वृन्तानि शाल्मलेः ।
शृते पयसि मृद्गीयादापोथ्योलूखले ततः ॥
पिण्डं मुष्टिसमं प्रस्थे तत् पूतं तैलसर्पिषोः ।
स्नेहितं मात्रया युक्तं कल्केन मधुकस्य च ॥
वस्तिमभ्यक्तगात्राय दद्यात् प्रत्यागते ततः ।
स्नात्वा भुञ्जीत पयसा जाङ्गलानां रसेन वा ॥
पित्तातिसारज्वरशोथगुल्मजीर्णातिसारग्रहणीप्रदोषान् ।
जयत्ययं शीघ्रमतिप्रवृद्धान् विरेचनास्थापनयोश्च वस्तिः ॥३७॥

इति पिच्छावस्तिः ।

पित्तातिसारी यस्त्वेतां क्रियां मुक्त्वा निषेवते।
पित्तलान्यन्नपानानि तस्य पित्तं महाबलम्॥
रक्तातिसारं कुरुते रक्तमाशु प्रदूषयत्।
तृष्णां शूलं विदाहञ्च गुदपाकञ्च दारुणम्॥ ३८॥
तत्र छागं पयः शस्तं शीतं समधुशर्करम्।
पानार्थं व्यञ्जनार्थं च गुदप्रक्षालने तथा॥
भोजनं रक्तशालीनां पयसा तेन भोजयेत्।
रसैः पारावतादीनां घृतभृष्टैः सशर्करैः॥
शशानां धन्वजानाञ्च शीतानां मृगपक्षिणाम्।
रसैरनम्लैः सघृतैर्भोजयेत् तु सशर्करैः॥
रुधिरं मार्गमाजं वा घृतभृष्टं प्रशस्यते।
काश्मर्य्यफलयूषो वा किञ्चिदम्लः सशर्करः॥
नीलोत्पलं मोचरसं समङ्गां पद्मकेशरम्।
अजाक्षीरयुतं दद्याज्जीर्णे च पयसौदनम्॥
दुर्व्वलं पाययित्वा वा तस्यैवोपरि भोजयेत्।
प्राग्भक्तं नवनीतं वा दद्यात् समधुशर्करम्॥
प्राश्य क्षीरोत्थितं सर्पिः कपिञ्जलरसाशनः।
व्यहादारोग्यमाप्नोति पयसा क्षीरभुक् तथा॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत्।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः॥ ३९॥
घृतं यवागूमण्डेन कुटजस्य फलैः शृतम्।
पेयं तस्यानुपातव्या पेया रक्तोपशान्तये॥ ४०॥
त्वक् च दारुहरिद्रायाः कुटजस्य फलानि च।

पिप्पली शृङ्गवेरञ्च द्राक्षा कटुकरोहिणी ॥
षड्भिरेतैर्घृतं सिद्धं पेयामण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ४१ ॥
कृष्णामृन्मधुकं शङ्खं रुधिरं तण्डुलोदकम्।
पीतमेकत्र सक्षौद्रं रक्तसंग्रहणं परम् ॥
पीतः प्रियङ्गुकाकल्कः सक्षौद्रस्तण्डुलाम्बुना।
रक्तस्रावं जयेच्छीघ्रं धन्वमांसरसाशिनः ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ४२ ॥
पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ४३ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ ४४ ॥
गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते।
सेचयेत् तं सुशीतेन पटोलमधुकाम्बुना ॥
पञ्चवल्कमधूकानां रसैरिक्षुरसैर्घृतैः।
छागैर्गव्यैः पयोभिर्वा शर्कराक्षौद्रसंयुतैः ॥
प्रक्षालनानां कल्कैर्वा ससर्पिष्कैः प्रलेपयेत्।
एषां वा सुकृतैश्चूर्णैस्तं गुदं प्रतिसारयेत् ॥
धातकीलोध्रचूर्णैर्वा समांशैः प्रतिसारयेत्।
तथा रक्तं न स्रवति गुदं तैः प्रतिसारितम् ॥
यथोक्तैः सेचनैः शीतैः शोणिते निःस्रवत्यपि।
गुदवङ्क्षणकट्यूरु सेचयेद् घृतभावितम् ॥

चन्दनाद्येन तैलेन शतधौतेन सर्पिषा।
कार्पाससंगृहीतेन भावयेद् गुदवङ्क्षणौ ॥ ४५ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते।
यदा वायुर्विबद्धश्च कृच्छ्रं चरति वा न वा ॥
पिच्छावस्तिं तदा तस्य यथोक्तमुपकल्पयेत्।
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासयेत् ॥ ४६ ॥
प्रायशो दुर्ब्बलगुदाश्चिरकालातिसारिणः।
तस्मादभीक्ष्णशस्तेषां गुदे स्नेहं प्रयोजयेत् ॥
पवनोऽतिप्रवृत्तो हि स्वे स्थाने लभतेऽधिकम्।
बलं तस्य सपित्तस्य जयार्थे वस्तिरुत्तमः ॥ ४७ ॥
रक्तं विट्सहितं पूर्व्वं पश्चाद्वा योऽतिसार्य्यते।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥
शर्करार्द्धांशिकं लीढ़ं नवनीतं नवोद्धृतम्।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ॥
न्यग्रोधोडुम्बराश्वत्थशुङ्गानापोथ्य वासयेत्।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ॥
तदर्द्धशर्करायुक्तं लेहयेत् क्षौद्रपादिकम्।
अधो वा यदि वापूर्द्धं यस्य रक्तं प्रवर्त्तते ॥ ४८ ॥
वस्त्वेवं दुर्ब्बलो मोहात् पित्तलान्येव सेवते।
दारुणं स वलीपाकं प्राप्य शीघ्रं विपद्यते ॥ ४९ ॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम्।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥ ५० ॥
लङ्घितस्यानुपूर्व्याञ्च कृतायां न निवर्त्तते।

कफजो यो ह्यतीसारः कफघ्नैस्तमुपाचरेत् ॥ ५१ ॥
बिल्वकर्कटिकामुस्तमभया विश्वभेषजम् ।
वचा विड़ङ्गं भूतीकं धान्यकं देवदारु च ॥
कुष्ठं सातिविषा पाठा चव्यं कटुकरोहिणी ।
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
योगाः श्लोकार्द्धविहिताश्चतुरस्तान् प्रयोजयेत् ।
मृतान् श्लेष्मातिसारेषु कायाग्निबलवर्द्धनान् ॥ ५२ ॥
अजाजीमसितां पाठां नागरं मरिचानि च ।
धातकीद्विगुणां दद्यान्मातुलुङ्गरसाप्लुतम् ॥
रसाञ्जनं सातिविषं कुटजस्य फलानि च ।
धातकीद्विगुणं दद्यात् पातुं सचौद्रनागरम् ॥ ५३ ॥
धातकी नागरं बिल्वं लोध्रं पद्मस्य केशरम् ।
जम्बूत्वङ् नागरं धान्यं पाठा मोचरसो बला ॥
समङ्गा धातकी बिल्वमध्यं जम्ब्वाम्रयोस्त्वचा ।
कपित्थानि विड़ङ्गानि नागरं मरिचानि च ॥
चाङ्गेरीकोलतक्राम्लांश्चतुरस्तान् कफोत्तरे ।
श्लोकार्द्धविहितान् दद्यात् सस्नेहलवणान् खड़ान् ॥ ५४ ॥
कपित्थमध्यं लीढ्वा तु सव्योषचौद्रशर्करम् ।
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ॥
कणां मधुयुतां लीढ्वा तक्रं पीत्वा सचित्रकम् ।
जग्ध्वा वा बालबिल्वानि मुच्यते जठरामयात् ॥
बालबिल्वं गुड़ं तैलं पिप्पलीं विश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥

भोज्यं मूलकयूषेण वातघ्नैश्चोपसेवनैः ।
वातातिसारविहितैर्यूषैर्मांसरसैः खडैः ॥
पूर्व्वोक्तमम्लसर्पिर्वा षट्पलं वा यथाबलम् ।
पुराणं वा घृतं दद्याद् यवागूमण्डमिश्रितम् ॥ ५५ ॥
वातश्लेष्मविबन्धे वा कफे वातिस्रवत्यपि ।
शूले प्रवाहिकायां वा पिच्छावस्तिं प्रयोजयेत् ॥
पिप्पलीबिल्वकुष्ठानां शताह्वावचयोरपि ।
कल्कैः सलवणैर्युक्तं पूर्व्वोक्तं सन्निधापयेत् ॥ ५६ ॥
प्रत्यागते सुखे स्नातं कृताहारं दिनात्यये ।
बिल्वतैलेन मतिमान् सुखोष्णेनानुवासयेत् ॥
वचान्तैरथवा कल्कैस्तैलं पक्वानुवासयेत् ।
बहुशः कफवातार्त्तस्तथा स लभते सुखम् ॥ ५७ ॥
स्वस्थाने मारुतोऽवश्यं वर्द्धते कफसंक्षयात् ।
स वृद्धः सहसा हन्यात् तस्मात्तं त्वरया जयेत् ॥
वातस्यानुजयेत् पित्तं पित्तस्यानुजयेत् कफम् ।
त्रयाणां वा जयेत् पूर्व्वं यो भवेद् बलवत्तमः ॥ ५८ ॥

तत्र श्लोकः ।

प्रागुत्पत्तिर्निमित्तानि लक्षणं साध्यता न च ।
क्रिया चावस्थिकी भिन्ना निर्द्दिष्टा ह्यतिसारिणाम् ॥ ५९

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थानेऽती-
सारचिकित्सितं नामोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ।

अथातश्छर्द्दिचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

यशस्विनं ब्रह्मतपोद्युतिभ्यां ज्वलन्तमग्न्यर्कसमप्रभावम् ।
पुनर्व्वसुं भूतहिते निविष्टं पप्रच्छ शिष्योऽत्रिजमग्निवेशः ॥
याश्छर्द्दयः पञ्च पुरा त्वयोक्ता रोगाधिकारे भिषजां वरिष्ठ ।
तासां चिकित्सां सनिदानलिङ्गां यथावदाचक्ष्व हिताय नृणाम् ॥ २
तदग्निवेशस्य वचो निशम्य प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
याश्छर्द्दयः पञ्च पुरा मयोक्तास्ता विस्तरेण ब्रुवतो निबोध ॥ ३
दोषैः पृथक् त्रिप्रभवा चतस्रो द्विष्टार्थयोगादपि पञ्चमी स्यात् ।
तासां तु हृदुत्क्लेशकफप्रसेकौ द्वेषोऽशने चैव हि पूर्व्वरूपम् ॥ ४ ॥
व्यायामतीक्ष्णौषधशोकरोगभयोपवासाद्यतिकर्षितस्य ।
क्रुद्धो महास्रोतसि मातरिश्वा दोषान् समुत्क्लिश्य तदूर्द्ध्वमस्यन् ॥
आमाशयोत्क्लेशकृतांश्च मर्म्म प्रपीडयंश्छर्द्दिमुदीरयेत्तु ॥ ५ ॥
हृत्पार्श्वपीडामुखशोषमूर्द्धनाभ्यर्त्तिकासस्वरभेदतोदैः ॥
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ।
कृच्छ्रेण चाल्पं महता च वेगेनार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ॥ ६
अजीर्णकट्वम्लविदाह्यशीतैरामाशये पित्तमुदीर्णवेगम् ।
रसायनीभिर्व्विसृतं प्रपीड्य मर्म्मोर्द्ध्वमागम्य वमिं करोति ॥ ७ ॥
मूर्च्छापिपासामुखशोषमूर्द्धताल्वक्षिसन्तापतमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितं सतिक्तं धूम्रञ्च पित्तेन वमेत् सदाहम् ॥ ८ ॥

स्निग्धातिगुर्व्वामविदाहिभोजैः स्वप्नादिभिश्चैव कफोऽतिवृद्धः ।
उरःशिरोमर्म्मरसायनीश्च सर्व्वाः समावृत्य वमिं करोति ॥ ९ ॥
तन्द्रास्यमाधुर्य्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादुकफं विशुद्धं सलोमहर्षोऽल्परुजं वमेत्तु ॥१०॥
समश्नतः सर्व्वरसान् प्रसक्तमामप्रदोषर्त्तुविपर्य्ययैश्च ।
सर्व्वे प्रकोपं युगपत् प्रपन्नाश्छर्द्दिं त्रिदोषां जनयन्ति दोषाः ॥११॥
शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबला प्रसक्तम् ।
छर्द्दिस्त्रिदोषा लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥१२
विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्द्धमेति ।
उत्सन्नदोषस्य समाचितं तं दोषं समुद्धूय नरस्य कोष्ठात् ॥
विराम्त्रयोस्तत्समवर्णगन्धं तृट्श्वासहिक्कार्त्तियुतं प्रसक्तम् ।
प्रच्छर्द्दयेद्दुष्टमिहातियोगात् तयार्द्दितश्चाशु विनाशमेति ॥ १३ ॥
द्विष्टप्रतीपाशुचिपूत्यमेध्यबीभत्सगन्धाशनदर्शनैश्च ।
यश्छर्द्दयेत्तप्तमना मनोघ्नैर्द्विष्टार्थसंयोगभवा मता सा ॥ १४ ॥
क्षीणस्य याच्छर्द्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां साध्यां चिकित्सेदनुपद्रवाञ्च ॥१५
आमाशयोत्क्लेशभवं हि सर्व्वं छर्द्दिमतं लङ्घनमेव तस्मात् ।
प्राक्कारयेन्मारुतजां विमुच्य संशोधनं वा कफपित्तहारि ॥ १६ ॥
चूर्णानि लिह्यान्मधुनाभयानां हृद्यानि वा यानि विरेचनानि ।
मद्यैः पयोभिश्च युतानि युक्त्या नयन्त्यधो दोषमुदीर्णमूर्द्धम् ॥१७
वल्लीफलाद्यैर्वमनं पिबेद्वा यो दुर्ब्बलस्तं शमनैश्चिकित्सेत् ।
रसैर्मनोज्ञैर्लघुभिर्विशुष्कैर्भक्ष्यैः सभोज्यैर्विविधैश्च पानैः ॥ १८॥
सुसंस्कृतास्तित्तिरिबर्हिलावरसा व्यपोहन्त्यनिलप्रवृत्ताम् ।

छर्द्दिं तथा कोलकुलत्थधान्यबिल्वादिमूलाम्लयवैश्च यूषः ॥ १९ ॥
वातात्मिकायां हृदयद्रवार्त्तः नरः पिवेत् सैन्धववद् घृतन्तु ।
सिद्धं तथा धान्यकनागराभ्यां दध्ना च तोयेन च दाड़िमस्य ॥
व्योषेण युक्तां लवणैस्त्रिभिश्च तद्वैव मात्रामथवा प्रदद्यात् ।
स्निग्धानि हृद्यानि च भोजनानि रसैः सयूषैर्दधिदाड़िमैश्च ॥२०
पित्तात्मिकायामनुलोमनार्थं द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात् ।
कफाशयस्थन्त्वतिमात्रवृद्धं पित्तं हरेत् स्वादुभिरूर्द्धमेव ॥ २१ ॥
शुद्धाय काले मधुशर्कराभ्यां लाजैश्च मन्थं यदि वापि पेयाम् ।
प्रदापयेन्मुद्गरसेन वापि शाल्योदनं जाङ्गलजै रसैर्वा ॥ २२ ॥

सितोपलामाक्षिकपिप्पलीभिः
कुल्माषलाजायवशक्तुगञ्जान् ।
खर्ज्जूरमांसान्यथ नारिकेलं
द्राक्षामथो वा बदराणि लिह्यात् ॥
स्रोतोजलाजोत्पलकोलमज्ज-
चूर्णानि लिह्यान्मधुनाभयां वा ।
कोलास्थिमज्जाञ्जनमक्षिकाविड्-
लाजासितामागधिकाकणान् वा ॥ २३ ॥
द्राक्षारसं वापि पिवेत् सुशीतं
मृद्भृष्टलोष्ट्रप्रभवं जलं वा ।
जम्ब्वाम्रयोः पल्लवजं कषायं
पिवेत् सुशीतं मधुसंयुतं वा ॥
निशि स्थितं वारि समुद्गकृष्णं
सोशीरधान्यं चणकोदकं वा ।

गवेधुकामूलजलं गुडूच्या जलं पिवेदिक्षुरसं पयो वा ॥ २४ ॥
सेव्यं पिवेत् काञ्चनगैरिकं वा सबालकं तण्डुलधावनेन ।
कल्कं तथा चन्दनसेव्यमांसीद्राक्षोत्तमाबालकगैरिकाणाम् ॥
शीताम्बुना गैरिकशालिचूर्णं मूर्व्वां तथा तण्डुलधावनेन ।
धात्रीरसेनोत्तमचन्दनं वा तृष्णावमिघ्नानि समाक्षिकाणि॥२५॥
कफात्मिकायां वमनं प्रशस्तं सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकैः सैन्धवसम्प्रयुक्तैश्छर्द्द्यां कफामाशयशोधनार्थम् ॥२६॥

गोधूमशालीन् सयवान् पुराणान्
यूषैः पटोलामृतचित्रकाणाम् ।
व्योषस्य निम्बस्य च तक्रसिद्धै-
र्यूषैः फलाम्लैः कटुभिस्तथाद्यात् ॥
रसांश्च शूल्यानि च जाङ्गलानां
मांसानि जीर्णान्मधुशीध्वरिष्टान् ॥
रागांस्तथा षाड़वपानकानि
द्राक्षाकपित्थैः फलपूरकैश्च ॥ २७॥
मुद्गान् मसूरांश्चणकान् कलायान्
भृष्टान् युतान्नागरमाक्षिकाभ्याम् ।
लिह्यात् तथैव त्रिफलाविड़ङ्ग-
चूर्णं विड़ङ्गप्लवयोरसं वा ॥
सजाम्बवं वा बदरस्य चूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसम्प्रयुक्तां
लिह्यात् कफच्छर्द्दिविनिग्रहार्थम् ॥

मनःशिलायाः फलपूरकस्य
रसैः कपित्थस्य च पिप्पलीनाम् ।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं
लिहन् जयेच्छर्द्दिमुदीर्णवेगाम् ॥२८॥
एषा पृथक्त्वेन मया क्रियोक्ता
तां सन्निपातेऽपि समीक्ष्य बुद्ध्या ।
दोषर्त्तुरोगाग्निबलान्यवेक्ष्य
प्रयोजयेच्छास्त्रविदप्रमत्तः ॥ २९ ॥
मनोऽभिघाते तु मनोऽनुकूला-
वाचः समाश्वासनहर्षणानि ।
लोकप्रसिद्धाः श्रुतयो वयस्याः
शृङ्गारयुक्ताश्च हिता विहाराः ॥
गन्धा विचित्रा मनसोऽनुकूला-
मृत्पुष्पयुक्ताम्रफलादिकानाम् ।
शाकानि भोज्यान्यथ पानकानि
सुसंस्कृताः षाड़वरागलेहाः ॥
यषा रसाः काम्बलिकाः खड़ाश्च
मांसानि धाना विविधाश्च भक्ष्याः ।
फलानि मूलानि च गन्धवर्ण-
रसैरुपेतानि वमिं जयन्ति ॥
गन्धं रसं स्पर्शमथापि शब्दं
रूपञ्च यद्यत् प्रियमप्यसात्म्यम् ।
तदेव दद्यात् प्रशमाय तस्या-
स्तज्जो हि रोगः सुखमेव जेतुम् ॥ ३० ॥

छर्द्द्युपद्रुतानाञ्च चिकित्सितात् स्वा-
च्चिकित्सितं कार्य्यमुपद्रवाणाम् ।
अतिप्रवृत्तासु विरेचनस्य कर्म्मातियोगैर्विहितं विधेयम् ॥
छर्द्दिप्रसङ्गात् पवनोऽप्यवश्यं धातुक्षयाद् वृद्धिमुपैति तस्मात् ।
चिरप्रवृत्तास्वनिलापहानि कार्य्याण्युपष्टम्भनवृंहणानि ॥
सर्पिर्गुड़ाः क्षीरविधिर्घृतानि कल्याणकत्र्यूषणजीवनानि ।
वृष्यास्तथा मांसरसाः सलेहाश्चिरप्रसक्ताञ्च वमिं जयन्ति ॥३१॥

तत्र श्लोकः ।

संख्याहेतुं लक्षणमुपद्रवान् साध्यतां तद् योगांश्च ।
छर्द्दीनां प्रशमार्थं चिकित्सितं प्राह मुनिवर्य्यः ॥ ३२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
छर्द्दिचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः

अथातो वीसर्पचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥
कैलासे किन्नराकीर्णे बहुप्रस्रवणौषधे ।
पादपैर्विविधैः स्निग्धे नित्यं कुसुमसम्पदा ॥
वसद्भिर्मधुरान् गन्धान् सर्व्वतः स्वस्त्यलङ्कृते ।
विहरन्तं जितात्मानमात्रेयमृषिवन्दितम् ॥
महर्षिभिः परिवृतं सर्व्वभूतहिते रतम् ।

अग्निवेशो गुरुं काले विनयादिदमुक्तवान् ॥
भगवन् दारुणं रोगमाशीविषविषोपमम् ।
संसर्पन्तं शरीरेषु देहिनामुपलक्षये ॥
सहसैव नरास्तेन परीताः शीघ्रकारिणा ।
विनश्यन्त्यनुपक्रान्तास्तत्र मे संशयो महान् ॥
स नाम्ना केन विज्ञेयः संश्रितः केन हेतुना ।
कतिधातुः कतिविधो जायते कैश्च हेतुभिः ॥
सुखसाध्यः कृच्छ्रसाध्यो ज्ञेयो यश्चानुपक्रमः ।
कथं कैर्लक्षणैः किञ्च भगवंस्तस्य भेषजम् ॥ २ ॥
तदग्निवेशस्य वचः श्रुत्वात्रेयः पुनर्व्वसुः ।
यथावदखिलं सर्व्वं प्रोवाच मुनिसत्तमः ॥ ३ ॥
विविधं सर्पति यतो विसर्पस्तेन स स्मृतः ।
परिसर्पोऽथवा नाम्ना सर्व्वतः परिसर्पणात् ॥ ४ ॥
स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः ।
पृथक् त्रयस्त्रिभिश्चैको वीसर्पो द्वन्द्वजास्त्रयः ॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः ।
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः ।
यस्तु कर्द्दमको घोरः स पित्तकफसम्भवः ॥ ५ ॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः ।
वीसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥ ६ ॥
लवणाम्लकटूष्णानां रसानामतिसेवनात् ।
दध्यम्लमस्तुशुक्तानां सुरासौवीरकस्य च ॥

व्यापन्नबहुमद्योष्णरागषाड़वसेवनात्।
शाकानां हरितानाञ्च सेवनाच्च विदाहिनाम्॥
कूर्च्चिकानां किलाटानां सेवनान्मस्तुकस्य च।
दध्नः शिण्डाकिपूर्व्वाणामासुतानाञ्च सेवनात्॥
तिलमाषकुलत्थानां तैलानां पिष्टकस्य च।
ग्राम्यानूपौदकानाञ्च मांसानां लशुनस्य च॥
प्रक्लिन्नानाञ्च मत्स्यानां विरुद्धानाञ्च सेवनात्।
अत्यादानाद्दिवास्वप्नादजीर्णाध्यशनाशनात्॥
क्षतबन्धप्रपतनाद्धर्म्मकर्म्मातिसेवनात्।
विषवाताग्निदोषाच्च वीसर्पाणां समुद्भवः॥ ७॥
एतैर्निदानैर्व्यामिश्रैः कुपिता मारुतादयः।
दूष्यान् संदूष्य रक्तादीन् विसर्पन्त्यहिताशिनाम्॥
बहिःश्रितः श्रितश्चान्तस्तथा चोभयसंश्रितः।
वीसर्पो बलमेषां तु ज्ञेयं गुरु यथोत्तरम्॥
बहिर्मार्गाश्रितं साध्यमसाध्यमुभयाश्रितम्।
वीसर्पं दारुणं विद्यात् सुकृच्छ्रन्त्वन्तराश्रयम्॥ ८॥
अन्तःप्रकुपिता दोषा विसर्पन्त्यान्तराश्रये।
बहिर्बहिःप्रकुपिताः सर्व्वत्रोभयसंश्रिताः॥ ९॥
मर्म्मोपघातात् संरोधादयनानां विघट्टनात्।
तृष्णातियोगाद्वेगानां विषमञ्च प्रवर्त्तनात्॥
विद्याद्वीसर्पमन्तर्यदाशु चाग्निबलक्षयात्।
अतो विपर्य्ययाद्बाह्यमन्यं विद्यात् स्वलक्षणैः॥ १०॥
यस्य लिङ्गानि सर्व्वाणि बलवद् यस्य कारणम्।

यस्य चोपद्रवाः कष्टा मर्म्मगो यश्च हन्ति सः ॥ ११ ॥
रूक्षोष्णैः कारणैर्वायुः पूरणैर्वा समाहितः ।
प्रदुष्टो दूषयन् दूष्यान् विसर्पति यथाबलम् ॥ १२ ॥

तस्य रूपाणि । भ्रमदवथुपिपासानिस्तोदशूलाङ्गमर्द्दो-द्वेष्टनकम्पज्वरतमककासास्थिसन्धिभेदविवर्णवमनारोचकाविपाकाश्चक्षुषोराकुलत्वमस्रागमनं पिपीलिकासञ्चार इव चाङ्गेषु, यस्मिंश्चावकाशे वीसर्पोऽनुविसर्पति सोऽवकाशः श्यावारुणावभासो वा श्वयथुमान् निस्तोदभेदशूलायामसङ्कोचहर्षस्फुरणैरतिमात्रं प्रपीड्यते। अनुपक्रान्तश्चोपचीयते शीघ्रभेदैः स्फोटकैस्तनुभिररुणाभैः श्यावैर्वा तनुविषमदारुणाल्पस्रावैर्विबद्धवातमूत्रपुरीषश्च भवति । निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत इति वातवीसर्पः ॥ १३ ॥

पित्तमुष्णोपचारेण विदाह्यम्लादिभिश्चितम् ।
दूष्यान् संदूष्य धमनीः पूरयद्वै विसर्पति ॥ १४ ॥

तस्य रूपाणि । ज्वरस्तृष्णा मूर्च्छा च्छर्द्दिररोचकोऽङ्गभेदः स्वेदोऽतिमात्रमन्तर्दाहः प्रलापः शिरोरुक् चक्षुषोराकुलत्वमस्वप्नोऽरतिर्भ्रमः शीतवातवारितर्षोऽतिमात्रं हरितहारिद्रमूत्रवर्चस्त्वं हारिद्रदर्शनं, यस्मिंश्चावकाशे वीसर्पोऽनुसर्पति सोऽवकाशस्ताम्र-हरित-हारिद्र-नील-कृष्ण-रक्तानां वर्णानामन्यतमं पुष्यति । सोत्सेधैश्चातिमात्रं दाहसम्भेदनपरीतैः स्फोटकैरुपचीयते तुल्यवर्णस्राविभिरचिरपाकश्च भवति । निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरत इति पित्तवीसर्पः ॥ १५ ॥

स्वाद्वम्ललवणस्निग्धगुर्व्वन्नस्वप्नसञ्चितः।
कफः संदूषयन् दूष्यान् कृत्स्नमङ्गं विसर्पति ॥ १६ ॥

तस्य रूपाणि। शीतज्वरो गौरवं निद्रा तन्द्रारोचककोटविपाको मधुरास्यत्वमास्योपलेपः प्रसेकश्छर्द्दिरालस्यं स्तैमित्यमग्निसादो दौर्ब्बल्यं, यस्मिंश्चावकाशे विसर्पोऽनुसर्पति सोऽवकाशः श्वयथुमान् पाण्डुर्नातिरक्तः स्नेहसुप्तिस्तम्भगौरवैरन्वितोऽल्पवेदनः कृच्छ्रपाकैश्चिरकारिभिः बहलत्वगुपलेपैः स्फोटैः श्वेतपाण्डुभिरनुबध्यते। प्रभिन्नस्तु श्वेतं पिच्छिलं तन्तुमद्घनमनुबद्धं दुर्गन्धमास्रावं स्रवत्यूर्द्ध्वञ्च गुरुभिः स्थिरैर्जालावततैः स्निग्धैर्बहलत्वगुपलेपैर्व्रणैरनुबध्यतेऽनुषङ्गी च भवति श्वेतत्वङ्नखनयनवदनमूत्रवर्च्चस्त्वम्। निदानोक्तान्यस्य नोपशेरते विपरीतानि चोपशेरत इति श्लेष्मवीसर्पः ॥ १७ ॥

वातपित्तं प्रकुपितमतिमात्रं स्वहेतुभिः।
परस्परं लब्धबलं शीघ्रमङ्गे विसर्पति ॥ १८ ॥

तदुपतापादातुरः सर्व्वशरीरमङ्गारैरिवाकीर्य्यमाणं मन्यते। छर्द्यतीसारमूर्च्छादाहमोहज्वरतमकारोचकास्थिसन्धिभेदतृष्णाविपाकाङ्गभेदादिभिश्चाभिभूयते। यं चावकाशं वीसर्पोऽनुसर्पति सोऽवकाशः शान्ताङ्गारप्रकाशोऽतिरक्तो वा भवत्यग्निदग्धप्रकारैश्च स्फोटैरुपचीयते। स शीघ्रगत्वादाश्वेव मर्म्माण्यनुसरति मर्म्मणि चोपतप्ते पवनोऽतिबलो भिनत्त्यङ्गान्यतिमात्रं प्रमोहयति संज्ञां हिक्काश्वासौ जनयति नाशयति निद्राम्। स नष्टनिद्रः प्रमूढसंज्ञो व्यथितचेता न क्वचित् सुखमुपलभते, परितः स्थानादासनात् शय्यां क्रान्तुमिच्छति क्लिष्टभूयिष्ठश्चाश

निद्रां लभते दुःखप्रबोधश्च भवति, तमेवंविधमातुरमग्निवीसर्प-परीतमचिकित्स्यं विद्यात् ॥ १९ ॥

कफपित्तं प्रकुपितं बलवत् स्वेन हेतुना ।
विसर्पत्येकदेशेतु प्रक्लेदयति चाधिकम् ॥ २० ॥

तद्विकाराः—शीतज्वरः शिरोरुग् दाहः स्तैमित्यमङ्गावसदनं निद्रा तन्द्रा प्रमोहोऽन्नद्वेषः प्रलापोऽग्निनाशो दौर्ब्बल्य-मस्थिभेदो मूर्च्छा पिपासा स्रोतसां प्रलेपो जाड्यमिन्द्रियाणा-मामोपवेशन-मङ्गविक्षेपोऽङ्गमर्द्दोऽरतिरौत्‌-सुक्यञ्चोपजायते । प्रायशश्चामाशये विसर्पत्यलस एकदेशग्राही च स्यात् । यस्मिंश्चा-वकाशे विसर्पो विसर्पति सोऽवकाशो रक्तपीतपाण्डुपिड़कावकीर्ण-इव मेचकाभो मलिनः स्निग्धो बहूष्मा गुरुः स्तिमितवेदनः श्वयथुमान् गम्भीरपाको निरास्रावः शीघ्रक्लेदनश्च भवति, स्विन्नक्लिन्नपूतिमांसश्च क्रमेणाल्परुक् संज्ञास्मृतिहन्ता भवेत्, परामृष्टोऽवदीर्य्यते * स कर्द्दम इवावपीड़ितोऽन्तरं प्रयच्छ-त्युपक्लिन्नमांसत्यागी शिरास्नायुसंदर्शी कुणपगन्धी च भवति, तं कर्द्दमवीसर्पपरीतमचिकित्स्यं विद्यान् ॥ २१ ॥

स्थिरगुरुकठिनमधुरशीतस्निग्धान्नपानाभिष्यन्दिसेविनाम-व्यायामसेविनामप्रतिकर्म्मशीलानाञ्च श्लेष्मा वायुश्च प्रकोपमा-पद्यते, तावुभौ दुष्टप्रवृद्धावतिबलौ प्रदूष्य दूष्यान् विसर्पाय कल्पेते । तत्र वायुः श्लेष्मणा विबद्धमार्गस्तमेव श्लेष्माणमनेकधा भिन्दन् क्रमेण ग्रन्थिमालां कृच्छ्रपाकसाध्यां कफाशये संजन-यति, उत्सन्नरक्तस्य वा प्रदूष्य रक्तं शिरास्नायुमांसत्वगाश्रितानां

* पादपृष्ठश्चावदीर्य्यत इति वा पाठः ।

ग्रन्थीनां मालां कुरुते तीव्ररुजानां स्थूलानामणूनां दीर्घवृत्त-रक्तानाम्। तदुपतापाज्ज्वरातीसारहिक्काश्वासकासशोषप्रमोह-वैवर्ण्यारोचकाविपाकप्रसेकच्छर्द्दिमूर्च्छाङ्गभङ्गनिद्रारतिसदनानि प्रादुर्भवन्त्युपद्रवाः। एतैरुपद्रवैरुपद्रुतः सर्व्वकर्म्मणां विषयमतिपतितो विवर्ज्जनीयो भवतीति ग्रन्थिवीसर्पः॥ २२॥

उपद्रवस्तु खलु रोगोत्तरकालजो रोगाश्रयो रोग एव स्थूलोऽणुर्वा रोगात् पश्चाज्जायत इत्युपद्रवसंज्ञः। तत्र प्रधानं व्याधिर्व्याधेर्गुणभूत उपद्रवस्तस्य प्रायः प्रधानप्रशमे प्रशमो भवति। स तु पीड़ाकरतरो भवति पश्चादुत्पद्यमानो व्याधिपरिक्लिष्टशरीरधातुकत्वात्, तस्मादुपद्रवं त्वरमाणोऽभिबाधेत॥ २३॥

सर्व्वायतनसमुत्थं सर्व्वलिङ्गं सर्व्वाङ्गव्यापिनं सर्व्वधात्वनुसारिणमाशुकारिणं महात्ययिकमिति च मत्वा सन्निपातवीसर्पमचिकित्स्यं विद्यात्॥ २४॥

तत्र वातपित्तश्लेष्मनिमित्ता वीसर्पास्त्रयः साध्या भवन्ति। अग्निकर्द्दमाख्यौ पुनरनुपसृष्टौ मर्म्मण्यनुपहते वा शिरास्नायुमांसक्लेदे साधारणक्रियाभिरुभावेवाभ्यस्यमानौ प्रशान्तिमापद्येयाताम्। अनादरोपक्रान्तः पुनस्तयोरन्यतरो दहेद्देहमाश्वेवाशीविषविषवत्। तथा ग्रन्थिवीसर्पमजातोपद्रवमारभेत चिकित्सितुमुपद्रवेणोपद्रुतन्त्वेनं परिहरेत्। सन्निपातजन्तु सर्व्वधात्वनुसारित्वादाशुकारित्वाद्विरुद्धोपक्रमत्वाच्चासाध्यं विद्यात्। तत्र साध्यानां साधनमनुव्याख्यास्यामः॥२५॥

लङ्घनोल्लेखने शस्ते तिक्तकानाञ्च सेवनम्।
कफस्थानगते सामे रूक्षशीतैश्च लेपनम्॥

पित्तस्थानगतेऽप्येतत् सामे कुर्य्याच्चिकित्सितम् ।
शोणितस्यावसेकञ्च विरेकञ्च विशेषतः ॥
मारुताशयसम्भूतेऽप्यादितः स्याद्विरूक्षणम् ।
रक्तपित्तान्वयेऽप्यादौ स्नेहनं न हितं मतम् ॥
वातोल्वणे तिक्तघृतं पैत्तिके च प्रशस्यते ।
लघुदोषे महादोषे पैत्तिके स्याद्विरेचनम् ॥
न घृतं बहुदोषाय देयं तंच विरेचयेत् ।
तेन दोषो ह्युपष्टब्धस्त्वङ्मांसरुधिरं पचेत् ॥
तस्माद्विरेकमेवादौ शस्तं दद्याद्विसर्पिणः ।
शोणितस्यावसेकञ्च तद्ध्यपाश्रयसंज्ञितम् ॥
इति वीसर्पिणामुक्तं समासेन चिकित्सितम् ॥
एतदेव पुनः सर्व्वं व्यासतः संप्रवक्ष्यते । २६ ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ॥
वमनं संविधातव्यं वीसर्पे कफपित्तजे ।
पटोलपिचुमर्द्दाभ्यां पिप्पल्या मदनेन च ॥
वीसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ।
यांश्च योगान् प्रवक्ष्यामि कल्पेषु कफपित्तिनाम् ।
वीसर्पाणान्तु योज्यास्ते दोषनिर्हरणाः शिवाः ॥ २७ ॥
मुस्तनिम्बपटोलानां चन्दनोत्पलयोरपि ।
शारिवामलकोशीरमुस्तानां वा विचक्षणः ॥
कषायान् योजयेद्वैद्यः सिद्धान् वीसर्पनाशनान् ।
किराततिक्तकं लोध्रं चन्दनं सदुरालभम् ॥
नागरं पद्मकिञ्जल्कमुत्पलं सविभीतकम् ।

मधुकं नागपुष्पञ्च दद्याद्वीसर्पशान्तये ॥
प्रपौण्डरीकं मधुकं पद्मकिञ्जल्कमुत्पलम् ।
नागपुष्पञ्च लोध्रञ्च तेनैव विधिना पिबेत् ॥ २८ ॥
दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ।
निशापर्य्युषितं दद्यात् तृष्णावीसर्पनाशनम् ॥
पटोलं पिचुमर्द्दञ्च दार्व्वीं कटुकरोहिणीम् ।
यष्ट्याह्वं त्रायमाणाञ्च दद्याद्वीसर्पशान्तये ॥ २९ ॥
पटोलादिकषायं वा सर्पिस्त्रिवृतया सह ।
मसूरविदलैर्युक्तं घृतमिश्रं प्रदापयेत् ।
पटोलपत्रमुद्गानां रसमामलकस्य च ॥
पाययेत घृतोन्मिश्रं नरं वीसर्पपीड़ितम् ।
यच्च सर्पिर्महातिक्तं पित्तकुष्ठनिबर्हणम् ।
निर्द्दिष्टं तदपि प्राज्ञो दद्याद्वीसर्पशान्तये ॥
त्रायमाणाघृतं सिद्धं गौल्मिके यदुदाहृतम् ।
वीसर्पाणां प्रशान्त्यर्थं दद्यात् तदपि बुद्धिमान् ॥ ३० ॥
त्रिवृच्चूर्णं समालोड्य सर्पिषा पयसापि वा ।
घर्म्माम्बुना वा संयोज्य मृद्वीकानां रसेन वा ।
विरेकार्थं प्रयोक्तव्यं सिद्धं वीसर्पनाशनम् ॥
त्रायमाणाश्रृतं वापि पयो दद्याद्विरेचनम् ।
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ।
स एव गुरुकोष्ठाय त्रिवृच्चूर्णयुतो हितः ॥ ३१ ॥

दोषे कोष्ठगते भूय एतत् कुर्य्याद्भिषग्जितम् ।
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥
भिषग्वातान्वितं रक्तं विषाणेन विनिर्हरेत् ।
पित्तान्वितं जलौकोभिरलावुभिः कफान्वितम् ॥
यथासन्नं विकारस्य व्यधयेदाशु वा सिराम् ।
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥
एवं निर्हृतदोषाणां दोषे त्वङ्मांससंश्रिते ।
आदितो वाल्पदोषाणां क्रिया बाह्या प्रवक्ष्यते ॥ ३२ ॥
उडुम्बरत्वङ्मधुकं पद्मकिञ्जल्कमुत्पलम् ।
नागपुष्पं प्रियङ्गुश्च प्रदेहः सघृतो हितः ॥
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ।
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥
कालीयं मधुकं हेम वन्यं चन्दनपद्मकौ ।
पत्रं मृणालं फलिनी प्रलेपः स्याद् घृताप्लुतः ॥
शालूकञ्च मृणालञ्च शङ्खं चन्दनमुत्पलम् ।
वेतसस्य च मूलानि प्रदेहः स्याद् घृताप्लुतः ॥
शारिवा पद्मकिञ्जल्कमुशीरं नीलमुत्पलम् ।
मञ्जिष्ठा चन्दनं लोध्रमभया च प्रलेपनम् ॥
नलदञ्च हरेणुश्च लोध्रं मधुकमुत्पलम् ।
दूर्व्वा सर्ज्जरसश्चैव सघृतं स्यात् प्रलेपनम् ॥
यावकाः शक्तवश्चोक्ताः सर्पिषा सह योजिताः ।
प्रदेहा मधुकं वीरा सघृता यवशक्तवः ॥
बलामुत्पलशालूकं वीरामगुरुचन्दनम् ।

दद्यादालेपनं वैद्यो मृणालानि विसानि च ॥
यवचूर्णं समधुकं सघृतञ्च प्रलेपनम् ।
हरेणवो मसूराश्च समुद्गाः श्वेतशालयः ।
पृथक् पृथक् प्रदेहाः स्युः सर्व्वे वा सर्पिषा सह ॥
पद्मिनीकर्द्दमः शीतो मौक्तिकं पिष्टमेव वा ।
शङ्खः प्रवालाः शुक्तिर्वा गैरिको वा घृताप्लुतः ॥
पृथगेते प्रदेहाश्च हिता ज्ञेया विसर्पिणाम् ।
प्रपौण्डरीकं मधुकं बला शालूकमुत्पलम् ॥
न्यग्रोधपत्रं दुग्धीका सघृतं स्यात् प्रलेपनम् ।
विसानि च मृणालानि सघृताश्च कशेरुकाः ॥
शतावर्य्या विदार्य्याश्च कन्दौ धौतघृतं तथा ।
न्यग्रोधोडुम्बरप्लक्षवेतसाश्वत्थजाम्बवैः ॥
त्वक्-कल्कैर्बहुसर्पिष्कैः शीतैरालेपनं हितम् ।
शैवालं नलमूलानि गोजिह्वा वृषकर्णिका ॥
इन्द्राणीशाकं सघृतं देयं वा दाहशान्तये * ।
प्रदेहाः सर्व्व एवैते रक्तपित्तोल्बणे हिताः ॥ ३३ ॥
कफजे तु प्रवक्ष्यामि प्रदेहानपरान् हितान् ।
त्रिफलापद्मकोशीरं समङ्गा करवीरकम् ॥
नलमूलान्यनन्ता च प्रदेहमुपकल्पयेत् ।
खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् ॥
कुरण्टकं देवदारु दद्यादालेपनं हितम् ।
आरग्वधस्य पत्राणि त्वचं श्लेष्मान्तकस्य च ॥

---

* शिरीषत्वग्बलाद्दतमिति पाठान्तरम् ।

इन्द्राणीशाकं काकाह्वां शिरीषकुसुमानि च ।
शैवालं नलमूलानि वीरां गन्धप्रियङ्गुकाम् ॥
त्रिफलां मधुकं वीरां शिरीषकुसुमानि च ।
प्रपौण्डरीकं ह्रीवेरं दार्व्वीत्वगभयां बलाम् ॥
पृथगालेपनं दद्याद्द्वन्द्वशः सर्व्वशोऽपि वा ।
प्रदेहाः सर्व्व एवैते देयाः स्वल्पघृताप्लुताः ॥
वातपित्तोल्वणे ये तु प्रदेहास्ते घृताधिकाः ।
घृतेन शतधौतेन प्रदिह्यात् केवलेन वा ॥ ३४ ॥
घृतमण्डेन शीतेन पयसा मधुकाम्बुना ।
पञ्चवल्ककषायेण सेचयेच्छीतलेन वा ॥
वातासृक्पित्तबहुलं वीसर्पं बहुशः पृथक् ।
सेचनास्ते प्रदेहा ये त एव घृतसाधनाः ॥
ते चूर्णयोगा वीसर्पव्रणानामवचूर्णनाः ।
दूर्व्वास्वरससिद्धञ्च घृतं स्याद् व्रणरोपणम् ॥
दार्व्वीत्वङ्मधुकं लोध्रं केशरञ्चावचूर्णितम् ॥
पटोलं पिचुमर्द्दश्च त्रिफला मधुकोत्पले ।
एतत् प्रक्षालनं सर्पिर्व्रणे चूर्णं प्रलेपनम् ॥ ३५ ॥
प्रदेहाः सर्व्व एवैते कर्त्तव्याः संप्रधावनाः ।
व्रणे व्रणे प्रयोक्तव्याः पूर्व्वमुद्धृत्य लेपनम् ॥
अधावनोद्धृते सर्व्वे प्रदेहा बहुशोऽघनाः ।
देयाः प्रदेहाः कफजे पर्य्यधानोद्धृते घनाः ॥
त्रिभागाङ्गुष्ठमात्रं स्यात् प्रलेपः कल्कपेषितः ।
नातिस्निग्धो न रूक्षश्च न पिण्डो न द्रवः समः ॥

न च पर्य्युषितं लेपं कदाचिदवचारयेत्।
न च तेनैव लेपेन पुनर्जातु प्रलेपयेत्॥
क्लेदवीसर्पशूलानि सोष्माभावात् प्रवर्त्तयेत्।
लेपो ह्युपरि पट्टस्य कृतः स्वेदयति व्रणम्॥
स्वेदजाः पिड़कास्तस्य कण्डूश्चैवोपजायते।
उपर्य्युपरि लेपस्य लेपो यद्यवचार्य्यते॥
तानेव दोषान् जनयेत् पट्टस्योपरि यान् कृतः।
अतिस्निग्धोऽतिद्रवश्च लेपो यद्यवचार्य्यते॥
त्वचि न श्लिष्यते सम्यक् न दोषं शमयत्यपि।
तन्वालिप्तं न कुर्व्वीत संशुष्को ह्यापुटायते॥
न चौषधिरसो व्याधिं प्राप्नोत्यपि च शुष्यति।
तन्वालिप्तेन ये दोषास्तानेव जनयेद् भृशम्॥
संशुष्कः पीड़येद् व्याधिं निस्नेहो ह्यवचारितः॥ ३६॥
अन्नपानानि वक्ष्यामि वीसर्पाणां निवृत्तये॥
लङ्घितेभ्यो हितो मन्थो रूक्षः सक्षौद्रशर्करः।
मधुरः किञ्चिदम्लो वा दाड़िमामलकान्वितः॥
सपरूषकमृद्वीकः सखर्ज्जूरः शृताम्बुना।
तर्पणैर्यवशालीनां सस्नेहा चावलेहिका॥
जीर्णे पुराणशालीनां यूषैर्भुञ्जीत भोजनम्।
मुद्गान् मसूरांश्चणकान् यूषार्थमुपकल्पयेत्॥
अनम्लान् दाड़िमाम्लान् वा पटोलामलकैः सह।
जाङ्गलानाञ्च मांसानां रसांस्तस्योपकल्पयेत्॥
रूक्षान् परूषकद्राक्षादाड़िमामलकान्वितान्।

रक्ताः श्वेता महाह्वाश्च शालयः षष्टिकैः सह ॥
भोजनार्थे प्रशस्यन्ते पुराणाः सुपरिस्रुताः ॥
यवगोधूमशालीनां सात्म्यमेव प्रदापयेत् ।
येषां नातुरचितः शालिर्नरा ये च कफाधिकाः ॥ ३७ ॥
विदाहीन्यन्नपानानि विरुद्धं स्वपनं दिवा ।
क्रोधव्यायामसूर्य्याग्निप्रवातांश्च विवर्ज्जयेत् ॥ ३८ ॥
कुर्य्याच्चिकित्सितादस्मात् शीतप्रायाणि पैत्तिके ।
रूक्षप्रायाणि कफजे स्नेहिकान्यनिलात्मके ॥
वातपित्तप्रशमनमग्निवीसर्पिणे हितम् ।
कफपित्तप्रशमनं प्रायः कर्द्दमसंज्ञके ॥ ३९ ॥
रक्तपित्तोल्वणं ज्ञात्वा ग्रन्थिवीसर्पमादितः ।
रूक्षणैर्लङ्घनैः सेकैः प्रदेहैः पाञ्चवल्कलैः ॥
शिरामोक्षैर्जलौकोभिर्वमनैः सविरेचनैः ।
घृतैः कषायतिक्तैश्च कालज्ञः समुपाचरेत् ॥
ऊर्द्धञ्चाधश्च शुद्धाय रक्ते चाप्यवसेचिते ।
वातश्लेष्महरं कर्म्म ग्रन्थिवीसर्पिणे हितम् ॥ ४० ॥
उत्कारिकाभिरुष्णाभिरुपनाहः प्रशस्यते ।
स्निग्धाभिर्वेशवारैर्वा ग्रन्थिवीसर्पशूलिनाम् ॥
दशमूलोपसिद्धेन तैलेनोष्णेन सेचयेत् ।
कुष्ठतैलेन चोष्णेन पञ्चक्षारयुतेन वा ।
गोमूत्रैः पत्रनिर्य्यूहैरुष्णैः परिषेचयेत् ॥ ४१ ॥
सुखोष्णया प्रदिह्याद्वा पिष्टया चाश्वगन्धया ।
शुष्कमूलककल्केन नक्तमालत्वचाथ वा ॥

विभीतकस्य वा ग्रन्थिं कल्केनोष्णेन लेपयेत्।
बलां नागबलां पथ्यां भूर्ज्जग्रन्थिं विभीतकम्॥
वंशपत्राणाग्निमन्थं दद्याद् ग्रन्थिविलेपनम्।
दन्तीचित्रकमूलत्वक्सुधार्कपयसीगुड़ः॥
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि।
बहिर्म्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम्॥ ४२॥
दीर्घकालस्थितं ग्रन्थिं भिन्द्यादेभिश्च भेषजैः।
मूलकानां कुलत्थानां यूषैः सक्षारदाड़िमैः॥
गोधूमान्नैर्यवान्नैश्च सक्षौधुमधुशर्करैः।
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः॥
त्रिफलायाः प्रयोगैश्च पिप्पलीक्षौद्रसंयुतैः।
देवदारुपटुव्योषप्रयोगैर्गैरिकस्य च॥
मुस्तभल्लातशक्तूनां प्रयोगैर्माक्षिकस्य च।
धूमैर्विरेकैः शिरसः पूर्व्वोक्तैर्गुल्मभेदनैः॥
अयोलवणपाषाणाद्धेमतप्तप्रपीड़नैः॥ ४३॥
क्रियाभिराभिः सिद्धाभिर्विविधाभिर्बली स्थिरः।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति॥
अथास्य दाहः क्षारेण शरैर्हेम्नाथ वा हितः।
पाकिभिः पाचयित्वा वा पाटयित्वा समुद्धरेत्॥
मोक्षयेद् बहुशश्चास्य रक्तमुत्क्लेशमागतम्।
पुनरस्य हृते रक्ते वातश्लेष्मजिदौषधम्॥
धूमो विरेकः शिरसः स्वेदनं परिमर्द्दनम्।
अप्रशाम्यति दोषे च पाचनं वा प्रशस्यते॥

प्रक्लिन्नं दाहपाकाभ्यां भिषक् शोधनरोपणैः।
बाह्यैश्चाभ्यान्तरैर्वापि व्रणवत् समुपाचरेत् ॥ ४४ ॥
कम्पिल्लकं विडङ्गानि त्वचो दार्व्यास्तथैव च।
पिष्ट्वा तैलं विपक्तव्यं ग्रन्थिव्रणचिकित्सितम् ॥
द्विव्रणीयोपदिष्टेन कर्म्मणा वाप्युपाचरेत्।
देशकालविभागज्ञो व्रणान् वीसर्पजान् बुधः ॥ ४५ ॥
य एव विधिरुद्दिष्टो ग्रन्थीनां विनिवृत्तये।
स एव गलगण्डानां कफजानां निवृत्तये ॥
गलगण्डास्तु वातोत्था ये कफानुबला नृणाम्।
घृतक्षीरकषायाणामभ्यासान्न भवन्ति ते ॥ ४६ ॥
यानीहोक्तानि कर्म्माणि वीसर्पाणां निवृत्तये।
एकतस्तानि सर्व्वाणि रक्तमोक्षणमेकतः ॥
विसर्पो न ह्यसंसृष्टो रक्तपित्तेन लक्ष्यते।
तस्मात् साधारणं सर्व्वमुक्तमेतच्चिकित्सितम् ॥
विशेषो दोषवैषम्यान्न च नोक्तः समासतः।
समासव्यासनिर्द्दिष्टां क्रियां विद्वानुपाचरेत् ॥ ४७ ॥

तत्र श्लोकाः।

निरुक्तानामभेदाश्च दोषा दूष्याश्च हेतवः।
आश्रयो मार्गतश्चैव वीसर्पगुरुलाघवम् ॥
लिङ्गान्युपद्रवा ये च यल्लक्षणा उपद्रवः।
साध्यत्वं न च साध्यत्वं साधनञ्च यथाक्रमम् ॥
इति पिप्रीषवे सिद्धमग्निवेशाय धीमते।
पुनर्व्वसुरुवाचेदं वीसर्पाणां चिकित्सितम् ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
वीसर्पचिकित्सितं नामैकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः

अथातस्तृष्णाचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

ज्ञानप्रशमतपोभिः ख्यातोऽत्रिसुतो जगद्धितेऽभिरतः ।
तृष्णानां प्रशमार्थं चिकित्सितं प्राह पञ्चानाम् ॥ २ ॥

क्षोभाद्भयाच्छ्रमादपि शोकात् क्रोधाद्विलङ्घनान्मद्यात् ।
क्षाराम्ललवणकटुकोष्णरूक्षशुष्कान्नसेवाभिः ॥
धातुक्षयगदकर्षणवमनाद्यतियोगसूर्य्यसन्तापैः ।
पित्तानिलौ प्रवृद्धौ सौम्यान् धातूंश्च शोषयतः ॥
रसवाहिनीश्च धमनीर्जिह्वामूलगलतालुकक्लोम्नः ।
संशोष्य नृणां देहे कुरुतस्तृष्णामतिबलां तौ ॥
पीतं पीतं हि जलं शोषयतस्तावतिबलौ न याति शमम् ।
घोरव्याधिकृशानां प्रभवत्युपसर्गभूता सा ॥ ३ ॥

प्राग्रूपं मुखशोषः स्वलक्षणं सर्व्वदाम्बुकामित्वम् ।
तृष्णानां सर्व्वासां लिङ्गानां लाघवमपायः ॥ ४ ॥

मुखशोषस्वरभेदभ्रमसन्तापप्रलापसंस्तम्भान् ।
ताल्वोष्ठकण्ठजिह्वाकर्कशतां चित्तनाशञ्च ॥
जिह्वानिर्गममरुचिं बाधिर्य्यं मर्म्मदूयनं सादम् ।
तृष्णोद्भूता कुरुते पञ्चविधा लिङ्गतः शृणु ताः ॥ ५ ॥

अब्धातुं देहस्य कुपितः पवनो यदा विशोषयति ।
तस्मिन् शुष्के शुष्यत्यबलस्तृष्यत्यथ विशुष्यन् ॥

निद्रानाशः शिरसो भ्रमस्तथा शुष्कविरसमुखता च ।
स्रोतोऽवरोध इति च स्याल्लिङ्गं वाततृष्णायाः ॥ ६ ॥
पित्तं मतमाग्नेयं कुपितं चेत् तापयत्यब्धातुम् ।
सन्तप्तः संजनयेत् तृष्णां दाहोल्बणां नृणाम् ॥
तिक्तास्यत्वं शिरसो दाहः शीताभिनन्दता मूर्च्छा ।
पीताक्षिमूत्रवर्च्चस्त्वमाकृतिः पित्ततृष्णायाः ॥ ७ ॥
तृष्णा यामप्रभवा साप्याग्नेयी नपित्तजनितत्वात् ।
लिङ्गं तस्याश्चारुचिराध्मानकफप्रसेकौ च ॥ ८ ॥
देहो रसजोऽम्बुभवो रसश्च तस्य क्षयाच्च तृषेऽपि ।
दीनस्वरः प्रताम्यन् संशुष्कहृदयगलतालुः ॥ ९ ॥
भवति खलु योपसर्गात् तृष्णा सा शोषिणी कष्टा ।
ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम् ॥
सर्व्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ।
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः ॥
नाग्नेर्विना हि तर्षः पवनाद्वा तौ हि शोषणे हेतू ।
अब्धातोरतिवृद्धावपां क्षये तृष्यते नरो हि ॥
गुर्व्वन्नपयःस्नेहैः संमूर्च्छेन्निर्विदाहकाले ऽन्नः ।
यस्तृषेऽवृतमार्गे तत्राप्यनिलानलौ हेतू ॥ १० ॥
तीक्ष्णोष्णरूक्षभावान्मद्यं पित्तानिलौ प्रकोपयति ।
शोषयतोऽपां धातुं तावेव हि मद्यशीलानाम् ॥
तप्तास्विव सिकतासु हि तोयमाशु शुष्यति क्षिप्तम् ।
तेषां सन्तप्तानां हिमजलपानाद्भवति शर्म्म ॥
शिशिरंस्नातस्योष्मा रुद्धः कोष्ठं प्रपद्य तर्षयति ।

तस्माद् भजेत सहसा नोष्णः स्नाने जलं शीतम् ॥
लिङ्गं सर्व्वास्वेतास्वनिलक्षयात् पित्तजं भवत्यथ तु ।
पृथगागमाश्चिकित्सितमतः प्रवक्ष्यामि तृष्णानाम् ॥ ११ ॥
अपां क्षयाद्धि तृष्णा संशोष्य नरं मारयेदाशु ।
तस्मादैन्द्रं तोयं समधु पिबेत्तद्गुणं वान्यत् ॥
किञ्चित्तुवराम्लरसं तनु लघु शीतं सुगन्धि सुरसञ्च ।
अनभिष्यन्दि च यत्तत् क्षितिस्थितमप्यैन्द्रवज् ज्ञेयम् ॥
शृतशीतं ससितोपलमथवा शरपूर्व्वपञ्चमूलेन । १२ ॥
लाजानां सक्तूनां समधुसितं मन्थमैन्द्रेण ॥
वाट्यं वामयवानां शीतं मधुशर्करायुतं दद्यात् ।
पेयां वा शालीनां दद्याद्वा कोरदूषाणाम् ॥ १३ ॥
पयसा शृतेन भोजनमथवा मधुशर्करायुतं योज्यम् ।
पारावतादिकरसैर्घृतभृष्टैर्व्वाप्यलवणाम्लैः ॥
तृणपञ्चमूलमुञ्जातकैः पियालजैश्च जाङ्गलाः सुकृताः ।
शस्ता रसाः पयो वा तैः सिद्धं शर्करामधुमत् ॥
शतधौतघृतेनाक्तः पयः पिबेच्छीततोयमवगाह्य ।
मुद्गमसूरचणकजा रसाश्च घृतभर्ज्जिता देयाः ॥ १४ ॥
मधुरैः सजीवनीयैः शीतैश्च सतिक्तकैः शृतं क्षीरम् ।
पानाभ्यञ्जनयोगेष्विष्टं मधुशर्करायुतम् ॥
तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि च स्यात् ।
नारीपयः सशर्करमुष्ट्रा अपि नस्यमिक्षुरसः ॥
क्षीरेक्षुरसगुडोदकसितोपलाक्षौद्रशीधुमाध्वीकैः ।
वृक्षाम्लमातुलुङ्गैर्गण्डूषास्तालुशोषघ्नाः ॥ १५ ॥

जम्ब्वाम्रातकबदरीवेतसपञ्चपल्लवैश्चाम्लाः ।
हृन्मुखशिरःप्रदेशाः संश्रितमूर्च्छाभ्रमतृष्णाघ्नाः ॥
दाडिमदधित्थलोध्रैः सविदारीबीजपूरकैः शिरसः ।
लेपो गौरामलकैर्घृतारनालयुतैश्च हितः ॥
शैवालपङ्काम्बुरुहैः साम्लैः सघृतैश्च शक्तुभिर्लेपाः ॥ १६ ॥
मस्त्वारनालार्द्रवसनकमलमणिहारसंस्पर्शाः ।
शिशिराम्बुचन्दनार्द्रस्तनतटपाणितलगात्रसंस्पर्शाः ।
मौक्तिकक्षौमार्द्रनिवसनानां वराङ्गनानां प्रियाणाञ्च ॥
हिमवद्दरीवनसरित्सरोऽम्बुजपवनेन्दुपादशिशिराणाम् ।
रम्योदकयुक्तानां स्मरणं कथाश्च तृष्णाघ्नाः ॥ १७ ॥
वातघ्नमन्नपानं मृदु लघु शीतञ्च वाततृष्णायाः ।
क्षयकासनुद् घृतं क्षीरमूष्णं वाततृष्णाघ्नम् ॥ १८ ॥
स्याज्जीवनीयसिद्धं क्षीरं घृतं वातपित्तजे तर्षे ।
पैत्ते द्राक्षाचन्दनखर्ज्जूरीशीरमधुयुतं तोयम् ॥ *
लोहितशालिप्रस्थः सलोध्रमधुकाञ्जनोत्पलः क्षुण्णः ।
पक्वामलोष्ट्रमधुजलसमायुतो मृण्मये पेयः ॥
वटमातुलुङ्गवेतसपल्लवकुशकाशमूलयष्ट्याह्वैः ।
सिद्धेऽम्भस्यग्निनिभां कृष्णां मृदं कृष्णसिकतां वा ॥
तप्तानि नवकपालान्यथवा निर्व्वाप्य पाययेताच्छम् ।
अत्याप्लक्षशर्करामृतवल्लीजलं वा तृषं हन्ति ॥
क्षीरवतां मधुराणां शीतानां शर्करामधुमिश्राः ।

---

लोहितशालितण्डुलकर्पूरपक्वलोत्पलद्राक्षाः ।
मधुपक्वलोष्ट्रमेव च जले गतं शीतलं पेयमित्यधिकः पाठः क्वचित् ।

शीतकषाया मृद्भृष्टसंयुक्ताः क्षयतृष्णाघ्नाः ॥
व्योषवचाभल्लातकतिक्तकषायास्तथामतृष्णाघ्नाः ।
यच्चोक्तं कफजायां वम्यां तच्चैव कार्य्यं स्यात् ॥ १९ ॥
स्तम्भारुच्यविपाकालस्यच्छर्द्दिषु कफानुगां तृष्णाम् ।
ज्ञात्वा दधिमधुतर्पणलवणोष्णजलैर्वमनमिष्टम् ॥
दाड़िममदनफलं वाप्यन्यतमकषायमथ लेह्यम् ।
पेयमथवा प्रदद्याद्रजनीमधुशर्करायुतम् ॥ २० ॥
क्षयकासेन तुल्या क्षयतृष्णा सा गरीयसी नृणाम् ।
क्षीणक्षतशोषहितैस्तस्मात् तां भेषजैः शमयेत् ॥ २१ ॥
पानतृष्णार्त्तः पानन्त्वर्द्धोदकमम्ललवणगन्धाढ्यम् ।
शिशिरस्नातः पानं मद्याम्बु गुड़ाम्बु वा तृषितः ॥
भक्तोपरोधतृषितः स्नेहतृषार्त्तोऽथवा तनुं यवागूम् ।
प्रपिवेद् गुरुणा तृषितो भक्तेन तदुद्धरेद् भक्तम् ॥
मद्याम्बु वाम्बु चोष्णं बलवांस्तृषितः समुल्लिखेत् पीत्वा ।
मागधिकाविशदमुखः सशर्करं वा पिवेन्मन्थम् ॥ २२ ॥
बलवांस्तु तालुशोषी पिवेद् घृतं वृष्यमनु मद्यम् ।
सर्पिर्भृष्टं क्षीरं मांसरसांश्चाबलः स्निग्धान् ॥
अतिरूक्षदुर्ब्बलानां तृष्णां शमयेन्नृणामथाशु पयः ।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥
स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुड़ाम्बुना शमयेत् ।
तस्य मूर्च्छाभिहतस्य रक्तपित्तापहैर्हन्यात् ॥ २३ ॥
शीतमुष्णाच्च जलं क्वच देयं वज्जं वा क्वचित्याह ।
छर्द्यर्द्दाहमूर्च्छाभ्रमक्लममदात्ययास्रविषपित्ते ।

शस्तं स्वभावशीतं शृतशीतं सन्निपातेऽम्भः ॥
हिक्काश्वासनवज्वरपीनसघृतपीतपार्श्वगलरोगे ।
कफवातकृते स्त्याने सद्यः शुद्धे च हितमुष्णम् ॥
पाण्डूदरपीनसमेहगुल्ममन्दानलातिसारेषु ।
प्लीह्नि च न तोयं हितं काममशक्तेऽत्र पिबेदल्पम् ॥ २४ ॥
पूर्व्वामयातुरः सन् दीनस्तृष्णार्द्दितो जलं काङ्क्षन् ।
न लभेत चेन्मरणमाश्वेव चाप्नुयाद्दीर्घरोगं वा ॥
तस्माद्धान्याम्बु पिबेत् तृष्यन् रोगी सशर्करक्षौद्रम् ।
यद्वा तस्यान्यत् स्यात् सात्म्यं रोगस्य तच्चेष्टम् ॥
तस्यां विनिवृत्तायां तस्योऽन्य उपद्रवः सुखं जेतुम् ।
तस्मात् पूर्व्वं तृष्णां जयेद्वहुभ्योऽपि रोगेभ्यः ॥ २५ ॥

तत्र श्लोकः ।

हेतू यथाग्निपवनौ कुरुतः सोपद्रवं पञ्चानाम् ।
तृष्णानां पृथगाकृतिरसाध्यता साधनञ्चोक्तम् ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
तृष्णाचिकित्सितं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

# त्रयोविंशोऽध्यायः

अथातो विषचिकित्सितं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

प्रागुत्पत्तिं गुणान् योनिं वेगान् लिङ्गान्युपक्रमान् ।
विषस्य ब्रुवतः सम्यगग्निवेश निबोध मे ॥ २ ॥
अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः ।
जज्ञे प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशो * ऽनलेक्षणः ।
जगद् विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥
जङ्गमस्थावरायां तद् योनौ ब्रह्मा न्ययोजयत् ॥ ३ ॥
तदम्बुसम्भवं तस्माद्द्विविधं पावकोपमम् ।
अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम् ॥
तद्वर्षास्वम्बुयोनित्वात् संक्लेदं गुडवद् गतम् ।
सर्पत्यम्बुधरापाये तदगस्त्यो निहन्ति च ॥
प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये । ४ ॥
सर्पाः कीटोन्दुरा लूता वृश्चिका गृहगोधिकाः ॥
जलौका मत्स्यमण्डूकाः शलभाः सकृकण्टकाः ॥
श्वसिंहव्याघ्रगोमायुतरक्षुनकुलादयः ।
दंष्ट्रिणो ये विषं तेषां दंष्ट्रोत्थं जङ्गमं मतम् ॥ ५ ॥
मुस्तकं पौष्करं क्रौञ्चं वत्सनाभं बलाहकम् ।
कर्कटं कालकूटञ्च करवीरकसंज्ञकम् ॥

---

* हरिकेश इति पाठान्तरम् ।

पालकेन्द्रायुधं तैलं मेचकं कुशपुष्पकम् ।
रोहिषं पुण्डरीकञ्च लाङ्गलिक्यञ्जनाभकम् ॥
सङ्कोचं मर्कटं शृङ्गीविषं हालाहलं तथा ।
एवमादीनि चान्यानि मूलजानि स्थिराणि च ॥ ६ ॥
गरं संयोगजञ्चान्यद् गरसंज्ञं गदप्रदम् ।
कालान्तरविपाकित्वान्न तदाशु हरत्यसून् ॥ ७ ॥
निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।
शोफं चैवातिसारञ्च कुरुते जङ्गमं विषम् ॥
स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनवम्यरुचिश्वासमूर्च्छाश्च जनयेद्विषम् ॥ ८ ॥
जङ्गमं स्यादूर्द्ध्वभाग मधोभागं तु मूलजम् ।
तस्माद्दंष्ट्राविषं मौलं हन्ति मूलं च दंष्ट्रिजम् ॥ ९ ॥
तृण्मोहदन्तहर्षप्रसेकवमथुक्लमा भवन्त्याद्ये ।
वेगे रसप्रदोषादसृक्प्रदोषाद् द्वितीये तु ॥
वैवर्ण्यभ्रमवेपथुजृम्भामूर्च्छाङ्गभङ्गचिमिचिमातङ्काः ।
दुष्टपिशितात्तृतीये मण्डलकण्डूश्वयथुकोठाः ॥
वातादिजाश्चतुर्थे दाहच्छर्द्यङ्गशूलमूर्च्छाद्याः ।
नीलादीनां तमसश्च दर्शनं पञ्चमे वेगे ॥
हिक्का भङ्गः स्कन्धे स्यात्तु सप्तमेऽष्टमे मरणम् ।
नृणां चतुष्पदां स्याच्चतुर्व्विधः पक्षिणां त्रिविधः ॥ १० ॥
नीदत्यादौ भ्रमति च चतुष्पादो वेपते ततः शूनः । *

* आदौ भ्रमति चतुष्पादोऽवसीदति ततः शूनस्त्वपि पाठः ।

मन्दाहारो म्रियते श्वासेन चतुर्थवेगे तु ॥
ध्यायति विहगः प्रथमे वेगे प्रभ्राम्यति द्वितीये तु ।
स्रस्ताङ्गश्च तृतीये विषवेगे याति पञ्चत्वम् ॥ ११ ॥
लघु रूक्ष माशुविशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मञ्च ।
उष्णमनिर्द्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः ॥
रौक्ष्याद्वातमशैत्यात् पित्तं सौक्ष्म्यादसृक् प्रकोपयति ।
कफमव्यक्तरसत्वादन्नरसांश्चानुवर्त्तते शीघ्रम् ॥
शीघ्रं व्यवायिभावादाशु व्याप्नोति केवलं कायम् ।
तीक्ष्णत्वान् मर्म्मघ्नं प्राणघ्नं तद् विकाशित्वात् ॥
दुरुपक्रमं लघुत्वाद्वैशद्यात् स्यादसक्तगतिदोषात् । १२ ॥
दोषस्थानप्रकृतीः प्राप्यान्यतमं ह्युदीरयति ॥
स्याद्वातिकस्य वातस्थाने कफपित्तलिङ्गमीषत्तु ।
तृणमूर्च्छारतिमोहगलग्रहच्छर्द्दिफेनादि ॥
पित्ताशयस्थितं पैत्तिकस्य कफवातयोर्व्विषं तद्वत् ।
तृट्कासज्वरवमथुक्लमदाहतमोऽतिसारादि ॥
कफदेशगतं कफाधिकस्य वातपित्तयोश्च दर्शयति ।
लिङ्गं श्वासगलग्रहकण्डूलालावमथ्वादि ॥ १३ ॥
दूषीविषं तु शोणितदुष्यारुःकिटिमकोठलिङ्गञ्च ।
विषमेकैकं दोषं सन्दूष्य हरत्यसूनेवम् ॥
चरति विषतेजसासृक् तत् खानि निरुध्य मारयति जन्तुम् ।
पीतं मृतस्य हृदि तिष्ठति दष्टविद्धयोर्दंशदेशे स्यात् ॥
नीलौष्ठदन्तशैथिल्यकेशपतनाङ्गभङ्गविक्षेपाः ।
शिशिरैर्न लोमहर्षो नाभिहते दण्डराजी स्यात् ॥

घृतजं घृताच्च नायातेऽतानि भवन्ति मरणलिङ्गानि ॥१४॥
एभ्योऽन्यथा चिकित्स्यास्तेषाञ्चोपक्रमान् शृणु मे।
मन्त्रारिष्टोत्कर्त्तननिष्पीड़नचूषणाग्निपरिषेकाः ॥
अवगाहनरक्तमोक्षणवमनविरेकोपधानानि।
हृदयावरणाञ्जननस्यधूमलेहौषधप्रधमनानि ॥
प्रतिसारणं प्रतिविषं संज्ञासंस्थापनं लेपः।
मृतसञ्जीवनमेव च विंशतिरेते चतुर्भिरधिकाः ॥ १५ ॥
सुरुपक्रमा यथा ये यत्र योज्याः शृणु तथा तान् ॥
दंशात्तु विषं दष्टस्य विसृतं वेणिकां भिषग् बद्धा।
निष्पीड़येद् द्रुतं दंशमुद्धरेन्मर्मवर्ज्जं वा ॥
तं दंशं वा चूषेन्मुखेन यवचूर्णपांशुपूर्णेन।
प्रच्छन् शृङ्गजलौकोव्यधनैः स्राव्यं ततो रक्तम् ॥
रक्ते विषप्रदुष्टे दुष्येऽतु प्रकृतिस्ततस्त्यजेत् प्राणान्।
तस्मात् प्रवर्षणैरसृग् वर्त्तमानं प्रवर्त्त्यं स्यात् ॥ १६ ॥
त्रिकटुगृहधूमरजनीपञ्चलवणाः सवार्त्ताकाः।
वर्षणमतिप्रवृत्ते वटादिभिः शीतलैर्लेपः ॥
रक्तं हि विषाधानं वायुरिवाग्नेः प्रदेहसेकैस्तत्।
शीतैः स्कन्दति तस्मिन् स्कन्ने व्यपयाति विषवेगः ॥
विषवेगान्मदमूर्च्छाविषादहृदयद्रवाः प्रवर्त्तन्ते।
शीतैर्निर्व्वर्त्तयेत्तान् न वीज्यश्च लोमहर्षः स्यात् ॥
तरुरिव मूलच्छेदाद्दंशच्छेदान्न वृद्धिमेति विषम्।
आचूषणमानयनं जलस्य सेतुर्यथा तथारिष्टाः ॥ १७ ॥
त्वङ्मांसगतो दाहो दहति विषं स्रावणं रक्तात्।

पीतं वमनैः सद्यो हरेद्विषं द्वितीये तु ॥
आदौ हृदयं रक्ष्यं तस्यावरणं पिवेद् यथालाभम् ।
मधुसर्पिर्मज्जानं गैरिकमथ गोमयरसं वा ॥
इक्षुं सुपक्वमथवा काकं निष्पीड्य तद्रसं वामलम् ।
छागादीनां वासृग् भस्मम्रदं वा पिवेदाशु ॥
क्षारोऽगदस्तृतीये शोथहरं छर्दनं समध्वम्बु ।
गोमयरसश्चतुर्थे वेगे सकपित्थमधुसर्पिर्भिः ॥
काकाण्डशिरीषाभ्यां स्वरसेनाश्मोतनाञ्जने नस्यम् ।
स्यात् पञ्चमेऽथ षष्ठे संज्ञासंस्थापनं कार्य्यम् ॥
गोपित्तयुक्तारजनीमञ्जिष्ठामरिचपिप्पलीपानम् ।
विषपानं दष्टानां विषपीते दंशनञ्चान्ते ॥ १८ ॥
शिखिपित्ताद्वयुतं स्यात् पलाशबीजमगदो मृतेषु वरः ॥
वार्त्ताकुफाणितागारधूमगोपित्तनिम्बं वा ॥
गोपित्तयुतैर्गुडिकाः सुरसाग्रन्थिद्विरजनीमधुककुष्ठैः ।
शस्ताऽमृतेन तुल्या शिरीषपुष्पकाकाण्डकरसैर्वा ॥
काकाण्डसुरसगवाक्षीपुनर्नवावायसीशिरीषफलैः ।
उद्वन्धविषजलमृते * लेपौषधनस्यपानानि ॥ १९ ॥
पृक्काग्रवस्थौणेयकाक्षीशैलेयरोचनातगरम् ।
ध्यामककुङ्कुममांसीसुरसापैलालकुष्ठघ्नम् ॥
बृहती शिरीषपुष्पं श्रीवेष्टकपद्मचारटीविशालाः ।
सुरदारुपद्मकेशरशावरकमनःशिलाकौन्ताः ॥
आर्थकपुष्परसरजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।

* तदुदरिष्ट जलमृत इति वा पाठः ।

जलमुस्तपर्णीचन्दनमधूकमदनसिन्धुवाराश्च ॥
शम्पाकलोध्रमयूरकगन्धफलीनाकुलीविडङ्गाश्च ।
पुष्ये संहृत्य समं पिष्ट्वा गुडिका विधेयाः सुराः ॥
सर्व्वविषघ्नो जयकृद्विषमृतसञ्जीवनो ज्वरनिहन्ता ।
घ्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥
भूतविषजन्त्वलक्ष्मीकार्म्मणमन्त्राग्न्यशन्यरीन् हन्यात् ।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम् ॥
धनधान्यकार्य्यसिद्धिश्रीपुष्ट्यायुर्व्विवर्द्धनो धन्यः ।
मृतसञ्जीवन एष प्रागमृताद् ब्रह्मणा विहितः ॥ २० ॥
इति मृतसञ्जीवनोऽगदः ।

मन्त्रैर्धमनीबन्धोऽपामार्ज्जनं कार्य्यमात्मरक्षा च ॥
दोषस्य विषं यस्य स्थाने स्यात् तं जयेत् पूर्व्वम् ।
वातस्थाने स्वेदो दध्ना नतकुष्ठकल्कपानञ्च ॥
घृतमधुपयोऽम्बुपानावगाहसेकाश्च पित्तस्थे ।
क्षारोऽगदः कफस्थानगते स्वेदस्तथा शिराव्यधनम् ॥
दूषीविषेऽथ रक्तस्थिते शिराकर्म्म पञ्चविधम्
भेषजमेवं कल्प्यं भिषजा विज्ञाय सर्व्वदा सर्व्वम् ।
स्थानं जयेच्च पूर्व्वं स्थानस्थस्याविरुद्धञ्च ॥ २१ ॥
विषदूषितकफमार्गः स्रोतःसंरोधरुद्धवायुस्तु ।
मृत इव श्वसेन्मर्त्त्यः स्यादसाध्यलिङ्गैर्विहीनश्च ॥
चर्म्मकषायाः कल्कं विल्वसमं मूर्द्धि काकपदमस्य ।
कृत्वा दद्यात् कटभीकटुकक्कटफलप्रधमनञ्च ॥
छागगव्यमाहिषाविककौक्कुटानां मांसम् ।

दद्यात् काकपदोपरि मत्ते विषेणैव सहसा ॥
घ्राणाक्षिकर्णजिह्वाकण्ठनिरोधेषु कर्म्म नस्तः स्यात्।
वार्त्ताकुबीजपूरकज्योतिष्मत्यादिभिः पिष्टैः ॥
अञ्जनमक्षुपरोधे कर्त्तव्यं वस्तमूत्रपिष्टैस्तु।
दारुव्योषहरिद्राकरवीरकरञ्जनिम्बसुरसैस्तु ॥ २२ ॥
श्वेतावचाश्वगन्धाहिङ्गुमृताकुष्ठसैन्धवं लशुनम्।
सर्षपकपित्थमध्यं टुण्टुकमूलर्कारञ्जबीजानि ॥
व्योषं शिरीषपुष्पं द्वे च निशे वंशलोचनञ्च समम्।
पिष्ट्वाथ वस्तमूत्रेण च गोश्च पित्तेन सप्ताहम् ॥
अत्यासभावितोऽयं निहन्ति शिरसि स्थितं विषं क्षिप्रम्।
सर्व्वंज्वरभूतग्रहविसूचिकाजीर्णमूर्च्छार्त्तिं ॥
उन्मादापस्मारौ काचपटलनीलिकाशिरोदोषान्।
शुष्काक्षिपाकपिल्लार्व्वुदाम्मंकण्डूतमोदोषान् ॥
क्षयदौर्ब्बल्यमदात्ययपाण्डुगदांश्चाञ्जनात् तथा मोहान्।
लेपाद्दिग्धक्षतलीढ़दष्टविद्धपीतविषघातौ ॥
अर्शःस्वानहेषु च गुदलेपो योनिलेपनं स्त्रीणाम्।
मूढ़े गर्भे दुष्टे ललाटलेपः प्रतिश्याये ॥
व्रणे किटिमे कुष्ठे श्वित्रे विचर्च्चिकादिषु च लेपः।
गज इव तरून् विषगदान् निहन्त्यगदो गन्धहस्तीयः ॥२३

इति गन्धहस्तीनामा अगदः।

पद्मागुरुमुस्तैला निर्य्यासाः पञ्च चन्दनं पृक्का।
त्वङ्नलदीतूपलबालकहरेणुकोशीरव्याघ्रनखाः ॥
सुरदारुकणकुङ्कुमश्यामककुष्ठप्रियङ्गुवस्तगरम्।

पञ्चाङ्गानि शिरीषाद्गोपालमनःशिलाजाल्यः ॥
श्वेताकटभी करञ्जो रक्षोघ्नः सिन्दुवारिका रजनी ।
सुरसरसाञ्जनगैरिकमञ्जिष्ठानिम्बपत्त्रनिर्य्यासाः ॥
वंशत्वगश्वगन्धाहिङ्गुदधित्थाम्लवेतसं वचाः ।
मधुमधूकसोमराजीवचाकुहारोचनानगरम् ॥
अगदोऽयं वैश्रवणायाख्यातस्त्र्यम्बकेण षष्ठ्याङ्गः ।
अप्रतिहतप्रभावः ख्यातो महागन्धहस्तीति ॥
पित्तेन गवां पेष्या गुडिका सिद्धातु पुष्ययोगेण ।
पानाञ्जनप्रलेपैः प्रसाधयेत् सर्व्वकर्म्माणि ॥
पिल्लं कण्डूं तिमिरं रात्र्यन्धं काचमर्व्वुदं पटलम् ।
हन्ति सततं प्रयोगाद्धितमितपथ्याशिनां पुंसाम् ॥
विषमज्वरानजीर्णं दद्रुकण्डूविसूचिकापामाः ।
कुष्ठं किटिमं श्वित्रं विचर्च्चिकां चोपहन्ति नृणाम् ॥
विषं मूषिकलूतानां सर्व्वेषां पन्नगानाञ्च ।
आशु विषं नाशयति मूलजमथ कन्दजं सर्व्वम् ॥
एतेन लिप्तगात्रः सर्पान् गृह्णाति भक्षयेच्च विषम् ।
कालपरीतोऽपि नरो जीवति नित्यं निरातङ्कः ॥
आनद्धे गुदलेपो योनिलेपश्च मूढगर्भाणाम् ।
मूर्च्छार्त्तिषु च ललाटे लेपनमाहुः प्रधानतमम् ॥
भेरीमृदङ्गपटहान् कृत्वाणामुना तथा ध्वजपताकाः ।
लिप्ताहिविषनिरस्तान् प्रध्वनयेद्दर्शयेन्मतिमान् ॥
यत्र च सन्निहितोऽयं न तत्र बालग्रहा न रक्षांसि ।
न चैव कार्म्मणमन्त्रा भजन्ति नाथर्व्वणो मन्त्राः ॥

सर्व्वग्रहा न तत्र प्रभवन्ति न चाग्निशस्त्रनृपचौराः ।
लक्ष्मीश्च तत्र भजते यत्र महागन्धहस्त्यास्ति ॥
पिष्यमाणे द्रुमश्चात्र सिद्धं मन्त्रमुदीरयेत् ।
मम माता जया नाम विजयो नाम मे पिता ॥
सोऽहं जयो जयापुत्रो विजयोऽथ जयामि च ।
नमः पुरुषसिंहाय विष्णवे विश्वकर्म्मणे ॥
सनातनाय कृष्णाय भवाय विभवाय च ।
तेजो वृषाकपेः साक्षात् तेजो ब्रह्मेन्द्रयोर्यमे ॥
यथाहं नाभिजानामि वासुदेवपराजयम् ।
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ॥
अनेन सत्यवाक्येन सिध्यतामगदो ह्ययम् ।
हिलिहिलिमिलिमिलिसंस्पृष्टे रक्ष सर्व्वभेषजोत्तमे स्वाहा ।२४

इति महागन्धहस्ती नामागदः ।

ऋषभकजीवकभार्गीमधुकोत्पलधान्यकेशराजाज्यः ।
ससितगिरिकोलमध्याः पेयाः श्वासज्वरार्त्तिहराः ॥
हिङ्गु च कृष्णायुक्तं कपित्थरसयुक्तमम्लवणाञ्च ।
समधुसितौ पातव्यौ ज्वरहिक्काश्वासकासघ्नौ ॥
लेहः कोलास्थ्यञ्जनलाजोत्पलमधुघृतैर्वम्याम् ।
बृहतीद्वयाढ़कीपत्रधूमवर्त्तिस्तु हिक्काघ्नी ॥
शिखिबर्हबलाकास्थीनि सर्षपाश्चन्दनञ्च घृतयुक्तं ।
धूमो गृहशयनासनवस्त्रादिषु शस्यते विषनुत् ॥
घृतयुक्तो नतकुष्ठे भुजगपतिशिरः शिरीषकुसुमं वा ।
धूमोऽगदः स्मृतोऽयं सर्व्वविषघ्नः श्वयथुहश्च ॥

जतुसैव्यपत्रगुग्गुलुभल्लातककक्कुभपुष्पसर्ज्जरसाः ।
श्वेता धूमा उरगाखुकीटवस्त्रकृमिहराः सुरः ॥ २५ ॥
तत्क्षारपलाशक्षारं सुतं पचेच्चूर्णितैः सह समांशैः ।
लोहितमृद्रजनीद्वयशुक्लसुरसमञ्जरीमधुकैः ॥
लाक्षासैन्धवमांसीहरेणुहिङ्गुद्विशारिवाकुष्ठैः ।
सव्योषैर्वाह्लीकैर्दर्व्वीलेपेन घट्टयेद् यावत् ॥
सर्व्वविषशोफगुल्मत्वग्दोषार्शोभगन्दरप्लीहाः ।
शोथापस्मारक्रिमिभूतस्वरभेदकण्ठपाण्डुगदान् ॥
मन्दाग्नित्वं कासं सोन्मादं नाशयेयुरथ पुंसाम् ।
गुड़िकाश्छायाशुष्काः कोलसमास्ताः समुपयुक्ताः ॥ २६ ॥
इति क्षारोऽगदः ।

पीतविषदष्टविद्धेष्वेतद्दिग्धे च वाच्यमुद्दिष्टम् ।
सामान्यतः पृथक्त्वान् निर्द्देशमतः शृणु यथावत् ॥ २७ ॥
रिपुयुक्तेभ्यो नृभ्यः स्त्रीभ्योऽथवा भयं नृपतेः ।
आहारविहारगतं तस्मात् प्रेष्यान् परीक्षेत ॥ २८ ॥
अत्यर्थशङ्कितः स्याद्बहुवागथवाल्पवाग्विगतलक्ष्मीः ।
प्राप्तः प्रकृतिविकारं विषप्रदाता नरो ज्ञेयः ॥
दृष्ट्वैवं न तु सहसा भोज्यं नसीत् तदग्रमग्नौ तु ।
सविषं हि प्राप्यान्नं बहून् विकारान् भजत्यग्निः ॥
शिखिवर्हविचित्रार्च्चिस्तीक्ष्णः सरूक्षकुणपगन्धिश्च ।
स्फुटति च सशब्दमेकावर्त्तो विहतार्चिरपि च स्यात् ॥
पांत्रस्थञ्च विवर्णं भोज्यं स्यान्मक्षिकाश्च मारयति ।
क्षामस्वरांश्च काकान् कुर्य्याद्दिरजेश्चकोराश्च ॥ २९ ॥

पाने नीला राजी वैवर्ण्यं स्वाच्च नेक्षते छायाम्।
विकृतामथवा पश्यति लवणाक्ते फेनमाला स्यात्॥ ३०॥
पानान्नयोः सविषयोर्गन्धेन शिरोरुजा हृदि च मूर्च्छा च।
स्पर्शेन पाणिशोथः * सुप्ताङ्गुलिदाहतोदनखभेदाः॥
मुखताल्वोष्ठचिमिचिमा जिह्वा शूनवती जड़ा विवर्णा च।
द्विजहर्षहनुस्तम्भास्यदाहलालागलविकाराः॥
आमाशयं प्रविष्टे वैवर्ण्यं स्वेदसदनमुत्क्लेदः।
दृष्टिहृदयोपरोधो विन्दुशतैश्चीयते चाङ्गम्॥
पक्वाशयन्तु याते मूर्च्छामदमोहदाहबलनाशाः।
तन्द्रा कार्श्यञ्च विषे पाण्डुत्वञ्चोदरस्य स्यात्॥ ३१॥
दन्तौष्ठमांसशोफाः शीर्य्यन्ते दन्तपवने कूर्चास्तु।
केशच्युतिः शिरोरुग् यन्थयो विशीर्णश्च कूर्चः स्यात्॥
दुष्टेऽञ्जनेऽचिदाहः स्रावोऽतुग्रपदेहशोथरागास्च।
आर्द्रैरादौ कोष्ठः स्पृश्यैस्त्वग् दह्यते दुष्टैः॥
स्नानाभ्यङ्गोत्सादनवस्त्रालङ्कारवर्णकैर्दुष्टैः।
कण्डूर्त्ति लोमहर्षाः कोठपिड़काचिमिचिमाः शोथाः॥
एते च करचरणदाहतोदक्लमा विपाकाश्च।
भूपादुकाश्वगजचर्म्मकेतुशयनासनैर्दुष्टैः॥
माल्यमगन्धं ग्लायति शिरोरुजारोमहर्षकरम्।
स्तम्भयति खानि नासासुपहन्त्यथ दर्शने धूमः॥
कूपतड़ागादिजलं दुर्गन्धं सकलुषं विवर्णञ्च।

---

* पानान्नयोः सविषयोः शिरसो गन्धेन रुक् हृदि च।
मूर्च्छास्पर्शपाणिशोथ इत्यपि पाठः क्वचित्।

पीतं श्वयथुं कोठान् पिड़काश्च करोति मरणञ्च ॥ ३२ ॥
आदावामाशयगे वमनं त्वक्स्थे प्रदेहसेकादि ।
कुर्य्याद्भिषक् चिकित्सां दोषबलञ्चैव हि समीक्ष्य ॥
इति मूलविषविशेषाः प्रोक्ताः शृणु जङ्गमस्यातः ॥ ३३ ॥
दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च ।
सर्पा यथाक्रमं वातपित्तश्लेष्मप्रकोपणाः ॥
दर्व्वीकरः फणी ज्ञेयो मण्डली मण्डलाः फणाः ।
बिन्दुलेखो विचित्राङ्गः पन्नगः स्यात्तु राजिमान् ॥
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादुशीतलम् ।
विषं यथाक्रमं तेषां तस्माद्वातादिकोपनम् ॥ ३४ ॥
दर्व्वीकरकृतो दंशः सूक्ष्मदंष्ट्रापदोऽसितः ।
निरुद्धरक्तः कूर्म्माभो वातव्याधिकरो मतः ॥
पृथ्वर्पितः सशोथश्च दंशो मण्डलिभिः कृतः ।
पीताभः पीतरक्तश्च पित्तरक्तविकारकृत् ॥
राजिमद्भिः कृतो दंशः पिच्छिलः स्थिरशोफकृत् ।
स्निग्धः पाण्डुश्च सान्द्रासृक् श्लेष्मव्याधिसमीरणः ॥ ३५ ॥
वृत्तभोगी महाकायः श्वसन्नूर्द्ध्वेक्षणः पुमान् ।
समाङ्गः शिरसा स्थूलः स्त्रीत्वतः स्याद्विपर्य्ययात् ॥
क्लीवः स्वस्त्वधोदृष्टिः स्वरहीनः प्रकम्पते ।
स्त्रिया दष्टो विपर्य्यस्तैरेतैः पुंसा नरो मतः ॥
व्यामिश्रलिङ्गैरेतैस्तु क्लीवदष्टं नरं वदेत् ।
इतीत्युक्तं सर्पाणां स्त्रीपुंक्लीवनिदर्शनम् ॥
पाण्डुवक्त्रस्तु गर्भिण्या शूनोष्ठोऽप्यसितेक्षणः ।

जृम्भाक्रोधोपजिह्वार्त्तः सूतया रक्तमूत्रवान् ॥
सर्पो गौधेरको नाम गोधायाः स्याच्चतुष्पदः ।
कृष्णसर्पेण तुल्यः स्यान्नाना सुरमिश्रजातयः ॥
गूढ़सम्पादितं वृत्तं पीड़ितं लम्बितार्पितम् ।
सर्पितञ्च भृशाबाधं दंशा येऽनेत्र न ते भृशाः ॥
तरुणाः कृष्णसर्पास्तु गोनसाः स्थविरास्तथा ।
राजिमन्तो वयोमध्ये भवन्त्याशीविषोपमाः ॥ ३६ ॥
सर्पदंष्ट्राश्चतस्रस्तु तासां वामाधरासिता ।
पीता वामोत्तरा दंष्ट्रा रक्ता श्यावाधरोत्तरा ॥
यन्मात्रः पतते बिन्दुर्गोबालात् सलिलोद्धृतात् ।
वामाधरायां दंष्ट्रायां तन्मात्रं स्यादहेर्विषम् ॥
एकद्वित्रिचतुर्वृद्धिर्विषभागोत्तरोत्तरा ।
सर्वास्ततूक्ता दंशा बहूत्तरविषा भृशाः ॥ ३७ ॥
सर्पाणामेव विण्मूत्रात् कीटाः सुराः कीटसम्मताः ।
दूषीविषाः प्राणहरा इति संक्षेपतो मताः ॥
गात्रं रक्तं सितं कृष्णं श्यावं वा पिड़कान्वितम् ॥
सकण्डूरागवीसर्पपाकि स्यात् क्वथितं तथा ।
कीटैर्दूषीविषैर्दष्टं लिङ्गं प्राणहरं शृणु ॥
सर्पदष्टे तथा शोफो वर्द्धते सोग्रगन्धासृक् ॥
दंशेऽक्षिगौरवं मूर्च्छा सरुगार्त्तः प्रश्वसित्यपि ।
तृष्णारुचिपरीतश्च भवेद्दूषीविषाहतः ॥ ३८ ॥
दंशमध्ये तु यत् कृष्णं श्यावं वा जालकान्वितम् ।
दग्धाकृति भृशं पाकक्लेदशोथज्वरान्वितम् ॥

लूषीविषाभिर्लूताभिर्दष्टमिति निर्द्दिशेत् ॥
सर्व्वासामेव तासाञ्च दंशे लक्षणमुच्यते ।
शोफाः श्वेताः सिता रक्ताः पीता वा पिड़काज्वरः ॥
प्राणान्तको भवेद्दाहो श्वासहिक्काशिरोग्रहाः ।
आदंशाच्छोणितं पाण्डु मण्डलानि ज्वरोऽरुचिः ।
रोमहर्षश्च दाहश्चाप्याखुदूषीविषार्द्दिते ॥
मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक्छर्द्दिश्चासाध्यमूषिकैः ॥
श्यावत्वमथ कार्ष्ण्यं वा नानावर्णत्वमेव वा ।
मोहोऽथ वर्च्चसोभेदो दष्टे स्यात् कृकलासकैः ॥
दहत्यग्निरिवादौ तु भिनत्तीवोर्द्ध्वमाशु च ।
वृश्चिकस्य विषं याति दंशे पश्चात् तु तिष्ठति ॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः ।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून् ॥
वीसर्पः श्वयथुः शूलं ज्वरश्छर्द्दिरथापि वा ।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते ॥
हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान् ।
दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते ॥
एकदंष्ट्रार्द्दितः शूनः सरुक् स्यात् पीतकः सदट् ।
छर्द्दिर्निद्रा च मण्डूकैः सविषैर्दष्टलक्षणम् ॥
मत्स्यास्तु सविषाः कुर्य्युर्दाहशोथरुजस्तथा ।
कण्डूं शोफं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥
विदाहं श्वयथुं तोदं स्वेदन्तु गृहगोधिका ।

दंशे स्वेदं रुजं दाहं कुर्य्याल्लूतपदीविषम् ॥
कण्डूमान् मशकैरीषच्छोफः स्यान्मन्दवेदनः।
असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥
सद्यःप्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता।
पिड़का मक्षिकादंशे तासान्तु स्थगिकाऽसुहृत् ॥ ३९ ॥
श्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये।
पक्षसन्धिषु मध्याह्नेष्वर्द्धरात्रेऽष्टमीषु च ॥
न सिध्यन्ति नरा दष्टाः पाषण्डायतनेषु च।
दृष्टिश्वासमलस्पर्शविषैराशीविषैस्तथा ॥
विनश्यन्त्याशु सम्प्राप्ता दष्टाः सर्व्वेषु मर्म्मसु ॥ ४० ॥
शीतमत्ताबलोष्णाच्च तृष्णार्त्ते वर्द्धते भृशम्।
विषं प्रकृतिकालौ चेत्तुल्यौ प्राणाल्पमन्यथा ॥
वारिविप्रहृताः क्षीणा भीता नकुलनिर्ज्जिताः।
मुक्तत्वचो वृद्धबालाः सर्पा मन्दविषाः स्मृताः ॥ ४१ ॥
सर्व्वदेहाश्रितं क्रोधाद्विषं सर्पो विमुञ्चति।
तदेवाहारहेतोर्वा भयाद्वा न प्रमुञ्चति ॥ ४२ ॥
वातोल्वणविषाः प्राय उच्चिटिङ्गाः सवृश्चिकाः।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः ॥
यस्य यस्य तु दोषस्य लिङ्गाधिक्यं प्रतर्कयेत्।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम् ॥ ४३ ॥
हृत्पीड़ोर्द्धानिलः स्तम्भः शिरायामोऽस्थिपर्व्वरुक्।
घूर्णनोद्वेष्टनं गात्रे श्यावता वातिके विषे ॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता।

दंशावदरणं शोथो रक्तपीतश्च पैत्तिके ॥
वम्यरोचकहृल्लासप्रसेकोत्क्लेशगौरवैः ।
सशैत्यमुखमाधुर्य्यैर्विद्यात् श्लेष्माधिकं विषम् ॥ ४४ ॥
स्वाडेन च व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।
स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥
सुशीतैः स्तम्भयेत् सेकैः प्रदेहैश्चापि पैत्तिकम् ।
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥
विषेष्वपि च सर्व्वेषु सर्व्वस्थानगतेषु च ।
अवृश्चिकोच्चिटिङ्गेषु प्रायः शीतो विधिर्हितः ॥ ४५ ॥
वृश्चिके स्वेदमभ्यङ्गं घृतेन लवणेन च ।
सेकांश्चोष्णान् प्रयुञ्जीत भोज्यं पानञ्च सर्पिषः ॥
एतदेवोच्चिटिङ्गेऽपि प्रतिलोमञ्च पांशुभिः ।
उद्वर्त्तनं सुखाम्बूष्णैस्तथावच्छादनं घनैः ॥ ४६ ॥
स्यात् त्रिदोषप्रकोपात्तु तथा धातुविपर्य्ययात् ।
शिरोऽभितापलालास्रव्यथावक्रक्रदेव च ॥
अनेऽप्येवंविधा व्यालाः कफवातप्रकोपणाः ।
हृच्छिरोरुग्ज्वरस्तम्भतृषामूर्च्छाकरा स्मृताः ॥
कण्डूनिस्तोदवैवर्ण्य सुप्तिक्लेदोपशोषणम् ।
विदाहरागरुक्पाकाः शोफा ग्रन्थिनिकुञ्चनम् ॥
दंशावदरणं स्फोटाः कर्णिकामण्डलानि च ।
ज्वरश्च सविषे लिङ्गं विपरीतन्तु निर्व्विषे ॥
तत्र सर्व्वे यथादोषं प्रयोज्याः सुरूपक्रमाः ।
पूर्व्वोक्तं विधिमन्यञ्च यथावद् ब्रुवतः शृणु ॥ ४७ ॥

हृद्विदाहे प्रसेके च विरेकवमनं भृशम्।
यथावस्थं प्रयोक्तव्यं शुद्धे संसर्ज्जनक्रमः॥
शिरोगते विषे नस्तः कुर्य्यान्मूलानि बुद्धिमान्।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च॥
वृषकाकमयूराणां मांसासृङ् मस्तके चते।
मूर्द्ध्नि देयमधो दष्टस्योर्द्ध्वं दष्टस्य पादयोः॥
पिप्पलीमरिचचारवचासैन्धवशिग्रुकाः॥
पिष्ट्वा रोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात्।
कपित्थमामं ससिताक्षौद्रं कण्ठगते विषे॥
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात्।
विषे पक्वाशयप्राप्ते पिप्पलीरजनीद्वयम्॥
मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन पिबेन्नरः।
मांसं रक्तञ्च गोधायाः शुष्कं चूर्णीकृतं हितम्॥
विषे रसगते पानं कपित्थरससंयुतम्।
शेलोमूलत्वगग्राणि बादरौडुम्बराणि च।
कटभ्याश्च पिबेद्रक्तगते मांसगते पिबेत्॥
सक्षौद्रं खदिरारिष्टं कौटजं मूलमम्भसा।
सर्व्वेषु च बले द्वे तु मधूकं मधुकं नतम्॥
पिप्पलीं मरिचं * चारं नवनीतेन मूर्च्छितम्।
कफे भिषग्दृदीर्णे तु प्रदद्यात् प्रतिसारणम्॥ ४८॥
मांसीकुङ्कुमपत्रत्वग्रजनीनतचन्दनैः।

* नागरमिति पाठान्तरम्।

मनःशिलाव्याघ्रनखसुरसैरम्बुपेषितैः ॥
पाननस्याञ्जनालेपाः सर्व्वशोथविषापहाः ॥ ४९ ॥
चन्दनं तगरं कुष्ठं हरिद्रे द्वे त्वगेव च ।
मनःशिला तमालश्च रसः केशर एव च ॥
शार्द्दूलस्य नखश्चैव सुपिष्टं तण्डुलाम्बुना ।
हन्ति सर्व्वविषाण्येव वज्रिवज्रमिवासुरान् ॥ ५० ॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां नस्यपानाञ्जने हितम् ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥ ५१ ॥
सिन्धुवारस्य मूलत्वक् श्वेता च गिरिकर्णिका ।
पानं दर्व्वीकरैर्दष्टे नस्यं समधुपाकलम् ॥
मञ्जिष्ठा मधुयष्ट्याह्वा जीवकर्षभकौ सिता ।
काश्मर्य्यं वटशुङ्गानि पानं मण्डलिनां विषे ॥
व्योषं सातिविषं कुष्ठं गृहधूमो हरेणुका ।
तगरं कटुका क्षौद्रं हन्ति राजीमतां विषम् ॥
गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिवेद्दधिघृताप्लुतम् ॥
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥
मुक्तालेपो वरः शोफदाहतोदज्वरापहः ॥ ५२ ॥
चन्दनं पद्मकोशीरं शिरीषः सिन्धुवारकाः ।
क्षीरशुक्ला नतं कुष्ठं शारिवोदीच्यपाटलाः ॥
शेलुस्वरसपिष्टोऽयं लूतानां सार्व्वकार्म्मिकः ।

यथायोगं प्रयोक्तव्यः समीक्ष्यालेपनादिषु ॥
मधूकं मधुकं कुष्ठं शारिवोदीच्यपाटलाः।
सनिम्बशारिवाक्षोद्रं पानं लूताविषापहम् ॥
कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट्।
दन्ती त्रिवृत् सैन्धवैले कर्णिकापातनं तयोः ॥
कटभ्यर्ज्जुनशैरीषशेलुक्षीरीद्रुमत्वचः।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ ५३ ॥
त्वचञ्च नागरञ्चैव समांशं श्लक्ष्णपेषितम्।
पेयमुष्णाम्बुना सर्व्वं मूषिकाणां विषापहम् ॥
कुटजस्य फलं पिष्टं तगरं जालमालिनी।
तिक्तेच्वाकुश्च योगोऽयं पानप्रधमनादिभिः ॥
वृश्चिकोन्दुरलूतानां सर्पाणाञ्च विषापहम्।
समानममृतेनेदं गराजीर्णञ्च नाशयेत् ॥
सर्व्वेऽगदा यथादोषं प्रयोज्याः स्युः कटकण्टके * ॥ ५४ ॥
कपोतविट् मातुलुङ्गं शिरीषकुसुमाद्रसः।
शङ्खिन्यार्कं पयः शुण्ठी करञ्जो मधु वार्श्चिके ॥
स्नुक्क्षीरपिष्टं शैरीषं फलं दद्दुरजे हितम्।
मूलानि श्वेतभण्डानां व्योषं सपिंश्च मत्स्यजे ॥
कीटदष्टक्रियाः सर्व्वाः समानाः स्युर्जलौकसाम्। ५५ ॥
वातपित्तहरीप्राया क्रिया प्रायः प्रशस्यते।
वार्श्चिकश्चोच्चिटिङ्गस्य कणभस्योन्दुरेऽगदः ॥ ५६ ॥
वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ॥

* त्रिकण्टके इति पाठान्तरम्। त्रिकण्टको मत्स्यविशेषः।

द्वे बले नाकुलीं कुष्ठं शिरीषं रजनीद्वयम् ।
गुहामतिगुहां श्वेतां चाजगन्धां शिलाजतु ॥
कत्तृणं कटभीं क्षारं गृहधूमं मनःशिलाम् ।
रोहीतकस्य पित्तेन पिष्ट्वायं परमोऽगदः ॥
नस्याञ्जनादिलेपेषु हितो विश्वम्भरादिषु । ५७ ॥
इति परमोगदः ।
खञ्जिकाजशकृत्क्षारः सुरसोऽथाक्षिपीडकः ॥
मदिरामण्डसंयुक्तो हितः शतपदीविषे ।
कपित्थमक्षिपीडोऽर्कबीजं त्रिकटुकं तथा ॥
करञ्जौ द्वे हरिद्रे च गृहगोधाविषं जयेत् ।
काकाण्डरससंयुक्तो विषाणां तण्डुलीयकः ॥
प्रधानं बर्हिपित्तेन तद्वद्वायसपीलुकः ॥ ५८ ॥
शिरीषफलमूलत्वक्पुष्पपत्रैः समैर्घृतैः ।
श्रेष्ठः पञ्चशिरीषोऽयं विषाणां प्रवरो बधे ॥
चतुष्पद्भिर्द्विपद्भिर्वा नखदन्तविषञ्च यत् ।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ ५९ ॥
इति पञ्चशिरीषोऽगदः ।
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥
दुरन्धकारे दष्टस्य केनचिद् विषशङ्कया ।
विषोद्वेगाज्ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ॥
ग्लानिर्मोहोऽतिसारो वाप्येतच्छङ्काविषं मतम् ।
चिकित्सितमिदं तस्य कुर्यादाश्वासनं बुधः ॥ ६० ॥

सिता वैगन्धिकी द्राक्षा पयस्या मधुकं मधु ।
पानं समन्त्रपूताम्बु प्रोक्षणं सान्त्वहर्षणम् ॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियङ्गवः ।
भोजनार्थं प्रशस्यन्ते लवणार्थं च सैन्धवम् ॥
तण्डुलीयकजीवन्तीवार्त्ताकुसुनिषण्णकाः ।
मण्डूकपर्णी कुलकं शाकं चुच्चूश्च शस्यते ॥
हरेणुमुद्गान् यूषार्थमम्लार्थं धात्रीदाड़िमम् ।
रसाश्चैणाश्च शिखिनां लावतैत्तिरपार्षताः ॥
विषघ्नौषधसंयुक्ता रसा यूषाश्च संस्कृताः ।
अविदाहीनि चान्नानि विषार्त्तानां भिषग्जितम् ॥ ६१ ॥
विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् ।
वर्ज्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥ ६२ ॥
मुहुर्म्मुहुः शिरोन्यासः शोफः शुष्कोष्ठकण्ठता ।
ज्वरः स्तब्धाक्षिगात्रत्वं हनुकम्पोऽङ्गमर्द्दनम् ॥
रोमापगमनं ग्लानिररतिर्वेपथुर्भ्रमः ।
चतुष्पादां भवत्येतद्दष्टानामिह लक्षणम् ॥ ६३ ॥
देवदारु हरिद्रे द्वे सुरसं * चन्दनागुरु ।
रास्ना गोरोचनाजाजी गुग्गुलिक्षुरसो नतम् ॥
चूर्णं ससैन्धवानन्तं गोपित्तमधुसंयुतम् ।
चतुष्पदानां दष्टानामगदः सार्व्वकार्म्मिकः ॥ ६४ ॥
सौभाग्यार्थं स्त्रियः स्वेदरजोलालाङ्गजान् मलान् ।
शत्रुप्रयुक्तांश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥

---

* सरलमिति पाठान्तरम् ।

तैः स्यात् पाण्डुः कृशोऽल्पाग्निर्गरस्वाश्चोपजायते ।
मर्म्मप्रधमनाध्मानं श्वयथुर्हस्तपादयोः ॥
जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः ।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ६५ ॥
स्वप्ने मार्जारगोमायुव्यालान् सनकुलान् कपीन् ।
प्रायः पश्यति नद्यादीन् शुष्कांश्च सवनस्पतीन् ॥
कालश्च गौरमात्मनं स्वप्ने गौरश्च कालकम् ।
विकर्णनासिकं वापि प्रपश्येद्दहतेन्द्रियः ॥
।मवेक्ष्य भिषक् प्राज्ञः पृच्छेत् किं कैः कदा सह ।
।ग्धमित्यवगम्याशु प्रदद्याद्वमनं बुधः ।
सूक्ष्मं ताम्ररजस्तस्मै सक्षौद्रं हृद्विशोधनम् ॥
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ।
हेम सर्व्वविषाण्याशु गरांश्च विनियच्छति ।
न सज्जते हेमपाङ्गे विषं पद्मदलेऽम्बुवत् ॥ ६६ ॥
नागदन्तीत्रिवृद्दन्तीद्रवन्तीस्नुक्पयःफलैः ।
साधितं माहिषं सर्पिर्गोमूत्राढ़कपाचितम् ॥
सर्पकीटविषार्त्तानां गरार्त्तानाञ्च शान्तये । ६७ ॥
शिरीषत्वक् त्रिकटुकं त्रिफला चन्दनोत्पले ।
द्वे बले शारिवास्फोतासुरभीनिम्बपाटलाः ॥
बन्धुजीवाढ़कीमूर्व्वावासासुरसवत्सकान् ।
पाठाङ्कोटाश्वगन्धार्कमूलयष्ट्याह्वपद्मकान् ॥
विशालां बृहतीं द्राक्षां कोविदारं शतावरीम् ।

---

१ अर्कतो वाखाश्वखुरकाविति पाठान्तरम् ।

कटभीदन्त्यपामार्गान् पृश्निपर्णीं रसाञ्जनम् ॥
श्वेतभण्डश्च खुरकौ * कुष्ठदारुप्रियङ्गुकान् ।
विदारीमधुकात् सारं करञ्जस्य फलत्वचौ ।
रजन्यौ लोध्रमञ्चांशं पिष्ट्वा साध्यं घृताढ़कम् ॥
तुल्याम्बुच्छागगोमूत्रत्र्याढ़के तद् विषापहम् ।
अपस्मारज्वरोन्मादभूतयक्ष्मगरोदरम् ॥
पाण्डुरोगान् क्रिमीन् गुल्मान् श्लीहस्तम्भकामलाः ।
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ॥
हन्यात् सञ्जीवयेच्चापि विषोद्वेगमृतान् नरान् ।
नाम्नेदममृतं सर्व्वविषाणां स्याद् घृतोत्तमम् ॥ ६८ ॥

इत्यमृतं घृतम् ।

भवन्ति चात्र ।

छत्री झर्झरपाणिश्च चरेद् रात्रौ तथा दिवा ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति हि पन्नगाः ॥ ६९ ॥
दृष्टमात्रं दशेदाशु तं सर्पं लोष्टमेव वा ।
उपर्य्यरिष्टां बध्नीयाद्दंशं छिन्द्याद् दहेत् तथा ॥
वज्रं मरकतं सारं पिचुकी विषमुष्टिका ।
कर्कोटकं सर्पमणिर्वैदूर्य्यं गजमौक्तिकम् ॥
धार्य्यं वरमणियांश्च वरौषध्यो विषापहाः ।
खगाश्च शारिकाक्रौञ्चशिखिहंसशुकादयः ॥ ७० ॥

तत्र श्लोकः ।

इतीदमुक्तं द्विविधस्य विस्तरैर्बहुप्रकारं विषरोगभेषजम् ।
अधीत्य यः सम्यगिह प्रयोजयेद् व्रजेद्विषाणामविषह्यतां भिषक् ॥ ७१

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
विषचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः।

अथातो मदात्ययचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

सुरैः सुरेशसहितैर्या पुरा परिपूजिता।
सौत्रामण्यां हूयते या कर्म्मभिर्या प्रतिष्ठिता ॥
यज्ञे हि या च शक्रस्य सोमोऽतिपतितो यया।
नीरजस्तमसाविष्टस्तस्माद् दुर्गात् समुद्धृतः ॥
विधिभिर्वेदविहितैर्या यजद्भिर्महात्मभिः।
इष्ट्या स्पृश्या प्रकल्प्या च यज्ञीया यज्ञसिद्धये ॥
योनिसंस्कारनामाद्यैर्विशेषैर्बहुधा च या।
भूत्वा भवत्येकविधा सामान्यान्मदलक्षणात् ॥
या देवानमृतं भूत्वा स्वधा भूत्वा पितॄंश्च या।
सोमो भूत्वा द्विजातीन् या युङ्क्ते श्रेयोभिरुत्तमैः ॥
आश्विनं या महत् तेजो वीर्य्यं सारस्वतञ्च या।
बलमैन्द्रञ्च या सिद्धा सोमे सौत्रामणौ च या ॥
शोकारतिभयोद्वेगनाशिनी या महाबला।
या प्रीतिर्या रतिर्या वाग् या पुष्टिर्या च निर्वृतिः ॥
या सुरासुरगन्धर्व्वयक्षराक्षसमानुषैः।
रतिः सुरेत्यभिहिता तां सुरां विधिना पिबेत् ॥ २ ॥
शरीरकृतसंस्कारः शुचिरुत्तमगन्धवान्।
प्रावृतो निर्म्मलैर्वस्त्रैर्यथर्त्तुहृद्यमगन्धिभिः ॥

विचित्रविविधस्रग्वी रत्नाभरणभूषितः ।
देवद्विजातीन् संपूज्य कृत्वा मङ्गलमुत्तमम् ॥
देशे यथर्त्तुके शस्ते कुसुमप्रकरीकृते ।
संवाससंमते मुख्ये भूपसंमोदभूषिते ॥
सूपधाने सुसंस्तीर्णे विहिते शयनासने ।
उपविष्टोऽथवा तिर्य्यक् स्वशरीरसुखे स्थितः ॥
सौवर्णे राजतैश्चापि तथा मणिमयैरपि ।
भाजनैर्विविधैश्चित्रैः सुकृतैश्च पिवेत् सदा ॥
रूपयौवनमत्ताभिः शिक्षिताभिर्विशेषतः ।
वस्त्राभरणमाल्यैश्च भूषिताभिर्यथर्त्तुकैः ॥
शौचानुरागयुक्ताभिः प्रमदाभिरितस्ततः ।
संचार्य्यमानमिष्टाभिः पिवेन्मद्यमनुत्तमम् ॥ ३ ॥
पिवेन्मद्यानुकूलैर्वा फलैर्हरितकैः शुभैः ।
लवणैर्गन्धपिशुनैरवदंशैर्यथर्त्तुकैः ॥
भृष्टैर्मांसैर्बहुविधैर्भूजलाम्बरचारिणाम् ।
पौरोगवैश्च विहितैर्भक्ष्यैश्च विविधात्मकैः ॥
पिवेत् संपूज्य विबुधानाशिषः संप्रयुज्य च ।
प्रदाय यजनञ्चाग्रे त्वर्थिभ्यः पृथिवीतले * ॥ ४ ॥
अभ्यङ्गोत्सादनस्नानवासोधूमानुलेपनैः ।
स्निग्धोष्णैर्भावितश्चान्यैर्वातिको मद्यमाचरेत् ॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ।
पैत्तिको भावितश्चान्यैः पिवन्मद्यं न सीदति ॥

* प्रदाय सजलं मद्यमादितो वसुधातले इति पाठान्तरम् ।

उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ।
श्लैष्मिको धन्वजैर्मांसैर्मद्यं मारिचकैः सह ॥
विधिर्वः समतामेव भविष्यन्तिभवाश्च ये ।
यथोपपत्तिकैर्मद्यं पातव्यं मात्रया हितम् ॥ ५ ॥
वातिकेभ्यो हितं मद्यं प्रायो गौड़िकपैष्टिकम् ।
कफपित्ताधिकेभ्यस्तु माध्वीकं माधवञ्च यत् ॥
बहुद्रवं बहुगुणं बहुकर्म्म मदात्मकम् ।
गुणैर्दोषैश्च तन्मद्यमुभयञ्चोपलक्ष्यते ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥
यथोपेतं पुनर्मद्यं प्रसङ्गाद्येन पीयते ।
रूक्षव्यायामनित्येन विषवद् याति तस्य तत् ॥ ६ ॥
मद्यं हृदयमाविश्य स्वगुणैरोजसो गुणान् ।
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥
लघूष्णतीक्ष्णसूक्ष्माम्लव्यवायाशुगमेव च ।
रूक्षं विकासि विशदं मद्यं दशगुणं स्मृतम् ॥ ७ ॥
गुरु शीतं मृदु स्निग्धं बहलं मधुरं स्थिरम् ।
प्रसन्नं पिच्छिलं श्लक्ष्णमोजो दशगुणं स्मृतम् ॥
गौरवं लाघवाच्छैत्यमौष्ण्यादम्लस्वभावतः ।
माधुर्य्यं मार्द्दवं तैक्ष्ण्यात् प्रसादञ्चाशुभावनात् ॥
रौक्ष्यात् स्नेहं व्यवायित्वात् स्थिरत्वं श्लक्ष्णतामपि ।
विकाशिभावात् पैच्छिल्यं वैशद्यात् सान्द्रतां तथा ॥
सौक्ष्म्यान्मद्यं निहन्त्येवमोजसः स्वगुणैर्गुणान् । ८ ॥

सत्त्वं तदाश्रयश्चाशु संक्षोभ्य कुरुते मदम् ॥
रसवातादिमार्गाणां सत्त्वबुद्धीन्द्रियात्मनाम् ।
प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥
अतिपीतेन मद्येन विहतेनौजसा च तत् ।
हृदयं विकृतिं याति तत्रस्था ये च धातवः ॥ ६ ॥
ओजस्यविहते पूर्व्वो हृदि च प्रतिबोधिते ।
मध्यमो विहतेऽल्पे तु विहते तूत्तमो मदः ॥
नैवं विघातं कुरुते मद्यं पैष्टिकमोजसः ।
विकाशिरूक्षविशदा गुणास्तत्र हि नोल्बणाः ॥ १० ॥
हृदि मद्यगुणाविष्टे हर्षस्तर्षो रतिः सुखम् ।
विकाराश्च यथासत्त्वं चित्रा राजसतामसाः ॥
जायन्ते मोहनिद्रान्ता मद्यस्यातिनिषेवणात् ।
स मद्यविभ्रमो नाम्ना मद इत्यभिधीयते ॥ ११ ॥
पीयमानस्य मद्यस्य विज्ञातव्यास्त्रयो मदाः ।
प्रथमो मध्यमोऽन्त्यश्च लक्षणैस्तान् प्रवक्ष्यते ॥ १२ ॥
प्रहर्षणः प्रीतिकरः पानान्नगुणदर्शकः ।
पाठगीतप्रभाष्याणां कथानाञ्च प्रवर्त्तकः ॥
न च बुद्धिस्मृतिहरो विषयेषु न चाक्षमः ।
सुखं निद्रा प्रबोधश्च प्रथमः सुखदो मदः ॥ १३ ॥
मुहुः स्मृतिर्मुहुर्मोहो व्यक्ताऽव्यक्ता च वाङ्मुहुः ।
युक्तायुक्तप्रलापश्च प्रचलायनमेव च ॥
स्थानपानान्नसंकथ्ययोजनाः सविपर्य्ययाः ।
लिङ्गान्येतानि जानीयादाविष्टे मध्यमे मदे ॥ १४ ॥

मध्यमं मदमुत्क्रम्य मदञ्च प्राप्य चोत्तमम् ।
न किञ्चिन्नाशुभं कुर्य्युर्नरा राजसतामसाः ॥
को मदं तादृशं विद्वानुन्मादमिव दारुणम् ।
कुर्य्यादध्वानमासन्नं * बहुदोषमिवाध्वगः ॥ १५ ॥
तृतीयन्तु मदं प्राप्य भग्नदार्व्विव निष्क्रियः ।
बहुमोहावृतमना जीवन्नपि मृतैः समः ॥
रमणीयान् स विषयान् न वेत्ति न सुहृज्जनम् ।
यदर्थं पीयते मद्यं रतिं ताञ्च न विन्दति ॥
कार्य्याकार्य्यं सुखं दुःखं लोके यच्च हिताहितम् ।
यदवस्थो न जानाति कोऽवस्थां तां व्रजेद्बुधः ॥
स दुष्यः सर्व्वभूतानां निन्दाश्चायाह्य एव च ।
व्यसनित्वादुदर्के च स दुःखं व्याधिमश्नुते ॥ १६ ॥
प्रेत्य चेह च यच्छ्रेयः श्रेयो मोक्षे च यत् परम् ।
मनःसमाधौ तत् सर्व्वमायत्तं सर्व्वदेहिनाम् ॥ १७ ॥
मद्येन मनसश्चास्य संक्षोभः क्रियते महान् ।
महामारुतवेगेन तटस्थस्येव शाखिनः ॥
मद्यप्रसक्तं तं ज्ञात्वा महादोषं महागदम् ।
सुखमित्यधिगच्छन्ति रजोमोहपराजिताः ॥
मद्योपहतविज्ञानाद् विमुक्ताः सात्त्विकैर्गुणैः ।
श्रेयोभिर्विप्रयुज्यन्ते मदान्धा मद्यलालसाः ॥ १८ ॥
मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रितः ।
सोन्मादमदमूर्च्छाद्याः सापस्मारापतानकाः ॥

* गर्त्तं दध्यानमसन्नमिति पाठान्तरम् ।

यत्रैकः स्मृतिविभ्रंशस्तत्र सर्व्वमसाध्ववत् ।
इत्येवं मद्यदोषज्ञा मद्यं निन्दन्ति तत्त्वतः । १९ ॥
सत्यमेते महादोषा मद्यस्योक्ता न संशयः ।
अहितस्यातिमात्रस्य पीतस्यातो विवर्ज्जितम् ॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ २० ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ २१ ॥
हर्षमूर्ज्जो बलं पुष्टिमारोग्यं पौरुषं परम् ।
युक्त्या पीतं करोत्याशु मद्यं मदसुखप्रदम् ॥
रोचनं दीपनं हृद्यं स्वरवर्णप्रसादनम् ।
प्रीणनं वृंहणं बल्यं भयशोकश्रमापहम् ॥
स्वापनं नष्टनिद्राणां मूकानां वाग्विशोधनम् ।
बोधनञ्चातिनिद्राणां विबद्धानां विबन्धनुत् ॥
बधबन्धपरिक्लेशदुःखानाञ्चाप्यबोधनम् ।
मद्योत्थानाञ्च रोगाणां मद्यमेव प्रबाधकम् ॥
रतिर्विषयसंयोगे प्रीतिसम्भोगवर्द्धनम् ।
अपि प्रवयसां मद्यमुत्सवामोदकारकम् ॥ २२ ॥
पञ्चस्वर्थेषु कामेषु या रतिः प्रथमे मदे ।
यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवि ॥
बहुदुःखहतस्यास्य शोकैरपहतस्य च ।
विश्रामो जीवलोकस्य मद्यं युक्त्या निषेवितम् ॥ २३ ॥
अन्नपानवयोव्याधिबलकालविकाणि षट् ।

त्रीन् दोषांस्त्रिविधं सत्त्वं ज्ञात्वा मद्यं पिवेत् सदा ॥
एषां त्रिकाणामष्टानां योजना युक्तिरिष्यते ।
यया युक्त्या पिवन्मद्यं मद्यदोषैर्न युज्यते ॥
मद्यस्य च गुणान् सर्व्वान् यथोक्तान् स समश्नुते ।
धर्म्मार्थयोरपीड़ायै नरः सत्त्वगुणोत्थितः ॥ २४ ॥
सत्त्वानि तु प्रबुध्यन्ते प्रायशः प्रथमे मदे ।
द्वितीये व्यक्ततां यान्ति मध्येत्र चोत्तममध्ययोः ॥
सत्त्वसम्बोधकं हर्षमोहप्रकृतिदर्शकम् ।
हुताश इव भूतानां मद्यन्तूभयकारकम् ॥
प्रधानावरमध्यानां रुक्माणां व्यक्तिदर्शकः ।
यथाग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥ २५ ॥
सुगन्धिमाल्यगन्धैर्वा सुप्रणीतमनाकुलम् ।
मिष्टान्नपानविशदं सदा मधुरसंकथम् ॥
सुखप्रमाणं सुमदं हर्षप्रीतिविवर्द्धनम् ।
स्वन्तु सात्त्विकमापानं न चोत्तममदप्रदम् ॥
वैगुण्यं सहसा यान्ति मद्यदोषैर्न सात्त्विकाः ।
सहसा न च गृह्णाति मदः सत्वबलाधिकम् ॥ २६ ॥
सौम्यासौम्यकथाप्रायं विशदाविशदं क्षणात् ।
चित्रं राजसमापानं प्रायेणाश्वन्तमाकुलम् ॥
हर्षप्रीतिकथोपेतमदुष्टं पानभोजने ॥ २७ ॥
सम्मोहक्रोधनिद्रान्तमापानं तामसं स्मृतम् ॥ २८ ॥
आपाने सात्त्विकान् बुद्धा तथा राजसतामसान् ।
गच्छात् सशान्त्यैः पीत्वा तु मद्यदोषानुपाश्नुते ॥

सुखशीलाः सुसम्भाषाः सुमुखाः सम्मताः सताम् ।
कलास्ववाक्यविषया विषयप्रवणाश्च ये ॥
परस्परविधेया ये येषामैक्यं सुहृत्तया ।
प्रहर्षप्रीतिमाधुर्य्यैरापानं वर्द्धयन्ति ते ॥ २८ ॥
उत्सवादुत्सवतरं येषाञ्चान्योऽन्यदर्शनम् ।
ये सहायाः सुखं पाने तैः पिबन् सह मोदते ॥
रूपगन्धरसस्पर्शैः शब्दैश्चापि मनोरमैः ।
पिबन्ति सुसहाया ये ते वै सुकृतिभिः समाः ॥
पञ्चभिर्विषयैरिष्टैरुपेतैर्मनसः प्रियैः ।
देशे काले पिबेन्मद्यं प्रहृष्टेनान्तरात्मना ॥
स्थिरसत्त्वशरीरा ये पुराणा मद्यपान्वयाः ।
बहुमद्योषिता ये च माद्यन्ति सहसा न ते ॥ ३० ॥
क्षुत्पिपासापरीताश्च दुर्ब्बला वातपैत्तिकाः ।
रूक्षाल्पप्रमिताहारा विशब्धाः सत्त्वदुर्ब्बलाः ॥
क्रोधिनोऽनुचिताः क्षीणाः परिश्रान्ता मदक्षताः ।
स्वल्पेनापि मदं शीघ्रं यान्ति मद्येन मानवाः ॥ ३१ ॥
ऊर्द्ध्वं मदात्ययस्यातः सम्भवं सहलक्षणम् ।
अग्निवेश चिकित्साञ्च प्रवक्ष्यामि यथाक्रमम् ॥ ३२ ॥
स्त्रीशोकभयभाराध्वकर्म्मभिर्योऽतिकर्षितः ।
रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया ॥
रूक्षं परिणतं मद्यं निशि निद्रां निहत्य च ।
करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम् ॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ।

विद्याद्वहुप्रलापश्च वातप्रायं मदात्ययम् ॥ ३३ ॥
तीक्ष्णोष्णं मद्यमम्लं वा योऽतिमात्रं निषेवते ।
अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः ॥
तस्योपजायते पित्ताद्विशेषेण मदात्ययः ।
लक्षणानि भवन्त्यस्य यानि तानि निबोध मे ॥
तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः ।
विद्याद्धरितवर्णश्च पित्तप्रायं मदात्ययम् ॥ ३४ ॥
तरुणं मधुरप्रायं गौड़ं पैष्टिकमेव वा ।
मधुरस्निग्धगुर्व्वाशी यः पिबत्यतिमात्रया ॥
अव्यायामदिवास्वप्नशय्यासनसुखे रतः ।
मदात्ययं कफप्रायं स शीघ्रमधिगच्छति ॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ ३५ ॥
विषस्य ये गुणा दृष्टाः सन्निपातप्रकोपकाः ।
त एव मद्ये दृश्यन्ते विषे तु बलवत्तराः ॥
हन्त्याशु हि विषं किञ्चित् किञ्चिद् रोगाय कल्पते ।
यथा विषं तथैवान्त्यो ज्ञेयो मद्यकृतो मदः ॥
तस्मात् त्रिदोषजं लिङ्गं सर्व्वत्रापि मदात्यये ।
दृश्यते रूपवैशेष्यात् पृथक्त्वञ्चापि लक्ष्यते ॥ ३६ ॥
शरीरदुःखं बलवत् प्रमोहो हृदयव्यथा ।
अरुचिः प्रतता तृष्णा ज्वरः शीतोष्णलक्षणः ॥
शिरःपार्श्वास्थिसन्धीनां वेदनाऽभिद्यते यथा ।
जायतेऽतिबला जृम्भा स्फुरणं वेपनं श्रमः ॥

उरोविबन्धः कासश्च हिक्का श्वासः प्रजागरः।
शरीरकम्पः कर्णाक्षिमुखरोगस्त्रिकग्रहः॥
छर्द्यतीसार उत्‌क्लेशो वातपित्तकफात्मकः।
भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम्॥
तृणभस्मलतापर्णपांशुभिश्चावपूरणम्।
प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते॥
व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च।
मदात्ययस्य रूपाणि सर्व्वाण्येतानि लक्षयेत्॥ ३७॥
सर्व्वं मदात्ययं विद्यात् त्रिदोषमधिकन्तु यम्।
दोषं मदात्यये पश्येत् तमादौ प्रतिकारयेत्॥
कफस्थानानुपूर्व्व्या वा क्रिया कार्य्या मदात्यये।
पित्तमारुतपर्य्यन्तः प्रायेण हि मदात्ययः॥ ३८॥
मिथ्यातिहीनपीतेन यो व्याधिरुपजायते।
सम्यक् पीतेन तेनैव स मद्येनोपशाम्यति॥ ३९॥
जीर्णान्ने मद्यदोषाय मद्यमेव प्रदापयेत्।
प्रकाङ्क्षा लाघवे जाते मद्यमस्मै हितं भवेत्॥
सौवर्च्चलानुसंविद्धं शीतं सबिड़सैन्धवम्।
मातुलुङ्गार्द्रकोपेतं जलयुक्तं प्रमाणवत्॥ ४०॥
तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना।
मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः॥
अन्तर्दाहं ज्वरं तृष्णां प्रमोहं विभ्रमं मदम्।
जनयत्याशु तच्छान्त्यै मद्यमेव प्रदापयेत्॥
क्षारो हि याति माधुर्य्यं शीघ्रमम्लोपसंहितः।

श्रेष्ठमम्लेषु मद्यञ्च यैर्गुणैस्तान् प्रवक्ष्यते ॥ ४१ ॥
मद्यस्याम्लस्वभावस्य चत्वारोऽनुरसाः स्मृताः ।
मधुरश्च कषायश्च तिक्तः कटुक एव च ॥
गुणाश्च दश पूर्व्वोक्तास्तैश्चतुर्द्दशभिर्गुणैः ।
सर्व्वेषां मद्यमम्लानामुपर्य्युपरि वर्त्तते ॥ ४२ ॥
मद्योत्क्लिष्टेन दोषेण क्रुद्धः स्रोतःसु मारुतः ।
करोति वेदनां तीव्रां शिरस्यस्थिषु सन्धिषु ॥
दोषविष्यन्दनार्थं हि तस्मै मद्यं विशेषतः ।
व्यवायितैक्ष्ण्योष्णतया देयमम्लेषु सत्स्वपि ॥
स्रोतोविबन्धमुन्मद्य मारुतस्यानुलोमनम् ।
रोचनं दीपनञ्चाग्नेरभ्यासात् सात्म्यमेव च ॥
उरःस्रोतःसु शुद्धेषु मारुते चानुलोमिते ।
निवर्त्तन्ते विकाराश्च सात्म्यस्तस्य मदोदयः ॥ ४३ ॥
बीजपूरकवृक्षाम्लकोलदाड़िमसंयुतम् ।
यमानीहवुषाजाजीशृङ्गवेरावचूर्णितम् ॥
सस्नेहैः शक्तुभिर्युक्तमवदंशैश्चिरोच्छ्रितम् ।
दद्यात् सलवणं मद्यं पैष्टिकं वातशान्तये ॥ ४४ ॥
दृष्ट्वा वातोल्वणं लिङ्गं रसैश्चैनमुपाचरेत् ।
लावतित्तिरिदक्षाणां स्निग्धाम्लैः शिखिनामपि ॥
पक्षिणां मृगमत्स्यानामानूपानाञ्च संस्कृतैः ।
भूशयप्रसहानाञ्च रसैः शाल्योदनेन च ॥ ४५ ॥
स्निग्धोष्णलवणाम्लैश्च वेशवारैर्मुखप्रियैः ।
स्निग्धैर्गोधूमिकैश्चान्नैर्वारुणीमण्डसंयुतैः ॥

पिशितार्द्रकगर्भाभिः स्निग्धाभिः पूपवर्त्तिभिः ।
माषपूपलिकाभिश्च वातिकं समुपाचरेत् ॥ ४६ ॥
नातिस्निग्धं न चाम्लेन युक्तं समरिचार्द्रकम् ।
मेध्यं प्रागुदितं मांसं दाड़िमस्य रसेन वा ॥
पृथक्त्रिजातकोपेतं * सधान्यमरिचार्द्रकम् ।
रसप्रलेहयूषैश्च सुखोष्णैः सह दापयेत् ॥
भक्तेन वारुणीमण्डं दद्यात् पातुं पिपासवे ।
दाड़िमस्य रसं वापि जलं वा पाञ्चमूलिकम् ॥
धान्यनागरतोयं वा दधिमण्डमथापि वा ।
अम्लकाञ्जिकमण्डं वा शुक्तोदकमथापि वा ॥
कर्म्मणा तेन सिद्धेन विकार उपशाम्यति ।
मात्राकालप्रयुक्तेन बलं वर्णश्च वर्द्धते ॥ ४७ ॥
रागषाड़वसंयोगैर्विविधैर्भक्तरोचनैः ।
पिशितैः शाकपिष्टान्नैर्यवगोधूमशालिभिः ॥
अभ्यङ्गोत्सादनैः स्नानैरुष्णैः प्रावरणैर्घनैः ।
घनैरगुरुपङ्कैश्च धूपैश्चागुरुजैर्घनैः ॥
नारीणां यौवनोष्णानां निर्दयैरुपगूहनैः ।
श्रोण्यूरुकुचभारैश्च संरोधोष्णसुखप्रदैः ॥
शयनाच्छादनैरुष्णैरुष्णैश्चान्तर्गृहैः सुखैः ।
मारुतप्रबलः शीघ्रं प्रशाम्यति मदात्ययः ॥ ४८ ॥
मद्यं खर्ज्जूरमृद्वीकापरूषकरसैर्युतम् ।
सदाड़िमरसं शीतं शक्तुभिश्चावचूर्णितम् ॥

---

* पृथक्सुजातकोपेतमित्यपि पाठः ।

सगर्करं शार्करं वा माध्वीकमथवापरम् ।
दद्याद् बहूदकं काले पातुं पित्तमदात्यये ॥ ४६ ॥
शशान् कपिञ्जलानेणान् लावानसितपुच्छकान् ।
मधुराम्लान् प्रयुञ्जीत भोजने शालिषष्टिकान् ॥
पटोलयूषमिश्रं वा छागलं कल्पयेद्रसम् ।
सतीनमुद्गमिश्रं वा दाड़िमामलकान्वितम् ॥
द्राक्षामलककर्ज्जूरपरूषकरसेन वा ।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ ५० ॥
आमाशयस्थमुत्क्लिष्टं कफपित्तं मदात्यये ।
विज्ञाय बहुदोषस्य तृड्विदाहान्वितस्य च ॥
मद्यं द्राक्षारसं तोयं दत्त्वा तर्पणमेव वा ।
निःशेषं वामयेच्छीघ्रमेव रोगाद्विमुच्यते ॥ ५१ ॥
काले पुनस्तर्पणञ्च क्रमं कुर्य्यात् प्रकाङ्क्षिते ।
तेनाग्निर्दीप्यते तस्य दोषशेषान्नपाचकः ॥ ५२ ॥
कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च ।
तृष्यते सविदाहे च सोत्क्लेशे हृदयोरसि ॥
गुड़ूचीभद्रमुस्तानां पटोलस्याथवा भिषक् ।
रसं सनागरं दद्यात् तित्तिरैः प्रतिभोजनम् ॥ ५३ ॥
तृष्यते चातिबलवद्वातपित्तसमुद्भवे ।
दद्याद् द्राक्षारसं पातुं शीतं दोषानुलोमनम् ॥
जीर्णे च मधुराम्लेन छागमांसरसेन तम् ।
भोजनं भोजयेन्मद्यमनुतर्षञ्च पाययेत् ॥
अनुतर्षस्य मात्रा सा यया नो हन्यते मनः ।

तृष्यते मद्यमल्पाम्लं प्रदेयं स्याद् बहूदकम् ॥
तृष्णा येनोपशाम्येत मदं येन च नाप्नुयात् ।
परूषकाणां पीलूनां रसं शीतमथाम्बु वा ॥
पर्णिनीनां चतसृणां पिबेद्वा शीतलं जलम् ।
मुद्गदाड़िमलाजानां तृष्णाघ्नं वा पिबेद्रसम् ॥
कोलदाड़िमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ ५४ ॥
शीतलान्यन्नपानानि शीतशय्यासनानि च ।
शीतवातजलस्पर्शाः शीतान्युपवनानि च ॥
क्षौमपद्मोत्पलानाञ्च मणीनां मौक्तिकस्य च ।
चन्दनोदकशीतानां स्पर्शाश्चन्द्रांशुशीतलाः ॥
हेमराजतकांस्यानां पात्राणां शीतवारिभिः ।
पूर्णानां हिमपूर्णानां दृतीनां पवनाहृताः ॥
संस्पर्शाश्चन्दनार्द्राणां स्त्रीणां पित्तमदात्यये ।
शीतवीर्य्यं यदन्यच्च तत् सर्व्वं विनियोजयेत् ॥
कुमुदोत्पलपत्राणां सिक्तानां चन्दनाम्बुना ।
हिताः स्पर्शा मनोज्ञानां दाहे मद्यसमुत्थिते ॥
कथाश्च विविधाश्चित्राः शब्दाश्च शिखिनां शिवाः ।
तोयदानाञ्च संशब्दाः शमयन्ति मदात्ययम् ॥
जलयन्त्राणि वर्षाणि वातयन्त्रगृहाणि च ।
कल्पनीयानि भिषजा दाहे धारागृहाण्यपि ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं दाहतृष्णाप्रशान्तये ॥ ५५ ॥

फलिनीसेव्यलोध्राम्बुहेमपत्रं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥
बदरीपल्लवोत्थश्च तथैवारिष्टकोद्भवः ।
फेनिलायाश्च यः फेनस्तैर्दाहे लेपनं हितम् ॥
सुरा समण्डा दध्यम्लं मातुलुङ्गरसो मधु ।
सेके प्रदेहे शस्यन्ते दाहघ्नाः साम्लकाञ्जिकाः ॥
मात्राकालप्रयुक्तेन कर्म्मणानेन शाम्यति ।
धीमतो वैद्यवश्यस्य शीघ्रं पित्तमदात्ययः ॥ ५६ ॥
उल्लेखनोपवासाभ्यां जयेत् कफमदात्ययम् ।
तृष्यते सलिलञ्चास्मै दद्याद्ध्रीवेरसाधितम् ॥
बलया पृश्निपर्ण्या वा कण्टकार्य्याथवा शृतम् ।
सनागराभिः सर्व्वाभिराभिर्वा शृतशीतलम् ॥
दुःस्पर्शेन समुस्तेन शृतं पर्पटकेन वा ।
जलं मुस्तैः शृतं वापि दद्याद्दोषविपाचनम् ॥
एतदेव च पानीयं सर्व्वत्रापि मदात्यये ।
निरत्ययं पीयमानं पिपासाज्वरनाशनम् ॥ ५७ ॥
निरामं काङ्क्षितं काले पाययेद्बहुमाक्षिकम् ।
शार्करं मधु वाजीर्णमरिष्टं शीधुमेव वा ॥
रूक्षं तर्पणसंयुक्तं यवान्नं वा प्रदापयेत् ।
व्योषयूषमथाम्लं वा सिद्धं वा साम्लवेतसम् ॥
छागमांसरसं रूक्षमम्लं वा जाङ्गलं रसम् ।
स्थाल्यां वाथ कपाले वा भृष्टं नीरसवर्त्तितम् ॥
कटुम्लवणं मांसं भक्षयन् प्रपुयान्मधु ।

व्यक्तमरिचकं मांसं मातुलुङ्गरसान्वितम् ॥
प्रभूतकटुसंयुक्तं यमानीनागरान्वितम् ।
यवगोधूमकं चाम्लं रुचं यूषेण भोजयेत् ॥
कुलत्थानां सुशुष्काणां मूलकानां रसेन वा ।
भृष्टं दाड़िमपञ्चाम्लमुद्गयूषं यवाष्टमम् ॥
यथाग्नि भक्षयेत् काले प्रभूतार्द्रकपेषितम् ।
पिबेच्च निगदं मद्यं कफप्राये मदात्यये ॥ ५८ ॥
सौवर्च्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥
एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥
एतदेव पुनर्युक्त्या मधुराम्लैर्द्रवीकृतम् ।
गोधूमान्नयवान्नानां मांसानाञ्चातिरोचनम् ॥ ५९ ॥
पेषयेत् कटुकैर्युक्तां श्वेतां बीजविवर्ज्जिताम् ।
मृद्वीकां मातुलुङ्गस्य दाड़िमस्य रसेन वा ॥
सौवर्च्चलैलामरिचैरजाजीभृङ्गदीप्यकैः ।
सरागः क्षौद्रसंयुक्तः श्रेष्ठो रोचनदीपनः ॥ ६० ॥
मृद्वीकाया विधानेन कारयेत् कारवीमपि ।
शुक्तं मतुलुङ्गखिण्डकोपेतं रागं रोचनदीपनम् ॥
आम्रामलकपेशीनां रागान् कुर्य्यात् पृथक् पृथक् ।
धान्यसौवर्च्चलाजाजीकारवीमरिचान्वितान् ॥
गुड़ेन मधुशुक्तेन व्यक्ताम्लमधुरीकृतान् ।
तैरन्नं रुच्यते दिग्धं भुक्तं सम्यक् च जीर्य्यति ॥ ६१ ॥

रूक्षाच्छेनानुपानेन सीधुना शिशिरेण वा ।
व्यायामलङ्घनाभ्याञ्च युक्त्या जागरणेन च ॥
कालयुक्तेन रूक्षेण स्नानेनोद्वर्त्तनेन च ।
प्राणवर्णकराणाञ्च प्रहर्षाणाञ्च सेवया ॥
सेवया वसनानाञ्च गुरूणामगुरोरपि ।
सकामोष्णासुखाङ्गानामङ्गनानाञ्च सेवया ॥
सुखशिक्षितहस्तानां स्त्रीणां संवाहनेन च ।
मदात्ययः कफप्रायः शीघ्रमेवोपशाम्यति ॥ ६२ ॥
यदिदं कर्म्म निर्द्दिष्टं पृथग्दोषोल्वणं प्रति ।
सन्निपाते दशविधे तद्विकल्प्यं भिषग्विदा ॥
यस्तु दोषविकल्पज्ञो यश्चौषधविकल्पवित् ।
स साध्यान् साधयेद्व्याधीन् साध्यासाध्यविभागवित् ॥ ६३ ॥
वनानि रमणीयानि सपद्माः सलिलाशयाः ।
विशदान्यन्नपानानि सच्छायाश्च प्रहर्षणाः ॥
माल्यानि गन्धयोगाश्च वासांसि विमलानि च ।
गान्धर्व्वशब्दाः कान्ताश्च गोष्ठाश्च हृदयप्रियाः ॥
सङ्कथाहास्यगीतानां विशदाश्चैव योजनाः ।
प्रियाश्चानुगता नार्य्यो नाशयन्ति मदात्ययम् ॥ ६४ ॥
नाशोप्य हि मनो मद्यं शरीरमविहत्य च ।
कुर्य्यान्मदात्ययं तस्मादेष्टव्या हर्षिणी क्रिया ॥
आभिः क्रियाभिः सिद्धाभिः शमं याति मदात्ययः ।
न चेन्मदात्ययं मुक्त्वा क्षीरमस्य प्रयोजयेत् ॥ ६५ ॥
लङ्घनैः पाचनैर्दोषशोधनैः शमनैरपि ।

विमद्यस्य कफे क्षीणे जाते दौर्ब्बल्यलाघवे ॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च ।
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥
पयसा विहृते रोगे बले जाते निवर्त्तयेत् ।
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत् ॥ ६६ ॥
विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते ।
ध्वंसोविक्षेपकश्चैव रोगस्तस्योपजायते ॥
व्याध्युपक्षीणदेहस्य दुश्चिकित्स्यतमौ हि तौ ।
तयोर्लिङ्गं चिकित्सा च यथावदुपदेक्ष्यते ॥ ६७ ॥
श्लेष्मप्रसेकः कण्ठास्यशोषः शब्दासहिष्णुता ।
मोहस्तन्द्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥
हृत्कण्ठरोगः सम्मोहश्छर्द्दिरङ्गरुजा ज्वरः ।
तृष्णा कासः शिरःशूलमेतद्विक्षेपलक्षणम् ॥ ६८ ॥
तयोः कर्म्म तदेवेष्टं वातिके यन्मदात्यये ।
तौ हि प्रक्षीणदेहस्य जायेतां दुर्ब्बलस्य वै ॥
वस्तयः सर्पिषः पानं प्रयोगः क्षीरसर्पिषोः ।
अभ्यङ्गोत्सादनस्नानान्यन्नपानञ्च वातनुत् ॥
विक्षेपको ध्वंसकश्च कर्म्मणानेन शाम्यतः । ६९ ॥
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ॥
निवृत्तः सर्व्वमद्येभ्यो नरो यः स्याज्जितेन्द्रियः ।
शारीरमानसैर्धीमान् विकारैर्न स युज्यते ॥ ७० ॥

तत्र श्लोकाः ।

यत्प्रभावा भगवती सुरा पेया यथा च सा

यद्द्रव्या यश्च या चेष्टा योगञ्चापेक्षते यथा ॥
यथा मद्यते येश्च गुणैर्युक्ता महागुणा ।
यो मदो मदभेदाश्च ये त्रयः स्वस्वलक्षणाः ॥
ये च मदाश्रिता दोषा गुणा ये च मदात्मकाः ।
यश्च त्रिविधमापानं यथासत्त्वञ्च लक्षणम् ॥
ये सहायाः सुखाः पाने चिरक्षिप्रमदा नराः ।
मदात्ययेश्च यो हेतुर्लक्षणं च यथायथम् ॥
मद्यं मद्योत्थितान् रोगान् हन्ति यश्च क्रियाक्रमः ।
सर्व्वं तदुक्तमखिलं मदात्ययचिकित्सिते ॥ ७१ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
मदात्ययचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ।

अथातो द्विव्रणीयचिकित्सितं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

परावरज्ञमात्रेयं गतमानमदव्यथम् ।
अग्निवेशो गुरुं काले पूजयन्निदमब्रवीत् ॥
भगवन् पूर्व्वमुद्दिष्टौ द्वौ व्रणौ रोगसंग्रहे ।
तयोर्लिङ्गं चिकित्साञ्च वक्तुमर्हसि धर्म्मद ॥ २ ॥
इत्यग्निवेशस्य वचो निशम्य गुरुरब्रवीत् ।

यौ व्रणौ पूर्व्वमुद्दिष्टौ निजश्चागन्तुरेव च ॥
श्रूयतां विधिवत् सौम्य तयोर्लिङ्गञ्च भेषजम् ।
निजः शरीरदोषोत्थ आगन्तुर्बाह्यहेतुजः ॥
बधबन्धप्रपतनाद्दंष्ट्रादन्तनखक्षतात् ।
आगन्तवो व्रणास्तद्वद्विषस्पर्शाग्निशस्त्रजाः ॥
मन्त्रागदप्रलेपाद्यैर्भेषजैर्हेतुभिश्च ते ।
लिङ्गैकदेशैर्निर्द्दिष्टा विपरीता निजेर्व्रणाः ॥
व्रणानां निजहेतूनामागन्तूनामशाम्यताम् ।
कुर्य्याद्दोषबलावेक्षी निजानामौषधं यथा ॥
यथास्वैर्हेतुभिर्दुष्टा वातपित्तकफा नृणाम् ।
बहिर्मार्गं समाश्रित्य जनयन्ति निजान् व्रणान् ॥ ३ ॥
स्तब्धः खरोऽग्निसंस्पर्शो मन्दस्रावो महारुजः ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥
संपूरणैः स्नेहपानैः स्निग्धैः स्वेदोपनाहनैः ।
प्रदेहैः परिषेकैश्च वातव्रणमुपाचरेत् ॥ ४ ॥
तृष्णामोहज्वरक्लेददाहदुष्ट्यवदारणैः ।
व्रणं पित्तकृतं विद्यात् गन्धैः स्रावैश्च पूतिकैः ।
शीतलैर्मधुरैः स्निग्धैः प्रदेहपरिषेचनैः ।
सर्पिःपानैर्विरेकैश्च पैत्तिकं शमयेद्व्रणम् ॥ ५ ॥
बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ।
पाण्डुवर्णोऽल्पसंक्लेदश्चिरकारी कफव्रणः ॥
कषायकटुरूक्षोष्णैः प्रदेहपरिषेचनैः ।
कफव्रणं प्रशमयेत् तथा लङ्घनशोधनैः ॥ ६ ॥

तौ द्वौ नानात्वभेदेन भिन्नाः पुनर्विंशतिर्व्रणाः ।
तेषां परीक्षा त्रिविधा प्रदुष्टा द्वादश स्मृताः ॥
स्थानान्यष्टौ तथा गन्धाः परिस्रावाश्चतुर्द्दश ।
षोड़शोपद्रवा दोषाश्चत्वारो विंशतिस्तथा ॥
तथा चोपक्रमाः सिद्धाः षट्त्रिंशत्तु समुदाहृताः ।
विभज्यमानान् शृणु मे सर्व्वानेतान् यथेरितान् ॥ ७ ॥
कृत्योत्कृत्यस्तथा दुष्टस्तथा मर्म्मस्थितो नवः ।
संवृतो दारुणोत्सन्नः सविषो विषमस्थितः ॥
अस्रावुत्सङ्गश्चैवैषां व्रणान् विद्याद्विपर्य्ययात् ।
इति नानात्वभेदेन निरुक्ता विंशतिर्व्रणाः ॥ ८ ॥
दर्शनप्रश्नसंस्पर्शैः परीक्षा त्रिविधा स्मृता ।
वयोवर्णशरीराणामिन्द्रियाणाञ्च दर्शनात् ॥
हेत्वर्त्तिसात्म्याग्निबलं परीक्ष्यं वचनाद्बुधैः ।
स्पर्शान्मार्द्दवशैत्ये च परीक्ष्ये सविपर्य्यये ॥ ९ ॥
श्वेतोऽवसन्नचर्म्मातिस्थूलचर्म्मातिपिञ्जरः ।
नीलः श्यावोऽतिपिड़को रक्तः कृष्णोऽतिपूतिकः ॥
रोप्यः कुम्भीमुखश्चेति प्रदुष्टा द्वादश व्रणाः ॥ १० ॥
त्वक्सिरामांसमेदोऽस्थिस्नायुमर्म्मान्तराश्रयाः ।
व्रणस्थानानि निर्द्दिष्टान्यष्टावेतानि संग्रहे ॥ ११ ॥
सर्पिस्तैलवसापूयरक्तश्यावाम्लपूतिकाः ।
व्रणानां व्रणगन्धज्ञैरष्टौ गन्धाः प्रकीर्त्तिताः ॥ १२ ॥
लसीकाजलपूयासृग्हरिद्रारुणपिञ्जराः ।

कषायनीलहरितस्निग्धरूक्षसितासिताः ॥
इति रूपैः समुद्दिष्टा व्रणास्रावाश्चतुर्द्दश ॥ १३ ॥
वीसर्पः पक्षघातश्च शिरास्तम्भोऽपतानकः ।
मोहोन्मादव्रणरुजा ज्वरस्तृष्णा हनुग्रहः ॥
कासश्छर्द्दिरतीसारो हिक्का श्वासः सवेपथुः ।
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥ १४ ॥
चतुर्व्विंशतिरुद्दिष्टा दोषाः कल्पान्तरेण च ।
स्नायुक्लेदाच्छिराच्छेदाद्गाम्भीर्य्यात् क्रिमिभक्षणात् ॥
अस्थिभेदात् सशल्यत्वात् सविषत्वाच्च सर्पणात् ।
नखकाष्ठावघाताच्च चर्म्मलोमाभिघट्टनात् ॥
मिथ्याबन्धादतिस्नेहादतिभैषज्यकर्षणात् ।
अजीर्णादतिभुक्ताच्च विरुद्धासात्म्यभोजनात् ॥
शोकात् क्रोधाद् दिवास्वप्नाद्व्यवायात् क्षोभणात् तथा ।
व्रणा न प्रशमं यान्ति निष्क्रियत्वाच्च देहिनाम् ॥ १५ ॥
परिस्रावाच्च गन्धाच्च दोषाच्चोपद्रवैः सह ।
व्रणानां बहुदोषाणां कृच्छ्रत्वञ्चोपजायते ॥ १६ ॥
त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ।
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः ॥
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः ।
सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रमः ॥ १७ ॥
व्रणानामादितः कार्य्यं यथासत्त्वं विशोधनम् ।
ऊर्द्ध्वभागैरधोभागैः शस्त्रैर्वस्तिभिरेव च ॥
सद्यः शुद्धशरीराणां प्रशमं यान्ति हि व्रणाः ।

यथाक्रममतश्चोर्द्ध्वं शृणु सर्व्वानुपक्रमान् ॥ १८ ॥
शोथघ्नं षड्विधञ्चैव शस्त्रकर्म्मावपीड़नम् ।
निर्व्वापणं ससन्धानं स्वेदः शमनमेव च ॥
शोधनरोपणौ चैव कषायौ सप्रलेपनौ ।
द्वे तैले तद्वद्घृतं पत्रं च्छादने द्वे च बन्धने ॥
आदग्रमुत्सादनं दाहो द्विविधः सावसादनः ।
काठिन्यमार्द्दवकरे धूपने लेपने शुभे ॥
व्रणावचूर्णनं वर्ण्यं रोपणं लोमरोहणम् ।
इति षट्त्रिंशदुद्दिष्टा व्रणानां समुपक्रमाः ॥ १९ ॥
पूर्व्वरूपं भिषग्बुद्ध्वा व्रणानां शोथमादितः ।
रक्तावसेचनं कुर्य्यादजातव्रणशान्तये ॥
शोधयेद्बहुदोषांस्तु स्वल्पदोषान् विलङ्घयेत् ।
पूर्व्वं कषायसर्पिर्भिर्जयेद्वा मारुतोत्तरम् ॥ २० ॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रदेहः स्याच्छोथनिर्व्वापणः परः ॥
विजया मधुकं वीरा विसग्रन्थिः शतावरी ।
नीलोत्पलं नागपुष्पं प्रदेहः स्यात् सचन्दनः ॥
शक्तवो मधुकं सर्पिः प्रदेहः स्यात् सशर्करः ।
अविदाहीनि चान्नानि शोथे भेषजमुत्तमम् ॥ २१
स चेदेवमुपक्रान्तः शोथो न प्रशमं व्रजेत् ।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥
तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते ॥

सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता शादुपनाहने ॥ २१ ॥
वन्दाहरागतोदैश्च विदग्धं शोफमादिशेत् ।
जलवस्तिसमस्पर्शं संपक्कं पीड़ितोन्नतम् ॥
उमाथ गुग्गुलुः सौधं पयो दक्षकपोतयोः ।
विट् पलाशभवः क्षारो हेमक्षीरी मुकूलकः ॥
इत्युक्तो भेषजगणः पक्कशोथप्रभेदनः ।
सुकुमारस्य कष्टस्य शस्त्रन्तु परमुच्यते ॥ २२ ॥
पाटनं व्यधनञ्चैव छेदनं लेखनं तथा ।
प्रच्छनं सीवनञ्चैव षड्विधं शस्त्रकर्म्म तत् ॥
नाड़ीव्रणाः पक्कशोथास्तथा क्षतगुदोदरम् ।
अन्तःशल्याश्च ये देशाः पाट्यास्ते तद्विधाश्च ये ॥
दकोदराणि संपक्का गुल्मा ये ये च रक्तजाः ।
व्यध्याः शोणितरोगाश्च वीसर्पपिड़कादयः ॥
अर्शःप्रभृत्यधीमांसं छेदनेनोपपादयेत् ।
उद्वृत्तान् स्थूलपर्य्यन्तानुत्सन्नान् कठिनान् व्रणान् ॥
किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् ।
वातासृग्ग्रन्थिपिड़काः सकोठा रक्तमण्डलाः ॥
कुष्ठान्यभिहतञ्चाङ्गं शोथांश्च प्रच्छयेद्भिषक् ।
सीव्यं क्षुद्रोदराद्यन्तु गम्भीरं यद्विपाटितम् ॥
इति षड्विधमुद्दिष्टं शस्त्रकर्म्म मनीषिभिः ॥ २४ ॥
सूक्ष्माननाः कोषवन्तो ये व्रणास्तान् प्रपीड़येत् ।
कलायांश्च मसूरांश्च गोधूमाः सहरेणवः ।

कल्कीकृताः प्रयच्छन्ते निःक्षेपा व्रणरोहणे ॥ २५ ॥
शाल्मलीत्वग्बलामूलं तथा न्यग्रोधपल्लवाः ।
न्यग्रोधादिकमुद्दिष्टं बलादिकमथापि वा ॥
आलेपनं निर्व्वापणं तद्विधान्यैश्च सेचनम् ।
सर्पिषा घृतधौतेन पयसा मधुकाम्बुना ॥
निर्व्वापयेत् सुशीतेन रक्तपित्तोत्तरान् व्रणान् ॥ २६ ॥
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।
संदधीत समं वैद्यो बन्धनैश्चोपपादयेत् ॥
तान् मांससंस्थितान् ज्ञात्वा फलिनीलोध्रकट्फलैः ।
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ।
धातकीलोध्रचूर्णैर्वा तथा रोहन्ति ते व्रणाः ॥ २७ ॥
अस्थिभग्नं च्युतं सन्धिं संदधीत समं पुनः ।
समेन सममङ्गेन कृत्वानेन विचक्षणाः ॥
स्थिरैः कवलिकाबन्धैः कुशिकाभिश्च संस्थितम् ।
पट्टैः प्रभूतसर्पिष्कैर्बध्नीयादचलं सुखम् ॥ २८ ॥
अविदाहिभिरन्नैश्च पैष्टिकैस्तमुपाचरेत् ।
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ॥ २९ ॥
विचुर्णिताभिहताङ्गानां वीसर्पादीनुपद्रवान् ।
उपक्रमेद् यथाकालं कालज्ञः स्वाच्चिकित्सितात् ॥ ३० ॥
शुष्का महारुजः स्तब्धा ये व्रणा मारुतोत्तराः ।
स्वेद्याः संकरकल्पेन ते स्युः कृशरपायसैः ॥
ग्राम्यवैलाम्बुजानूपैर्वेशवारैश्च संस्कृतैः ।

उत्कारिकाभिरुष्णाभिः सुखी स्याद् व्रणितस्तथा ॥ ३१ ॥
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः।
तेषां तिलानुमाश्चैव भृष्टान् पयसि निर्वृतान् ॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक्।
बला गुडूची मधुकं पृश्निपर्णी शतावरी ॥
जीवन्ती शर्करा क्षीरं तैलं मत्स्यवसा घृतम्।
संसिद्धा समधूच्छिष्टा शूलघ्नी स्नेहशर्करा ॥ ३२ ॥
द्विपञ्चमूलक्वथितेनाम्भसा मस्तुनाथवा।
सर्पिषा वा सतैलेन कोष्णेन परिषेचयेत् ॥ ३३ ॥
यवचूर्णं समधुकं सतिलं सह सर्पिषा।
दद्यादालेपनं कोष्णं दाहशूलोपशान्तये ॥ ३४ ॥
उपनाहश्च कर्त्तव्यः सतिलो मुद्गपायसः।
रुग्दाहयोः प्रशमनो व्रणेष्वेवं विधिः स्मृतः ॥ ३५ ॥
सूक्ष्मानना बहुस्रावाः कोषवन्तश्च ये व्रणाः।
न च मर्म्माश्रितास्तेषामेषणं हितमुच्यते ॥
द्विविधामेषणां विद्यान्मृद्वीञ्च कठिनामपि।
यौङ्गिदैर्मृदुभिर्नालैर्लौहानां वा शलाकया ॥
गम्भीरं मांसले देशे पाश्वं लौहशलाकया।
एष्यं विद्याद् व्रणं नालैर्विपरीतमतो भिषक् ॥ ३६ ॥
पूतिगन्धान् विवर्णांश्च बहुस्रावान् महारुजः।
व्रणानशुद्धान् विज्ञाय शोधनैः समुपाचरेत् ॥
त्रिफला खदिरो दार्व्वी न्यग्रोधादिर्बला कुशः।
निम्बकूलकपत्राणि कषायाः शोधने हिताः ॥

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपः स्याद् व्रणशोधनः॥ ३७॥
नातिरक्तो नातिपाण्डुर्नातिश्यावो न चातिरुक्।
न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः॥
न्यग्रोधोडुम्बराश्वत्थकदम्बप्लक्षवेतसाः।
करवीरार्ककुटजाः कषाया व्रणरोपणाः॥
चन्दनं पद्मकिञ्जल्कं दार्वीत्वङ्नीलमुत्पलम्।
मेदा मूर्वा समङ्गाच यष्ट्याह्वं व्रणरोपणम्॥
प्रपौण्डरीकं जीवन्तीं गोजिह्वां धातकीं बलाम्।
रोपणं सतिलं दद्यात् प्रदेहं सघृतं व्रणे॥
कम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम्।
पटोलं पिचुमर्दञ्च लोध्रं मुस्तं प्रियङ्गुकम्॥
खदिरं धातकीं सर्ज्जमेलामगुरुचन्दनम्।
पिष्ट्वा साध्यं भवेत् तैलं तत् परं व्रणरोपणम्॥
प्रपौण्डरीकं मधुकं काकोल्यौ द्वे च चन्दने।
सिद्धमेतैः समैस्तैलं परं स्याद् व्रणरोपणम्॥
दूर्व्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम्॥
येनैव विधिना तैलं घृतं तेनैव साधयेत्।
रक्तपित्तोत्तरं ज्ञात्वा रोपणे घृतमुत्तमम्॥ ३८॥
कदम्बार्ज्जुननिम्बानां * पाटल्याः पिप्पलस्य च।
व्रणप्रच्छादने विद्वान् पत्राण्यर्कस्य चादिशेत्॥ ३९॥

---

* कदम्बार्ज्जुनजम्बूनामिति पाठान्तरम्।

वामोऽथवाप्यवामश्च पट्टो व्रणहितः स्मृतः।
बन्धश्च द्विविधः शस्तो व्रणानां सव्यदक्षिणः ॥ ४० ॥
लवणाम्लकटूष्णानि विदाहीनि गुरूणि च।
वर्ज्जयेदन्नपानानि व्रणी मैथुनमेव च ॥ ४१ ॥
नातिशीतगुरुस्निग्धमविदाहि यथाव्रणम्।
अन्नपानं व्रणहितं हितञ्चास्वपनं दिवा ॥ ४२ ॥
स्तन्यानि जीवनीयानि बृंहणीयानि यानि च।
उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत् ॥ ४३ ॥
भूर्ज्जग्रन्थ्यश्मकाशीशं समभागानि गुग्गुलुः।
व्रणावसादनं तद्वत् कलविङ्ककपोतविट् ॥ ४४ ॥
रुधिरेऽतिप्रवृत्ते तु भिन्ने छेदेऽधिमांसके।
कफग्रन्थिषु गण्डेषु वातस्तम्भेषु रुक्षु च ॥
गूढ़पूयलसीकेषु गम्भीरेषु स्थिरेषु च।
सुप्तेषु चाङ्गदेशेषु कर्म्माग्नेः संप्रशस्यते ॥
मधूच्छिष्टेन तैलेन मज्जक्षौद्रवसाघृतैः।
तप्तैर्वा विविधैर्लौहैर्दहेद्दाहविशेषवित् ॥
रुक्षाणां सुकुमाराणां गम्भीरान् मारुतोत्तरान्।
दहेत् स्नेहमधूच्छिष्टैर्लौहैः क्षौद्रैस्ततो घृतैः ॥ ४५ ॥
बालदुर्ब्बलवृद्धानां गर्भिण्या रक्तपित्तिनाम्।
तृष्णाज्वरपरीतानामबलानां विषादिनाम् ॥
नाग्निकर्म्मोपदेष्टव्यं स्नायुमर्म्मव्रणेषु च।
सविषेषु सशल्येषु नेत्रकोष्ठव्रणेषु च ॥ ४६ ॥
रोगदोषबलापेक्षी मात्राकालाग्निकोविदः।

अम्लकर्म्मोल्लिङ्गितेष्वेषु क्षारमप्यवचारयेत् ॥ ४७ ॥
कठिनत्वं व्रणा यान्ति गन्धसारैश्च धूपिताः ।
सर्पिर्मज्जवसातैलैः शैथिल्यं यान्ति हि व्रणाः ॥
रुजः स्रावाश्च गन्धाश्च क्रिमयश्च व्रणाश्रिताः ।
काठिन्यं मार्द्दवञ्चापि धूपनेनोपशाम्यति ॥ ४८ ॥
लोध्रन्यग्रोधशुङ्गाश्च खदिरस्त्रिफलाघृतम् ।
प्रलेपो व्रणशैथिल्यसौकुमार्य्यप्रसाधकः ॥ ४९ ॥
सरुजः कठिनाः स्तब्धा निरास्रावाश्च ये व्रणाः ।
यवचूर्णैः ससर्पिष्कैर्बहुशस्तान् प्रलेपयेत् ॥ ५० ॥
मुद्गषष्टिकशालीनां पायसैर्वा यथाक्रमम् ।
सघृतैर्जीवनीयैर्वा तर्पयेत् तानभीक्ष्णशः ॥ ५१ ॥
ककुभोडुम्बराश्वत्थलोध्रजाम्बवकट्फलैः ।
त्वचमाश्वेव गृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ ५२ ॥
मनःशिलाले मञ्जिष्ठा शताह्वा रजनीद्वयम् ।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ५३ ॥
अयोरजः सकासीसं त्रिफलाकुसुमानि च ।
करोति लेपः कृष्णत्वं सद्य एव नवत्वचि ॥
कालीयकनतास्थिहेमकालायसोत्तमैः ।
लेपः सगोमयरसैः सवर्णीकरणः परः ॥
श्यामकाश्वत्थनिचुलमूलं लाक्षाथ गैरिकम् ।
सहेम सामृतासङ्गं कासीसञ्चेति वर्णकृत् ॥ ५४ ॥
चतुष्पदानां त्वग्रोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेल्लोमवती पुनः ॥ ५५ ॥

षोड़शोपद्रवा ये च व्रणानां परिकीर्त्तिताः।
तेषां चिकित्सा निर्द्दिष्टा यथा स्वस्वचिकित्सिते॥ ५६॥

तत्र श्लोकौ।

द्वौ व्रणौ व्रणभेदाश्च परीक्षा दुष्टिरेव च।
स्थानानि गन्धाः स्रावाश्च सोपसर्गाः क्रियाश्च याः॥
व्रणाधिकारे सप्रश्नमेतन्नवकमुक्तवान्।
मुनिर्व्याससमासाभ्यामग्निवेशाय धीमते॥ ५७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने द्विव्रणीयचिकित्सितं नाम पञ्चविंशोऽध्यायः॥ २५॥

## षड्विंशोऽध्यायः।

अथातस्त्रिमर्म्मीयचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः॥ १॥

सप्तोत्तरं मर्म्म शतं यदुक्तं शरीरसंख्यामधिकृत्य तेभ्यः।
मर्म्माणि वस्तिं हृदयं शिरश्च प्रधानभूतानि वदन्ति तज्ज्ञाः॥
प्राणाश्रयात् तानि हि पीड़यन्तो वातादयोऽसूनपि पीड़यन्ति।
तत्संश्रितानामनुपालनार्थं महागदानां शृणु सौम्य रक्षाम्॥ २॥
कषायतिक्तोषणरूक्षभोज्यैः सन्धारणोदीरणमैथुनैश्च।
पक्वाशये कुप्यति चेदपानः स्रोतांस्यधोगानि बली स रुद्ध्वा।
करोति विण्मारुतमूत्रसङ्गं क्रमादुदावर्त्तमतः सुघोरम्॥ ३॥

तद्वस्तिहृत्कुक्षिगुदैरेष्वभीक्ष्णं सपृष्ठपार्श्वेष्वतिदाहता स्यात् ।
आध्मानहृल्लासविकर्त्तिकाश्च तोदोऽविपाकश्च सबस्तिशोथः ॥
वर्चोऽप्रवृत्तिर्जठरे च गण्डो
ह्यूर्द्धञ्च वायौ विहते गुदे स्यात् ।
कृच्छ्रेण शुष्कस्य चिरात् प्रवृत्तिः
स्याद्वा तनुः सा खररूक्षशीता ॥ ४ ॥
ततश्च रोगा ज्वरमूत्रकृच्छ्र-
प्रवाहिकाहृद्ग्रहणीप्रदोषाः ।
वम्यान्ध्यबाधिर्य्यशिरोऽभितापा
वातोदराष्ठीलमनोविकाराः ॥
तृष्णास्रपित्तारुचिगुल्मकासश्वासप्रतिश्यायहितपार्श्वरोगाः ।
अनेऽच रोगा बहवोऽनिलोत्था भवन्त्युदावर्त्तकृताः सुघोराः ॥ ५
तं तैलशीतज्वरनाशनाक्तं स्वेदैर्यथोक्तैः प्रविलीनदोषम् ।
उपाचरेद्वर्त्तिनिरूहवस्तिस्नेहैर्विरेकैरनुलोमनान्नैः ॥ ६ ॥
श्यामात्रिवृन्मागधिकां सदन्तीं गोमूत्रपिष्टां दशमाषभागाम् ।
सनीलिकां द्विलवणां गुड़ेन वर्त्तिं कराङ्गुष्ठनिभां विदध्यात् ॥
पिण्याकसौवर्चलहिङ्गुभिर्वा ससर्षपत्र्यूषणयावशूकैः ।
क्रिमिघ्नकम्पिल्लकशङ्खिनीभिः सुधार्कजक्षीरगुड़ैर्युताभिः ।
स्यात् पिप्पलीसर्षपराठवेश्मधूमैः सगोमूत्रगुड़ैश्च वर्त्तिः ॥ ७ ॥
श्यामाफलेक्ष्वाकुसपिप्पलीकं नाड्याथवा तत् प्रधमेत चूर्णम् ।
रक्षोघ्नतुम्बीकरहाटकृष्णाचूर्णं सजीमूतकसैन्धवं वा ॥
स्निग्धे गुदे तान्यनुलोमयन्ति नरस्य वर्चोऽनिलमूत्रसङ्गम् ॥ ८
तेषां विघाते तु भिषग्विदध्यात् स्वभ्यक्तसुस्विन्नतनोर्निरूहम् ।

जम्बीरलुलोमीषधमूत्रतैलक्षाराम्लवातघ्नयुतं सुतीक्ष्णम् ॥
वातेऽधिकेऽम्लं लवणं सतैलं क्षीरेण पित्ते तु कफे समूत्रम् ।
स मूत्रवर्च्चोऽनिलसङ्गमाशु गुदं शिराश्च प्रगुणीकरोति ॥ ९ ॥
त्रिवृत्सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्ना गुड़शीधुपायी ।
भूयोऽनुबन्धे तु भवेद्विरेच्यो मूत्रप्रसन्नादधिमण्डशुक्तैः ॥ १० ॥

गुल्मोदरब्रध्नार्शःप्लीहोदावर्त्तयोनिशुक्रगदे ।
मेदःकफसंसृष्टे मारुतरक्तेऽवगाढ़े च ॥
गृध्रस्युपस्तम्भादिषु विरेचनार्हेषु वातरोगेषु ।
वाते विबद्धमार्गे मेदःकफपित्तरक्तेन ॥
पयसा मांसरसैर्वा त्रिफलारसयूषमूत्रमदिराभिः ॥ ११ ॥
दोषानुबन्धयोगात् प्रशस्तमेरण्डजं तैलम् ।
तद्धातन्तु स्वभावात् संयोगवशाद्विरेचनाच्च जयेत् ॥
मेदोऽसृक्पित्तकफोन्मिश्रानिलरोगजित् स्यात् ॥
बलकोष्ठव्याधिवशादापञ्चपला भवेन्मात्रा ।
मृदुकोष्ठबलानां सह भोज्यं तत् प्रयोज्यं स्यात् ॥ १२ ॥

स्वस्थन्तु पश्चादनुवासयेत्तं रौक्ष्याद्धि सङ्गोऽनिलवर्च्चसोः स्यात् ॥ १३
द्विरुत्तरं हिङ्गु वचा सकृष्णा सुवर्च्चिका चैव विड़ङ्गचूर्णम् ।
सुखाम्बु नानाहविसूचिकार्त्ति हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥
वचाभयाचित्रकयावशूकान् सपिप्पलीन् सातिविषान् सकुष्ठान् ।
उष्णाम्बुनानाहविमूढ़वातान् पीत्वा जयेदाशु रसौदनाशी ॥
हिङ्गूग्रगन्धाविड़शुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम् ।
यथोत्तरं भागविवृद्धमेतत् प्लीहोदराजीर्णविसूचिकासु ॥ १४ ॥

स्थिरादिवर्गस्य पुनर्नवायाः श्यामाकपूतीककरञ्जयोश्च ।
सिद्धः कषाये द्विपलांशिकानां प्रस्थो घृतात् स्यात् प्रतिबद्धवाते ॥
फलञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं * दशमूलमग्र्यम् ।
स्नुक् चित्रकश्चैव पुनर्नवा च तुल्यानि सर्व्वैर्लवणानि पञ्च ॥
स्नेहैः समूत्रैः सह जर्ज्जराणि शरावसन्धौ विपचेत् सुलिप्ते ।
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथानाहरुजाघ्नमद्यात् ॥ १५ ॥
हृत्स्तम्भमूर्द्धामयगौरवाभ्यामुद्गारसङ्गेन सपीनसेन ।
आनाहमामप्रभवं जये प्रच्छर्द्दनैर्लङ्घनपाचनैश्च ॥ १६ ॥

उदावर्त्त चिकित्सा ।

व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात् ।
आनूपमांसाध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥ १७
पृथङ्मलाः स्वैः कुपिता निदानैः सर्व्वेऽथवा कोपमुपेत्य वस्तौ ।
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥ १८
तीव्रा हि रुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ।
पीतं सरक्तं सरुजं सदाहं कृच्छ्रान्मुहुर्मूत्रयतीह पित्तात् ॥

वस्तेः सलिङ्गस्य गुरुत्वशोफौ
मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।
सर्व्वाणि रूपाणि च सन्निपाताद्
भवन्ति तत् कृच्छ्रतमन्तु कृच्छ्रम् ॥ १९ ॥

इति मूत्रकृच्छ्र-निदानम् ।

विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाश्मर्य्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥

---

* हिंस्रार्कमूलमिति पाठान्तरम् ।

कदम्बपुष्पाकृतिरश्मतुल्या श्लक्ष्णा त्रिपुट्यप्यथवापि मृद्वी।
मूत्रस्य चेन्मार्गमुपैति रुद्ध्वा मूत्रं रुजां तस्य करोति वस्तौ॥
मृद्नाति मेढ्रं स तु वेदनार्त्तो मुहुः शकृन्मुञ्चति वेपते च।
ससीवनीमेहनवस्तिशूलं विशीर्णधारञ्च करोति मूत्रम्॥
क्षोभात् क्षते मूत्रयतीह सास्रं तस्याः सुखं मूत्रयति व्यपायात्।
एषाश्मरी मारुतभिन्नमूर्त्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती॥२०॥
शुक्रं मलाश्चैव पृथक् पृथग्वा मूत्रायनस्याः परिपीड़यन्ति।
तद्व्याहतं मेहनवस्तिशूलं मूत्रं सशुक्रं कुरुते विबद्धम्॥
स्तब्धश्च शूनो भृशवेदनश्च तुदेत वस्तिर्वृषणौ च तस्य॥ २१॥
क्षताभिघातात् क्षतजं क्षयाद्वा प्रकोपितं वस्तिगतं विबद्धम्।
तीव्रार्त्तिमूत्रेण सहाश्मरीत्वमायाति तस्मिन्नतिसञ्चिते च॥
आध्मातता वस्तिषु गौरवञ्च वस्तेर्लघुत्वञ्च विनिःसृते स्यात्॥२२

कृच्छ्राश्मरी-चिकित्सा।

अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान्।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे॥२३॥
पुनर्नवैरण्डशतावरीभिः पत्तूरवृश्चीरबलाश्मभिद्भिः।
द्विपञ्चमूलेन कुलत्थकोलयवैश्च तोयोत्क्वथिते कषाये॥
तैलं वराहर्क्षवसाघृतञ्च तैरेव कल्कैर्लवणैश्च साध्यम्।
तन्मात्रयाशु प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम्॥ २४॥
एतानि चान्यानि वरौषधानि हितानि पिष्टान्यपि चोपनाहे।
सुखाभितस्तैलफलानि चैव स्नेहाम्लयुक्तानि सुखोष्णवन्ति॥२५॥
सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्वस्तिपयोविरेकाः।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः॥ २६॥

शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिवेत् पैत्तिकमूत्रकृच्छ्री ॥
पिवेत् कषायं कमलोत्पलानां शृङ्गाटकानामथवा विदार्य्याः ।
दण्डोत्पलानामथवापि मूलं पूर्व्वेण कल्पेन तथाम्बु शीतम् ॥२७
एर्वारुवीजं त्रपुषात् कुसुम्भात् सकुङ्कुमः स्याद्वृषकश्च पेयः ।
द्राक्षारसेनाश्मरिशर्करासु सर्व्वेषु कृच्छ्रेषु प्रशस्त एषः ॥ २८ ॥
एर्वारुवीजं मधुकं सदार्व्वि पैत्ते पिवेत् तण्डुलधावनेन ।
दार्व्वीं तथैवामलकीरसेन समाक्षिकां पित्तकृते तु कृच्छ्रे ॥२९॥
क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः ।
तक्रं सतिक्तोषणसिद्धतैलमभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ३० ॥
व्योषं श्वदंष्ट्रा त्रुटिसारसास्थि कोलप्रमाणं मधु मूत्रयुक्तम् ।
पिवेत् त्रुटिं क्षौद्रयुतां कदल्या रसेन कैटर्य्यरसेन वापि ॥
तक्रेण युक्तं शितिमारकस्य वीजं पिवेत् कृच्छ्रविघातहेतोः ।
पिवेत् तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥
सशृच्छदारग्वधकेवुकैला धवं करञ्जं कुटजं गुडूचीम् ।
पक्त्वा जले तेन पिवेद् यवागूं सिद्धं कषायं मधुसंयुतं वा ॥३१॥
सर्व्वं त्रिदोषप्रभवे तु वायोः स्थानानुपूर्व्व्या प्रसमीक्ष्य कार्य्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे तु पित्ते विरेकः पवने तु वस्तिः ॥३२

इति मूत्रकृच्छ्रचिकित्सा ।

क्रिया हिता त्वश्मरिशर्कराभ्यां या मूत्रकृच्छ्रे कफमारुतोत्थे ।
कार्य्याश्मरीभेदनपातनाय विशेषयुक्तं शृणु कर्म्म सिद्धम् ॥ ३३॥
पाषाणभेदं वृषकं श्वदंष्ट्रा पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराह्वाशितिमारकाणामेर्व्वारुकाणां त्रपुषस्य वीजम् ॥

उत्कुञ्चिका हिङ्गु सवेतसाम्लं स्याद् द्वे वृहत्यौ हपुषा वचा च।
चूर्णं पिवेदश्मरिभिद्विपक्वं सर्पिश्च गोमूत्रचतुर्गुणान्तैः ॥ ३४ ॥
मूलं श्वदंष्ट्राचुरकोरुवूकात् चीरेण पिष्टं वृहतीद्वयाच्च।
आलोड्य दध्ना मधुरेण पेयं दिनानि सप्ताश्मरिभेदनार्थम् ॥३५॥
पुनर्नवायोरजनीश्वदंष्ट्राफल्गुप्रवालाश्च सदर्भपुष्पाः।
चीराम्बुमद्येचुरसैः प्रपिष्टं पेयं भवेदश्मरिशर्करासु ॥ ३६ ॥
त्रुटिः शताह्वा लवणानि पञ्च यवाग्रजं कुन्दुरुकाश्मभेदौ।
कम्पिल्लकं गोचुरकस्य वीजमेर्व्वारुवीजं त्रपुषस्य वीजम् ॥
चूर्णीकृतं चित्रकहिङ्गुमांसीयमानितुल्यं त्रिफला द्विरंशम्।
अम्लैरनुष्णै रसमद्ययूषैः पेयं हि गुल्माश्मरिभेदनार्थम् ॥ ३७॥
विल्वप्रमाणो घृततैलभृष्टो यूषः कृतः शियुकमूलकल्कात्।
शीतोऽश्मभित् स्याद्दधिमण्डयुक्तः पेयः प्रकामं लवणेन युक्तः ॥
जलेन शोभाञ्जनमूलकल्कः शीतो हितश्चाश्मरिशर्कराभ्याम् ॥३८
सितोपला वा समयावशूकाः कृच्छ्रेषु सर्व्वेष्वपि भेषजं स्यात् ॥३९
पीत्वा च मद्यं निगदं रथेन हयेन वा शीघ्रजवेन यायात्।
तैः शर्करा प्रच्यवतेऽश्मरी च शाम्येन्नचेच्छल्यविदुद्धरेत्ताम् ॥४०
रेतोविघातप्रभवे तु कृच्छ्रे समीक्ष्य दोषं प्रतिकर्म्म कुर्य्यात्।
कार्पासमूलं वृषकाश्मभेदौ * वलास्थिरादीनि गवेधुका च ॥
वृश्चीर ऐन्द्री च पुनर्नवा च शतावरी मध्वशनाखुपर्ण्यौ।
तत् क्वाथसिद्धं पवने नरस्य पित्ताधिके चीरमथापि सर्पिः ॥
कफे तु यूषादिकमन्नपानं संसर्गजे सर्व्वहितः क्रमः स्यात् ॥४१॥
एवं न चेच्छाम्यति तस्य दद्यात् सुरां पुराणां मधुमाध्विकं वा।

* वसुकाश्मभेदाविति पाठान्तरम्।

विहङ्गमांसानि च बृंहणार्थं वस्तींश्च शुक्राशयशोधनार्थम्॥
शुद्धस्य तृप्तस्य च वृष्ययोगाः प्रियानुकूलाः प्रमदा विधेयाः ॥४२॥
रक्तोद्भवे तूतपलंनालतालकाशेक्षुबालीक्षुकशेरुकाणि।
पिबेत् सिताक्षौद्रयुतानि खादेदिक्षुं विदारीं त्रपुषाणि चैव॥
घृतं श्वदंष्ट्रास्वरसेन सिद्धं क्षीरेण चैवाष्टगुणेन पेयम्॥
स्थिरादिकानां कतकादिकानामेकैकशो वा विधिनैव तेन ॥४३
क्षीरेण वस्तिर्मधुरौषधैः स्यात्तैलेन वा स्वादुफलोत्थितेन।
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते कार्य्यन्तु तच्छोणितमूत्रकृच्छ्रे ॥४४
व्यायामसन्धारणशुष्कभक्ष्यपिष्टान्नवातार्ककरव्यवायान्।
खर्ज्जूरशालूककपित्थजम्बूबिसं कषायञ्च रसं भजेत॥ ४५॥

इत्यश्मरीचिकित्सा।

व्यायामतीक्ष्णातिविरेकवस्तिचिन्ताभयत्रासमदाभिचाराः।
छर्द्द्यामसन्धारणकर्षणानि हृद्रोगकर्त्तृणि तथाभिघातः॥ ४६॥

वैवर्ण्यमूर्च्छाज्वरकासहिक्का-
श्वासास्यवैरस्यतृषाप्रमोहाः।
छर्द्दिः कफोत्क्लेशरुजारुचिश्च
हृद्रोगजाः स्युर्विविधास्तथान्ये॥ ४७॥
हृच्छून्यभावद्रवशोषभेद-
स्तम्भाः समोहाः पवनाद्विशेषः॥
पित्तात्तमोदूयनदाहमोहाः
सन्त्रासतापज्वरपीतभावाः।
स्तब्धं गुरु स्यात् स्तिमितञ्च मर्म्म
कफात् प्रसेकज्वरकासतन्द्राः।

विद्यात्त्रिदोषन्त्वपि सर्व्वलिङ्गं
तीव्रार्त्तितोदं क्रिमिजं सकण्डूम् ॥ ४८ ॥
तैलं ससौवीरकमस्तु तक्रं
वाते प्रपेयं लवणं सुखोष्णम् ।
मूत्राम्बु सिद्धं लवणैश्च तैल-
मानाहगुल्मार्त्तिहृदामयघ्नम् ॥
पुनर्नवां दारु सपञ्चमूलं
रास्नां यवान् बिल्वकुलत्थकोलम् ।
पक्त्वा जले तेन विपाच्य तैल-
मभ्यङ्गपानेऽनिलहृद्गदघ्नम् ॥ ४९ ॥
हरीतकीनागरपुष्कराह्वै-
र्वयःकयस्थालवणैश्च कल्कैः ।
सहिङ्गुभिः साधितमग्र्यसर्पि-
र्गुल्मे सहृत्पार्श्वगदेऽनिलोत्थे ॥ ५० ॥
सपुष्कराह्वं फलपूरमूलं
महौषधं शट्यभया च कल्काः ।
क्षाराम्बुसर्पिर्लवणैर्विमिश्राः
स्युर्वातहृद्रोगविकर्त्तिकाघ्नाः ॥ ५१ ॥
क्वाथः कृतः पौष्करमातुलुङ्ग-
पलाशपूतीकशटीसुराह्वैः ।
सनागराजाजिवचा यमानी
सक्षार उष्णो लवणश्च पेयः ॥ ५२ ॥
पथ्याशटीपौष्करपञ्चकोलात्
समातुलुङ्गाद् यमकेन कल्कः ।

गुड़प्रसन्नालवणैश्च भृष्टो
हृत्पार्श्वपृष्ठोदरयोनिशूले ॥ ५३ ॥
स्यात्तूषणं द्वे त्रिफले सपाठे
निदिग्धिकागोक्षुरकौ बले द्वे ।
मेदे त्रुटिस्तामलकी स्वगुप्ता
त्रुटिर्मधूकं मधुकं स्थिरा च ॥
शतावरी जीवकपृश्निपर्ण्यौ
द्रव्यैरिमैरक्षसमैः सुपिष्टैः ।
प्रस्थं घृतस्य प्रपचेद्विधिज्ञः
प्रस्थेन दध्ना त्वथ माहिषेण ॥
मात्रां पलञ्चार्द्धपलं पिचुं वा
प्रयोजयेन्माचिकसंप्रयुक्तम् ।
श्वासे सकासे त्वथ पाण्डुरोगे
हलीमके हृद्ग्रहणीप्रदोषे ॥ ५४ ॥
इति त्रूषणाद्यघृतम् ।
शीताः प्रदेहाः परिषेचनञ्च
तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्या-
च्छुद्धे तु पित्तापहमन्नपानम् ॥ ५५ ॥
यष्ट्याह्वयं तिक्तकरोहिणीञ्च
पिष्ट्वा पिवेच्चापि सिताजलेन ।
क्षतेषु सर्पींषि हितानि सर्पि-
र्गुड़ाश्च ये तान् प्रसमीक्ष्य सम्यक् ॥ ५६ ॥

दद्याद् भिषग् धन्वरसान्नगव्य-
क्षीराग्निना पित्तहृदामयेषु ।
तैरेव सर्व्वे प्रशमं प्रयान्ति
पित्तामयाः शोणितसंश्रया ये ॥ ५७ ॥

द्राक्षाबलाश्रेयसिशर्कराभिः खर्ज्जूरवीरर्षभकोत्पलैश्च ।
काकोलिमेदायुगजीवकैश्च क्षीरेण सिद्धं महिषीघृतं स्यात् ॥
कशेरुकाशैवलशृङ्गवेरप्रपौण्डरीकं मधुकं बिसञ्च ।
ग्रन्थिश्च सर्पिः पयसा पचेत्तैः क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥
स्थिरादिकल्कैः पयसा च सिद्धं द्राक्षारसेनेक्षुरसेन वापि ।
सर्पिर्हितं स्वादुफलेक्षुजाश्च रसाः सुशीता हृदि पित्तदुष्टे ॥५८॥
स्विन्नस्य वान्तस्य विलङ्घितस्य क्रिया कफघ्नी कफमर्म्मरोगे ।
कौलत्थधान्यैश्च रसैर्यवान्नपानानि तीक्ष्णानि सशर्कराणि ॥
मूत्रे श्रृताः कट्फलशृङ्गवेरपीतद्रुपथ्यातिविषाः प्रदेयाः ।
कृष्णाशटीपुष्करमूलरास्नावचाभयानागरचूर्णकञ्च ॥
उडुम्बराश्वत्थवटार्ज्जुनाख्ये पलाशरोहीतकखादिरे च ।
क्वाथे त्रिवृत्त्र्यूषणचूर्णसिद्धो लेहः कफघ्नो युत उष्णतोयैः ॥
शिलाह्वयं वा भिषगप्रमत्तः प्रयोजयेत् कल्पविधानदृष्टम् ।
प्राश्याथवागस्त्यहरीतकी च रसायनं ब्राह्ममथामलक्याः ॥ ५९॥
त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्व्वेषु हितं विधेयम् ।
हीनातिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म्म शस्तम् ॥
भुक्तेऽधिकञ्जीर्य्यति शूलमल्पं जीर्णे स्थितं स्यात् सुरदारु कुष्ठम् ।
सतिल्वकं द्वे लवणे विडङ्गमुष्णाम्बुना सातिविषं पिबेत् सः ॥

जीर्णेऽधिके स्नेहविरेचनं स्यात्
फलैर्विरेच्यो यदि जीर्य्यति स्यात् ।
विष्वेव कालेष्वधिके तु शूले
तीक्ष्णं हितं मूलविरेचनं स्यात् ॥ ६० ॥
प्रायोऽनिलो रुद्धगतिः प्रकुप्य-
त्यामाशये शोधनमेव तस्मात् ।
कार्य्यं तथा लङ्घनपाचनञ्च
सर्व्वं क्रिमिघ्नं क्रिमिहृद्गदे च ॥ ६१ ॥

इति हृद्रोगचिकित्सा ।

सन्धारणाजीर्णरजोऽतिभाष्यक्रोधर्त्तुवैषम्यशिरोऽभितापैः ।
प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनवाष्पधूमैः ।
संस्त्यानदोषे शिरसि प्रदुष्टो वायुः प्रतिश्यायमुदीरयेत् तु ॥
घ्राणार्त्तितोदैः क्षवथुर्जलाभः स्रावोऽनिलात् सस्वरमूर्द्धरोगः ।
नासाग्रपाकज्वरवक्त्रशोषतृष्णोष्णपीतस्रवणानि पित्तात् ॥
कासारुचिस्रावघनप्रसेकाः
कफाद् गुरुः स्रोतसि चापि कण्डूः ।
सर्व्वाणि रूपाणि तु सन्निपातात्
स्युः पीनसे तीव्ररुजेऽतिदुःखे ॥ ६२ ॥
सर्व्वोऽतिवृद्धोऽहितभोजनात्तु दुष्टप्रतिश्याय उपेक्षितः स्यात् ।
ततश्च रोगाः क्षवथुश्च नाशाशोषः प्रतीनाहपरिस्रवौ च ॥
घ्राणस्य पूतित्वमपीनसश्च सपाकशोथार्व्वुदपूयरक्ताः ।
अरूंषि शीर्षश्रवणाक्षिरोगाः खालित्यहर्य्यर्ज्जुनलोमभावाः ॥
तृट्श्वासकासज्वररक्तपित्तवैस्वर्य्यशोषाश्च ततो भवन्ति ॥ ६३ ।

रोधाभिघातस्रवशोषपाकैर्घ्राणं युतं यश्च न वेत्ति गन्धम्।
दुर्गन्धि चास्यं बहुशः प्रकोपि दुष्टप्रतिश्यायमुदाहरेत् तम्॥
संस्पृश्य मर्म्माण्यनिलस्तु मूर्द्ध्नि विष्वक् प्रयस्यः क्षवथुं करोति।
क्रुद्धः स संशोष्य कफन्तु नाशाशृङ्गाटकघ्राणविशोषणञ्च॥
उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत् तम्।
यो मस्तुलुङ्गाद्घनपीतपक्वः कफः स्रवेद्दृष्टं परिस्रवस्तु॥
वैवर्ण्यदौर्गन्ध्यमुपेक्षयात्तु स्यात् पूतिनस्यं श्वयथुर्भ्रमश्च।
आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति यस्य नासा॥
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवसेत्तमपीनसेन।
तञ्चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्गम्॥६४
सदाहरागः श्वयथुः सपाकः स्याद्घ्राणपाकोऽपि च रक्तपित्तात्।
घ्राणाश्रितास्रक् प्रभृतीन् प्रदूष्य कुर्व्वन्ति नासाश्वयथुं मलाश्च॥
घ्राणे तथोच्छ्वासगतिं निरुध्य मांसप्रदोषादपि चार्व्वुदानि।
घ्राणात् स्रवेद्वा श्रवणान्मुखाद्वा पित्तात्कमसृन्त्वपि पूयरक्तम्।
कुर्य्यात् सपित्तः पवनस्त्वगादीन्
सन्दूष्य चारूंषि सदाहपाकम्॥ ६५॥

इति नासारोगनिदानम्।

भृशार्त्तिशूलं स्फुरतीह वातात्
पित्तात् सदाहार्त्ति कफाद् गुरु स्यात्।
सर्व्वैस्त्रिदोषं क्रिमिजं सकण्डु
दौर्गन्ध्यतोदार्त्तियुतं शिरः स्यात्॥ ६६॥

इति शिरोरोगनिदानम्।

मुखामये मारुतजे तु शोषकार्कश्यरौक्ष्येऽतिबला रुजश्च ।
कृष्णारुणं निष्पतनं सशीतं प्रस्रंसनस्पन्दनतोदभेदाः ॥
तृष्णाज्वरस्फोटकदाहपाका धूमायनञ्चाप्यवदीर्णता च ।
पित्तात् समूर्च्छा विविधा रुजश्च वर्णाश्च शुक्लारुणपाण्डुवर्ज्जाः ॥
कण्डूर्गुरुत्वं सितविज्जलत्वं स्वेदोऽरुचिर्ज्जाड्यकफप्रसेकौ ।
उत्क्लेशमन्दानलता च तन्द्रा रुजश्च मन्दाः कफवक्त्ररोगे ॥
सर्व्वाणि रूपाणि तु वक्त्ररोगे भवन्ति यस्मिन् स तु सन्निपातात् ॥६७
संस्थानदूष्याकृतिनामभेदाच्चैते चतुःषष्टिविधा भवन्ति ॥
शालाक्यतन्त्रे विहितानि तेषां निमित्तरूपाकृतिभेषजानि ।
यथाप्रदेशञ्च चतुर्व्विधस्य क्रियां प्रवक्ष्यामि मुखामयस्य ॥ ६८॥

इति मुखरोगनिदानम् ।

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः ।
अरोचकाः स्युः परिहृष्टदन्तकषायवक्त्रश्च मतोऽनिलेन ॥
कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम् ।
माधुर्य्यपैच्छिल्यगुरुत्वशैत्यविबन्धसम्बद्धयुतं कफेन ॥ ६९ ॥
अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।
स्वाभाविकश्चास्यरसोऽरुचिश्च त्रिदोषजे नैकरसं भवेत् तु ॥७०

इत्यरोचकनिदानम् ।

नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात् ।
शोफः सरागो दरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् ॥
वैश्रुत्यकण्डूस्थिरशोफशुक्लस्निग्धस्रुतिः श्लेष्मभवेऽल्परुक् च ।
सर्व्वाणि रूपाणि तु सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥७१

इति कर्णरोगनिदानम् ।

अल्पस्तु रागोऽनुपदेहवांश्च सतोदभेदोऽनिलजाक्षिरोगे ।
पित्तात्तु दाहातिरुजोऽतिरागाः पीतोपदेहः सुभृशोष्णमस्तु ॥
शुक्लोपदेहो बहुपिच्छिलास्तु नेत्रं कफात् स्याद् गुरुता सकण्डुः ।
सर्व्वाणि रूपाणि तु सन्निपातात् षट्सप्ततिर्नेत्रगदास्तु भेदात् ॥७२
तेषामभिव्यक्तिरभिप्रदिष्टा शालाक्यतन्त्रेषु चिकित्सितञ्च ।
पराधिकारे तु न विस्तरोक्तिः शस्तेति तेनात्र न नः प्रयासः ॥७३

इति नेत्ररोगनिदानम् ।

तेजः सवातं खलु केशभूमिं
दग्ध्वातु कुर्य्यात् खलितिं नरस्य ।
किञ्चित्तु दग्ध्वा पलितानि कुर्य्या-
द्धरित्प्रभत्वञ्च शिरोरुहाणाम् ॥ ७४ ॥

इत्यूर्द्ध्वजत्रुस्थगदैकदेशः प्रोक्त-श्चिकित्साञ्च परं निबोध ।
अतःपरं भेषजसंग्रहन्तु निबोध संक्षेपत उच्यमानम् ॥ ७५ ॥

इति खालित्यरोगनिदानम् ।

वातात् सकासवैस्वर्य्ये सक्षारं पीनसे घृतम् ।
पिवेद्रसं पयस्चोष्णं स्नैहिकं धूममेव वा ॥
शताह्वात्वगबलामूलं श्योणाकैरण्डबिल्वजम् ।
आरग्वधं पिवेद्वर्त्तिं मधूच्छिष्टवसाघृतैः ॥
अथवा सघृतान् शक्तून् कृत्वा मल्लकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ ७६ ॥
शङ्कमूर्द्धललाटार्त्तौ पाणिस्वेदोपनाहनम् ।
स्वभ्यक्तं क्षवथुस्रावरोधादौ सङ्करादयः ॥ ७७ ॥
घ्रेयाश्च रोहिषाजाजीवचातर्कारिचोरकाः ।

त्वक्पत्रमरिचैलानां चूर्णो वा सोपकुञ्चिकाः ॥ ७८ ॥
स्रोतःशृङ्गाटनासाक्षिशोषे तैलं मनावनम् ।
प्रभाव्याजे तिलान् क्षीरे तेन पिष्टांस्तदुष्मणा ॥
मन्दस्विन्नान् सयष्ट्याह्वचूर्णांस्तेनैव पीड़येत् ॥ ७९ ॥
दशमूलस्य निष्क्वाथे रास्नामधुककल्कवत् ।
सिद्धं ससैन्धवं तैलं दशकृत्वो नु तत् स्मृतम् ॥
स्निग्धस्यास्थापनं दोषं निर्हरेद्वातपीनसे ।
स्निग्धाम्लोष्णैश्च लघ्वन्नं ग्राम्यादीनां रसैर्हितम् ॥
उष्णाम्बुना स्नानपाने निवातोष्णप्रतिश्रयः ।
चिन्ताव्यायामवाक्चेष्टाव्यवायविरतो भवेत् ॥
वातजे पीनसे धीमानिच्छन्नेवात्मनो हितम् ॥ ८० ॥
पैत्ते सर्पिः पिबेत् सिद्धं शृङ्गवेरशृतं पयः ॥ ८१ ॥
पाचनार्थं पिबेत् पक्वे कार्य्यं मूर्द्धविरेचनम् ।
पाठाद्विरजनीमूर्व्वापिप्पलीजातिपल्लवैः ॥
दन्त्या च साधितं तैलं नस्यं स्यात् पक्वपीनसे ॥ ८२ ॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च ॥
पाकदाहाढ्यरूक्षेषु शीताः सेकाः प्रलेपनाः ।
लेहनस्योपचाराश्च कषायाः स्वादुशीतलाः ॥ ८३ ॥
मन्दपित्ते प्रतिश्याये स्निग्धैः कुर्य्याद्विरेचनम् ।
घृतं क्षीरं यवाः शालिर्गोधूमा जाङ्गला रसाः ॥
शीताम्लास्तिक्तशाकानि यूषा मुद्गादिभिर्हिताः । ८४ ॥
गौरवारोचकेष्वादौ लङ्घनं कफपीनसे ।
स्वेदाः सेकाश्च पाकार्थं लिप्ते शिरसि सर्पिषा ॥

लशुनं मुद्गचूर्णेन व्योषक्षारघृतैर्युतम्।
देयं कफघ्नवमनमुत्क्लिष्टश्लेष्मणो हितम्॥
अपीनसे पूतिनस्ये घ्राणस्रावे सकण्डुके।
धूमः शस्तोऽवपीड़श्च कटुभिः कफपीनसे॥
मनःशिला वचा व्योषं विड़ङ्गं हिङ्गु गुग्गुलुः।
चूर्णैः प्रायः प्रधमनः कटुभिस्त्रिफलैः सह॥
भार्गीमदनतर्कारीसुरसादिविपाचितम्।
तैलं सर्षपजं बल्यं कफपीनसशान्तये॥
आर्त्तकालवचालं वा विड़ङ्गं कुष्ठपिप्पली।
कृत्वा कल्कं करञ्जञ्च तैलं तैः सार्षपं पचेत्॥
पाकान्मुक्ते घने नस्यमेतन्मेदोऽन्विते कफे।
स्निग्धस्य व्याहृते वेगे च्छर्द्दनं कफपीनसे॥
वमनीयशृतक्षीरतिलमाषयवाम्बुना।
यवाग्वा मदनक्षीरतिलमाषोपसिद्धया॥ ८५॥
कफघ्नमन्नं वार्त्ताकुकुलत्थाढ़किमुद्गजाः।
यूषाः सकुलकव्योषाः शस्तास्तोयोष्णसेविनः॥ ८६॥
सर्व्वजित् पीनसे दुष्टे कार्य्यं शोफे तु शोफनुत्।
क्षारोऽर्व्वुदाधिमांसेषु क्रिया सर्व्वेष्ववेक्ष्य च॥८७॥

इति नासारोगचिकित्सा।

वातिके शिरसो रोगे स्नेहान् स्वेदान् सनावनान्।
पानान्नमुपहारांश्च कुर्य्याद्वातामयापहान्॥
तैलभृष्टैरगुर्व्वाद्यैः सुखोष्णैश्चोपनाहनम्।
जीवनीयैः सुमनसा मत्स्यैर्मांसैश्च शस्यते॥ ८८॥

रास्नास्थिरादिभिः सिद्धं सचीरं नस्यमर्त्तिनुत् ।
तैलं रास्नादिकाकोलीशर्कराभिरथापि वा ॥ ८९ ॥
बलामधुकयष्ट्याह्वविदारीचन्दनोत्पलैः ।
जीवकर्षभकद्राचाशर्कराभिश्च साधितः ॥
प्रस्थस्तैलस्य सचीरो जाङ्गलार्द्धतुला रसे ।
नस्यं सर्व्वोर्द्ध्वजत्रूत्थवातपित्तामयापहम् ॥ ९० ॥
दशमूलबलारास्नात्रिफलामधुकैः सह ।
मयूरं पचपित्तान्त्रशकृत्तुण्डांङ्घ्रिवर्ज्जितम् ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् चीरसमं पचेत् ।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्द्दितार्पहम् ॥
कर्णाचिनासिकाजिह्वाताल्वास्यगलरोगनुत् ।
मायूरमिति विख्यातमूर्द्ध्वजत्रुगदापहम् ॥ ९१ ॥

इति मायूरघृतम् ।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन दुग्धेन कल्कैरेभिश्च कार्षिकैः ॥
जीवन्तीत्रिफलामेदामृद्वीकर्द्धिपरूषकैः ।
समङ्गाचविकाभार्गीकाश्मरीकर्कटाह्वयैः ॥
आत्मगुप्तामहामेदातालखर्ज्जूरमस्तकैः ।
मृणालविसखर्ज्जूरमधूकैश्च सजीवकैः ॥
शतावरीविदारीचुद्रबृहतीशारिवायुगैः ।
मूर्व्वाश्वदंष्ट्रर्षभकशृङ्गाटककशेरुकैः ॥
रास्नास्थिरातामलकीसूक्ष्मैलाशटिपौष्करैः ।
पुनर्नवातुगाचीरीकाकोलीधन्वयासकैः ॥

मधुकाद्योद्भवातामनुज्ञाताभिषुक्तैरपि ।
द्रवैरेभिर्यथालाभं पूर्व्वकल्पेन साधितम् ॥
तत् पक्वं नावनेऽभ्यङ्गे पाने वस्तौ प्रयोजयेत् ।
शिरोरोगेषु सर्व्वेषु कासे श्वासे च दारुणे ॥
मन्यापृष्ठग्रहे शोषे स्वरभेदे तथार्द्दिते ।
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥
ऋतुस्नाता तथा नारी पीत्वा पुत्रं प्रसूयते ।
महामायूरमित्येतद्घृतमात्रेयपूजितम् ॥ ६२ ॥

इति महामायूरघृतम् ।

आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान् ।
कल्पेनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम् ॥ ६३ ॥
पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥
चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ।
क्षीरपिष्टैः प्रदेहः स्यात्कृतैर्वा परिषेचनम् ॥
त्वक्पत्रशर्कराकल्कः सुपिष्टस्तण्डुलाम्बुना ।
कार्य्योऽवपीड़ः सर्पिश्च नस्यं तत् स्यात् तु पैत्तिके ॥
यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम् ।
नावनं शर्कराद्राक्षामधुकैश्चापि पित्तजे ॥ ६४ ॥
कफजे स्वेदितं नस्यधूमप्रधमनादिभिः ।
शुद्धं प्रलेपपानान्नैः कफघ्नैः समुपाचरेत् ॥ ६५ ॥
पुराणसर्पिषः पानैस्तीक्ष्णैर्वस्तिभिरेव च ।
कफाभिपन्ने दाहः शिरयो रक्तमोक्षणम् ॥

एरण्डनलदक्षौमगुग्गुल्वगुरुचन्दनैः ।
धूमवर्त्तिं पिवेद्गन्धैर्कुष्ठतगरैस्तथा ॥ ९६ ॥
सन्निपातोद्भवे कार्य्या सन्निपातहरी क्रिया ।
क्रिमिजे चापि कर्त्तव्यं तीक्ष्णं मूर्द्धविरेचनम् ॥ ९७ ॥
त्वगदन्तीव्याघ्रकरजविडङ्गनवमालिकाः ।
अपामार्गफलं वीजं नक्तमालशिरीषयोः ॥
चवक्षोटश्मान्तको बिल्वं हरिद्रा हिङ्गु यूथिका ।
फणिज्झकश्च तैस्तैलमवीमूत्रे चतुर्गुणे ।
सिद्धं स्यान्नावनं चूर्णञ्चैषां प्रधमनं हितम् ॥ ९८ ॥
फलं शिग्रुकरञ्जाभ्यां सव्योषञ्चावपीड़कः ।
कषायः स्वरसः चारश्चूर्णं कल्कोऽवपीड़कः ॥ ९९ ॥

इति शिरोरोगचिकित्सा ।

शुक्ततिक्तकटुचौद्रकषायैः कवलग्रहः ।
धूमः प्रधमनं शुद्धिरधश्चोर्द्धञ्चलङ्घने ॥
भोज्यञ्च मुखरोगेषु यथास्वं दोषनुद्धितम् ॥ १०० ॥
पिप्पल्यगुरुदार्व्वीत्वग्यवचारो रसाञ्जनम् ।
पाठां तेजोवतीं पथ्यां समभागं सुचूर्णितम् ॥
मुखरोगेषु सर्व्वेषु सचौद्रं तद्विधारयेत् ॥
शीधुमाधवमाध्वीकैः श्रेष्ठोऽयं कवलग्रहः ।
तेजोह्वामभयामेलां * समङ्गां कटुकां घनम् ॥
पाठां ज्योतिष्मतीं † लोध्रं दार्व्वीं कुष्ठञ्च चूर्णयेत् ।

* अभयामेलामित्यत्र मधुवामूलमिति केऽपरे चाभयां मूर्व्वामिति पठन्ति ।

† रसाञ्जनमिति वा पाठः ।

दन्तानां वर्षणं रक्तस्रावकण्डूरुजापहम् ॥
पञ्चकोलकतालीशपत्रैलामरिचत्वचः ।
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिताः ॥
गुड़े पुराणे द्विगुणे क्वथिते गुड़िकाः कृताः ।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्व्वेषु धार्य्याः सुरामृतोपमाः । १०१ ॥
गृहधूमो यवक्षारः पाठा व्योषं रसाञ्जनम् ।
तेजोह्वा त्रिफला लोध्रं चित्रकश्चेति चूर्णितम् ॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम् ।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥ १०२ ॥

इति कालकचूर्णम् ।

मनःशिला यवक्षारो हरितालं ससैन्धवम् ।
दार्व्वीं त्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम् ॥ १०३ ॥

इति पीतकचूर्णम् ।

मृद्वीका कटुका व्योषं दार्व्वीत्वक् त्रिफला घनम् ।
पाठा रसाञ्जनं मूर्व्वा तेजोह्वेति च चूर्णितम् ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे भिषग्जितम् ।
योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ॥ १०४ ॥
कटुकातिविषापाठादारुमुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥
स्वरसः क्वथितो दार्व्व्या घनीभूतो रसक्रिया ।

सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥ १०५ ॥
तालुशोषे सतृष्णाच्च सर्पिरौत्तरभक्तिकम् ।
नावनं मधुराः स्निग्धा शीताश्चैव रसा हिताः ॥ १०६ ॥
मुखपाके शिराकर्म्म शिरःकायविरेचनम् ।
मूत्रतैलघृतक्षीरक्षौद्रैश्च कवलग्रहः ॥
सक्षौद्रास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
कषायतिक्ताः क्वाथाश्च शीताः स्युर्मुखधावनाः ॥ १०७ ॥
तुलां खदिरसारस्य द्वितुलामरिमेदसः ।
प्रक्षाल्य जर्ज्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् ॥
द्रोणशेषं कषायं तं पक्त्वा भूयः पचेच्छनैः ।
ततस्तस्मिन् घनीभूते चूर्णीकृत्याक्षभागिकम् ॥
चन्दनं पद्मकोशीरं मञ्जिष्ठाधातकीघनम् ।
प्रपौण्डरीकं यष्ट्याह्वत्वगेलापद्मकेशरम् ॥
लाक्षारसाञ्जनं मांसीत्रिफलालोध्रबालकम् ।
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम् ॥
यवासागुरुपत्तङ्गगैरिकाञ्जनमावपेत् ।
लवङ्गजातीकक्कोलजातिकोशान् पलोन्मितान् ॥
कर्पूरकुड़वञ्चापि क्षिपेत् शीतेऽवतारिते ।
ततस्तु गुड़िकाः कार्य्याः शुष्कास्तासोन धारयेत् ॥
तैलञ्चानेन कल्केन कषायेण च साधयेत् ।
दन्तानां चालनभ्रंशशौषिर्य्यक्रिमिरोगनुत् ॥
मुखपाकास्यदौर्गन्ध्यजाड्यारोचकनाशनम् ।
स्रावोपलेपपैच्छिल्यवैस्वर्य्यगलशोषनुत् ॥

दन्तास्यगलरोगेषु सर्व्वेष्वेतत् परायणम्।
खदिरादिगुड़िकेयं तैलञ्च खदिरादिकम्॥
इति खदिरादिगुड़िका तैलञ्च। १०८॥

इति मुखरोगचिकित्सा।

अरुचौ कवलग्राहा धूमाः समुखधावनाः।
मनोज्ञमन्नपानञ्च हर्षणाश्वासनानि च॥
कुष्ठसौवर्च्चलाजाजीशर्करामरिचं विड़म्।
धात्र्येलापद्मकोशीरपिप्पल्युत्पलचन्दनम्॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रदाड़िमनिर्यासश्चाजाजीशर्करायुतः॥
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः।
चतुरोऽरोचकान् हन्युर्वातादोकजसर्व्वजान्॥ १०९॥
कारवीमरिचाजाजीद्राक्षावृक्षाम्लदाड़िमम्।
सौवर्च्चलं गुड़ः क्षौद्रं सर्व्वारोचकनाशनम्॥ ११०॥
वस्तिः समीरणे पित्ते विरेको वमनं कफे।
कुर्य्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे॥ १११॥

इत्यरोचकचिकित्सा।

सर्पींष्युपरिभक्तानि स्वरभेदेऽनिलात्मके।
चतुष्प्रयोगैस्तैस्तैश्च बलारास्नामृताह्वयैः॥
बर्हितित्तिरिदक्षाणां पञ्चमूलीशृतान् रसान्।
मायूरं क्षीरसर्पिर्वा पिबेत् त्र्यूषणमेव वा॥
पैत्तिके तु विरेकः स्यात् पयश्च मधुरैः शृतम्।
सर्पिर्गुड़ो घृतं तिक्तं जीवनीयं वृषस्य वा।

कफजे स्वरभेदे तु तीक्ष्णं मूर्द्धविरेचनम् ।
विरेको वमनं धूमो यवान्नकटुसेवनम् ॥
वचाभार्ग्यभयाव्योषक्षारमाक्षिकचित्रकान् ।
लिह्याद्वा पिप्पलीपथ्ये तीक्ष्णं मद्यं पिबेच्च सः ॥
रक्तजे स्वरभेदे तु संस्कृता जाङ्गला रसाः ।
द्राक्षाविदारीक्षुरसाः सघृतक्षौद्रशर्कराः ॥
यच्चोक्तं क्षयकासघ्नं तच्च सर्व्वं चिकित्सितम् ।
पित्तजस्वरभेदघ्नं शिरावेधश्च रक्तजे ॥
सन्निपाते हिताः सर्व्वाः क्रिया न तु शिराव्यधः ।
इत्युक्तं स्वरभेदस्य समासेन चिकित्सितम् ॥ ११२ ॥

इति स्वरभेदचिकित्सा ।

कर्णशूले तु वातघ्नी हिता पीनसवत् क्रिया ।
प्रदेहाः पूरणं नस्यं पाकस्रावे व्रणक्रियाः ।
भोज्यानि च यथादोषं कुर्य्यात् स्नेहांश्च पूरणान् ॥ ११३ ॥
बालमूलकशुण्ठीनां क्षारो हिङ्गु महौषधम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारः स्वर्ज्जिकोद्भिदसैन्धवम् ।
भूर्ज्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥
मातुलुङ्गरसश्चैव कदल्या रस एव च ।
सर्व्वैरेतैर्यथोद्दिष्टैः क्षारतैलं विपाचयेत् ॥
बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
क्रिमयः कर्णशूलञ्च पूरणादस्य नश्यति ॥ ११४ ॥

इति क्षारतैलम् ।

हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम्।
एतद्धि पूरणं श्रेष्ठं कर्णशूलनिवारणम्॥ ११५॥
देवदारुवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः।
तैलं सिद्धं वस्तमूत्रे कर्णशूलनिवारणम्॥ ११६॥
वराटकान् समाहृत्य दग्ध्वा मृद्भाजने शुभे।
तद्भस्म स्रावयेत् तेन गन्धतैलं विपाचयेत्॥
रसाञ्जनस्य शुण्ठ्याश्च कल्काभ्यां कर्णशूलनुत्॥ ११७॥

इति गन्धतैलम्।

मुखकर्णाक्षिरोगेषु यथोक्तं पीनसे विधिम्।
कुर्य्याद्भिषक् समीक्ष्यादौ दोषकालबलाबलम्॥ ११८॥

इति कर्णरोगचिकित्सा।

उत्पन्नमात्रे तरुणे नेत्ररोगे विड़ालकः।
कार्य्यो दाहोपदेहाश्रुशोफरागनिवारणः॥
नागरं सैन्धवं सर्पिर्मण्डेन च रसक्रिया।
निघृष्टं वातिके तद्वन्मधुसैन्धवगैरिकम्॥
तथा शावरकं लोध्रं घृतभृष्टं विड़ालकः।
कार्य्या हरीतकी तद्वद् घृतभृष्टा रुजापहा॥ ११९॥
पैत्तिके चन्दनानन्तामञ्जिष्ठाभिर्विड़ालकः।
कार्य्यः पद्मकयष्ट्याह्वमांसीकालीयकैस्तथा॥
रोचनामुस्तलवणगैरिकैश्च रसक्रिया।
कफे कार्य्यस्तथा क्षौद्रं प्रियङ्गुः समनःशिला॥
सन्निपाते तु सर्व्वैः स्याद्बहिरक्ष्णोः प्रलेपनम्।
पक्ष्मांशास्पृशता कार्य्यं सम्यङ् नेत्राञ्जनं न्यहात्॥ १२०॥

आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ।
कोष्णः सैरण्डतर्कारीवृहतीमधुशियुभिः ॥
द्राक्षादार्व्वीसमञ्जिष्ठालाक्षादिमधुकोत्पलैः ।
क्वाथः सशर्करः शीतः पूरणं रक्तपित्तनुत् ॥
नागरत्रिफलानिम्बवासालोध्ररसः कफे ।
कोष्णमाश्च्योतनं मिश्रैरौषधैः सान्निपातिके ॥ १२१ ॥
बृहत्येरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥
सुमनः क्षारकं शङ्खं त्रिफलां मधुकं बलाम् ।
पित्तरक्तापहा वर्त्तिः पिष्ट्वा दिव्येन वारिणा ॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्ज्जो वर्त्तिः श्लेष्माक्षिरोगनुत् ॥
अमृताह्वा विसं बिल्वं पटोलं छागलं शकृत् ।
प्रपौण्डरीकं यष्ट्याह्वं दार्व्वी कालानुसारिवा ॥
सुशीतं जर्ज्जरीकृत्य कृत्वा चार्द्धपलांशिकान् ।
तोये पक्त्वा रसे पूते भूयः पक्वे घने रसे ॥
कर्षञ्च शुक्लमरिचाज्जातीपुष्पान्नवात् पलम् ।
चूर्णं दत्त्वा त्रिदोषघ्नी वर्त्तिर्दृष्टिप्रसादनी ॥ १२२ ॥
शङ्खप्रवालवैदूर्य्यलौहताम्रप्लवास्थिभिः ।
स्रोतोजश्वेतमरिचैर्वर्त्तिः सर्व्वाक्षिरोगनुत् ॥
शाणार्द्धं मरिचाद्द्वौ च पिप्पल्यर्णवफेनयोः ।
शाणार्द्धं सैन्धवाच्छाणं कृत्वा सौवीरकाञ्जनात् ॥
पिष्टं सुसूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ।

काचकण्डूकफार्त्तानां मलानाञ्च विशोधनम् ॥
वस्तमूत्रे त्र्यहं स्थाप्यं विड़ङ्गचूर्णं * सुभावितम् ।
चूर्णाञ्जनञ्च तैमिर्य्यक्रिमिपैल्लामलापहम् ॥
सौवीरमञ्जनं तुत्थं ताप्यो धातुर्मनःशिला ।
चक्षुष्या मधुकं लोहमणयः पौष्पमञ्जनम् ॥
सैन्धवं शौकरी दंष्ट्रा कतकञ्चाञ्जनं शुभम् ।
तिमिरादिषु चूर्णं वा वर्त्तिर्वेयमनुत्तमा ॥
कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं सिता ।
फेनो रसाञ्जनं क्षौद्रं विड़ङ्गानि मनःशिला ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।
तिमिरं पटलं काचं मलञ्चाशु सुखावती ॥ १२३ ॥

इति सुखावती वर्त्तिः ।

त्रिफला कुक्कुटाण्डत्वक् कासीसमयसो रजः ।
नीलोत्पलं विड़ङ्गानि फेनञ्च सरितां पतेः ॥
आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥ १२४ ॥

इति दृष्टिप्रदा वर्त्तिः ।

वदने कृष्णसर्पस्य निहितं मासमञ्जनम् ।
ततस्तस्मात् समुद्धृत्य सुशुष्कं चूर्णयेत् बुधः ।
सुमनःक्षारकैः शुष्कैरर्द्धांशैः सैन्धवेन च ।
एतन्नेत्राञ्जनं कार्य्यं तिमिरघ्नमनुत्तमम् ॥

* एलाचूर्णमिति पाठान्तरम् ।

पिप्पल्यः किंशुकरसो वसा सर्पस्य सैन्धवम् ।
जीर्णं घृतञ्च सर्व्वाक्षिरोगघ्नी स्याद्रसक्रिया ॥
कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया ।
शस्ता सर्व्वाक्षिरोगेषु काचार्व्वुदमलेषु च ॥
धात्रीरसाञ्जनक्षौद्रसर्पिर्भिस्तु रसक्रिया ।
पित्तरक्ताक्षिरोगघ्नी तैमिर्य्यपटलापहा ॥
धात्रीसैन्धवपिप्पल्यः सुरत्नमरिचाः समाः ।
क्षौद्रयुक्ता निहन्त्याश्वाः पटलञ्च रसक्रिया ॥ १२५ ॥

इति नेत्ररोगचिकित्सा ।

खालित्ये पलिते वल्यां हरिलोम्नि च शोधितम् ।
नस्यैस्तैलैः शिरोवक्त्रप्रदेहैश्चाप्युपाचरेत् ॥ १२६ ॥
सिद्धं विदारीगन्धाद्यैर्जीवनीयैस्थापि च ।
नस्यं स्यादणुतैलं वा खालित्यपलितापहम् ॥
क्षीरात् सहचराद् भृङ्गराजाच्च सुरसात् रसात् ।
प्रस्थैस्तु कुड़वस्तैलाद्यष्ट्याह्वपलकल्कितः ॥
सिद्धः शिलासमे पात्रे मेषशृङ्गादिषु स्थितः ।
नस्यं स्याद् भिषजा सम्यग् योजितं पलितापहम् ॥१२७॥
भिषजा क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ।
उत्पाद्य पलिते देयौ तावुभौ पलितापहौ ॥ १२८ ॥
मार्कवस्वरसात् क्षीराद्द्विप्रस्थं मधुकोत्पले ।
तैः पचेत् कुड़वं तैलात् तन्नस्यं पलितापहम् ॥ १२९ ॥
आदित्यवल्ल्यामूलानि कृष्णसैरीयकस्य च ।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च ॥

मार्कवः काकमाची च मधुकं देवदारु च ।
पृथग्दशपलांशानि पिप्पली त्रिफलाञ्जनम् ॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थि कर्द्दमः कृष्णो मृणालं रक्तचन्दनम् ॥
नीली भल्लातकास्थीनि कासीसं मदयन्तिका ।
सोमराज्यसनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥
पुष्कराज्जुनकाश्मर्य्याणाम्रजम्बूफलानि च । *
पृथक् पञ्चपलांशानि तैः पिष्टैराढकं पचेत् ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥
लौहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तःक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्व्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ १३० ॥

इति महानीलतैलम् ।

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुड़वो द्विगुणामलकीरसः ।
सिद्धः सप्रतिमर्शः स्यात् सर्व्वमूर्द्धगदापहः ॥ १३१ ॥
क्षीरं पियालयष्ट्याह्वे जीवकाद्यो गणस्तिलाः ।
कृष्णा वक्त्रे प्रलेपः स्याद्धरिलोमनिवारणः ॥
यष्ट्याह्वतिलकिञ्जल्कक्षौद्रमामलकानि च ।
वृंहयेद्रञ्जयेच्चैतत् केशान् मूर्द्धप्रलेपनात् ॥

---

* पुष्पाणार्ज्जुनकाश्मर्य्योरिति पाठान्तरम् ।

पचेत् सैन्धवशुक्ताम्लैरयश्चूर्णं सतण्डुलम् ।
तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशि ॥
ततः प्रातस्त्रिफलाधौतं स्यात् कृष्णं तेन मूर्द्धजम् ॥
अयश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलारसः ॥ १३२ ॥
कुर्य्याच्छेषेषु रोगेषु क्रियां स्वां स्वाच्चिकित्सितात् ।
शेषेष्वादौ च निर्द्दिष्टा सिद्धौ चान्या प्रवक्ष्यते ॥ १३३ ॥

इति खालित्यचिकित्सा ।

भवन्ति चात्र ।

वातपित्तकफा नृणां वस्तिहृन्मूर्द्धसंश्रयाः ।
तस्मात् तत् स्थानसामीप्याद्रक्तव्यो वमनादिभिः ॥
अध्यात्मलोको वाताद्यैर्लोको वातरवीन्दुभिः ।
पीड्यते धार्य्यते चैव विकृताविकृतैस्तथा ॥
विरुद्धैरपि नत्वेते गुणैर्घ्नन्ति परस्परम् ।
दोषाः सहजसात्म्यत्वाद्विषं घोरमहीनिव ॥ १३४ ॥

तत्र श्लोकः ।

त्रिमर्म्मजानां रोगाणां निदानाकृतिभेषजम् ।
विस्तरेण पृथग्दिष्टं त्रिमर्म्मीये चिकित्सिते ॥ १३५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
त्रिमर्म्मीयचिकित्सितं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः

अथात ऊरुस्तम्भचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

श्रिया परमया ब्राह्म्या परया च तपःश्रिया ।
अहीनं चन्द्रसूर्य्याभ्यां सुमेरुमिव पर्व्वतम् ॥
धीधृतिस्मृतिविज्ञानज्ञानकीर्त्तिक्षमालयम् ।
अग्निवेशो गुरुं काले संशयं परिपृष्टवान् ॥
भगवन् पञ्चकर्म्माणि समस्तानि पृथक् तथा ।
निर्द्दिष्टान्यामयानान्तु सर्व्वेषामेव भेषजम् ॥
दोषजोऽस्त्यामयः कश्चिद् यस्यैतानि भिषग्वर ।
न स्युः शक्यानि शमने साध्यस्स्या क्रियया मतः ॥
अस्त्यूरुस्तम्भ इत्युक्ते गुरुणा तस्य कारणम् ।
सलिङ्गभेषजं भूयः पृष्टस्तेनाब्रवीद्गुरुः ॥ २ ॥
स्निग्धोष्णगुरुशीतानि जीर्णाजीर्णे समश्नतः ।
द्रवशुष्कदधिक्षीरग्राम्यानूपौदकामिषैः ॥
पिष्टव्यापन्नमद्यातिदिवास्वप्नप्रजागरैः ।
लङ्घनाध्यशनायासभयवेगविधारणैः ॥
स्नेहाच्चामं चितं कोष्ठे वातादीन् मेदसा सह ।
रुद्ध्वाशु गौरवादूरू यात्यधोगैः शिरादिभिः ॥
पूरयेत् सक्थिजङ्घोरु दोषो मेदोबलोत्कटः ।
अविधेयपरिस्पन्दं जनयत्यल्पविक्रमम् ॥ ३ ॥

महासरसि गम्भीरे पूर्णेऽम्बु स्तिमितं यथा ।
तिष्ठति स्थिरमक्षोभ्यं तद्वदूरुगतः कफः ॥
गौरवायामसङ्कोचदाहरुक्सुप्तिकम्पनैः ।
भेदस्फुरणतोदैश्च युक्तो देहं निहन्त्यसून् ॥ ४ ॥
ऊरू श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु ।
स्तम्भयेत् स्थैर्य्यशैत्याभ्यामूरुस्तम्भस्ततो मतः ॥ ५ ॥
प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः ।
लोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदनं तथा ॥
वातशङ्किभिरज्ञानात् तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ६ ॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदने ।
पदञ्च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥
संस्थाने पीड़ने गत्यां चलने चाप्यनीश्वरः ।
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते ॥ ७ ॥
यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥ ८ ॥
तस्य न स्नेहनं कार्य्यं न वस्तिर्न विरेचनम् ।
न चैव वमनं यस्मात् तन्निबोधत कारणम् ॥
वृद्धये श्लेष्मणो नित्यं स्नेहनं वस्तिकर्म्म च ।
तत्स्थस्योद्धरणे चैव न समर्थं विरेचनम् ॥
श्लेष्मस्थानगतः श्लेष्मा पित्तञ्च वमनात् सुखम् ।
हर्त्तुमामाशयस्थौ च स्रंसयेत् तावुभावपि ॥
पक्वाशयस्थाः सर्व्वेऽपि वस्तिभिर्मूलनिर्ज्जयात् ।

शक्या न ग्लामसेदोभ्यां स्तब्धा जङ्घोरुसंस्थिताः ॥
वातस्थाने हि तच्छैत्यात्तयोः स्तम्भाच्च तद्गताः ।
न शक्याः सखसुद्धत्तुं जलं निम्नादिव स्थलात् ॥
तस्य संशमनं कुर्य्यात् क्षपणं शोधनं तथा ।
आधिक्याद्दामकफयोर्ध्रुतास्रपेद्यः सदा भिषक् ॥ ९ ॥
सदा रुक्षोपचाराय यवश्यामाककोद्रवान् ।
शाकैरलवणैरद्यादज्जलतैलोपसाधितैः ॥
सुनिषण्णकनिम्बार्कवेत्रारग्वधपल्लवैः ।
वायसीवास्तुकैरन्यैस्तिक्तैश्च कुलकादिभिः ॥ १० ॥
क्षारारिष्टप्रयोगाश्च हरीतक्यास्तथैव च ।
मधूदकस्य पिप्पल्या ऊरुस्तम्भविनाशनाः ॥ ११ ॥
समङ्गाशाल्मलीबिल्वं मधुना सह ना पिवेत् ।
तथा श्रीवेष्टकोदीच्यदेवदारुनतान्यपि ॥
चन्दनं धातकी कुष्ठं तालीशं नलदं तथा ।
मुस्तं हरीतकी लोध्रं पद्मकं तिक्तरोहिणी ॥
देवदारु हरिद्रे द्वे वचा कटुकरोहिणी ।
पिप्पली पिप्पलीमूलं सुरसं देवदारु च ॥
चव्यं चित्रकमूलञ्च देवदारु हरीतकी ।
सक्षौद्रानर्द्धश्लोकोक्तान् कल्कानूरुग्रहापहान् ॥ १२ ॥
शार्ङ्गेष्टां मदनं दन्तीं वतूसकस्य फलं वचाम् ।
भल्लातकं समूलाञ्च पिप्पलीं क्वथितान् पिवेत् ॥
मूर्व्वामारग्वधं पाठां करञ्जं कुलकं तथा ।
पिवेन्मधुयुतं तुल्यं चूर्णं वा त्रारिमाम्रतम् ॥

सक्षौद्रं दधिमण्डैर्वा ऊरुस्तम्भविनाशनम् ।
मूर्व्वामतिविषां कुष्ठं चित्रकं कटुरोहिणीम् ॥
पूर्व्ववद्गुग्गुलुं मूत्रे रात्रिस्थितमथापि वा ।
स्वर्णक्षीरीमतिविषां मुस्तं तेजोवतीं वचाम् ॥
सुराह्वं कटुकं कुष्ठं पाठां कटुकरोहिणीम् ।
लेहयेन्मधुना चूर्णं सक्षौद्रं वा जलान्वितम् ॥
फलीं व्याघ्रनखं हेम पिवेद्वा मधुसंयुतम् ।
लिह्याद्वा चूर्णयित्वा तदूरुस्तम्भनिवारणम् ॥
त्रिफलां पिप्पलीं मुस्तं चव्यं कटुकरोहिणीम् ।
लिह्यात् मधुना चूर्णमूरुस्तम्भार्द्दितो नरः ॥ १३ ॥
अपतर्पणजश्चेत् स्याद्दोषः सन्तर्पयेत्तु तम् ।
रसैर्ग्राम्यजाङ्गलैर्मांसैः पुराणैश्चैव शालिभिः ॥
लङ्घनाद्वातकोपश्चेन्निद्रानाशार्त्तिपूर्व्वकः ।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥ १४ ॥
पीलुपर्णी पयस्या च रास्ना गोक्षुरको वचा ।
सरलागुरुपाठाश्च तैलमेभिर्विपाचयेत् ॥
सक्षौद्रं प्रसृतं तस्मादञ्जलिं वापि ना पिवेत् ।
अपतर्पणतो रौक्ष्यादूरुस्तम्भी विमुच्यते ॥ १५ ॥
कुष्ठश्रीवेष्टकोदीच्यसरलं दारु केशरम् ।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥
सक्षौद्रं मात्रया तच्चापूरुस्तम्भार्द्दितः पिवेत् ॥ १६ ॥
द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढ़के ॥

आरनालात् पचेत् प्रस्थं तैलस्यैतैरपत्यदम्।
गृध्रसूरुग्रहार्शोऽत्तिसर्व्ववातविकारनुत्॥ १७॥
पलाभ्यां पिप्पलीमूलनागराद्दष्टकट्वरः।
तैलप्रस्थः समो दध्ना गृध्रसूरुग्रहापहः॥ १८॥

इत्यष्टकट्वरतैलम्।

इत्याभ्यन्तरमुद्दिष्टमूरुस्तम्भस्य भेषजम्।
श्लेष्मणः क्षपणं त्वन्यद्बाह्यं शृणु चिकित्सितम्॥ १९॥
वल्मीकमृत्तिका मूलं करञ्जात् सफलत्वचम्।
इष्टकानां ततश्चूर्णैः कुर्य्यादुत्सादनं भृशम्॥
मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक्।
पिचुमर्द्दस्य वा मूलैरथवा देवदारुणः॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक्।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम्॥ २०॥
दन्तीद्रवन्तीसुरसासर्षपैश्चापि बुद्धिमान्।
तर्कारीविश्वसुरसशिग्रुवत्सकनिम्बजैः॥
पत्रमूलफलैस्तोयं शृतमुष्णञ्च सेचनम्।
पिष्टन्तु सर्षपं मूत्रेऽध्युषितं स्यात् प्रलेपनम्॥
ऊरुस्तम्भविनाशाय भिषजा जानता क्रमम्।
वत्सकः सुरसः कुष्ठं गन्धा तुम्बुरुशिग्रुकौ॥
हिंस्रार्कमूलवल्मीकमृत्तिकाः सकुठेरकाः।
दधिसैन्धवसंयुक्तं कार्य्यमेतैः प्रलेपनम्॥ २१॥
श्योणाकं खदिरं बिल्वं वृहत्यौ सरलासनौ।
शोभाञ्जनकतर्कारीश्वदंष्ट्रासुरसार्ज्जकान्॥

अग्निमन्थकरञ्जौ च जलेनोत्क्वाथ्य सेचयेत् ।
प्रलेपो मूत्रपिष्टैर्वाप्यूरुस्तम्भनिवारणः ॥ २२ ॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् ।
स्थानान्याक्रामयेत् काले शर्कराः सिकतास्तथा ॥
प्रतारयेत् प्रतिस्रोतो नदीं शीतजलां शिवाम् ।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥
तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत् ॥ २३ ॥
श्लेष्मणः क्षपणं यत् स्यान्न च मारुतकोपनम् ।
तत् सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ।
शरीरं बलमग्निञ्च कार्य्येषा रक्षता क्रिया ॥ २४ ॥

तत्र श्लोकः ।

हेतुप्रायूपलिङ्गानि कर्म्मायोग्यत्वकारणम् ।
द्विविधं भेषजञ्चोक्तमूरुस्तम्भचिकित्सिते ॥ २५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
ऊरुस्तम्भचिकित्सितं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ।

अथातो वातव्याधिचिकित्सितं व्याख्यास्याम इति ह

स्माह भगवानात्रेयः ॥ १ ॥

वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम् ।

वायुर्विश्वमिदं सर्व्वं प्रभुर्वायुश्च कीर्त्तितः ॥

अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः ।

वायुः स्यात् सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ २ ॥

प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा ।

देहं तन्त्रयते सम्यक् स्थानेष्वव्याहतश्चरन् ॥ ३ ॥

स्थानं प्राणस्य शीर्षोरःकर्णजिह्वास्यनासिकाः ।

ष्ठीवनक्षवथूद्गारश्वासाहारादि कर्म्म च ॥

उदानस्य पुनः स्थानं नाभ्युरः कण्ठ एव च ॥

वाक्प्रवृत्तिः प्रयत्नोर्ज्जोबलवर्णादि कर्म्म च ॥

स्वेददोषाम्बुवाहीनि स्रोतांसि समधिष्ठितः ।

अन्तरग्नेश्च पार्श्वस्थः समानोऽग्निबलप्रदः ॥

देहं व्याप्नोति सर्व्वन्तु व्यानः शीघ्रगतिर्नृणाम् ।

गतिप्रसरणाक्षेपनिमेषादिक्रियः सदा ॥

वृषणौ वस्तिमेढ्रञ्च नाभ्यूरू वङ्क्षणौ गुदम् ।

अपानस्थानमन्त्रस्थः शुक्रमूत्रशकृत्क्रियः ।

सृजत्यार्त्तवगर्भौ च युक्ताः स्थानस्थिताश्च ते ॥

स्वकर्म्म कुर्व्वते देहो धार्य्यते तैरनामयः ।

विमार्गैस्तथा ह्ययुक्ता वा रोगैः स्वस्थानकर्म्मजैः ॥
शरीरं पीड़यन्त्येते प्राणानाशु हरन्ति वा ॥ ४ ॥
सङ्ख्याऽप्यतिवृत्तानां तज्जानां हि प्रधानतः ।
अशीतिर्नखभेदाद्या रोगाः सूत्रे निदर्शिताः ॥
तानुच्यमानान् पर्य्यायैः सहेतूपक्रमान् शृणु ।
केवलं वायुमुद्दिश्य स्थानभेदात् तथावृतम् ॥ ५ ॥
रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रवणादति ॥
लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः ।
धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्म्माबाधाद्गजोष्ट्राश्वशीघ्रयानावतंसनात् ॥
देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली ।
करोति विविधान् व्याधीन् सर्व्वाङ्गैकाङ्गसंश्रयान् ॥ ६ ॥
अव्यक्तं लक्षणं तेषां पूर्व्वरूपमिति स्मृतम् ।
आत्मरूपन्तु तद्व्यक्तमपायो लघुता पुनः ॥ ७ ॥
सङ्कोचः पर्व्वणां स्तम्भो भेदोऽस्थ्नां पर्व्वणामपि ।
लोमहर्षः प्रलापश्च पाणिपादशिरोग्रहः ॥
खाञ्जपाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ।
भेदस्तोदोऽर्त्तिराक्षेपो मोहश्चायास एव च ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।

हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ ८ ॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्च्चसोः।
ब्रध्नहृद्रोगगुल्मार्शःपार्श्वशूलञ्च मारुते ॥
सर्व्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जने।
वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥
ग्रहो विरामूत्रवातानां शूलाध्मानाश्मशर्कराः।
जङ्घोरुत्रिकपात्पृष्ठरोगशोषौ गुदे स्थिते ॥
रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविसूचिकाः।
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥
श्रोत्रादिष्विन्द्रियबधं कुर्य्याद्दुष्टसमीरणः।
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यत ॥
आतन्यते सरागा च पर्व्वरुग् त्वक्गतेऽनिले।
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशतारुचिः ॥
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले।
गुर्व्वङ्गं तुद्यतेऽत्यर्थं * दण्डमुष्टिहतं यथा ॥
सरुक्श्रमितमत्यर्थं † मांसमेदोगतेऽनिले।
भेदोऽस्थिपर्व्वणां सन्धिशूलं मांसबलक्षयः ॥
अस्वप्नः सन्तता रुक् च मज्जास्थिकुपितेऽनिले।
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ॥
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः।

---

* स्तब्धमिति पाठान्तरम्। † स्तिमितमत्यर्थमिति वा पाठः।

बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च ।
सर्व्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः ॥
शरीरं मन्दरुक् शोफं शुष्यति स्पन्दते तथा ।
सुप्तास्तन्व्यो महत्यो वा शिरा वाते शिरागते ॥
वातपूर्णदृतिस्पर्शः शोफः सन्धिगतेऽनिले ।
प्रसारणाकुञ्चनयोरप्रवृत्तिः सवेदना ॥
इत्युक्तं स्थानभेदेन वायोर्लक्षणमेव च ॥ ६ ॥
अतिवृद्धः शरीरार्द्धमेकं वायुः प्रपद्यते ।
यदा तदोपशोष्यासृक् बाहुं पादञ्च जानु च ॥
तस्मिन् सङ्कोचयत्यर्द्धं मुखं जिह्मं करोति च ।
वक्रीकरोति नासाभ्रूललाटाक्षिहनूस्तथा ॥
ततो वक्रं व्रजत्यास्यं भोजनं वक्रनासिकम् ।
स्तब्धं नेत्रं कथयतः क्षवथुश्च निगृह्यते ॥
दीना जिह्वा समुत्क्षिप्ताऽकला सज्जति चास्य वाक् ।
दन्ताश्चलन्ति बध्येते श्रवणौ भिद्यते स्वरः ॥
पादहस्ताक्षिजङ्घोरुशङ्खश्रवणगण्डरुक् ।
अर्द्धे तस्मिन् मुखार्द्धे वा केवले स्यात्तदर्द्दितम् ॥ १० ॥
मन्ये संश्रित्य वातोऽन्तर्यदा नाड़ीः प्रपद्यते ।
मन्यास्तम्भं तदा कुर्य्यादन्तरायामसंज्ञितम् ॥ ११ ॥
अन्तरायम्यते ग्रीवा मन्या च स्तभ्यते भृशम् ।
दन्तानां दंशनं लाला पृष्ठाक्षेपः शिरोग्रहः ।
जृम्भा वदनसङ्गश्चाप्यन्तरायामलक्षणम् ॥ १२ ॥
पृष्ठमन्याश्रिता बाह्याः शोषयित्वा शिरा बली ।

ततः कुर्य्याद्धनुस्तम्भं बहिरायामसंज्ञकम् ॥
चापवन्नाम्यमानस्य पृष्ठतो नीयते शिरः।
उर उत्क्षिप्यते मन्ये स्तब्धे ग्रीवा च मृद्यते ॥
दन्तानां दंशनं जृम्भा लालास्रावश्च वाग्ग्रहः।
जातवेगो निहन्त्येष वैकल्यं वा प्रयच्छति ॥ १३ ॥
हनुमूले स्थितो यस्मात् स्रंसयत्यनिलो हनू।
विवृतास्यत्वमथवा कुर्य्यात् संवृतमाननम्।
हनुग्रहञ्च संस्तभ्य हनू संवृतवक्त्रताम् ॥ १४ ॥
मुहुर्मुहुराक्षिपति गात्राण्याक्षेपकोऽनिलः।
पाणिपादौ च संशोष्य सशिराः स्नायुकण्डराः।
पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः।
दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥ १५ ॥
स्वस्थः स्यादहितादीनां मुहुर्व्वेगे गते गते ॥ १६ ॥
हत्वैकं मारुतः पक्षं दक्षिणं वाममेव वा।
करोति चेष्टाविरतिं रुजं वाक्स्तम्भमेव च ॥
गृहीत्वा वा शरीरार्द्धं शिराः स्नायूर्विशोष्य च।
पादं सङ्कोचयत्येकं हस्तं वा तोदशूलकृत्।
एकाङ्गरोगं तं विद्यात् सर्व्वाङ्गं सर्व्वदेहगम् ॥ १७ ॥
स्फिक्पूर्व्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात्।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥
वाताद्वातकफात् तन्द्रा गौरवारोचकान्विता।
खल्ली तु पादजङ्घोरुकरमूलावमोटनी ॥ १८ ॥
स्थाननामानुरूपैश्च लिङ्गैः शेषान् विनिर्द्दिशेत्।

सर्व्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ १९ ॥
वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च ।
वातपित्तकफा देहे सर्व्वस्रोतोऽनुसारिणः ॥
वायुरेव हि सूक्ष्मत्वाद्वायोस्तत्राप्युदीरणः ।
कुपितस्तौ समुद्धूय तत्र तत्राक्षिपन् गदान् ।
करोत्यावृतमार्गत्वाद् रसादींश्चोपशोषयन् ॥ २० ॥
लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमः क्लमः ।
कट्वम्ललवणोष्णैश्च विदाहः शीतकामिता ॥
शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ।
लङ्घनायासरूक्षोष्णकामिता च कफावृते ॥
रक्तावृते सदाहार्त्तिस्त्वङ्मांसान्तरयोर्भृशम् ।
भवेत् सरागः श्वयथुर्जायन्ते मण्डलानि च ॥
कठिनाश्च विवर्णाश्च पिड़काः श्वयथुस्तथा ।
हर्षः पिपीलिकानाञ्च सञ्चार इव मांसगे ॥
चलः स्निग्धो मृदुः शीतः शोफोऽङ्गेष्वरुचिस्तथा ।
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृतः ॥
स्पर्शमस्थ्यावृते तूष्णं पीड़नञ्चाभिनन्दति ।
संभज्यते सीदति च सूचीभिरिव तुद्यते ॥
मज्जावृते विनामः स्याज्जृम्भणं परिवेष्टनम् ।
शूलञ्च पीड्यमाने तु पाणिभ्यां लभते सुखम् ॥
शुक्रावेगोऽतिवेगो वा निष्फलत्वञ्च शुक्रगे ।
भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले ॥
मूत्राप्रवृत्तिराध्मानं वस्तौ मूत्रावृतेऽनिले ।

वर्च्चसोऽतिविबन्धोऽधः स्वे स्थाने परिकृन्तति ॥
व्रजत्याशु जरां स्नेहो भुक्ते चानद्यते नरः।
चिरात् पीड़ितमन्नेन दुःखं शुष्कं शकृत् सृजेत् ॥
श्रोणीवंक्षणपृष्ठेषु रुग्विलोमश्च मारुतः।
अस्वस्थं हृदयञ्चैव वर्च्चसा त्वावृतेऽनिले ॥ २१ ॥
सन्धिच्युतिर्हनुस्तम्भः कुञ्चनं कुब्जतार्द्दितः।
पक्षाघातोऽङ्गसंशोषः पङ्गुत्वं खुड्डवातता ॥
स्तम्भनञ्चाढ्यवातश्च रोगा मज्जास्थिगाश्च ये।
एते स्थानस्य गाम्भीर्य्याद् यत्नात् सिध्यन्ति वा न वा।
नवान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ॥ २२ ॥
क्रियामतःपरं सिद्धां वातरोगापहां शृणु ॥
केवलं निरुपष्टम्भमादौ स्नेहैरुपाचरेत्।
वायुं सर्पिर्वसातैलमज्जपानैर्नरं ततः ॥
स्नेहक्लान्तं समाश्वास्य पयोभिः स्नेहयेत् पुनः।
यूषैर्ग्राम्याम्बुजानूपरसैर्वा स्नेहसंयुतैः ॥
कृशरापायसैः साम्ललवणैः सानुवासनैः।
नावनैस्तर्पणैश्चान्नैः सुस्निग्धं स्वेदयेत्तु तम् ॥
स्वभ्यक्तं स्नेहसंयुक्तैर्नाड़ीप्रस्तरसङ्करैः।
तथान्यैर्विविधैः स्वेदैर्यथायोगमुपाचरेत् ॥ २३ ॥
स्नेहाक्तं स्विन्नमङ्गन्तु वक्रं स्तब्धमथापि वा।
शनैर्नमयितुं शक्यं यथेष्टं शुष्कदारुवत् ॥
हर्षतोदरुगायासशोथस्तम्भग्रहादयः।
स्विन्नस्याशु प्रशाम्यन्ति मार्द्दवञ्चोपजायते ॥

स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ।
बलमग्निबलं पुष्टिं प्राणांश्चाप्यभिवर्द्धयेत् ॥
असकृत् तं पुनः स्नेहैः स्वेदैश्चाप्युपपादयेत् ।
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ॥ २४ ॥
यद्यनेन सदोषत्वात् कर्म्मणा न प्रशाम्यति ।
मृदुभिः स्नेहसंयुक्तैरौषधैस्तं विशोधयेत् ॥ २५ ॥
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ।
पयसैरण्डतैलं वा पिवेद्दोषहरं शिवम् ॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ।
स्रोतो बद्ध्वानिलं रुन्ध्यात् तस्मात् तमनुलोमयेत् ॥ २६ ॥
दुर्ब्बलो यो विरेच्यः स्यात् तं निरूहैरुपाचरेत् ।
पाचनैर्द्दीपनीयैर्वा भोजनैस्तद्युतैर्नरम् ।
संशुद्धस्योत्थितेऽग्नौ च स्नेहस्वेदौ पुनर्हितौ ॥
स्वाद्वम्ललवणस्निग्धैराहारैः सततं पुनः ।
नावनैर्धूमपानैश्च सर्व्वानेवोपपादयेत् ॥ २७ ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिवेन्नरः ।
पाचनैर्द्दीपनीयैस्तैरम्लैर्वा पाचयेन्मलान् ॥
गुदपक्वाशयस्थे तु कर्म्मोदावर्त्तनुद्धितम् ।
आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥
सर्व्वाङ्गकुपितेऽभ्यङ्गो वस्तयः सानुवासनाः ।
स्वेदाभ्यङ्गावगाहाश्च हृद्यञ्चान्नं त्वगाश्रिते ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ।

---

* पाचनीयै रसैर्युक्तैरम्लैर्वा पाचयेन्मलानिति पाठान्तरम् ।

विरिक्तो मांसमेदःस्थे निरूहाः शमनानि च ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ।
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ॥
विबद्धमार्गं दृष्ट्वा च शुक्रं दद्याद्विरेचनम् ।
विरिक्तप्रतिभुक्तस्य पूर्व्वोक्तां कारयेत् क्रियाम् ॥ २८ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥
हृदि प्रकुपिते सिद्धमंशुमत्या पयो हितम् ।
मत्स्यान् नाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥
वायुना वेष्ट्यमाने तु गात्रे स्यादुपनाहनम् ।
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ॥
बाहुशीर्षगते नस्यं पानञ्चौत्तरभक्तिकम् ।
वस्तिकर्म्म त्वधोनाभेः शस्यते चावपीड़कः ॥ २९ ॥
अर्द्दिते नावनं मूर्द्धि तैलं तर्पणमेव च ।
नाड़ीस्वेदोपनाहाश्चाप्यानूपपिशितैर्हिताः ॥
स्वेदनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ।
अन्तरा कण्डराङ्गुल्योः शिरावस्ताग्निकर्म्म च ॥
गृध्रसीषु प्रयुञ्जीत खल्लयान्तूष्णोपनाहनम् ।
पायसैः कृशरैश्चैव शस्तं तैलघृतान्वितैः ॥ ३० ॥
व्यादितास्या हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च ।
प्रदेशिनीभ्याञ्चोन्नाम्य चिवुकोन्नामनं हितम् ॥
स्रस्तं सङ्गमयेत् स्थानं स्तब्धं स्विन्नं विनामयेत् ।
प्रत्येकं स्थानदूष्यादिक्रियावैशेष्यमाचरेत् ॥ ३१ ॥

सर्पिस्तैलवसामज्जपानाभ्यञ्जनवस्तयः।
स्निग्धाः स्वेदा निवातञ्च स्थानं प्रावरणानि च॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च।
वृंहणं यच्च तत् सर्व्वं प्रशस्तं वातरोगिणाम्॥ ३२॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे।
अजशीर्षाम्बुजानूपक्रव्यादपिशितैः पृथक्॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान्।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम्॥
एतैरेवोपनाहांश्च पिशितैः सम्प्रकल्पयेत्।
घृततैलयुतैः साम्लैः सुखस्विन्नैरनस्थिभिः॥ ३३॥
पत्रोत्क्वाथपयस्तैलद्रोणीः सुरसवगाहने।
स्वभ्यक्तानां प्रशस्यन्ते सेकाश्चानिलरोगिणाम्॥ ३४॥
आनूपौदकमांसानि दशमूलं शतावरीम्।
कुलत्थान् बदरान् माषांस्तिलान् रास्नाबलायवान्॥
वसादध्यारनालाम्लैः सह कुम्भ्यां विपाचयेत्।
नाड़ीस्वेदं प्रयुञ्जीत पिष्टैश्चैवोपनाहनम्॥
तैश्च सिद्धं घृतं तैलमभ्यङ्गः पानमेव च॥ ३५॥
मुस्तं किण्वं तिलाः कुष्ठं सुराह्वं लवणं नतम्।
दधिक्षीरचतुःस्नेहैः शस्तं स्यादुपनाहनम्॥ ३६॥
उत्कारिकावेशवारक्षीरमाषतिलौदनैः।
एरण्डवीजगोधूमयवकोलस्थिरादिभिः॥
सस्नेहैः सलवणं गात्रमालिप्य बहलं भिषक्।
एरण्डपत्रैर्बध्नीयाद् रात्रौ कल्यं विमोक्षयेत्॥

क्षीराम्बुना ततः सिक्तं पुनश्चैवोपनाहितम् ।
मुञ्चेद्रात्रौ दिवाबद्धं चर्म्मभिस्तं सलोमभिः ॥ ३७ ॥
फलानां तैलयोनीनामम्लपिष्टान् सुशीतलान् ।
प्रदेहानुपनाहांश्च गन्धैर्वातहरैरपि ॥
पायसैः कृशरैश्चैव कारयेत् स्नेहसंयुतैः ॥ ३८ ॥
रूक्षशुद्धानिलार्त्तानामतः स्नेहान् प्रवक्ष्यति ।
विविधान् विविधव्याधिप्रशमायामृतोपमान् ॥ ३९ ॥
द्रोणेऽम्भसः पचेद्भागान् दशमूलाच्चतुष्पलान् ।
यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥
पादशेषरसैः पिष्टैर्जीवनीयैः सशर्करैः ।
तथा खर्ज्जूरकाश्मर्य्यद्राक्षाबदरफल्गुभिः ॥
सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत् ।
निरत्ययः प्रयोक्तव्यः पानाभ्यञ्जनवस्तिषु ॥ ४० ॥
चित्रकं नागरं रास्नां पौष्करं पिप्पलीं शटीम् ।
पिष्ट्वा विपाचयेत् सर्पिर्वातरोगहरं परम् ॥ ४१ ॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं मूर्द्धगतेऽनिले ॥ ४२ ॥
ग्राम्यानूपौदकानाञ्च भित्वास्थीनि पचेज्जले ।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोताविदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत् सिद्धं नावनाभ्यङ्गात् तथा पानानुवासनात् ।
शिरापर्व्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥

ये सुराः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥ ४३ ॥
तद्वत् सिद्धा वसा नक्रमत्स्यकूर्म्मचुलूकजाः ।
प्रत्यग्रा विधिनानेन नस्यपानेषु शस्यते ॥ ४४ ॥
प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णागन्धात्वगाढ़क्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत पादशेषे प्रस्थोन्मितं पृथक् ॥
सुरारनालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाड़िमवृक्षाम्लरसं तैलं वसां घृतम् ॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट् ।
कल्कान् दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ॥
शिरामज्जास्थिगे वाते सर्व्वाङ्गैकाङ्गरोगिषु ।
वेपनाक्षेपशूलेषु तदभ्यङ्गे प्रयोजयेत् ॥ ४५ ॥
समूलपत्रां निर्गुण्डीं पीड़यित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाड़ीकुष्ठानिलार्त्तिषु ॥
हितं पामापचीनाञ्च पानाभ्यञ्जनपूरणम् ।
कार्पासास्थिकुलत्थानां रसे सिद्धञ्च वातनुत् ॥ ४६ ॥
मूलकस्वरसे क्षीरसमे स्याप्यं त्र्यहं दधि ।
तस्याम्लस्य त्रिभिः प्रस्थैस्तैलप्रस्थं विपाचयेत् ॥
यष्ट्याह्वशर्करारास्नालवणार्द्रकनागरैः ।
सुपिष्टैः पलिकैः पानात् तदभ्यङ्गाच्च वातनुत् ॥ ४७ ॥
पञ्चमूलीकषायेण पिण्याकं बहुवार्षिकम् ।

पक्वाम्लमि रसे तस्मिंस्तैलप्रस्थं विपाचयेत् ॥
पयसाष्टगुणेनैतत् सर्व्ववातविकारनुत् ।
संसृष्टे श्लेष्मणा चैतद्वाते शस्तं विशेषतः ॥ ४८ ॥
यवकोलकुलत्थानां श्रेयस्याः शुष्कमूलकात् ।
बिल्वाच्चाञ्जलिमेकैकं द्रवैरम्लैर्विपाचयेत् ॥
तेन तैलं कषायेण फलाम्लैः कटुभिस्तथा ।
पिष्टैः सिद्धं महावातैरार्त्ते शीते प्रयोजयेत् ॥ ४९ ॥
सर्व्ववातविकाराणां तैलान्यन्यान्यतः शृणु ।
चतुष्प्रयोगाण्यायुष्यबलवर्णकराणि च ॥
रजःशुक्रप्रदोषघ्नान्यपत्यजननानि च ।
निरत्ययानि सिद्धानि सर्व्वदोषहराणि च ॥ ५० ॥
सहाचरतुलायाश्च रसे तैलाढ़कं पचेत् ।
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं भिषक् ।
विनीय दारुणेष्वेतद्वातव्याधिषु योजयेत् ॥ ५१ ॥
श्वदंष्ट्रास्वरसप्रस्थौ द्वौ समौ पयसा सह ।
षट्पलं शृङ्गवेरस्य गुड़स्याष्टपलं तथा ॥
तैलप्रस्थं विपक्वं तैर्दद्यात् सर्व्वानिलार्त्तिषु ।
जीर्णे तैले च दुग्धेन पेयाकल्पः प्रशस्यते ॥ ५२ ॥
बलाशतं गुड़ूच्याश्च पादं रास्नाष्टभागिकम् ।
जलाढ़कशते पक्त्वा दशभागस्थिते रसे ॥
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढ़कं समैः ।
पचेत् साजपयोऽर्द्धांशैः कल्कैरेभिः पलोन्मितैः ॥

शटीसरलदार्व्वेलामञ्जिष्ठागुरुचन्दनैः ।
पद्मकातिविषामुस्तसूर्पपर्णीहरेणुभिः ॥
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ।
पलाशरसकस्तूरीनलिकाजातिकोषकैः ॥
पृक्काकुङ्कुमशैलेयजातीकटुफलाम्बुभिः ।
त्वक्चन्दनैलाकर्पूरतुरुष्कश्रीनिवासकैः ॥
लवङ्गनखकक्कोलकुष्ठमांसीप्रियङ्गुभिः ।
स्थौणेयतगरव्यामवचामदनकप्लवैः ॥
सनागकेशरैः सिद्धे चिपेच्चात्रावतारिते ।
पत्रकल्कं ततः पूतं विधिना तत् प्रयोजयेत् ॥
श्वासं कासं ज्वरं मूर्च्छां छर्द्दिं गुल्मान् चतं चयम् ।
प्लीहशोषावपस्मारमलक्ष्मीञ्च प्रणाशयेत् ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ५३ ॥

इति बलातैलम् ।

अमृतायास्तुलाः पञ्च द्रोणेष्वष्टस्वपां पचेत् ।
पादशेषे समं चीरं तैलस्यार्द्धाढकं पचेत् ॥
एलामांसीनतोशीरशारिवाकुष्ठचन्दनैः ।
शतपुष्पाबलामेदामहामेदर्द्धिजीवकैः ॥
काकोलीचीरकाकोलीश्रावणप्रतिबलानखैः ।
महाश्रावणिजीवन्तीविदारीकपिकच्छुभिः ॥
वचागोचुरकैरण्डरास्नाकालासहापरैः ।
शतावरीतामलकीकर्कटाख्याहरेणुभिः ॥
वीराशल्लकिमुस्तत्वक्पत्रर्षभकबालकैः ।

सहैलाकुङ्कुमस्पृक्काविद्याह्नैश्च कार्षिकैः ॥
मञ्जिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च ।
कल्कैस्तत् क्षीणवीर्य्याग्निबलसंमूढ़चेतसा ॥
उन्मादारत्यपस्मारैरार्त्तांश्च प्रकृतिं नयेत् ।
वातव्याधिहरं श्रेष्ठं तैलाग्रममृताह्वयम् ॥ ५४ ॥

इत्यमृताद्यं तैलम् ।

रास्नासहस्रनिर्य्यूहे तैलद्रोणं विपाचयेत् ।
गन्धैर्हैमवतैः पिष्टैरैलाद्यैश्चानिलार्त्तिनुत् ॥ ५५ ॥

इति रास्नादि तैलम् ।

एष कल्पस्तु बलयोः प्रसारण्याश्वगन्धयोः ।
क्वाथकल्कपयोभिर्वा बलादीनां पचेत् पृथक् ॥ ५६ ॥
मूलकस्वरसं क्षीरं तैलं दध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्नाचविकागुरुचित्रकैः ।
भल्लातकवचाकुष्ठश्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीबिल्वशताह्वानतदारुभिः ।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥५७॥

इति मूलकाद्यतैलम् ।

दशमूलगुडूच्योश्च द्विशतस्य शतस्य च ।
अश्वगन्धाचित्रकयोः क्वाथे तैलाढ़कं पचेत् ॥
सक्षीरं वायुना भग्ने दद्याज्जर्ज्झरिते तथा ।
प्राक्तैलावापसिद्धञ्च भवेदेतद्गुणोत्तरम् ॥ ५८ ॥

इति दशमूलादि तैलम् ।

रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृताः ।
श्योणाकदारुसम्पाका हयगन्धात्रिकण्टकाः ॥
एषां दशपलान् भागान् कषायमुपकल्पयेत् ।
ततस्तेन कषायेण सर्व्वगन्धैश्च कार्षिकैः ॥
दध्यारनालमाषाम्लमूलकेक्षुरसैः शुभैः ।
पृथक् प्रस्थोन्मितैः सार्द्धं तैलप्रस्थं विपाचयेत् ॥
श्रोणिपार्श्वग्रहश्वासकासमारुतरोगनुत् ।
रास्नातैलमिति ख्यातं वर्णायुर्बलवर्द्धनम् ॥ ५९ ॥

इति रास्नातैलम् ।

यवकोलकुलत्थानां मत्स्यतूनां शिग्रुबिल्वयोः ।
रसेन मूलकानाञ्च तैलं दधि पयोऽन्वितम् ॥
साधयित्वा भिषग्दद्यात् सर्व्ववातामयापहम् ।
लशुनस्वरसे सिद्धं तैलमेभिश्च वातनुत् ॥
तैलान्येतान्यृतुस्नातामङ्गनां पाययेत च ।
पीत्वान्यतममेतेषां बन्ध्यापि जनयेत् सुतम् ॥ ६० ॥
यच्च शीतज्वरे तैलमगुर्व्वाद्यमुदाहृतम् ।
अनेकशतशस्तच्च सिद्धं स्याद्वातरोगनुत् ॥
वक्ष्यन्ते यानि तैलानि वातशोणितकेऽपि च ।
तानि चानिलशान्त्यर्थं सिद्धिकामः प्रयोजयेत् ॥ ६१ ॥
नास्ति तैलात् परं किञ्चिदौषधं मारुतापहम् ।
व्यवाय्युष्णगुरुस्नेहात् संस्काराद्बलवत्तरम् ॥
गणैर्वातहरैस्तस्माच्छतशोऽथ सहस्रशः ।
सिद्धं क्षिप्रतरं हन्ति सूक्ष्ममार्गस्थितान् गदान् ॥ ६२ ॥

क्रिया साधारणी सर्व्वा संसृष्टे चापि शस्यते।
वातपित्तादिभिः स्रोतःस्वावृतेषु विशेषतः॥
पित्तावृते विशेषेण शीतामुष्णां तथा क्रियाम्।
व्यत्यासात् कारयेत् सर्पिर्जीवनीयञ्च शस्यते॥
धन्वमांसं यवाः शालिर्यापनाः क्षीरवस्तयः।
विरेकः क्षीरपानञ्च पञ्चमूलीबलाशृतम्॥
मधुयष्टीबलातैलघृतक्षीरैश्च सेचनम्।
पञ्चमूलीकषायेण कुर्य्याद्वा शीतवारिणा॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः।
स्वेदा निरूहास्तीक्ष्णाश्च वमनं सविरेचनम्॥
जीर्णं सर्पिस्तथा तैलं तिलसर्षपजं हितम्।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्ज्जयेत्॥ ६३॥
आमाशयगतं मत्वा कफं वमनमाचरेत्।
पक्वाशये विरेकन्तु पित्ते सर्व्वगते तथा॥
स्वेदैर्विष्यन्दितः श्लेष्मा यदा पक्वाशये स्थितः।
पित्तं वा दर्शयेल्लिङ्गं वस्तिभिस्तौ विनिर्हरेत्॥
श्लेष्मणानुगतं वातमुष्णैर्गोमूत्रसंयुतैः।
निरूहैः पित्तसंसृष्टं निर्हरेत् क्षीरसंयुतैः॥
मधुरौषधसिद्धैश्च तैलैस्तमनुवासयेत्।
शिरोगते तु सकफे धूमनस्यादि कारयेत्॥
हृते पित्ते कफे यः स्यादुरःस्रोतोऽनुगोऽनिलः।
सर्व्वेषां स्यात् क्रिया तत्र कार्य्या केवलवातिकी॥
शोणितेनावृते कुर्य्याद्वातशोणितिकीं क्रियाम्।

प्रमेहवातमेदोघ्नैमाममवाते प्रयोजयेत् ॥
स्वेदाभ्यङ्गरसक्षीरस्नेहा मांसावृते मताः ।
महास्नेहोऽस्थिमज्जस्थे पूर्व्ववद्रेतसावृते ॥
अन्नावृते तु वमनं पाचनं दीपनं लघु ।
मूत्रलानि तु मूत्रस्थे स्वेदाः सोत्तरवस्तयः ॥
एरण्डतैलं वर्च्चःस्थे वस्तिः स्नेहाश्च भेदिनः ।
स्वस्थानस्थो बली दोषः प्राक्तं स्वैरौषधैर्जयेत् ॥
वमनैर्वा विरेकैर्वा वस्तिभिः शमनेन वा ॥ ६४ ॥
मारुतानाञ्च पञ्चानामन्योन्यावरणं शृणु ।
लिङ्गं व्याससमासाभ्यामुच्यमानं मयानघ ॥ ६५ ॥
प्राणो वृणोत्युदानादीन् प्राणं वृण्वन्ति तेऽपि च ।
उदानाद्यास्तथान्योऽन्यं सर्व्व एव यथाक्रमम् ॥
विंशतिर्वरणान्येतान्युल्लणानां परस्परम् ।
मारुतानाञ्च पञ्चानां तानि सम्यक् प्रतर्कयेत् ॥ ६६ ॥
सर्व्वेन्द्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम् ।
व्याने प्राणावृते लिङ्गं कर्म्म तत्रोर्द्ध्वजत्रुकम् ॥
स्वेदोऽत्यर्थं लोमहर्षस्त्वग्दोषः सुप्तगात्रता ।
प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम् ॥
प्राणावृते समाने स्युर्जड़गद्गदमूकताः ।
चतुष्प्रयोगाः शस्यन्ते स्नेहास्तत्र सयापनाः ॥
समानेनावृतेऽपाने ग्रहणी पार्श्ववेदना ।
शूले चामाशये तत्र दीपनं सर्पिरिष्यते ॥
शिरोग्रहः प्रतिश्यायो निश्वासोच्छ्वासस ग्रहः ।

हृद्रोगो मुखशोषश्चाप्युदाने प्राणसंवृते।
तत्रोर्द्ध्वभागिकं कर्म्म कार्य्यमाश्वासनं तथा॥
कर्म्मौज्ज्ज्वौबलवर्णानां नाशो मृत्युरथापि वा।
उदानेनावृते प्राणे तं शनैः शीतवारिणा।
सिञ्चेदाश्वासयेच्चैव सुखञ्चैवोपपादयेत्॥
ऊर्द्ध्वगेनावृतेऽपाने च्छर्द्दिश्वासादयो गदाः।
स्युर्वाते तत्र वस्त्यादिभोज्यञ्चैवानुलोमनम्॥
मोहोऽल्पोऽग्निरतीसार ऊर्द्ध्वगेऽपानसंवृते।
वाते स्याद्वमनं तत्र दीपनं ग्राहि चाशनम्॥
वम्याध्मानमुदावर्त्तो गुल्मार्त्तिः परिकर्त्तिका।
लिङ्गं व्यानावृतेऽपाने तं स्निग्धैरनुलोमयेत्।
अपानेनावृतेव्याने भवेद्विण्मूत्ररेतसाम्।
अतिप्रवृत्तिस्तत्रापि सर्व्वं संग्रहणं मतम्॥
मूर्च्छा तन्द्रा प्रलापोऽङ्गसादोऽग्न्योजोबलक्षयः।
समानेनावृते व्याने व्यायामो लघुभोजनम्॥
स्तब्धताल्पाग्निताऽस्वेदश्चेष्टाहानिर्निमीलनम्।
उदानेनावृते व्याने तत्र पथ्यं मितं लघु॥
पञ्चान्योऽन्यावृतानेवं वातान् बुध्येत लक्षणैः।
एषां स्वकर्म्मणां हानिर्वृद्धिर्वावरणे मता॥ ६७॥
यथास्थूलं समुद्दिष्टमेतदावरणं पृथक्।
सलिङ्गभेषजं सम्यक् शृणु मे बुद्धिवृद्धये॥ ६८॥
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिञ्च कर्म्मणाम्।
द्वादशावरणान्यन्यान्यभिलक्ष्य भिषग्जितम्॥

कुर्य्यादभ्यञ्जनस्नेहपानवस्त्यादि सर्व्वशः ।
क्रमसुष्णमनुष्णं वा व्यत्यासादवचारयेत् ॥
उदाने योजयेदूर्द्धमपाने चानुलोमनम् ।
समानं शमयेच्चैव त्रिधा व्यानन्तु योजयेत् ॥
प्राणो रक्ष्यश्चतुर्भ्योऽपि स्थाने ह्यस्य स्थितिर्ध्रुवा ।
स्वस्थानं गमयेदेवं वृतानेतान् विमार्गगान् ॥ ६८ ॥
मूर्च्छा दाहो भ्रमः शूलं विदाहः शीतकामिता ।
छर्द्दनञ्च विदग्धस्य प्राणे पित्तसमावृते ॥
ष्ठीवनं क्षवथूद्गारनिश्वासोच्छ्वाससंग्रहः ।
प्राणे कफावृते रूपाण्यरुचिश्छर्द्दिरेव च ॥
मूर्च्छाद्यानि च रूपाणि दाहो नाभ्युरसोः क्लमः ।
ओजोभ्रंशश्च श्वासश्चाप्युदाने पित्तसंवृते ॥
आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः ।
दौर्ब्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते ॥
अतिस्वेदस्तृषा दाहो मूर्च्छा चारतिरेव च ।
पित्तावृते समाने स्युरुपतापास्तथोष्मणः ॥
अस्वेदो वह्निमान्द्यञ्च लोमहर्षस्तथैव च ।
कफावृते समाने स्युर्गात्राणाञ्चातिशीतता ॥
व्याने पित्तावृते तु स्याद्दाहः सर्व्वाङ्गगः क्लमः ।
गात्रविक्षेपसङ्गश्च सन्तापश्च सवेदनः ॥
गुरुता सर्व्वगात्राणां सर्व्वसन्ध्यस्थिजा रुजा ।
व्याने कफावृते लिङ्गं गतिसङ्गस्तथा रुजः ॥

हारिद्रमूत्रवर्च्चस्त्वं तापश्च गुदमेढ्रयोः ।
लिङ्गं पित्तावृतेऽपाने रजसः संप्रवर्त्तनम् ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्च्चःप्रवर्त्तनम् ।
श्लेष्मणा संवृतेऽपाने कफमेहस्य चागमः ॥
लक्षणानान्तु मिश्रत्वं पित्तस्य च कफस्य च ।
उपलक्ष्य भिषग्विद्वान् मिश्रमावरणं वदेत् ॥ ७० ॥
यद्यस्य वायोर्निर्द्दिष्टं स्थानं तत्रेतरौ स्थितौ ।
दोषौ बहुविधान् व्याधीन् दर्शयेतां यथानिजम् ॥
आवृतं श्लेष्मपित्ताभ्यां प्राणञ्चोदानमेव च ।
गरीयस्त्वेन पश्यन्ति भिषजः शास्त्रचक्षुषः ॥
विशेषाज्जीवितं प्राणे उदाने संश्रितं बलम् ।
स्यात् तयोः पीड़नाद्धानिरायुषश्च बलस्य च ॥ ७१ ॥
सर्व्वेऽपीतेऽपरिज्ञाताः परिसंवत्सरास्तथा ।
उपेक्षणादसाध्याः स्युरथवा दुरुपक्रमात् ॥ ७२ ॥
हृद्रोगो विद्रधिः प्लीहा गुल्मोऽतीसार एव च ।
भवन्त्युपद्रवास्त्वेषामावृतानामुपेक्षणात् ॥
तस्मादावरणं वैद्यः पवनस्योपलक्षयेत् ।
पञ्चात्मकस्य वातेन पित्तेन श्लेष्मणापि वा ॥
भिषग्लिङ्गैरतः सम्यगुपलक्ष्य समाचरेत् ।
अनभिष्यन्दिभिः स्निग्धैः स्रोतसां शुद्धिकारिभिः ॥ ७३ ॥
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ।
सर्व्वस्थानावृतेऽप्याशु तत्कार्य्यं मारुते हितम् ॥
यापना वस्तयः प्रायो मधुराः सानुवासनाः ।

प्रसमीक्ष्य बलाधिक्यं मृदु वा स्रंसनं हितम् ॥
रसायनानां सर्व्वेषामुपयोगः प्रशस्यते ।
शैलस्य जतुनोऽप्यथ पयसा गुग्गुलोस्तथा ॥
लेहं वा भार्गवप्रोक्तमभ्यसेत् क्षीरभुङ्नरः ।
अभयामलकीयोक्तानेकादश मिताशनः ॥ ७४ ॥
अपानेनावृते सर्व्वं दीपनं ग्राहि भेषजम् ।
वातानुलोमनं यच्च पक्वाशयविशोधनम् ॥
इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितम् ।
प्राणादीनां भिषक् कुर्य्याद्वितर्क्य स्वयमेव तत् ॥ ७५ ॥
पित्तावृते तु पित्तघ्नैर्मारुतस्यानुलोमनैः ।
कफावृते कफघ्नैस्तु भिषक् कुर्य्यात् प्रतिक्रियाम् ॥ ७६ ॥
लोके वाय्वर्कसोमानां दुर्विज्ञेया यथा गतिः ।
तथा शरीरे वायोश्च पित्तस्य च कफस्य च ॥
क्षयं वृद्धिं समत्वञ्च तथैवावरणं भिषक् ।
विज्ञाय पवनादीनां न प्रमुह्यति कर्म्मसु ॥ ७७ ॥

तत्र श्लोकौ ।

पञ्चात्मनः स्थानवशाच्छरीरे स्थानानि कर्म्माणि च देहधातोः ।
प्रकोपहेतुः कुपितश्च रोगान् स्थानेषु चान्येषु वृतोऽवृतश्च ॥
प्राणेश्वरः प्राणभृतां करोति क्रिया च तेषामखिला निरुक्ता ।
तां देशसात्म्यर्त्तुबलान्यवेक्ष्य प्रयोजयेच्छास्त्रमतानुसारी ॥ ७८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
वातव्याधिचिकित्सितं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ।

अथातो वातशोणितचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

हुताग्निहोत्रमासीनमृषिमध्ये पुनर्व्वसुम् ।
पृष्टवान् गुरुमेकाग्रमग्निवेशोऽग्निवर्च्चसम् ॥
अग्निमारुततुल्यस्य संसर्गस्यानिलासृजोः ।
हेतुलक्षणभैषज्यान्यथास्मै गुरुरब्रवीत् ॥ २ ॥
लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥
अचंक्रमणशीलानां कुप्यते वातशोणितम् ।
अभिघातादशुद्धाच्च प्रदुष्टे शोणिते नृणाम् ॥
कषायकटुतिक्ताल्परुक्षाहारादभोजनात् ।
हयोष्ट्रयानयानाम्बुक्रीड़ाप्लवनलङ्घनात् ॥
उष्णे चात्यध्वगमनाद्व्यवायाद्वेगनिग्रहात् ।
वायुर्विवृद्धो वृद्धेन रक्तेनावरितः पथि ॥
कृत्स्नं संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम् ।
खुडं वातबलासाख्यमाढ्यवातञ्च नामभिः ॥ ३ ॥
तस्य स्थानं करौ पादावङ्गुल्यः सर्व्वसन्धयः ।

कृत्वादौ हस्तपादे तु मूलं देहं विधावति ॥
सौक्ष्म्यात् सर्व्वसरत्वाच्च पवनस्यासृजस्तथा ।
तद्द्रवत्वात् सरत्वाच्च देहं गच्छेत् सिरायनैः ॥
पर्व्वस्वभिहतं क्षुब्धं वक्रत्वादवतिष्ठते ।
स्थितं पित्तादिसंसृष्टं तास्ताः सृजति वेदनाः ॥
करोति दुःखं तेष्वेव तस्मात् प्रायेण सन्धिषु ॥ ४ ॥
स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ।
सन्धिशैथिल्यमालस्यं सदनं पिड़कोद्गमः ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥
कण्डूः सन्धिषु रुग् भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्व्वलक्षणम् ॥ ५ ॥
उत्तानमथ गम्भीरं द्विविधं तत् प्रचक्ष्यते ।
त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम् ॥
कण्डूदाहरुगायामतोदस्फुरणकुञ्चनैः
अन्विता श्यावरक्ता त्वग् बाह्ये ताम्रा तथोच्यते ॥
गम्भीरे श्वयथुः स्तब्धः कठिनोऽथ भृशार्त्तिमान् ।
श्यावस्ताम्रोऽथवा दाहतोदस्फुरणपाकवान् ॥
रुग्विदाहान्वितोऽभीक्ष्णं वायुः सन्ध्यस्थिमज्जसु ।
छिन्दन्निव चरत्यन्तं वक्रीकुर्व्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरे सर्व्वतश्चरन् ॥
सर्व्वैर्लिङ्गैस्तु विज्ञेयं वातासृगुभयाश्रयम् ॥ ६ ॥
तत्र वातेऽधिके वा स्याद्रक्ते पित्ते कफेऽपि वा ।

संसृष्टेषु समस्तेषु यच्च तच्छृणु लक्षणम् ॥ ७ ॥
विशेषतः शिरायामतोदस्फुरणभेदनम्।
शोथस्य कार्ष्ण्यं रूक्षत्वश्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्।
कुञ्चनस्तम्भने शीतप्रद्वेषश्चानिलोत्तरे ॥
रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते।
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदान्वितो भृशम् ॥
विदाहो वेदना मूर्च्छा स्वेदस्तृष्णा मदो भ्रमः।
रागः पाकश्च भेदश्च शोषश्चोक्तानि पैत्तिके ॥
स्तैमित्यं गौरवं स्नेहः सुप्तिर्मन्दा च रुक् कफे।
हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वं त्रिदोषजम् ॥ ८ ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्।
त्रिदोषजमसाध्यं स्याद् यस्य च स्युरुपद्रवाः ॥ ९ ॥
अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः।
मूर्च्छा च मदरुक् तृष्णा ज्वरमोहप्रवेपकाः ॥
हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः।
अङ्गुलीवक्रता स्फोटा दाहमर्म्मग्रहार्व्वुदाः ॥ १० ॥
एतैरुपद्रुतं वर्ज्यं मोहेनैकेन वापि यत्।
सम्प्रस्रावि विवर्णञ्च स्तब्धमर्व्वुदकृच्च यत् ॥
वर्ज्जयेद् यच्च सङ्कोचकरमिन्द्रियतापनम्।
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥ ११ ॥
रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः।
निविश्यान्योन्यमावार्य्य वेदनाभिर्हरेदसून् ॥

तत्र मुञ्चेदसृक् शृङ्गजलौकःसूच्यलाबुभिः।
प्रच्छनैर्वा शिराभिर्वा यथादोषं यथाबलम्॥
रुग्दाहतोदरागार्त्ताद्सृक् स्राव्यं जलौकसा।
शृङ्गैस्तु वै चिमिचिमाकण्डूरुग्दूयनाद्धरेत्॥
देशाद्देशं व्रजत् स्राव्यं शिराभिः प्रच्छनेन वा।
अङ्गग्लानौ तु न स्राव्यं रूक्षे वातोत्तरे च यत्॥
गम्भीरं श्वयथुं स्तम्भं कम्पं स्नायुशिरामयान्।
ग्लानिञ्चापि ससङ्कोचां कुर्य्याद्वायुरसृक्क्षयात्॥
खाञ्जत्वादीन् वातरोगांश्च मृतुत्वञ्चात्यवसेचनात्।
कुर्य्यात् तस्मात् प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत्॥ १२॥
विरेच्यः स्नेहयित्वादौ स्नेहयुक्तैर्विरेचनैः।
रूक्षैर्वा मृदुभिः शस्तमसकृद्वस्तिकर्म्म च॥
सेकाभ्यङ्गप्रदेहान्नस्नेहाः प्रायोऽविदाहिनः।
वातरक्ते प्रशस्यन्ते विशेषन्तु निबोध मे॥ १३॥
बाह्यमालेपनाभ्यङ्गपरिषेकोपनाहनैः।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत्॥ १४॥
सर्पिस्तैलवसामज्जपानाभ्यञ्जनवस्तिभिः।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत्॥
विरेचनैर्घृतक्षीरपानैः सेकैः सवस्तिभिः।
शीतैर्निर्व्वापणैश्चापि रक्तपित्तोत्तरं जयेत्॥
वमनं मृदु नात्यर्थं स्नेहसेकौ विलङ्घनम्।
कोष्णालेपाश्च शस्यन्ते वातरक्ते कफोत्तरे॥
कफवातोत्तरे शीतैः प्रलिप्ते वातशोणिते।

विदाहशोथरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥
पित्तरक्तोत्तरे दाहः क्लेदोऽवदरणं भवेत् ।
उष्णाः स्तम्भादिभिषग्दोषबलं बुद्धा चरेत् क्रियाम् ॥ १५ ॥
दिवास्वप्नं ससन्तापं व्यायामं मैथुनं तथा ।
कटूष्णं गुर्व्वभिष्यन्दि लवणाम्लञ्च वर्ज्जयेत् ॥ १६ ॥
पुराणा यवगोधूमनीवाराः शालिषष्टिकाः ।
भोजनार्थे रसार्थे तु विष्किरप्रतुदा हिताः ॥
आढक्यश्चणका मुद्गा मसूराः समुकुष्टकाः ।
यूषार्थे बहुसर्पिष्काः प्रशस्ता वातशोणिते ॥
सुनिषस्मकवेत्राग्रकाकमाचीशतावरीः ।
वास्तुकोपोदिकाशाकं शाकं सौवर्च्चलं तथा ॥
घृतमांसरसैर्भृष्टं शाकसात्म्याय दापयेत् ।
व्यञ्जनार्थं तथा गव्यं माहिषाजं पयो हितम् ॥
इति संक्षेपतः प्रोक्तं वातरक्तचिकित्सितम् ।
एतदेव पुनः सर्व्वं व्यासतः संप्रवक्ष्यते ॥ १७ ॥
श्रावणीक्षीरकाकोलीजीवकर्षभकैः समैः ।
सिद्धं समधुकैः सर्पिः सक्षीरं वातरक्तनुत् ॥ १८ ॥
बलामतिबलां मेदामात्मगुप्तां शतावरीम् ।
काकोलीं क्षीरकाकोलीं रास्नामृद्धिञ्च पेषयेत् ॥
घृतं चतुर्गुणं क्षीरं तैः सिद्धं वातरक्तनुत् ।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥ १९ ॥
त्रायन्तिका तामलकी द्विकाकोली शतावरी ।
कशेरुका कषायेण कल्कैरेभिः पचेद्घृतम् ॥

दत्त्वा पक्षषकद्राक्षाकाश्मर्य्यखुरसान् समान् ।
पृथग्विदार्य्याः स्वरसं तथा क्षीरं चतुर्गुणम् ॥
एतत् प्रायौगिकं सर्पिः पारूषकमिति स्मृतम् ।
वातरक्ते क्षते क्षीणे वीसर्पे पैत्तिके ज्वरे ॥ २० ॥

इति पारुषकं घृतम् ।

द्वे पञ्चमूले वर्षाभूमेरण्डं सपुनर्नवम् ।
मुद्गपर्णीं महामेदां माषपर्णीं शतावरीम् ॥
शङ्खपुष्पीमवाक्पुष्पीं रास्नामतिबलां बलाम् ।
पृथग्द्विपलिकान् कृत्वा जलद्रोणे विपाचयेत् ॥
पादशेषं समं क्षीरं धात्रीक्षुच्छागजान् रसान् ।
घृताढकेन संयोज्य शनैर्मृद्वग्निना पचेत् ॥
कल्कानावाप्य मेदे द्वे काश्मर्य्यफलमुत्पलम् ।
त्वक्क्षीरीं पिप्पलीं द्राक्षां पद्मबीजं पुनर्नवाम् ॥
नागरं क्षीरकाकोल्यौ पद्मकं वृहतीद्वयम् ।
वीरां शृङ्गाटकं भव्यमुत्पलं निकोठकम् ॥
खर्ज्जूराक्षोटवातामसुञ्जाताभिषुकांस्तथा ।
एतैर्घृताढके सिद्धे क्षौद्रं शीते प्रदापयेत् ॥
सम्यक् सिद्धञ्च विज्ञाय सुगुप्तं सन्निधापयेत् ।
कृतरक्षाविधं तच्च प्राशयेद्बलसम्मितम् ॥
पाण्डुरोगं ज्वरं हिक्कां स्वरभेदं भगन्दरम् ।
पार्श्वशूलं क्षयं कासं प्लीहानं वातशोणितम् ॥
क्षतशोषमपस्मारमश्मरीं शर्करान्तथा ।
सर्व्वाङ्गैकाङ्गरोगांश्च मूत्रसङ्गञ्च नाशयेत् ॥

बलवर्णकरं धन्यं बलीपलितनाशनम्।
जीवनीयमिदं सर्पिर्वृष्यं वन्ध्यासुतप्रदम्॥ २१॥
इति जीवनीयं घृतम्।

द्राक्षामधुकतोयाभ्यां सिद्धं वा ससितोपलम्।
पिबेद्घृतं तथा क्षीरं गुड़ूचीस्वरसे शृतम्॥ २२॥
जीवकर्षभकौ मेदामृष्यप्रोक्तां शतावरीम्।
मधुकं मधुपर्णीञ्च काकोलीद्वयमेव च॥
मुद्गमाषाख्यपर्णिन्यौ दृशमूलं पुनर्नवाम्।
बलामृताविदारीश्च साश्वगन्धाश्मभेदकाः॥
एषां कल्ककषायाभ्यां सर्पिस्तैलञ्च साधयेत्।
लाभतश्च वसामज्ज धान्वप्रातुदवैष्किरम्॥
चतुर्गुणेन पयसा तत् सिद्धं वातशोणितम्।
सर्व्वदेहाश्रितं हन्ति व्याधीन् घोरांश्च वातजान्॥ २३॥
स्थिरा श्वदंष्ट्रा बृहती शारिवा सशतावरी।
काश्मर्य्याण्यात्मगुप्ता च वृश्चीरं द्वे बले तथा॥
एषां क्काथे चतुःक्षीरे पृथक् तैलं पृथग् घृतम्।
मेदाशतावरीयष्टीजीवन्तीजीवकर्षभैः॥
पक्वा मात्रा ततः क्षीरत्रिगुणाध्यर्द्धशर्करा।
खजेन मथिता पेया वातरक्ते त्रिदोषजे॥ २४॥
तैलं पयः शर्कराञ्च पाययेद्वा सुमूर्च्छिताम्।
सर्पिस्तैलवसाक्षौद्रैर्मिश्रं वापि पिबेत् पयः॥
अंशुमत्या शृतः प्रस्थः पयसः ससितोपलः।
पाने प्रशस्यते तद्वत् पिप्पलीनागरैः शृतः॥

बलाशतावरीरास्नादर्भमूलैः सपीलुभिः ।
श्यामैरण्डस्थिराभिश्च वातार्त्तिघ्नं शृतं पयः ॥
धारोष्णं मूत्रयुक्तं वा चीरं दोषानुलोमनम् ।
पिवेद्वा संत्रिवृच्चूर्णं पित्तरक्तेऽनिलात्मके ॥ २५ ॥
चीरेणैरण्डतैलं वा प्रयोगेण पिवेन्नरः ।
बहुदोषो विरेकार्थं जीर्णे चीरौदनाशनः ॥
कषायममृतानां वा घृतभृष्टं पिवेन्नरः ।
चीरानुपानं त्रिवृताचूर्णं द्राचारसेन वा ॥ २६ ॥
काश्मर्य्यं त्रिवृतां द्राचां त्रिफलां सपरूषकाम् ।
शृतां पिवेद्विरेकार्थं लवणचौद्रसंयुताम् ॥
त्रिफलायाः कषायं वा पिवेत् चौद्रेण संयुतम् ।
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ॥ २७ ॥
योगैश्च कल्पविहितैरसकृत् तं विरेचयेत् ।
मृदुभिः स्नेहसंयुक्तैर्ज्ञात्वा वातं मलावृतम् ॥
निर्हरेद्वा मलं तस्य सघृतैः चीरवस्तिभिः ।
न हि वस्तिसमं किञ्चिद्वातरक्तचिकित्सितम् ॥ २८ ॥
वस्तिवंचणपार्श्वोरुपर्व्वास्थिजठरार्त्तिषु ।
उदावर्त्ते च शस्यन्ते निरूहाः सानुवासनाः ॥
दद्यात् तैलानि चेमानि वस्तिकर्म्मणि बुद्धिमान् ।
नस्याभ्यञ्जनसेके च दाहशूलोपशान्तये ॥ २९ ॥
मधुपर्ण्याः पलशतं कषाये पादशेषिते ।
तैलाढकं समक्षीरं पचेत् कल्कैः पलोन्मितैः ॥
शतपुष्पावरीमूर्व्वापयस्यागुरुचन्दनैः ।

स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥
काकोलीक्षीरकाकोलीतामलक्याद्धिपद्मकैः ।
जीवकर्षभजीवन्तीत्वक्पत्रनखबालकैः ॥
प्रपौण्डरीकमञ्जिष्ठाशारिवैन्द्रीवितुन्नकैः ।
चतुःप्रयोगात् तद्धन्ति तैलं मारुतशोणितम् ॥
सोपद्रवं साङ्गशूलं सर्व्वगात्रानुगं तथा ।
वातासृक्पित्तदाहार्त्तिंज्वरघ्नं बलवर्णकृत् ॥ ३० ॥

इति मधुपर्ण्यादितैलम् ।

मधूकस्य शतं द्राक्षा खर्ज्जूराणि परूषकम् ।
मधुकौदनपाक्यौ च प्रस्थं मुञ्जातकस्य च ॥
काश्मर्य्याढ़कमित्येतच्चतुर्द्रोणे पचेदपाम् ।
शेषेऽष्टभागे पूते च तस्मिंस्तैलाढ़कं पचेत् ॥
तथामलककाश्मर्य्यविदारीक्षुरसैः समैः ।
चतुर्द्रोणेन पयसा कल्कं दत्त्वा पलोन्मितम् ॥
कदम्बामलकाक्षोटपद्मबीजकशेरुकम् ।
शृङ्गाटकं शृङ्गवेरं लवणं पिप्पलीं सिताम् ॥
जीवनीयैश्च संसिद्धं क्षौद्रप्रस्थेन संसृजेत् ।
नस्याभ्यञ्जनपानेषु वस्तौ चापि नियोजयेत् ॥
वातव्याधिषु सर्व्वेषु मन्यास्तम्भे हनुग्रहे ।
सर्व्वाङ्गैकाङ्गवाते च क्षतक्षीणे क्षतज्वरे ॥
सुकुमारकमित्येतद् वातास्रामयनाशनम् ।
स्थिरवर्णकरं तैलमारोग्यबलपुष्टिदम् ॥ ३१ ॥

इति सुकुमारकतैलम् ।

गुडूचीं मधुकं ऋक्षं पञ्चमूलं पुनर्नवाम् ।
रास्नामेरण्डमूलञ्च जीवनीयानि लाभतः ॥
पलानां शतकैर्भागैर्बलापञ्चशतं तथा ।
कोलबिल्वयवान् माषान् कुलत्थांश्चाढ़कोन्मितान् ॥
काश्मर्य्याणां सुशुष्काणां द्रोणं द्रोणशतेऽम्भसि ।
साधयेज्जर्ज्जरं धौतं चतुर्द्रोणञ्च शेषयेत् ॥
तैलद्रोणं पचेत् तेन दत्त्वा पञ्चगुणं पयः ।
पिष्ट्वा त्रिपलिकांश्चैव चन्दनोशीरकेशरान् ॥
पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिकाम् ।
मञ्जिष्ठाष्टपलञ्चैव तत्सिद्धं सार्व्वयौगिकम् ॥
वातरक्ते क्षते क्षीणे भारार्त्ते क्षीणरेतसि ।
वेपनोत्क्षिप्तभग्नानां सर्व्वाङ्गैकाङ्गरोगिणाम् ॥
योनिदोषमपस्मारमुन्मादं विषमज्वरम् ।
हन्यात् पुंसवनञ्चैतत् तैलाग्र्यममृताह्वयम् ॥ ३२ ॥

इत्यमृताद्यं तैलम् ।

पद्मवेतसयष्ट्याह्वफेनिलापद्मकोत्पलैः ।
पृथक्पञ्चपलैर्दर्भबलाचन्दनकिंशुकैः ॥
जले शृतैः पचेत् तैलप्रस्थं सौवीरसम्मितम् ।
लोध्रकालीयकोशीरजीवकर्षभकेशरैः ॥
मदयन्तीलतापत्रपद्मकेशरपद्मकैः ।
प्रपौण्डरीककाश्मर्य्यमांसीमेदाप्रियङ्गुभिः ॥
कुङ्कुमस्य पलार्द्धेन मञ्जिष्ठायाः पलेन च ।
महापद्ममिदं तैलं वातासृग्ज्वरनाशनम् ॥ ३३ ॥

इति महापद्मं तैलम् ।

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् ।
स्यात् पिष्टैः सर्ज्जमञ्जिष्ठावीराकाकोलिचन्दनैः ॥
खुड्डाकपद्मकमिदं तैलं वातास्रदाहनुत् ॥ ३४ ॥

इति खुड्डाकपद्मतैलम् ।

मधुपर्ण्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे ।
क्षीरे साध्यं शतकृत्वस्तदेवं मधुकाच्छतैः ॥
सिद्धं देयं विषोन्मादवातास्रश्वासकासनुत् ।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥ ३५ ॥

इति शतपाकमधुपर्णीतैलम् ।

बलाकषायकल्काभ्यां तैलं क्षीरसमं तथा ।
सहस्रं शतपाकं वा वातासृग्वातरोगनुत् ॥
रसायनमिदं श्रेष्ठमिन्द्रियाणां प्रसादनम् ।
जीवनं वृंहणं स्वर्य्यं शुक्रासृग्दोषनाशनम् ॥ ३६ ॥

इति सहस्रपाकं वा शतपाकं बलातैलम् ।

गुडूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्यैरसैर्वा वातरक्तनुत् ॥ ३७ ॥
आरनालाढ़के तैलं पादसर्ज्जरसं घृतम् ।
प्रभूते मथितं तोये ज्वरदाहार्त्तिनुत् परम् ॥ ३८ ॥
समधूच्छिष्टमञ्जिष्ठं ससर्ज्जरसशारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ ३९ ॥

इति पिण्डतैलम् ।

हृशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥

क्षीरैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपकशूलार्त्तं कोष्णो दाहे तु शीतलैः ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।
निःक्वाथैर्जीवनीयानां पञ्चमूलस्य वा भिषक् ॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ।
सेकार्थं तण्डुलक्षौद्रशर्कराम्बु च शस्यते ॥ ४० ॥
कुमुदोत्पलपद्माद्यैर्मणिहारैः सचन्दनैः ।
शीततोयानुगैर्दाहे प्रोक्षणं स्पर्शनं हितम् ॥
चन्द्रपादाम्बुसंसिक्ते क्षौमपद्मदलच्छदे ।
शयने पुलिनस्पर्शे शीतमारुतवीजिते ॥
चन्दनार्द्रस्तनकराः प्रिया नार्य्यः प्रियंवदाः ।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ ४१ ॥
सरागे सरुजे दाहे रक्तं विस्राव्य लेपयेत् ।
मधुकाश्वत्थत्वङ्मांसीवीरोदुम्बरशाद्वलैः ॥
जलजैर्यवचूर्णैर्वा सयष्ट्याह्वपयोघृतैः ।
सर्पिषा जीवनीयैर्वा पिष्टैर्लेपोऽर्त्तिदाहनुत् ॥
एलाः पियालं मधुकं विसं मूलञ्च वेतसाम् ।
आजेन पयसा पिष्ट्वा प्रदेहो दाहरागनुत् ॥
प्रपौण्डरीकमञ्जिष्ठादार्व्वीमधुकचन्दनैः ।
सितोपलैरकासक्तुमसूरोशीरपद्मकैः ॥
लेपो रुग्दाहवीसर्परागशोफनिबर्हणः ।
पित्तरक्तोत्तरे त्वेते लेपा वातोत्तरे शृणु ॥ ४२ ॥
वातघ्नैः साधिताः स्निग्धाः सक्षीरगुडपायसैः ।

तिलसर्षपपिण्डैर्वाप्युपनाहा रुजापहाः ॥
औदकप्रसहानूपवेशवाराः सुसंस्कृताः ।
जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥
स्तम्भतोदरुगायामशोथाङ्गभञ्जनाशनाः ।
जीवनीयौषधैः सिद्धा सपयस्का वसापि वा ॥
घृतं सहचरान्मूलं जीवन्ती च्छागलं पयः ।
लेपाः पिष्टास्तिलास्तद्वद् भृष्टाः पयसि निर्वृताः ॥
क्षीरपिष्टमुमालेपमेरण्डस्य फलानि च ।
कुर्य्याच्छूलनिवृत्त्यर्थं शताह्वां वानिलेऽधिके ॥ ४३ ॥
समूलाग्रच्छदैरण्डक्वाथे द्विप्रस्थिकं पृथक् ।
घृतं तैलं वसा मज्जा चानूपमृगपक्षिणाम् ॥
कल्कार्थे जीवनीयानि गव्यं क्षीरमथाजकम् ।
हरिद्रोत्पलकुष्ठैलाशताह्वावचचन्दनान् ॥
बिल्वमात्रान् पृथक् पुष्पं काकुभञ्चापि साधयेत् ।
मधूच्छिष्टपलान्यष्टौ दत्त्वा शीतेऽवतारिते ॥
शूलेनैवाऽर्द्दिताङ्गानां लेपः सन्धिगतेऽनिले ।
वातरक्ते सुते भग्ने खञ्जे कुष्ठे च शस्यते ॥ ४४ ॥
शोफगौरवकण्ड्वाद्यैर्युक्ते त्वस्मिन् कफोत्तरे ।
मूत्रक्षारसुरापक्वघृतमभ्यञ्जने हितम् ॥
पद्मकं त्वक् समधुकं शारिवा चेति तैर्घृतम् ।
सिद्धं समधुशुक्तं स्यात् सेकाभ्यङ्गः कफोत्तरे ॥
क्षीरं तैलं गवां मूत्रं घृतञ्च कटुकैः शृतम् ।
परिषेके प्रशंसन्ति वातरक्ते कफोत्तरे ॥ ४५ ॥

लेपः सर्षपनिम्बार्कहिंस्राक्षीरतिलैर्हितः ।
श्रेष्ठः सिद्धः कपित्थत्वग्घृतक्षीरैः सशक्तुभिः ॥ ४६ ॥
गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥
तगरं त्वक् शताह्वैला कुष्ठं मुस्तं हरेणुका ।
दारु व्याघ्रनखश्चाम्लपिष्टं वातकफार्त्तिनुत् ॥
मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लपेषितम् ।
मुहूर्त्तं लिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥
त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम् ।
विडङ्गं पिप्पलीमूलं लोमशां वृषकत्वचम् ॥
ऋद्धिं लाङ्गलिकां चव्यं समभागानि पेषयेत् ।
कल्कैर्लिम्पायसीं पात्रीं सध्याह्ने भक्षयेत् ततः ॥
वर्ज्जयेद्दधिशुक्तानि क्षारं वैरोधिकानि च ।
वातास्रे सर्व्वदोषेऽपि हितं शूलार्द्दिते परम् ॥ ४७ ॥
बुद्ध्वा स्थानविशेषांश्च दोषाणाञ्च बलाबलम् ।
चिकित्सितमिदं कुर्य्यादूहापोहविकल्पवित् ॥ ४८ ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ।
अतिवृद्धेऽनिलेनादौ शस्तं स्नेहनवृंहणम् ॥
व्यायामशोधनारिष्टमूत्रपानैर्विरेचनैः ।
तक्राभयाप्रयोगैश्च क्षपयेत् कफमेदसी ॥ ४९ ॥
बोधिवृक्षकषायन्तु प्रपिबेन्मधुना सह ।
वातरक्तं जयत्याशु त्रिदोषमपि दारुणम् ॥
पुराणयवगोधूमशीध्वरिष्टसुरासवैः ।

शिलाजतुप्रयोगैश्च गुग्गुलोर्माक्षिकस्य च ॥
पश्चाद्दाते क्रियां कुर्य्याद् वातरक्तप्रसादनीम् ।
गम्भीररक्तमाक्रान्तं स्याच्चेद्गा तद् विवर्ज्जयेत् ॥ ५० ॥
रक्तपित्ताधिके त्वामात् पाकमाशु नियच्छति ।
भिन्नं स्रवति वा रक्तं विदग्धं पूयमेव च ॥
तयोः क्रिया विधातव्या व्रणशोधनरोपणैः ।
कुर्य्यादुपद्रवाणाञ्च क्रियां स्वां स्वाञ्चिकित्सया ॥ ५१ ॥

तत्र श्लोकाः ।

हेतुःस्थानानि मूलञ्च यस्मात् प्रायेण सन्धिषु ।
कुप्यति प्राक् च तद्रूपं द्विविधस्य च लक्षणम् ॥
पृथग्भिन्नस्य लिङ्गञ्च दोषाधिक्यमुपद्रवाः ।
साध्यं याप्यमसाध्यञ्च क्रिया साध्यस्य चाखिला ॥
वातरक्तस्य निर्द्दिष्टा समासव्यासतस्तथा ।
महर्षिणाग्निवेशाय तथैवावस्थिकी क्रिया ॥ ५२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
वातरक्तचिकित्सितं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

# त्रिंशोऽध्यायः ।

अथातो योनिव्यापच्चिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

तीर्थैर्दिव्यौषधिमलश्चित्रधातुशिलावतः ।
पुण्येऽत्र हिमवतः पार्श्वे सुरसिद्धर्षिसेविते ॥
विहरन्तं तपोयोगात् तत्त्वज्ञानार्थदर्शिनम् ।
कृष्णात्रेयं जितात्मानमग्निवेशोऽनुपृष्टवान् ॥
भगवन् यदपत्यानां मूलं नार्य्यः परं नृणाम् ।
तद्विघातो गदैश्चासां क्रियते योनिमाश्रितैः ॥
तासां तेषां समुत्पत्तिमुत्पन्नानाञ्च लक्षणम् ।
सौषधं श्रोतुमिच्छामि प्रजानुग्रहकाम्यया ॥
इति शिष्येण पृष्टस्तु प्रोवाचर्षिवरोऽत्रिजः ॥ २ ॥
विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च ।
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥ ३ ॥
वातलाहारचेष्टाया वातलायाः समीरणः ।
विवृद्धो योनिमाश्रित्य योनेस्तोदं सवेदनम् ॥
स्तम्भं पिपीलिकासृप्तिमिव कर्कशतां तथा ।
करोति सुप्तिमायासं वातजांश्चापरान् गदान् ॥
सा स्यात् सशब्दरुक्फेनतनुरूक्षार्त्तवानिलात् ॥ ४ ॥
व्यापत् कट्वम्ललवणक्षाराद्यैः पित्तजा भवेत् ।

दाहपाकज्वरोष्णार्त्ता नीलपीतसितार्त्तवा ॥
भृशोष्णाकुणपस्रावा योनिः स्यात् पित्तदूषिता ॥ ५ ॥
कफोऽभिष्यन्दिभिर्वृद्धो योनिञ्चेद् दूषयेत् स्त्रियाः।
सशीतां पिच्छिलां कुर्य्यात् कण्डूग्रस्तामवेदनाम् ।
पाण्डुवर्णां तथा पाण्डुपिच्छिलार्त्तववाहिनीम् ॥ ६ ॥
समाश्रित्य रसान् सर्व्वान् दूषयित्वा त्रयो मलाः।
योनिगर्भाशयस्थाः स्वैर्योनिं युञ्जन्ति लक्षणैः॥
सा भवेद्दाहशूलार्त्ता श्वेतपिच्छिलवाहिनी ॥ ७ ॥
रक्तपित्तकरैर्नार्य्या रक्तं पित्तेन दूषितम् ।
अतिप्रवर्त्तते योन्यां लब्धे गर्भेऽपि सासृजा ॥
योनिगर्भाशयस्थं चेत् पित्तं संदूषयेदसृक् ।
सारजस्का मता कार्श्यवैवर्ण्यजननी भृशम् ॥ ८ ॥
योन्यामधावनात् कण्डूं जाताः कुर्व्वन्ति जन्तवः।
सा स्यादचरणा कण्ड्वा तयातिनरकाङ्क्षिणी ॥ ९ ॥
पवनोऽतिव्यवायेन शोफसुप्तिरुजः स्त्रियाः।
करोति कुपितो योनौ सा चातिचरणा मता ॥ १० ॥
मैथुनादतिबालायाः पृष्ठकट्यूरुवंक्षणम् ।
रुजयन् दूषयेद् योनिं वायुः प्राक्चरणा हि सा ॥ ११ ॥
गर्भिण्याः श्लेष्मलाभ्यासाच्छर्द्दिश्वासविनिग्रहात् ।
वायुर्व्वृद्धः कफं योनिमुपनीय प्रदूषयेत् ॥
पाण्डुं सतोदमास्रावं श्वेतं स्रवति वा कफम् ।
कफवातामयव्याप्ता सा स्याद् योनिरुपप्लुता ॥ १२ ॥
पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।

पित्तसंमूर्च्छितो वायुर्योनिं दूषयति स्त्रियाः ॥
शूना स्पर्शासहा सार्त्तिर्नीलपीतमसृक् स्रवेत् ।
श्रोणिवङ्क्षणपृष्ठार्त्तिज्वरार्त्तायाः परिप्लुता ॥ १३ ॥
वेगोदावर्त्तनाद् योनिमुदावर्त्तयतेऽनिलः ।
सा रुगार्त्ता रजः कृच्छ्रेणोदावृत्य विमुञ्चति ॥
आर्त्तवे सा विमुक्ते तु तत्क्षणं लभते सुखम् ।
रजसो गमनादूर्द्ध्वं ज्ञेयोदावर्त्तिनी बुधैः ॥ १४ ॥
अकाले वाहमानाया गर्भेण पिहितोऽनिलः ।
कर्णिकां जनयेद् योनौ श्लेष्मरक्तेन मूर्च्छितः ॥
रक्तमार्गावरोधिन्यसा तया कर्णिकयान्विता ।
सा योनिः सर्व्वभिषजा नामतः कर्णिनी मता ॥ १५ ॥
रौक्ष्याद्वायुर्यदा गर्भं जातं जातं विनाशयेत् ।
दुष्टशोणितजं नार्य्याः पुत्रघ्नी नाम सा मता ॥ १६ ॥
व्यवायमतितृप्तायां भजन्त्यास्त्वन्नपीड़ितः ।
वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः ॥
योनेर्मुखं वक्रयति सास्थिमांसानिलार्त्तिभिः ।
भृशार्त्तिर्मैथुनासक्ता योनिरन्तर्मुखी मता ॥ १७ ॥
गर्भस्थायाः स्त्रिया रौक्ष्याद्वायुर्योनिं प्रदूषयन् ।
मातृदोषादणुद्वारां कुर्य्यात् सूचीमुखी तु सा ॥ १८ ॥
व्यवायकाले रुन्धन्त्या वेगान् प्रकुपितोऽनिलः ।
कुर्य्याद्विएमूत्रसङ्गार्त्तिं शोषं योनिमुखस्य च ॥
षड़हात् सप्तरात्राद्वा शुक्रं गर्भाशयं गतम् ।
सरुजं नीरुजं वापि या स्रवेत् सा तु वामिनी ॥ १९ ॥

बीजदोषात् तु गर्भस्थमारुतोपहताशया।
ऋतुद्वेषिण्यस्तनी च षण्डी स्यादनुपक्रमा ॥ २० ॥
विषमदुःखशय्यातिमैथुनात् कुपितोऽनिलः।
गर्भाशयस्य योन्याश्च मुखं विष्टम्भयेत् स्त्रियाः ॥
असंवृतमुखी सार्त्तिः सफेनार्त्तववाहिनी।
मांसोत्सन्ना महायोनिः पर्व्ववङ्क्षणशूलिनी। २१ ॥
इत्येतैर्लक्षणैः प्रोक्ता विंशतिर्योनिजा गदाः ॥
न शुक्रं धारयत्येभिर्दोषैर्योनिरुपद्रुता।
तस्माद्गर्भं न गृह्णाति स्त्री गच्छत्यामयान् बहून् ॥
गुल्मार्शःप्रदरादींश्च वाताद्यैश्चातिपीड़नम् ॥ २२ ॥
आसां षोड़श यास्त्वन्त्या आद्ये द्वे पित्तदोषजे
परिप्लुता वामिनी च वातपित्तात्मिके मते ॥
कर्णिन्युपप्लुते वातकफाच्छेषास्तु वातजाः।
देहं वातादयस्तासां स्वैर्लिङ्गैः पीड़यन्ति हि ॥ २३ ॥
स्नेहनस्वेदवस्त्यादि वातजास्वनिलापहम्।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ॥
श्लेष्मलासु च रूक्षोष्णं कर्म्म कुर्य्याद्विचक्षणः।
सन्निपाते विमिश्रन्तु संसृष्टासु च कारयेत् ॥ २४ ॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् पुनः।
पाणिना नमयेज्जिह्मां संवृतां वर्द्धयेत् पुनः ॥
प्रवेशयेन्निःसृताञ्च विवृतां परिवर्त्तयेत्।
योनिः स्थानापवृत्ता हि शल्यभूता स्त्रिया मता ॥
सर्व्वां व्यापन्नयोनिन्तु कर्म्मभिर्वमनादिभिः।

मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥
सर्व्वतः सुविशुद्धायाः शेषं कर्म्म विधीयते । २५ ॥
वातव्याधिहरं कर्म्म वातार्त्तानां सदा हितम् ।
औदकानूपजैर्मांसैः क्षीरैः सतिलतण्डुलैः ॥
सवातघ्नौषधैर्नाड़ीकुम्भीस्वेदैरुपाचरेत् ॥
आक्तां लवणतैलेन साश्मप्रस्तरसङ्करैः ।
स्विन्नां कोष्णाम्बुसिक्ताङ्गीं वातघ्नैर्भोजयेद्रसैः ॥ २६ ॥
बलाद्रोणद्वयक्वाथे घृततैलाढ़कं पचेत् ।
स्थिरापयस्याजीवन्तीवीरर्षभकजीवकैः ॥
श्रावणीपिप्पलीमूलपीलुमाषाख्यपर्णिभिः ।
शर्कराक्षीरकाकोलीकाकनासाभिरेव च ॥
पिष्टैश्चतुर्गुणक्षीरे सिद्धं पेयं यथाबलम् ।
वातपित्तकृतान् रोगान् हत्वा गर्भं ददाति तत् ॥ २७ ॥
काश्मर्य्यत्रिफलाद्राक्षाकासमर्द्दपरूषकैः ।
पुनर्नवाद्विरजनीकाकनासासहाचरैः ॥
शतावर्य्या गुड़ूच्याश्च प्रस्थमक्षसमैर्घृतात् ।
साधितं योनिवातघ्नं गर्भदं परमं पिबेत् ॥ २८ ॥
पिप्पलीः किंशुकाजाजीवृषकं सैन्धवं वचाम् ।
यवक्षाराजमोदे च शर्करां चित्रकं तथा ॥
पिष्ट्वा प्रसन्नयालोड्य घृतभृष्टानि दापयेत् ।
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ २९ ॥
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।
पिबेत् सलवणैर्मद्यैः पिप्पलीकुञ्चिके तथा ॥

रास्नाश्वदंष्ट्राहपकैः पिबेच्छूले पयः शृतम् ।
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचयेत् ॥
सैन्धवं तगरं कुष्ठं बृहती देवदारु च ।
समांशैः साधितं कल्कैस्तैलं धार्य्यं रुजापहम् ॥ ३० ॥
गुडूचीमालतीरास्नाबलामधुकचित्रकैः ।
निदिग्धिकादेवदारुयूथिकाभिश्च कार्षिकैः ॥
तैलप्रस्थं गवां मूत्रे क्षीरे च द्विगुणे पचेत् ।
वातार्त्तानाञ्च योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥
वातार्त्तायाः पिचुं दद्याद् योनौ च प्रणयेत्ततः ।
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ॥
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफातुरा ।
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ॥ ३१ ॥
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ।
पित्तघ्नौषधसिद्धानि कार्य्याणि भिषजा तथा ॥ ३२ ॥
शतावरीमूलतुलाश्चतस्रः संप्रपीड़येत् ।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम् ॥
जीवनीयैः शतावर्य्या मृद्वीकाभिः परूषकैः ।
पिष्टैः पियालैश्चाचांशैर्द्वियष्टिमधुकैर्भिषक् ॥
सिद्धे शीते च मधुनः पिप्पल्याश्च पलाष्टकम् ।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम् ॥
ब्राह्मणान् प्राशयेत् पूर्व्वं लिह्यात् पाणितलं ततः ।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत् ॥
क्षतं क्षयं रक्तपित्तं कासं श्वासं हलीमकम् ।

कामलां वातरक्तञ्च वीसर्पं हृच्छिरोग्रहम्।
उन्मादारत्यपस्मारान् वातपित्तात्मकान् जयेत्॥ ३३॥
इति बृहच्छतावरीघृतम्।
एवमेव क्षीरसर्पिर्जीवनीयोपसाधितम्।
गर्भदं पित्तलानाञ्च योनीनां स्याद्भिषग्जितम्॥
योन्याः श्लेष्मप्रदुष्टाया वर्त्तिः संशोधनी हिता।
वाराहे बहुशः पित्ते भावितैर्लक्तकैः कृता॥
भावितं पयसार्केषा यवचूर्णं ससैन्धवम्।
वर्त्तिः कृता मुहुर्धार्य्या ततः सेच्या सुखाम्बुना॥
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी॥ ३४॥
उदुम्बरशलाटूनां द्रोणमद्रोणसंयुतम्।
सपञ्चवल्ककुलकमालतीनिम्बपल्लवम्॥
निशां स्थाप्य जले तस्मिंस्तैलप्रस्थं विपाचयेत्।
लाक्षाधवपलाशत्वङ्निर्यासैः शाल्मलेन च॥
पिष्टैः सिद्धन्तु तत् तैलं पिचुर्योनौ रुजापहः।
सशर्करैः कषायैश्च शीतैः कुर्व्वीत सेचनम्॥
पिच्छिला विवृता कालदुष्टा योनिश्च दारुणा।
सप्ताहात्सिध्यति क्षिप्रमपत्यञ्चापि विन्दति॥ ३५॥
उदुम्बरस्य दुग्धेन षट्कृत्वो भावितात् तिलात्।
तैलं क्वाथेन तस्यैव सिद्धं धार्य्यञ्च पूर्व्ववत्॥ ३६॥
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः।
जम्ब्वाम्रमध्यकासीसलोध्रकट्फलतिन्दुकैः॥

सौराष्ट्रिकादाड़िमत्वगुदुम्बरशलाटुभिः।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत्॥
तैलप्रस्थं पिचुं तस्माद्योनौ च प्रणयेत् ततः।
कटीपृष्ठत्रिकाभ्यङ्गं स्नेहवस्तिञ्च दापयेत्॥
पिच्छिला स्राविणी योनिर्विप्लुतोपप्लुता तथा।
उत्ताना चोन्नता शूना सिध्येत् सस्फोटशूलिनी॥ ३७॥
करीरधवनिम्बार्कवेणुकोशाम्रजाम्बवैः।
जिङ्गिनीवृषमूलानां क्वाथैर्माद्वीकशीधुभिः॥
संयुक्तैर्धावनं मिश्रैर्योन्यास्रावविनाशनम्।
कुर्य्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः॥
पिप्पल्ययोरजःपथ्याप्रयोगा मधुना हिताः॥
श्लेष्मलायां कटुप्रायाः समूत्रा वस्तयो हिताः।
पित्ते समधुरक्षीरा वाते तैलाम्लसंयुताः॥
सन्निपातसमुत्थायाः कर्म्म साधारणं मतम्। ३८॥
रक्तयोन्यामसृग्वर्णैरनुबन्धं समीक्ष्य च॥
ततः कुर्य्याद् यथादोषं रक्तस्थापनमौषधम्।
तिलचूर्णं दधि घृतं फाणितं शौकरी वसा।
क्षौद्रेण संयुतं पेयं वातासृग्दरनाशनम्॥
वराहस्य रसो सेव्यः सकौलत्थोऽनिलाधिके।
शर्कराक्षौद्रयष्ट्याह्वनागरैर्वा युतं दधि॥
पयस्योत्पलशालूकविसकालीयकाम्बुदान्।
सपयःशर्कराक्षौद्रानेकशोऽसृग्दरे पिबेत्॥ ३९॥
पाठाजम्ब्वाम्रयोर्मध्यं शिलोद्भेदं रसाञ्जनम्।

अम्बष्ठकीं मोचरसं समङ्गां पद्मकेशरम् ॥
वाह्लीकातिविषे बिल्वं मुस्तं लोध्रं सगैरिकम् ।
कट्फलं मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम् ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्ज्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
तानि क्षौद्रेण संयोज्य पिबेत् तण्डुलवारिणा ।
अर्शःसु चातिसारेषु रक्तं यच्चोपवेश्यते ॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥
स्त्रीणां श्यावारुणं यच्च प्रसह्य विनिवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ ४० ॥

इति पुष्यानुगं चूर्णम् ।

तण्डुलीयकमूलन्तु सक्षौद्रं तण्डुलाम्बुना ।
रसाञ्जनञ्च लाक्षाञ्च च्छागेन पयसा पिबेत् ॥
पत्रकल्कौ घृते भृष्टौ राजादनकपित्थयोः ।
पित्तानिलहरौ पैत्ते सर्व्वथैवास्रपित्तजित् ॥
मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु ।
मद्यैर्निम्बगुडूच्यौ वा कफजेऽसृग्दरे हितम् ॥
विरेचनं महातिक्तं पित्तजेऽसृग्दरे पिबेत् ।
हितं गर्भपरिस्रावे यच्चोक्तं तच्च कारयेत् ॥ ४१ ॥
काश्मर्य्यकुटजक्वाथसिद्धमुत्तरवस्तिना ।
रक्तयोन्यरजस्कानां पुत्रघ्न्याश्च हितं घृतम् ॥ ४२ ॥
मृगाजाविवराहासृग्दध्यम्लक्षौद्रसर्पिषा ।

अरजस्का पिवेत् सिद्धं जीवनीयैः पयोऽपि वा ॥ ४३ ॥
कर्णिन्यचरणाशुष्कयोनिप्राक्चरणासु तु ।
कफवाते च दातव्यं तैलमुत्तरवस्तिना ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ॥
स्रोतसां शोधनं कण्डूक्लेदशोफहरञ्च तत् ॥ ४४ ॥
वातघ्नैः शतपाकैस्तु तैलैः प्रागतिचारिणी ।
आस्थाप्या चानुवास्या च स्वेद्या चानिलसूदनैः ।
स्नेहद्रव्यैस्तथाहारैरुपनाहैश्च युक्तितः ॥
शताह्वायवगोधूमकिण्वकुष्ठप्रियङ्गुभिः ।
बलाखुपर्णिकास्नेहैः संयावा धारणे मताः ॥ ४५ ॥
वामिन्युपप्लुतानाञ्च स्नेहस्वेदादिकः क्रमः ।
कार्य्यस्ततः स्नेहपिचुस्ततः सन्तर्पणं भवेत् ॥ ४६ ॥
शल्लकीजिङ्गिनीजम्बुधवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहपिचुः स्याद्विप्लुतापहः ॥ ४७ ॥
कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ।
वस्तमूत्रकृता धार्य्या सर्व्वञ्च श्लेष्मनुद्धितम् ॥ ४८ ॥
त्रैवृतं स्नेहनं स्वेदो ग्राम्यानूपौदका रसाः ।
दशमूलपयोवस्तिश्चोदावर्त्तानिलार्त्तिषु ॥ ४९ ॥
त्रैवृतेनानुवासश्च वस्तिश्चोत्तरसंज्ञितः ।
एतदेव महायोन्यां स्रस्तायाञ्च विधीयते ॥
वराहऋक्षवसा घृतञ्च मधुरैः शृतम् ।
पूरयित्वा महायोनिं बध्नीयात् क्षौमलक्तकैः ॥

प्रसुप्तां सर्पिषाभ्यज्य क्षीरस्विन्नां प्रवेश्य च ।
बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः ॥
यच्च वातविकाराणां कर्म्मोक्तं तच्च कारयेत् ।
सर्व्वव्यापत्सु मतिमान् महायोन्यां विशेषतः ॥
न हि वाताहते योनिर्नारीणां संप्रदुष्यति ।
शमयित्वा तमन्यस्य कुर्य्याद्दोषस्य भेषजम् ॥ ५० ॥
रोहितकान्मूलकल्कं पाण्डरेऽसृग्दरे पिबेत् ।
जलेनामलकीबीजकल्कं वा ससितामधुम् ॥
मधुनामलकं चूर्णं रसं वा लेहयेच्च ताम् ।
न्यग्रोधत्वक्कषायेण लोध्रकल्कं तथा पिबेत् ॥
आस्रावे क्षौमपट्टं वा भावितं तेन धारयेत् ।
श्लक्ष्णत्वक्चूर्णपिण्डं वा धारयेन्मधुना कृतम् ॥
योन्या स्नेहाक्तया लोध्रप्रियङ्गुमधुकस्य च ।
धार्य्या मधुयुता वर्त्तिः कषायाणाञ्च सर्व्वशः ॥
स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।
सरलागुग्गुलुयवैः सतैलकटुमत्स्यकैः ॥
कासीसं त्रिफलाकाङ्क्षीसमङ्गाम्बास्थिधातकी ।
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥
पलाशसर्ज्जजम्बुत्वक्समङ्गामोचधातकी ।
सपिच्छिला परिक्लिन्ना स्तम्भनः कल्क इष्यते ॥
स्तब्धानां कर्कशानाञ्च कार्य्यं मार्द्दवकारकम् ।
धारयेद्वेशवारं वा कृशरां पायसं तथा ॥
दुर्गन्धीनां कषायः स्यात् तौवरः कल्क एव च ।

चूर्णं वा सर्व्वगन्धानां पूतिगन्धापकर्षणम् ॥ ५१ ॥
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ।
अदुष्टे प्राकृते वीजे गर्भावक्रमणे सति ॥
पञ्चकर्म्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ।
परीक्ष्य वर्णैर्दोषाणां दुष्टिघ्नैस्तमुपाचरेत् ॥ ५२ ॥

भवति चात्र ।

सलिङ्गा व्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरतः सम्यक् मुनिना तत्त्वदर्शिना ॥ ५३ ॥
पुनरेवाग्निवेशस्तु पप्रच्छ भिषजां वरम् ।
आत्रेयमुपसङ्गम्य शुक्रदोषास्त्वयानघ ॥
रोगाध्याये समुद्दिष्टा ह्यष्टौ पुंसामशेषतः ।
तेषां हेतुं भिषक्श्रेष्ठ दुष्टादुष्टस्य चाकृतिम् ॥
चिकित्सितञ्च कार्त्स्न्येन क्लैब्यं यच्च चतुर्व्विधम् ।
उपद्रवेषु योनीनां प्रदरो यश्च कीर्त्तितः ॥
तेषां निदानं लिङ्गञ्च चिकित्साञ्चैव तत्त्वतः ।
समासव्यासभेदेन ब्रूहि नो भिषजां वर ॥ ५४ ॥
तस्मै शुश्रूषमाणाय प्रोवाच मुनिपुङ्गवः ॥
वीजं यस्माद्व्यवायेषु हर्षयोनिसमुत्थितम् ।
शुक्रं पौरुषमित्युक्तं तस्माद्वक्ष्यामि तच्छृणु ॥ ५५ ॥
यथा बीजमकालाम्बुक्रमिकीटाग्निदूषितम् ।
न विरोहति सन्दुष्टं तथा शुक्रं शरीरिणाम् ॥ ५६ ॥
अतिव्यवायाद्व्यायामादसात्म्यानाञ्च सेवनात् ।
अकाले वाप्ययोनौ वा मैथुनं न च गच्छतः ॥

रूक्षतिक्तकषायातिलवणाम्लोष्णसेवनात् ।
नारीणामरसज्ञत्वात् स्रवणाज्जरया तथा ॥
चिन्ताशोकादविस्रम्भाच्छस्त्रक्षाराग्निविभ्रमात् ।
भयात् क्रोधादतीसाराद् व्याधिभिः कर्षितस्य च ॥
वेगाघातात् क्षयाच्चापि धातूनां संप्रदूषणात् ।
दोषाः पृथक् समस्ता वा प्राप्य रेतोवहाः शिराः ॥
शुक्रं संदूषयन्त्याशु तद्वक्ष्यामि विभागशः ॥ ५७ ॥
फेनिलं तनु रूक्षञ्च विवर्णं पूति पिच्छिलम् ।
अन्यधातूपसंसृष्टमवसादि तथाष्टमम् ॥ ५८ ॥
फेनिलं तनु रूक्षञ्च कृच्छ्रेणाल्पञ्च मारुतात् ।
भवत्युपहतं शुक्रं न तद्गर्भाय कल्पते ॥
सनीलमथवा पीतमत्युष्णं पूतिगन्धि च ।
दहल्लिङ्गं विनिर्याति शुक्रं पित्तेन दूषितम् ॥
श्लेष्मणा बद्धमार्गन्तु भवत्यत्यर्थपिच्छिलम् ॥
स्त्रीणामत्यर्थगमनादभिघातात् क्षतादपि ।
शुक्रं प्रवर्त्तते जन्तोः प्रायेण रुधिरान्वयम् ॥
वेगसन्धारणाच्छुक्रं वायुना विहते पथि ।
कृच्छ्रेण याति ग्रथितमवसादि तथाष्टमम् ॥
इति दोषाः समाख्याताः शुक्रस्याष्टौ सलक्षणाः ॥ ५९ ॥
स्निग्धं घनं पिच्छिलञ्च मधुरञ्चाविदाहि च ।
रेतः शुद्धं विजानीयाच्छ्वेतं स्फटिकसन्निभम् ॥ ६० ॥
वाजीकरणयोगोक्तैरुपयोगैः सुखैर्हितैः ।
रक्तपित्तहरैर्योगैर्योनिव्यापदिकैस्तथा ॥

दुष्टं यदा भवेद्रेतः तदा तत् समुपाचरेत् ॥ ६१ ॥
घृतञ्च जीवनीयं यच्चावनप्राश एव च ।
गिरिजस्य प्रयोगश्च रेतोदोषान् व्यपोहति ॥
वातान्विते हिताः शुक्रे निरूहाः सानुवासनाः ।
ब्राह्मामामलकीयञ्च पैत्ते शस्तं विरेचनम् ।
मागध्यमृतलोहानां त्रिफलाया रसायनम् ।
कफोद्भवं शुक्रदोषं हन्याद्भल्लातकस्य च ॥
अन्यधातूपसंसृष्टं शुक्रं वीक्ष्य भिषक् क्रियाम् ।
यथादोषं प्रयुञ्जीत दोषधातुभिषग्जितम् ॥
सर्पिः पयो रसाः शालिर्यवगोधूमषष्टिकाः ।
प्रशस्ताः शुक्रदोषेषु वस्तिकर्म्म विशेषतः ॥ ६२ ॥
रेतोदोषोद्भवं क्लैव्यं यस्माच्छुद्ध्यैव सिध्यति ।
अतो वक्ष्यामि ते सम्यगग्निवेश यथायथम् ॥
वीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ।
क्लैव्यं सम्पद्यते तस्य शृणु सामान्यलक्षणम् ॥ ६३ ॥
सङ्कल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम् ।
न याति लिङ्गशैथिल्यात् कदाचिद् याति वा यदि ॥
श्वासार्त्तः स्विन्नगात्रश्च मोघसङ्कल्पचेष्टितः ।
म्लानशिश्नश्च निर्व्वीर्य्यः स्यादेतत् क्लैव्यलक्षणम् ॥
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ॥ ६४ ॥
शीतरूक्षाल्पसंक्लिष्टविषमासात्म्यभोजनात् ।
शोकचिन्ताभयत्रासात् स्त्रीणाञ्चातिनिषेवणात् ॥
अभिचारादविस्रम्भाद्रसादीनाञ्च संक्षयात् ।

वातादीनाञ्च वैषम्याद् विरुद्धाध्यशनात् क्रमात् ॥
नारीणामरसज्ञत्वात् पञ्चकर्म्मापचारतः ।
बीजोपघाताद् भवति पाण्डुवर्णः सुदुर्ब्बलः ॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः ।
हृत्पाण्डुकामलारोगतमकश्रमपीड़ितः ॥
छर्द्द्यतीसारशूलार्त्तः कासज्वरनिपीड़ितः ।
बीजोपघातजं क्लैब्यं ध्वजभङ्गकृतं शृणु ॥ ६५ ॥
अत्यम्ललवणक्षारविरुद्धासात्म्यभोजनात् ।
अत्यम्बुपानाद्विषमपिष्टान्नगुरुभोजनात् ॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ।
कन्यानाञ्चैव गमनादयोनिगमनादपि ॥
दीर्घरोगां * चिरोत्सृष्टां तथैव च रजस्वलाम् ।
दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुताम् ।
ईदृशीं प्रमदां मोहाद् यो गच्छेत् कामहर्षितः ॥
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ।
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्ठप्रहारनिष्पेषात् शूकानाञ्चातिसेवनात् ।
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्त्तते ॥ ६६ ॥
श्वयथुर्वेदना मेढ्रे रागश्चैवोपजायते ।
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ॥
मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि ।
पुलाकोदकसङ्काशः श्यावः श्यावारुणप्रभः ॥

---

* दीर्घरोगीमिति पाठान्तरम्।

वलयीकुरुते चापि कठिनश्च परिग्रहः।
ज्वरस्तृष्णा भ्रमो मूर्च्छा छर्द्दिश्चास्योपजायते ॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम्।
अग्निनेव च दग्धस्य तीव्रो दाहः प्रवर्त्तते।
वस्तौ वृषणयोर्वापि सेवन्यां वंक्षणेषु च ॥
कदाचित् पिच्छिलो वापि पाण्डुः स्रावश्च जायते।
श्वयथुश्च भवेन्मन्दः स्तिमितोऽल्पपरिस्रवः ॥
चिरादुपैति वा पाकं शीघ्रं वाथ प्रमुच्यते।
जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च ॥
विशीर्य्यते मणिश्चास्य मेढ्रं मुष्कमथापि च।
ध्वजभङ्गकृतं क्लैव्यमित्येतत् समुदाहृतम्।
एतं पञ्चविधं केचित् ध्वजभङ्गं वदन्त्यपि ॥ ६७ ॥
क्लैव्यं जरासम्भवं हि प्रवक्ष्याम्यथ तच्छृणु।
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम्।
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥
बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिक्षयात्।
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात् क्रमात् ॥
जरासम्भवजं क्लैव्यमित्येतैर्हेतुभिर्नृणाम्।
जायते तेन स क्षिप्रं क्षीणधातुः सुदुर्ब्बलः ॥
विवर्णो दुर्ब्बलो दीनः क्षिप्रं व्याधिमथाश्नुते।
एतज्जरासम्भवं हि चतुर्थं क्षयजं शृणु ॥ ६८ ॥
अतीवचिन्तनाच्चैव शोकात् क्रोधाद्भयादपि।

ईर्ष्योत्कण्ठामदोद्वेगान् सदा विशति यो नरः ॥
कृशो वा सेवते रूक्षमन्नपानं तथौषधम् ।
दुर्ब्बलप्रकृतिश्चैव निराहारो भवेद्यदि ॥
असात्म्यभोजनो वापि हृदये या व्यवस्थितः ।
रसः प्रधानधातुर्हि क्षीयेताशु ततो नृणाम् ॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ।
शुक्रावसानास्तेभ्यो हि शुक्रं धाम परं मतम् ॥
चेतसो वातिहर्षेण व्यवायं सेवतेऽति यः ।
तस्याशु क्षीयते शुक्रं ततः प्राप्नोति स क्षयम् ॥
घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ।
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ॥ ६९ ॥
एतन्निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्व्विधम् ।
केचित् क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ॥
वदन्ति शेफसश्छेदाद् वृषणोत्पाटनेन वा ।
मातापित्रोर्वीजदोषादशुभैश्चाकृतात्मनः ॥
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ।
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ॥
तत्र सम्पूर्णसर्व्वाङ्गः स भवत्यपुमान् पुमान् ।
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥ ७० ॥
चिकित्सितमतस्तूर्द्ध्वं समासव्यासतः शृणु ।
शुक्रदोषेषु निर्द्दिष्टं भेषजं यन्मयानघ ॥
क्लैब्योपशान्तये कुर्य्यात् क्षीणक्षतहितञ्च यत् ।
बस्तयः क्षीरसर्पींषि वृष्ययोगाश्च ये मताः ॥

रसायनप्रयोगांश्च सर्व्वानेतान् प्रयोजयेत्।
समीक्ष्य देहदोषाग्निबलं भेषजकालवित्॥ ७१॥
व्यवायहेतुजं क्लैव्यं यत् स्याद्धेतुविपर्य्ययात्।
दैवव्यपाश्रयैश्चैव भेषजैश्चाभिचारजम्॥
समासेनैतदुद्दिष्टं भेषजं क्लैव्यशान्तये।
विस्तरेण प्रवक्ष्यामि क्लैव्यानां भेषजं पुनः॥ ७२॥
सुस्निग्धस्विन्नगात्रस्य स्नेहयुक्तं विरेचनम्।
प्रदद्यान्मतिमान् वैद्यस्ततस्तमनुवासयेत्।
पलाशैरण्डमुस्ताद्यैः पश्चादास्थापयेत् ततः॥
वाजीकरणयोगांश्च पूर्व्वं ये समुदाहृताः।
भिषजा ते प्रयोज्याः स्युः क्लैव्ये बीजोपघातजे॥ ७३॥
ध्वजभङ्गकृतं क्लैव्यं ज्ञात्वा तस्याचरेत् क्रियाम्।
प्रदेहान् परिषेकांश्च कुर्य्याद्वा रक्तमोक्षणम्॥
स्नेहपानञ्च कुर्व्वीत सस्नेहं वा विरेचनम्।
अनुवासं ततः कुर्य्यादथवास्थापनं पुनः॥
व्रणवच्च क्रियाः सर्व्वास्ततः कुर्य्याद्विचक्षणः॥ ७४॥
जरासम्भवजे क्लैव्ये क्षयजे चापि कारयेत्।
स्नेहस्वेदोपपन्नस्य सस्नेहं शोधनं हितम्॥
क्षीरसर्पिर्व्वृष्ययोगा वस्तयश्चैव यापनाः।
रसायनप्रयोगाश्च तयोर्भेषजमुच्यते।
विस्तरेणैतदुद्दिष्टं क्लैव्यानां भेषजं परम्॥ ७५॥

इति क्लैव्यचिकित्सा।

यः पूर्व्वमुक्तः प्रदरः शृणु हेत्वादिभिस्तु तम्॥

यात्यर्थं सेवते नारी लवणाम्लगुरूणि च ।
कटून्यथ विदाहीनि स्निग्धानि पिशितानि च ॥
ग्राम्यौदकानि मेध्यानि कृशरां पायसं दधि ।
शुक्तमस्तुसुरादीनि भजन्त्याः कुपितोऽनिलः ॥
रक्तं प्रमाणमुत्क्रम्य गर्भाशयगताः शिराः ।
रजोवहाः समाश्रित्य रक्तमादाय तद्रजः ॥
यस्माद्विवर्द्धयत्याशु रसभावाद्विमानता ॥
तस्मादसृग्दरं प्राहुरेतत् तन्त्रविशारदाः ।
रजः प्रदीर्य्यते यस्मात् प्रदरस्तेन स स्मृतः ॥ ७६ ॥
सामान्यतः समुद्दिष्टं कारणं लिङ्गमेव च ।
चतुर्व्विधं व्यासतस्तु वाताद्यैः सन्निपाततः ।
अतःपरं प्रवक्ष्यामि हेत्वाकृतिभिषग्जितम् ॥ ७७ ॥
रूक्षादिभिर्मारुतस्तु रक्तमादाय पूर्व्ववत् ।
कुपितः प्रदरं कुर्य्याल्लक्षणं तस्य मे शृणु ॥ ७८ ॥
फेनिलं तनु रूक्षञ्च श्यावञ्चारुणमेव च ।
किंशुकोदकसङ्काशं सरुजं वाथ नीरुजम् ॥
कटीवंक्षणहृत्पार्श्वपृष्ठश्रोणिषु मारुतः ।
करोति वेदनां तीव्रामेतद्वातात्मकं विदुः ॥ ७९ ॥
अम्लोष्णलवणक्षारैः पित्तं प्रकुपितं यदा ।
पूर्व्ववत् प्रदरं कुर्य्यात् पैत्तिकं लिङ्गतः शृणु ॥ ८० ॥
सनीलमथवा पीतमत्युष्णमसितं तथा ।
नितान्तरक्तं स्रवति मुहुर्म्मुहुरथार्त्तिमत् ॥
विदाहरागतृष्णामोहज्वरभ्रमसमायुतम् ।

असृग्दरं पैत्तिकन्तत् श्लैष्मिकन्तु प्रवक्ष्यते ॥ ८१ ॥
गुर्व्वादिभिर्हेतुभिश्च पूर्व्ववत् कुपितः कफः।
प्रदरं कुरुते तस्य लक्षणं तत्त्वतः शृणु ॥ ८२ ॥
पिच्छिलं पाण्डुवर्णञ्च गुरु स्निग्धञ्च शीतलम्।
स्रवत्यसृक् श्लेष्मलञ्च तथा मन्दरुजाकरम्।
छर्द्यरोचकहृल्लासश्वासकाससमन्वितम् ॥ ८३ ॥
वक्ष्यते चीरदोषाणां सामान्यमिह कारणम्।
यत् तदेव त्रिदोषस्य कारणं प्रदरस्य तु ॥
त्रिलिङ्गसंयुतं विद्यान्नैकावस्थमसृग्दरम् ॥ ८४ ॥
नारी त्वतिपरिक्लिष्टा यदा प्रक्षीणशोणिता।
सर्व्वहेतुसमाचारादतिवृद्धस्तदानिलः ॥
रक्तमार्गेण सृजति प्रत्यनीककरं कफम्।
दुर्गन्धं पिच्छिलं शीतं विदग्धं पित्ततेजसा ॥
वसां मेदश्च यावद्धि समुपादाय वेगवान्।
सृजत्यार्त्तवमार्गेण सर्पिर्मज्जवसोपमम् ॥
शश्वत् स्रवत्यथास्रावं तृष्णादाहज्वरान्वितम्।
क्षीणरक्तां दुर्व्वलाञ्च तामसाध्यां विवर्ज्जयेत् ॥ ८५ ॥
मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुबन्धि च।
नैवातिबहुलात्यल्पमार्त्तवं शुद्धमादिशेत् ॥
गुञ्जाफलसवर्णञ्च पद्मालक्तकसन्निभम्।
इन्द्रगोपकसङ्काशमार्त्तवं शुद्धमादिशेत् ॥ ८६ ॥
योनीनां वातलाद्यानां यदुक्तमिह भेषजम्।
चतुर्णां प्रदराणाञ्च तत् सर्व्वं कारयेद्भिषक् ॥

रक्तातिसारिणाञ्चैव तथा लोहितपित्तिनाम् ।
रक्तार्शसाञ्च यत् प्रोक्तं भेषजं तच्च कारयेत् ॥ ८७ ॥

इति प्रदरचिकित्सा ।

धात्रीस्तनस्तन्यसम्पदुक्ता विस्तरतः पुरा ।
स्तन्यसञ्जननञ्चैव स्तन्यस्य च विशोधनम् ॥
वातादिदुष्टलिङ्गञ्च क्षीणस्य च चिकित्सितम् ।
तत्र सर्व्वमुक्तं ये त्वष्टौ क्षीरदोषाः प्रकीर्त्तिताः ॥
वातादिष्वेव तान् विद्याच्छास्त्रचक्षुर्भिषग्वरः ।
विविधास्तु यतः शिष्यास्ततो वक्ष्यामि विस्तरम् ॥ ८८ ॥
अजीर्णासात्म्यविषमविरुद्धात्यर्थभोजनात् ।
लवणाम्लकटुक्षारप्रक्लिन्नानाञ्च सेवनात् ॥
मनःशरीरसन्तापादस्वप्नान्निशि चिन्तनात् ।
प्राप्तवेगप्रतीघातादप्राप्तोदीरणेन च ॥
परमान्नं गुड़कृतं मतूच्यञ्च कृशरां दधि ।
अभिष्यन्दीनि मांसानि ग्राम्यानूपौदकानि च ॥
भुक्त्वा भुक्त्वा दिवास्वप्नान्मद्यस्यातिनिषेवणात् ।
अनायासादभीघातात् क्रोधाच्चातङ्ककर्षणैः ॥
दोषाः क्षीरवहाः प्राप्य शिराः स्तन्यं प्रदूष्य च ।
कुर्य्युरष्टविधं भूयो दोषतस्तन्निबोध मे ॥ ८६ ॥
वैरस्यं फेनसङ्घातो रौक्ष्यञ्चेत्यनिलात्मके ।
पित्ताद्वैवर्ण्यदौर्गन्ध्ये स्नेहपैच्छिल्यगौरवम् ॥
कफाद्भवति रूक्षाद्यैरनिलः स्वैः प्रकोपणैः ।
क्रुद्धः क्षीराशयं प्राप्य रसं स्तन्यस्य दूषयेत् ॥

विरसं वातसंसृष्टं कृशो भवति तत् पिवन्।
न चास्य स्वदते क्षीरं कृच्छ्रेण च विवर्द्धते॥
तथैव वायुः कुपितः स्तन्यमन्तर्विलोड़यन्।
करोति फेनसङ्घातं ततः कृच्छ्रात् प्रवर्द्धते॥
तेन क्षामस्वरो बालो बद्धविरामूत्रमारुतः।
वातिकं शीर्षरोगं वा पीनसं वाधिगच्छति॥
पूर्व्ववत् कुपितः स्तन्ये स्नेहं शोषयतेऽनिलः।
रूक्षं तत् पिवतो रौक्ष्याद्बलह्रासश्च जायते॥ ६० ॥
पित्तमुष्णादिभिः क्रुद्धं स्तन्याशयमभिप्लुतम्।
करोति स्तन्यवैवर्ण्यं नीलपीतासितादिकम्॥
विवर्णगात्रः स्विन्नः स्यात् तृष्णालुर्भिन्नविट् शिशुः।
नित्यमुष्णशरीरश्च नाभिनन्दति तं स्तनम्॥ ६१ ॥
पूर्व्ववत् कुपिते पित्ते दौर्गन्ध्यं क्षीरमृच्छति।
पाण्डामयस्तत् पिवतः कामला च भवेच्छिशोः॥
क्रुद्धो गुर्व्वादिभिः श्लेष्मा क्षीराशयगतः स्त्रियाः।
स्नेहान्वितं वा तत् क्षीरमतिस्निग्धं करोति सः॥
छर्द्दनः कुन्थनस्तेन लालालुर्जायते शिशुः।
नित्योपदिग्धैः स्रोतोभिर्निद्राक्लमसमन्वितः॥
श्वासकासपरीतश्च प्रसेकतमकान्वितः।
अभिभूय कफः स्तन्यं पिच्छिलं कुरुते यदा॥
लालालुः शूनवक्त्राक्षिर्जड़ः स्यात् तत् पिवन् शिशुः।
कफः क्षीराशयगतो गुरुत्वात् क्षीरगौरवम्॥
कुर्य्यात् स्नेहान्वितं पीतं तद्भावात् कफरोगवान्।

अन्यांश्च विविधान् रोगान् कुर्य्यात् चीरसमाश्रितान् ॥ ९२
चीरे वातादिभिर्दुष्टे सम्भवन्ति यदात्मकाः।
तत्रादौ स्तन्यशुद्ध्यर्थं धात्रीं स्नेहोपपादिताम् ॥
संस्वेद्य विधिवद्वैद्यो वमनेनोपपादयेत् ॥ ९३ ॥
वचाप्रियङ्गुयष्ट्याह्वफलवत्सकसर्षपैः।
कल्कैर्निम्बपटोलानां क्वाथैः सलवणैर्वमेत् ॥
सम्यग्वान्तां यथान्यायं कृतसंसर्ज्जनां ततः।
दोषकालबलापेची स्नेहयित्वा विरेचयेत् ॥
त्रिवृतामभयां वापि त्रिफलारससंयुताम्।
पाययेन्मधुसंयुक्तां विरेकार्थं भिषग्वरः ॥
सम्यग् विरिक्तां मतिमान् कृतसंसर्ज्जनां पुनः।
ततो दोषावशेषघ्नैरन्नपानैरुपाचरेत् ॥ ९४ ॥
शालयः षष्टिका वापि श्यामाका भोजने हिताः।
प्रियङ्गवः कोरदूषा यवा वेणुयवास्तथा ॥
वंशवेत्रकलायाश्च शाकाश्च स्नेहसंस्कृताः।
मुद्गान् मसूरान् यूषार्थे कुलत्थांश्च प्रकल्पयेत् ॥ ९५ ॥
निम्बवेत्राग्रकुलकवार्त्ताकामलकैः शृतान्।
सव्योषसैन्धवान् यूषान् दापयेत् स्तन्यशोधनान् ॥
शशान् कपिञ्जलानेणान् संस्कृतांश्च प्रकल्पयेत्।
शार्ङ्गेष्टासप्तपर्णत्वगश्वगन्धाशृतं जलम् ॥
पाययेताथवा स्तन्यशुद्धये रोहिणीशृतम् ॥ ९६ ॥
अमृतासप्तपर्णत्वक्क्वाथञ्चैव सनागरम् ॥
किराततिक्तकक्वाथं श्लोकपादेरितान् पिबेत्।
चीनेतात् स्तन्यशुद्ध्यर्थमिति सामान्यभेषजम् ॥ ९७ ॥

कीर्त्तितं स्तन्यदोषाणां पृथगन्यं निबोध मे।
पाययेद् द्विरसक्षीरां द्राक्षामधुकशारिवाः॥
श्लक्ष्णपिष्टां पयस्याञ्च समालोड्य सुखाम्बुना।
स्तन्यसंशोधनार्थन्तु धात्रीं तु पाययेद् भिषक्॥ ९८॥
पञ्चकोलकुलत्थैश्च पिष्टैरालेपयेत् स्तनौ।
शुष्कौ प्रक्षाल्य निर्दुह्यात् तथा स्तन्यं विशुध्यति॥ ९९॥
फेनसङ्घातवत् क्षीरं यस्यास्तां पाययेत् स्त्रियम्।
पाठानागरशार्ङ्गेष्टामूर्व्वाः पिष्ट्वा सुखाम्बुना॥
अञ्जनं नागरं दारुबिल्वमूलप्रियङ्गवः।
स्तनयोः पूर्व्ववत् कार्य्यं लेपनं क्षीरशोधनम्॥
किराततिक्तकं शुण्ठीं सामृतां क्वाथयेद्भिषक्।
तं क्वाथं पाययेद्धात्रीं स्तन्यदोषनिबर्हणम्॥
स्तनौ चालेपयेत् पिष्टैर्यवगोधूमसर्षपैः।
षड्विरेकाश्रितीयोक्तैरौषधैः स्तन्यशोधनैः॥ १००॥
रूक्षक्षीरा पिवेत् क्षीरं तैर्वा सिद्धं घृतं पिवेत्॥
पूर्व्ववज्जीवकाद्यञ्च पञ्चमूलञ्च लेपनम्।
स्तनयोः संविधातव्यं सुखोष्णं स्तन्यशोधनम्॥ १०१॥
यष्टीमधुकमृद्वीकापयस्यासिन्धुवारिकाः।
शीताम्बुना पिवेत् कल्कं क्षीरवैवर्ण्यनाशनम्॥
द्राक्षामधुककल्केन स्तनौ चास्याः प्रलेपयेत्।
प्रक्षाल्य वारिणा चैव निर्दुह्यात् तौ पुनः पुनः॥ १०२॥
विषाणिकाजशृङ्गौ च त्रिफलां रजनीं वचाम्।
पिवेत् क्षीराम्बुना पिष्ट्वा क्षीरदौर्गन्ध्यनाशनम्॥
लिह्याद्वाप्यभयाचूर्णं सव्योषं माक्षिकाप्लुतम्।

क्षीरदौर्गन्ध्यनाशार्थं धात्री पथ्याशिनी तथा ॥
शारिवोशीरमञ्जिष्ठाश्लेष्मातैर्वा सचन्दनैः ।
पत्राम्बुचन्दनोशीरैः स्तनौ धात्र्याः प्रलेपयेत् ॥ १०३ ॥
स्निग्धक्षीरा दारुमुस्तपाठाः पिष्ट्वा सुखाम्बुना ।
पीत्वा ससैन्धवाः क्षिप्रं क्षीरशुद्धिमवाप्नुयात् ॥ १०४ ॥
पाययेत् पिच्छिलक्षीरां शार्ङ्गेष्टामभयां वचाम् ।
मुस्तनागरपाठाश्च पीताः स्तन्यविशोधनाः ॥
तक्रारिष्टमपि पिबेद्‌यशसा यन्निदर्शितम् ।
विदारीविल्वमधुकैः स्तनौ धात्र्याः प्रलेपयेत् ॥ १०५ ॥
त्रायमाणामृतानिम्बपटोलत्रिफलाशृतम् ।
गुरुक्षीरा पिबेदेतत् स्तन्यदोषविशुद्धये ॥
पिबेद्वा पिप्पलीमूलचव्यचित्रकनागरम् ।
बलानागरशार्ङ्गेष्टामूर्व्वाभिर्लेपयेत् स्तनौ ॥
पृश्निपर्णीपयस्याभ्यां स्तनौ धात्र्याः प्रलेपयेत् ॥ १०६ ॥
अष्टावेते क्षीरदोषा हेतुलक्षणभेषजैः ।
निर्द्दिष्टाः क्षीरदोषोत्थास्तथोक्ताः केचिदामयाः ॥ १०७ ॥
दोषदूष्यमलाश्चैव महतां व्याधयश्च ये ।
त एव सर्व्वे बालानां मात्रा त्वल्पतरा मता ॥
निवृत्तिर्वमनादीनां मृदुतां परतन्त्रताम् ।
वाक्‌चेष्टयोरसामर्थ्यं वीक्ष्य बालेषु शास्त्रवित् ॥
भेषजन्त्वाल्पमात्रन्तु यथाव्याधि प्रयोजयेत् ।
मधुराणि कषायाणि क्षीरवन्ति मृदूनि च ॥ १०८ ॥
अत्यर्थस्निग्धरूक्षोष्णमम्लं कटुविपाकि च ।
गुरु चौषधपानान्नमेतद्बालेषु गर्हितम् ॥ १०९ ॥

समासात् सर्व्वरोगाणामेतद्बालेषु भेषजम् ।
निर्द्दिष्टं शास्त्रबुद्ध्या तत् प्रविभज्य प्रयोजयेत् ॥ ११० ॥
इति स्तन्यदोषबालरोगौ ।

भवन्ति चात्र ।

सलिङ्गव्यापदो योनेः सनिदानचिकित्सिताः ।
उक्ता विस्तरशः सम्यङ् मुनिना तत्त्वदर्शिना ॥ १११ ॥
इति सर्व्वविकाराणामुक्तमेतच्चिकित्सितम् ।
स्थानमेतद्धि तन्त्रस्य रहस्यं परमुच्यते ॥
अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च ।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते ॥
तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत् ।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथातथम् ॥ ११२ ॥
रोगा येऽप्यत्र नोद्दिष्टा बहुत्वान्नामरूपतः ।
तेषामप्येतदेव स्याद्दोषादीन् वीक्ष्य भेषजम् ॥
दोषदूष्यनिदानानां विपरीतं हितं ध्रुवम् ।
उक्तानुक्तान् गदान् सर्व्वान् सम्यगयुक्तं नियच्छति ॥
देशकालप्रमाणानां तथा सात्म्यस्य चैव हि ।
सम्यग्योगोऽन्यथा ह्येषां पथ्यमप्यन्यथा भवेत् ॥ ११३ ॥
आस्यादामाशयस्थांश्च रोगान् नस्तः शिरोगतान् ।
गुदात् पक्वाशयस्थांश्च हन्त्याशु द्रवमौषधम् ॥
शरीरावयवोत्थेषु वीसर्पपिड़कादिषु ।
यथादोषं प्रदेहादि शमनं स्याद्विशेषतः ॥ ११४ ॥
दिनातुरौषधव्याधिजीर्णलिङ्गर्त्तवेक्षणम् ।
कालं विद्याद्दिनावेक्षं पूर्व्वाह्णे वमनं यथा ॥

रोग्यवेक्ष्या यथा प्रातर्निरन्नो बलवान् पिवेत् ।
भेषजं लघुपथ्यान्नैर्युक्तमद्यात् तु दुर्ब्बलः ॥
भैषज्यकालो भक्तादौ मध्ये पश्चान्मुहुर्म्मुहुः ।
सामुद्गं भक्तसंयुक्तं ग्रासे ग्रासान्तरे दश ॥
अपाने विगुणे पूर्व्वं समाने मध्यभोजनम् ।
व्याने तु प्रातरेवाद्यमुदाने भोजनोत्तरम् ॥
वायौ प्राणे प्रदुष्टे तु ग्रासे ग्रासान्तरिष्यते ।
श्वासकासपिपासासु त्ववचार्य्यं मुहुर्म्मुहुः ॥
सामुद्गं हिक्किने देयं लघुनान्नेन संयुतम् ।
सभोज्यन्त्वौषधं भोज्यैर्विचित्रैररुचौ हितम् ॥
ज्वरे पेयाः कषायाश्च चीरसर्पिर्विरेचनम् ।
षड़हे षड़हे देयं कालं वीक्ष्यामयस्य तु ॥
चुद्वेगमोचौ लघुता विशुद्धिर्जीर्णलचणम् ।
तदा भेषजमादेयं स्याद् दोषवदतोऽन्यथा ॥
चयादयश्च दोषाणां वर्ज्ज्यं सेव्यञ्च यच्च यत् ।
ऋताववेक्ष्य यत् कर्म्म सर्व्वं पूर्व्वमुदाहृतम् ॥ ११५ ॥
उपक्रमाणां करणप्रतिषेधे च कारणम् ।
व्याख्यातमबलानां सविकल्पानामवेक्षणे ॥ ११६ ॥
मुहुर्म्मुहुश्च रोगाणामवस्थामातुरस्य च ।
अवेक्षमाणस्तु भिषक् चिकित्सायां न मुह्यति ॥ ११७ ॥
इतोऽयं षड़्विधं कालमनवेक्ष्य भिषग्जितम् ।
प्रयुक्तमहिताय स्यात्क्षस्याकालवर्षवत् ॥ ११८ ॥
व्याधीनामृत्वहोरात्रवयसां भोजनस्य च ।
विशेषो भिद्यते यस्तु कालावेक्षः स उच्यते ॥ ११९ ॥

वसन्ते श्लेष्मजा रोगाः शरत्काले तु पित्तजाः।
वर्षासु वातजाश्चैव प्रायः प्रादुर्भवन्ति हि॥
निशान्ते दिवसान्ते च वर्षान्ते वातजा गदाः।
प्रातःक्षपादौ कफजास्तयोर्मध्ये तु पित्तजाः॥
वयोऽन्तमध्यप्रथमे वातपित्तकफामयाः।
बलवन्तो भवन्त्येव स्वभावाद्वयसो नृणाम्॥
जीर्णान्ते वातजा रोगा जीर्यमाणे तु पित्तजाः।
श्लेष्मजा भुक्तमात्रे तु लभन्ते प्रायशो बलम्॥ १२०॥
नाल्पं हन्त्यौषधं व्याधिं यथापोऽल्पा महानलम्।
दोषवच्चातिमात्रं स्यात्क्षस्यमत्युदकं यथा॥
संप्रधार्य्य बलं तस्मादामयस्यौषधस्य च।
नैवातिबहुलात्यल्पं भैषज्यमवचारयेत्॥ १२१॥
औचित्याद् यस्य यत् सात्म्यं देशस्य पुरुषस्य च।
अपथ्यमपि नैकान्तात् संत्यज्य लभते सुखम्॥
वाह्लीकाः शाहलाश्चीनाः शूलीका यवनाः शकाः।
मांसगोधूममाध्वीकशस्त्रवैश्वानरोचिताः॥
मत्स्यसात्म्यास्तथा प्राच्याः क्षीरसात्म्याश्च सैन्धवाः।
अश्मकावन्तिकानान्तु तैलाम्लं सात्म्यमुच्यते॥
कन्दमूलफलं सात्म्यं विद्यान्मलयवासिनाम्।
सात्म्यं दक्षिणतः पेया मण्डश्चोत्तरपश्चिमे॥
मध्यदेशे भवेत् सात्म्यं यवगोधूमगोरसाः।
तेषां तत् सात्म्यमुद्दिश्य भैषज्यान्यवचारयेत्॥
सात्म्यं ह्याशु बलं धत्ते नातिदोषञ्च बह्वपि॥ १२२॥
योगैरेवं चिकित्सन् हि देशाद्यज्ञोऽपराध्यति।

वयोबलशरीरादिभेदा हि बहवो मताः।
तथान्तःसन्धिमार्गाणां दोषाणां गूढ़चारिणाम्॥
भवेत् कदाचित् कुत्रापि विरुद्धाभिमता क्रिया॥
पित्तमन्तर्गतं गूढ़ं स्वेदसेकोपनाहनैः।
नीयते बहिरुष्णैर्हि तथोष्णं शमयन्ति ते॥
बाह्यैश्च शीतैः सेकाद्यैरुष्मान्तर्यो हि पीड़ितः।
सोऽन्तर्गूढ़ं कफं हन्ति शीतः शीतैस्तथा व्रजेत्॥
श्लक्ष्णपिष्टो घनो लेपश्चन्दनस्यापि दाहकृत्।
त्वग्गतस्योष्मणो रोधाद्दाहकृत्त्वन्यथागुरोः॥
छर्द्दिघ्नी मक्षिकाविष्ठा मक्षिकैव तु वामयेत्।
द्रवेष्वेषु च विदग्धेषु चैवं तेषु च विक्रिया॥
एतस्मादौषधादीनि परीक्ष्य दश तत्त्वतः।
कुर्य्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलम्॥ १२३॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना।
क्षीणे मार्गीकृते दोषे शेषः सूक्ष्म इवानलः॥
तस्मात् तमनुबध्नीयात् प्रयोगेणानपायिना।
दार्ढ्यार्थं प्राक्प्रयुक्तस्य सिद्धार्थस्यौषधस्य तु॥ १२४॥
काठिन्याद्धनभावाद्वा दोषोऽन्तः कुपितो महान्।
पथ्यैर्मृद्वल्पतां नीतो मृदुर्दोषकरो भवेत्॥
पथ्यमप्यश्नतस्तस्माद् यो व्याधिरुपजायते।
ज्ञात्वैवं वृद्धिमभ्यासमथवान्यस्य कारयेत्॥
सातत्यात् स्वादभावाद्वा पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः॥
मनसो वानुकूलत्वात् तुष्टिरूर्ज्जारुचिर्बलम्।

सुखोपभोगता च स्यादाधेस्यातो बलक्षयः ॥
लौल्याद्दोषक्षयाद्व्याधिवैषम्यात्तापि याश्चिः ।
तासु पथ्योपचारः स्याद्योगेनाद्यं विकल्पयेत् ॥ १२५ ॥

तत्र श्लोकाः ।

विंशतिर्व्यापदो योनेर्निदानं लिङ्गमेव च ।
चिकित्सा चापि निर्द्दिष्टा शिष्याणां हितकाम्यया ॥
शुक्रदोषास्तथा चाष्टौ निदानाकृतिभेषजैः ।
क्लैव्यानुशक्तानि चत्वारि चत्वारः प्रदरास्तथा ।
तेषां निदानं लिङ्गञ्च भेषज्यञ्चैव कीर्त्तितम् ॥
क्षीरदोषास्तथा चाष्टौ हेतुलिङ्गभिषग्जितैः ।
तेषां चिकित्सा निर्द्दिष्टा समासव्यासतो मया ॥
रेतसो रजसश्चैव कीर्त्तितं शुद्धिलक्षणम् ।
उक्तानुक्तचिकित्सा च सम्यग्योगस्तथैव च ॥
देशादिगुणशंसा च कालः षड्विध एव च ।
देशे देशे च यत् सात्म्यं यथा वैद्योऽपराध्यति ॥
चिकित्सा चापि निर्द्दिष्टा दोषाणां गूढचारिणाम् ।
योनिव्यापदिकेऽध्याये तत् सर्व्वं सम्प्रकाशितम् ॥
यो हि सम्यङ् न जानाति शास्त्रं शास्त्रार्थमेव च ।
न कुर्य्यात् स क्रियां चित्रमचक्षुरिव चित्रकृत् ॥ १२६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते चिकित्सितस्थाने
योनिव्यापच्चिकित्सितं नाम त्रिंशोऽध्यायः ॥ ३० ॥

इति चिकित्सास्थानं समाप्तम्

# चरक-संहिता।

## कल्पस्थानम्।

### प्रथमोऽध्यायः।

अथातो मदनफलकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

अथ खलु वमनविरेचनार्थं मदनफलादिभिर्त्रिवृतादीनां वमनविरेचनद्रव्याणां सुखोपभोग्यतमैः सज्ञानैर्द्रव्यैर्विविधैस्तद्योगानां क्रियाविधौ सुखोपायश्च सम्यगुपकल्पनार्थं कल्पस्थानमखिलेनोपदेक्ष्यामोऽग्निवेश ॥ २ ॥

तत्र दोषहरणमूर्द्ध्वभागं वमनसंज्ञकमधोभागं विरेचनसंज्ञकं, उभयं वा शरीरमलरेचनाद्विरेचनशब्दं लभते। तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्य्येण हृदयमुपेत्य धमनीरनुसृत्य स्थूलाणुस्रोतोभ्यः केवलं शरीरगतं दोषसङ्घातमाग्नेयत्वाद्विष्यन्दयन्ति तैक्ष्ण्याद्विच्छिन्दन्ति ॥ ३ ॥

स विच्छिन्नः परिप्लवः स्नेहभाविते काये स्नेहात्तभाजनस्थमिव क्षौद्रमसज्जन् प्रवणभावादामाशयमागत्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्द्ध्वभाग-प्रभावादौषधस्योर्द्ध्वमुत्क्षिप्यते । सलिलपृथिव्यात्मकत्वादधोभाग-प्रभावाच्चौषधस्याधः प्रवर्त्तते । उभयतश्चोभयगुणत्वादिति लक्षणोद्देशः ॥ ४ ॥

तत्र फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनानां, श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनाञ्च, नानाविधदेशकालसम्भवस्वादुरसवीर्य्यविपाकप्रभावग्रहणानां देहदोषप्रकृतिवयोबलाग्निभुक्तिसात्म्यरोगावस्थादीनां नानात्मकत्वाच्च, विचित्रगन्धवर्णरसस्पर्शानामुपयोगसुखार्थमपरिसङ्ख्येयोपयोगानामपि च सतां द्रव्याणाम्, विकल्पमार्गदर्शनार्थं षड्‌विरेचनयोगशतानि व्याख्यास्यामः ॥ ५ ॥

तानि तु द्रव्याणि देशकालगुणभाजनसम्पद्वीर्य्यबलाधानात् क्रियासमर्थतमानि भवन्ति । त्रिविधः खलु देशो जाङ्गलोऽनूपः साधारणश्चेति ॥ ६ ॥

तत्र जाङ्गलः पर्य्याकाशभूयिष्ठः, तरुभिरपि कदरखदिराशनाश्वकर्णधवतिनिशशल्लकीशालसोमवल्कवदरीतिन्दुकाश्वत्थवटामलकीवनगहनः, अनेकशमीककुभशिंशपाप्रायः स्थिरशुष्कपवनबलविधूयमानप्रनृत्यत्तरुणविटपः, प्रततमृगतृष्णाकूपोपगूढ़तनुखरपरुषसिकताशर्कराबहुलः, लावतित्तिरिचकोरानुप्रचितभूमिभागो वातपित्तबहुलः स्थिरकठिनमनुष्यप्रायो ज्ञेयः ॥ ७ ॥

अथानूपो हिन्तालतालतमालनारिकेलकदलीवनगहनः, सरित्समुद्रपर्य्यन्तप्रायः शिशिरपवनबहुलो वञ्जुलवानीरोप-

शोभिततीराभिः सरिद्भिरुपगतभूमिभागोऽचितिधरो निकुञ्जो-पशोभितो मन्दपवनानुवीजितक्षितिरुहगहनोऽनेकवनराजी-पुष्पितवनगहनभूमिभागः, स्निग्धतरुप्रतानोपगूढो हंसचक्रवाक-बलाकानन्दीमुखपुण्डरीक-कादम्बमद्गुकोयष्टिभृङ्गराजशतपत्र-मत्तकोकिलमुदिततरुणविटपः; सुकुमारपुरुषः पवनकफप्रायो ज्ञेयः ॥ ८ ॥

अनयोरेव द्वयोर्देशयोर्वीरुद्वनस्पतिवानस्पत्यशकुनिमृगगण-युतः स्थिरसुकुमार-वर्णसंहननोपपन्नसाधारणगुणयुक्तपुरुषः साधारणो ज्ञेयः ॥ ९ ॥

तत्र देशे जाङ्गले साधारणे वा यथाकालं शिशिरातप-पवनसलिलसेविते समे शुचौ प्रदक्षिणे श्मशानचैत्यदेवयज-नागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्ध-कृष्णासुवर्णवर्णमधुरमृत्तिके मृदावफालकृष्टेऽनुपहतेऽन्यैर्बल-वत्तरैर्द्रुमैरौषधानि जातानि प्रशस्यन्ते ॥ १० ॥

तत्र यानि कालजातान्यागतसम्पूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनजन्तुभिरनुपहतगन्धवर्णरसस्पर्शप्रभा-वाणि प्रत्यग्राण्युदीच्यां दिशि स्थितानि, तेषां शाखापलाश-मचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यं, ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानां, शरदि त्वक्कन्दक्षीराणि, हेमन्ते साराणि पर्णपुष्पफलञ्चेति मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उद-ङ्मुखो वा गृह्णीयात्। गृहीत्वा चानुरूपगुणवद्भाजने संस्थाप्या-गारेषु प्रागुदग्द्वारेषु निवातप्रवातैकदेशेषु नित्यपुष्पोपहार-

बलिकर्म्मवतूखग्निसलिलोपस्वेदधूमरजोमूषिक-चतुष्पदामनभिगमनीयानि स्ववच्छन्नानि शिक्ये चासज्य स्थापयेत्। तानि च यथादोषं प्रयुञ्जीत सुरासौवीरकतुषोदकमैरेयमेदकधान्याम्लफलाम्लदध्यम्लादिभिर्वाते। मृद्वीकामलकमधुकपरूषकफाणितक्षीरादिभिः पित्ते। श्लेष्मणि तु मधुमूत्रकषायादिभिर्भावितान्यालोड़ितानि चेतुरद्देशः। तं विस्तरेण द्रव्यदेहदोषसात्म्यादीनि प्रविभज्य व्याख्यास्यामः॥ ११॥

वमनद्रव्याणां मदनफलानि श्रेष्ठतमान्याचक्षतेऽनपायित्वात्, तानि वसन्तग्रीष्मयोरन्तरे पुष्याश्वयुग्भ्यां मृगशिरसा वा गृह्णीयात् मैत्रे मुहूर्त्ते। यानि पक्वान्यहरितानि पाण्डून्यक्रिमीण्यक्षुण्णान्यह्रस्वान्यपूतीन्यजग्धानि, तानि प्रगृह्य कुशपुटे बद्धा गोमयेनालिप्य यवतुषमाषशालिव्रीहिकुलत्थमुद्गपर्णीनामन्यतमेनाच्छाद्य निदध्यादष्टरात्रम्। अत ऊर्द्धं मृदुभूतानि तानि मध्विष्टगन्धान्युद्धृत्य शोषयेत्। सुशुष्काणां फलानां पिप्पलीरुद्धरेत्. तासां घृतदधिमधुपललविमृदितानां पुनः शुष्काणां नवं कलसं सुप्रमृष्टवालुकारजस्कमाकण्ठं पूरयित्वा स्ववच्छन्नं स्वनुगुप्तं शिक्येऽवसज्य संस्थापयेत्॥ १२॥

अथ च्छर्द्दनीयमातुरं द्व्यहं त्र्यहं वा स्नेहस्वेदोपपन्नञ्च श्वश्छर्द्दितव्यमिति ग्राम्यानूपौदकमांसरसक्षीरदधितिलमाषतण्डुलपललशाकादिभिः समुत्क्लेशितश्लेष्माणं व्युषितं जीर्णाहारं पूर्व्वाह्णे कृतबलिहोममङ्गलप्रायश्चित्तं निरन्नमनतिस्निग्धं यवाग्वा घृतमात्रां पीतवन्तम्, तासां फलपिप्पलीनामन्तर्नखमुष्टिं यावद्वा साधु मन्येत जर्ज्जरीकृत्य यष्टिमधुककषायेण

कोविदारकर्व्वुदारनीपविदुल-विम्बी-शणपुष्पीसदापुष्पीप्रत्यक्-पुष्पीकषायाणामन्यतमेन वा रात्रिमुषितं विमृदितं मधुसैन्धव-संयुक्तं सुखोष्णं कृत्वा पूर्णं शरावं मन्त्रेणानेनाभिमन्त्रयेत्।

ओँ ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु ते॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥

इत्येवमभिमन्त्राभि प्रागुदङ्मुखः प्राङ्मुखमातुरं पाययेत् श्लेष्मज्वरगुल्मप्रतिश्यायवन्तं विशेषेण पुनः पुनरापित्तगमनात् तेन साधु वमति॥ १३॥

हीनवेगन्तु पिप्पल्यामलकवचासर्षपकल्कलवणोष्णोदकैः पुनः पुनः प्रवर्त्तयेदापित्तदर्शनादित्ययं सर्व्वच्छर्द्दनयोगविधिः। सर्व्वेषु तु मधुसैन्धवं कफविलयनच्छेदार्थं वमनेषु विदध्यात्। न चोष्णविरोधो मधुनश्छर्द्दनयोगयुक्तस्याविपक्वप्रत्यागमना-द्दोषनिर्हरणाच्चेति॥ १४॥

फलपिप्पलीनां द्वौ भागौ कोविदारादिकषायेण त्रिःसप्तकृत्वः स्रावयेत्, तेन रसेन तृतीयं भागं पिप्पलीः पिष्ट्वा हरीतकीभि-र्विभीतकैरामलकैर्वा तुल्यां वर्त्तयेत्, तासामेकां द्वे वा पूर्व्वोक्तानां कषायाणामन्यतमस्याञ्जलिमात्रेण विमृद्य बलवत्श्लेष्मप्रसेक-ग्रन्थिज्वरोदरारुचिषु पाययेदिति समानं पूर्व्वेण॥ १५॥

फलपिप्पलीक्षीरं तेन वा क्षीरयवागूमधोभागे रक्तपित्ते हृद्दाहे च, तज्जस्य वा दध्न उत्तरकं कफच्छर्द्दितमकमुखप्रसेकेषु पूर्णशरावं, तस्यैव पयसः शीतस्य सन्तानिकाञ्जलिं पित्ते प्रकुपिते

उरःकण्ठहृदये च तनुकफोपदिग्ध इति समानं पूर्व्वेण। फल-पिप्पलीशृतक्षीराज्जवनीतमुत्पन्नं फलादिकल्ककषायसिद्धं कफाभिभूताग्निं विशुष्कदेहञ्च मात्रया पाययेदिति समानं पूर्व्वेण ॥ १६ ॥

फलपिप्पलीनां यष्ट्यादिकषायेण त्रिःसप्तकृत्वः परिभावितेन पुष्परजःप्रकाशेन चूर्णेन सरसि सञ्जातं बृहत्सरोरुहं सायाह्ने ऽवचूर्णयेत् तद्रात्रिव्युषितं प्रभाते पुनरवचूर्णितमुद्धृत्य हरिद्रा-कृशराक्षीरयवागूनामन्यतमं सैन्धवफाणितयुक्तमाकण्ठं पीत-वन्तमाघ्रापयेत् सुकुमारमुत्क्लिष्ट-पित्तकफमौषध-द्विषमिति समानं पूर्व्वेण ॥ १७ ॥[१]

फलपिप्पलीनां भल्लातकविधिपरिस्रुतं स्वरसं पक्त्वा फाणि-तेनातन्तुलीभावाल्लेहयेत्। तापशुष्कं वा चूर्णीकृतं जीमू-तादिकषायेण पित्ते कफस्थानगते पाययेदिति समानं पूर्व्वेण। फलपिप्पलीचूर्णानि पूर्व्ववत् कोविदारादीनां षसामन्यतम-कषायभावितानि वर्त्तिक्रियाः कोविदारादिकषायोपसर्ज्जनाः पेया इति समानं पूर्व्वेण ॥ १८ ॥

फलपिप्पलीनामारग्वधकुटजस्वादुकण्टकपाठापाटलीशार्ङ्ग-ष्टामूर्व्वासप्तपर्णनक्तमालपिचुमर्द्दपटोलसुषवीगुडूचीसोमवल्क-द्वीपिकानां पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरा-णाञ्चान्यतमस्य कषायेण सिद्धो लेह इति समानं पूर्व्वेण ॥१६॥

फलपिप्पलीष्वेलाहरेणुकाशतपुष्पाकुस्तुम्बुरुतगरकुष्ठत्वक्-चोरकमरुवकगुग्गुल्वेलवालुकश्रीवेष्टकपरिपेलवमांसीशैलेयक-स्थौणेयकसरलपारावतपद्यशोकरोहिणीनां विंशतेरन्यतमस्य

कषायेण साधयित्वोत्कारिका वा पूर्ववत् कारिकाकल्पेन मोदको वा मोदककल्पेन यथादोषरोगविभक्ति प्रयोज्या इति समानं पूर्व्वेण । फलपिप्पलीस्वरसकषायपरिभावितानि तिलतण्डुल-पिष्टानि तत्कषायोपसर्ज्जनानि शष्कुलीकल्पेन शष्कुल्यः पूप-कल्पेन वा पूपा इति समानं पूर्व्वेण ॥ २० ॥

एतेनैव च कल्पेन सुमुखसुरसकुठेरकगण्डीरकालमालक-पर्णासक्षवकफणिज्झकशृङ्गवेरशृञ्जनकभूस्तृणकासमर्द्दभृङ्गराजा-नामिक्षुवालिकाकाण्डेक्षुणाञ्चान्यतमस्य कषायेण कारयेत् । यथावत् षाड़वरागलेहमोदकोत्कारिकातर्पणपानकमांसरसयूष-मद्यानि मदनफलपाचितानि तेनोपसृज्य यथादोषरोगविभक्ति दद्यात् तैः साधु वमतीति ॥ २१ ॥

भवति चात्र ।

मदनः करहाटश्च राठः पिण्डीतकः फलम् ।
श्वसनश्चेति पर्य्यायैरुच्यते तस्य कल्पना ॥ २२ ॥

तत्र श्लोकाः ।

नव योगाः कषायेषु वर्त्तिष्वष्टौ पयोमुखाः ।
पञ्चैकः फाणिते चूर्णे घ्रेये वर्त्तिक्रियासु षट् ॥
विंशतिर्विंशतिर्लेहमोदकोत्कारिकासु च ।
शष्कुलीपूपयोश्चोक्ता योगाः षोड़श षोड़श ॥
दशानेत्र षाड़वादेषु त्रयस्त्रिंशदिदं शतम् ।
योगानां विधिवद्दृष्टं फलकल्पे महर्षिणा ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
फलकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातो जीमूतकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

कल्पं जीमूतकस्येमं फलपुष्पाश्रयं शृणु ।
खरागरी च वेणी च तथा स्याद्देवताड़कः ॥
जीमूतकं त्रिदोषघ्नं यथास्वौषधकल्पितम् ।
प्रयोक्तव्यं ज्वरश्वासहिक्काकोष्ठामयेषु च ॥ २ ॥
यथोक्तगुणयुक्तानां देशजानां यथाविधि ।
पयः पुष्पेषु निर्व्वृत्तं फले पेयां शृतं पयः ॥
लोमने क्षीरसन्तानं दध्युत्तरमलोमने ।
शृते पयसि दध्यम्लं जातं हरितपाण्डरे ॥
जीर्णानाञ्च सुशुष्काणां न्यस्तानां भाजने शुचौ ।
चूर्णस्य पयसा शुक्तिं वातपित्तार्हितः पिबेत् ॥ ३ ॥
आसुत्य च सुरामण्डे मृदित्वा प्रसुतं पिबेत् ।
कफजेऽरोचके कासे पाण्डुरोगे सयक्ष्मणि ॥
द्वे वापोथ्याथवा त्रीणि गुडूच्या मधुकस्य वा ।
कोविदारादिकानां वा निम्बस्य कुटजस्य वा ॥
कषायेष्वासुतं पूत्वा तेनैव विधिना पिबेत् ।
अथवारग्वधादीनां सप्तानां पूर्व्ववत् पिबेत् ॥
एकैकशः कषायेण पित्तश्लेष्मज्वरार्हितः ।
वर्त्तयः फलवच्चाष्टौ कोलमात्रास्तु ता मताः * ॥ ४ ॥

---

* इतःपरं केचित् "जीमूतकस्य वा कल्कं चूर्णं वा शिशिराम्बुना।
ज्वरे पित्तभवे वातदुष्टे श्लेष्मणि चानुग" इत्यधिकं पठन्ति ॥

जीवकर्षभकेक्षूणां शतावर्य्या रसेन वा ।
पित्तश्लेष्मज्वरे दद्याद्वातपित्तज्वरे तथा ॥ ५ ॥
तथा जीमूतकक्षीरात् समुत्पन्नं पचेद्घृतम् ।
फलादीनां कषायेण श्रेष्ठं तद्वमनं मतम् ॥ ६ ॥

तत्र श्लोकौ ।

षट् क्षीरे मदिरामण्डे एको द्वादश चापरे ।
सप्त चारग्वधादीनां कषायेऽष्टौ च वर्त्तिषु ॥
जीवकादिषु चत्वारो घृतञ्चैकं प्रकीर्त्तितम् ।
कल्पे जीमूतकानाञ्च योगास्त्रिंशन्नवाधिकाः ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
जीमूतकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथात इक्ष्वाकुकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

सिद्धं वक्ष्याम्यथेक्ष्वाकुकल्पं येषां प्रशस्यते ।
पञ्चचत्वारिंशदुक्ता योगा अस्मिन् महर्षिणा ॥ २ ॥
लम्बाथ कटुकालाबू तुम्बी पिण्डफला तथा ।　　　　विम्बफला
इक्ष्वाकुः फलिनी चैव प्रोच्यतेऽस्यास्तु कल्पना ॥
कासश्वासकफच्छर्द्दिहृद्धर्त्तिकफकर्षिते ।

प्रताम्यति नरे चैव वमनार्थं तु सेव्यते ॥ ३ ॥
अपुष्पायाः प्रवालानां मुष्टिं प्रादेशसम्मितम् ।
क्षीरप्रस्थे शृतं दद्यात् पित्तोद्रिक्ते कफज्वरे ॥ ४ ॥
पुष्पादिषु च चत्वारः क्षीरे जीमूतके यथा ।
योगा हरितपाण्डूनां सुरामण्डेन पञ्चमः ॥ ५ ॥
फलस्वरसभागञ्च त्रिगुणक्षीरसाधितम् ।
उरःस्थिते कफे दद्यात् स्वरभेदे सपीनसे ॥ ६ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।
जातं स्यात् कफजे कासे श्वासे वम्याञ्च तत् पिबेत् ॥७॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्द्दितः ।
तेन तक्रं विपक्वं वा सक्षौद्रलवणं पिबेत् ॥ ८ ॥
अजाक्षीरेण बीजानि भावयेत् प्राययेत च ।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ९ ॥
तुम्ब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ।
छर्द्दयेन्माल्यमाघ्राय गन्धं सम्यक्सुखोचितः ॥ १० ॥
भक्षयेत् फलमध्यं वा गुड़ेन पललेन च ।
इक्ष्वाकुफलतैलं वा सिद्धं वा पूर्व्ववद् घृतम् ॥ ११ ॥
पञ्चाशद्दशवर्गाणि फलिनीनां यथोत्तरम् ।
पिबेद्विमृद्य बीजानि कषायेष्वासुतं पृथक् ॥ १२ ॥
यष्ट्याह्वकोविदारादैरमुष्टिमन्तमेवं पिबेत् ।
कषायैः कोविदारादैर्वर्त्तयः फलवत् स्मृताः ॥ १३ ॥
बिल्वमूलकषायेण तुम्बीबीजाञ्जलिं पचेत् ।
पूतस्यास्य त्रयो भागास्तुर्यः फाणितस्य तु ॥

मधूतो बीजभागश्च पिष्टानर्द्धांशिकांस्तथा ।
मत्स्याजालिनिजीमूतकृतवेधनवतूसकान् ॥
तं लेहं साधयेद्दर्व्यां घट्टयेन्मृदुनाग्निना ।
यावत् स्यात् तन्तुमत् तोये पतितश्च न शीर्य्यते ॥
तं लिह्यान्मात्रया लेहं प्रमथ्यांश्च पिवेदनु ।
कल्प एषोऽग्निमन्थादौ चतुष्के पृथगुच्यते ॥ १४ ॥
शक्तुभिर्वा पिवेन्मन्थं तुम्बीस्वरसभावितैः ।
कफजेतु ज्वरे श्वासे कण्ठरोगेष्वरोचके ॥
गुल्मे मेहे प्रसेके च कल्यं मांसरसैः पिवेत् ।
नरः साधु वमत्येवं न च दौर्ब्बल्यमश्नुते ॥ १५ ॥

तत्र श्लोकाः ।

पयस्यष्टौ सुरामण्डमस्तुतक्रेषु च त्रयः ।
ध्रेयं सपललं तैलं वर्द्धमानासवेषु षट् ॥
घृतमेकं कषायेषु नवानो मधुकादिषु ।
अष्टौ वर्त्तिक्रिया लेहाः पञ्च मन्थो रसस्तथा ॥
योगा इक्ष्वाकुकल्पेऽस्मिन् चत्वारिंशच्च पञ्च च ।
उक्ता महर्षिणा सम्यक् प्रजानां हितकाम्यया ॥ १६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
इक्ष्वाकुकल्पो नाम तृतीयोऽध्यायः ॥ ३ ॥

अथातो धामार्गवकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

कर्कोटकी कोठफला महाजालिनिरेव च ।
धामार्गवस्य पर्य्याया राजकोशातकी तथा ॥
गरे गुल्मोदरे कासे वातश्लेष्मामये स्थिते ।
कफे च कण्ठवक्त्रस्थे कफसम्भवजेषु च ॥
रोगेष्वेषु प्रयोज्याः स्युः स्थिराश्च गुरवश्च ये ।
फलं पुष्पं प्रवालञ्च विधिना तस्य संहरेत् ॥ २ ॥
प्रवालस्वरसं शुष्कं कृत्वाच गुड़िकाः पृथक् ।
कोविदारादिभिः पेयाः कषायैर्मधुकस्य च ॥ ३ ॥
पुष्पादिभिः चीरयोगाश्चत्वारः पञ्चमी सुरा ।
पूर्व्ववज्जीर्णशुष्काणामतः कल्पः प्रवक्ष्यते ॥ ४ ॥
मधुकस्य कषायेण वीजकण्ठोद्धृतं फलम् ।
सगुड़ं वुषितं रात्री कोविदारादिभिस्तथा ॥
दद्याद्गुल्मोदरार्त्तेभ्यो ये चाप्यन्ये कफामयाः ।
दद्यादन्नेन वा युक्तं छर्द्दिहृद्रोगशान्तये ॥ ५ ॥
चूर्णैर्वापुरातूपलादीनि भावितानि प्रभूतशः ।
रसचीरयवाग्वादिष्वस्मो घ्रात्वा वमेत् सुखम् ॥ ६ ॥
चूर्णीकृतस्य वर्त्तिं वा कृत्वा वदरसम्मिताम् ।
विनीयाञ्जलिमात्रे तु पिवेद्गोऽश्वशकृद्रसे ॥
पृषतर्क्षकुरङ्गाविगजोष्ट्राश्वतरस्य च ।

श्वदंष्ट्राखरखड्गानाञ्चैव पेयां शकृद्रसे ॥ ७ ॥

जीवकर्षभकौ वीरामात्मगुप्तां शतावरीम्।
काकोलीं श्रावणीं मेदां महामेदां मधूलिकाम्॥
एकैकशोऽभिसञ्चूर्ण्य सह धामार्गवेण तु।
शर्करामधुसंयुक्ता लेहा हृद्राहकासिनाम्॥
सुखोदकानुपानाः सुः पित्तोष्मसहिते कफे।
धान्यतुम्बुरुयूषेण कल्कस्तस्य विषापहः॥ ८ ॥

जात्याः सौमनसायिन्या रजन्याश्चोरकस्य वा।
वृश्चिकस्य महाक्षुद्रसहाहैमवतस्य च॥
विम्ब्याः पुनर्नवाया वा कासमर्दस्य वा पृथक्॥
एकं धामार्गवं द्वे वा कषाये परिमृद्य तु।
तत्कृतक्षीरजं सर्पिः साधितं वा फलादिभिः।
पूतं मनोविकारेषु पिवेद्वमनमुत्तमम्॥ ९ ॥

तत्र श्लोकौ।

पल्लवे नव चत्वारः क्षीर एकः सुरासवे।
क्वाथे नवैकोऽन्ने द्वे पेये दश द्वौ च शकृद्रसे॥
दश लेहास्त्रयः कल्का दश चैव घृते तथा।
कल्पे धामार्गवस्योक्ताः षष्टिर्योगा महर्षिणा॥ १० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
धामार्गवकल्पो नाम चतुर्थोऽध्यायः॥ ४ ॥

## पञ्चमोऽध्यायः।

अथातो वत्सककल्पं व्याख्यास्याम इति ह

स्माह भगवानात्रेयः ॥ १ ॥

अथ वत्सकनामानि भेदं स्त्रीपुंसयोस्तथा।

कल्पञ्चास्य प्रवक्ष्यामि विस्तरेण यथातथम् ॥ २ ॥

वत्सकः कुटजः शक्रो वृक्षको गिरिमल्लिका।

बीजानीन्द्रयवास्तस्य तथोच्यन्ते कलिङ्गकाः ॥

बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत्।

श्यामा चारुणपुष्पी स्त्री फलवृन्तैस्तथाणुभिः ॥

रक्तपित्तकफघ्नस्तु सुकुमारेष्वनत्ययः।

हृद्रोगज्वरवातासृग्वीसर्पादिषु शस्यते ॥ ३ ॥

काले फलानि संगृह्य तयोः शुष्काणि संक्षिपेत्।

तेषामन्तर्नखं मुष्टिं जर्जरीकृत्य भावयेत् ॥

मधुकस्य कषायेण कोविदारादिभिस्तथा।

निशि स्थितं विमृद्यैतत्तल्लवणक्षौद्रसंयुतम् ॥

पिबेत्तद्वमनं श्रेष्ठं पित्तश्लेष्मनिबर्हणम् ॥ ४ ॥

अष्टाहं पयसार्केण तेषां चूर्णानि भावयेत्।

जीवकस्य कषायेण ततः पाणितलं पिबेत्।

फलजीमूतकेक्ष्वाकुजीवन्तीनां पृथक् तथा ॥ ५ ॥

सर्षपाणां मधूकानां लवणस्याम्बुना पुनः।

कृशरेणाथवा युक्तं विदध्याद् वमनं भिषक् ॥ ६ ॥

तत्र श्लोकः ।

कषायेनैव चूर्णैश्च पञ्चोक्ताः सलिलैस्त्रयः ।
एकश्च कृशरायां स्याद् योगास्तेऽष्टादश स्मृताः ॥ ७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
वत्सककल्पो नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातः कृतवेधनकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

कृतवेधननामानि कल्पञ्चास्य निबोधत ।
क्ष्वेडः कोशातकी जाली मृदङ्गफलमेव च ॥
अत्यर्थं कटुतीक्ष्णोष्णं गाढं शिष्टं गदेषु च ।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ २ ॥
क्षीरादिकुसुमादीनि सुरा चैतेषु पूर्ववत् ।
सुशुष्काणान्तु वीजानामेकं द्वौ वा यथाबलम् ॥
कषायैर्मधुकादीनां नवभिः फलवत् पिबेत् ॥ ३ ॥
क्वाथयित्वा फलं तस्य पूत्वा लेहं निधापयेत् ।
कृतवेधनकल्कांशं फलाध्यर्द्धांशसंयुतम् ॥
पृथक् चारग्वधादीनां त्रयोदशभिरासुतम् ॥ ४ ॥
शाल्मलीमूलवृन्तान्तपिच्छाभिर्दशभिस्तथा ।
वर्त्तयः फलवत् षट् सुराः फलादीनां घृतं तथा ॥ ५ ॥

कोशातकानि पञ्चाशत् कोविदाररसैः पचेत्।
तं कषायं फलादीनां कल्कैर्लेहं पुनः पचेत्॥
चूर्णस्य तत्र भागः स्यात्कोषाणार्द्धांशिकानि च।
कषायैः कोविदारादैरेवं पक्त्वा पिवेत् पृथक्॥ ६॥
कषायेषु फलादीनामानूपं पिशितं पृथक्।
कोशातक्याः समं पक्त्वा रसं सलवणं पिवेत्॥
फलादिपिप्पलीतुल्यं तद्वन्मांसरसं पिवेत्॥ ७॥
क्षेड़ं क्वाथे पिवेत् सिद्धं मिश्रमिक्षुरसेन च॥ ८॥

तत्र श्लोकौ।

क्षीरे द्वौ द्वौ सुरा चैका क्वाथा द्वाविंशतिस्तथा।
दश पिष्टा घृतश्चैकं षट् च वर्त्तिक्रियाः शुभाः॥
लेहेऽष्टौ सप्त मांसे च योग इक्षुरसेऽपरः।
कृतवेधनकल्पेऽस्मिन् षष्टिर्योगाः प्रकीर्त्तिताः॥ ९॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
कृतवेधनकल्पो नाम षष्ठोऽध्यायः॥ ६॥

## सप्तमोऽध्यायः।

अथातः श्यामात्रिवृतूकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः॥ १॥

विरेचने त्रिवृन्मूलं श्रेष्ठमाहुर्मनीषिणः।
तस्याः संज्ञा गुणाः कर्म्म भेदः कल्पश्च वक्ष्यते॥ २॥

त्रिभण्डी त्रिवृता चैव श्यामा कुटरणा तथा ।
सर्व्वानुभूतिः सुवहा शब्दैः पर्य्यायवाचकैः ॥
कषाया मधुरा रूक्षा विपाके कटुका च सा ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥
सैदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पे वैशेष्यमासाद्य सर्व्वरोगहरा भवेत् ॥ ३ ॥
मूलन्तु द्विविधं तस्याः श्यामञ्चारुणमेव च ।
तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभम् ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तच्छुभम् ।
मोहयेदाशुकारित्वाच्छ्यामा कण्ठं क्षिणोत्यपि ॥
तैक्ष्ण्यात् कर्षति हृत्कण्ठमाशु दोषं हरत्यपि ।
शस्यते बहुदोषाणां क्रूरकोष्ठाश्च ये नराः ॥ ४ ॥
गुणवत्यां तयोर्भूमौ जातं मूलं समुद्धरेत् ।
उपोष्य प्रयतः शुक्ले शुक्लवासाः समाहितः ॥
गम्भीरानुगतं श्लक्ष्णं न तिर्य्यग्विसृतञ्च यत् ।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ५ ॥
स्निग्धस्विन्नो विरेच्यस्तु पेयामात्राशितः सुखम् ।
अक्षमात्रं तयोः पिण्डं विनीयाम्लेन ना पिवेत् ॥
गोव्यजामहिषीमूत्रसौवीरकतुषोदकैः ।
प्रसन्नया त्रिफलया शृतया च पृथक् पृथक् ॥ ६ ॥
एकैकं सैन्धवादीनां द्वादशानां सनागरम् ।
त्रिवृतस्त्रिगुणसंयुक्तं चूर्णमुष्णाम्बुना पिवेत् ॥ ७ ॥
पिप्पली पिप्पलीमूलं मरिचं हस्तिपिप्पली ।

सरलः किलिमं हिङ्गु भार्गी तेजोवती तथा ॥
मुस्तं हैमवती पथ्या चित्रको रजनी वचा।
स्वर्णक्षीर्य्यजमोदा च शृङ्गवेरञ्च तैः पृथक् ॥
एकैकार्द्धांशसंयुक्तं पिवेद् गोमूत्रसंयुतम् ॥ ८ ॥
मधुकार्द्धांशसंयुक्तं शर्कराम्बुयुतं पिवेत्।
जीवकर्षभकौ मेदां श्रावणीं कर्कटाह्वयम्।
मुद्गमाषाख्यपर्ण्यौ च महतीं श्रावणीं तथा ॥
काकोलीं क्षीरकाकोलीं क्षुद्रां छिन्नरुहां तथा।
क्षीरशुक्लां पयस्याञ्च यष्ट्याह्वं विधिना पिवेत् ॥
वातपित्तहितान्येतान्यन्यानि तु कफानिले ॥ ९ ॥
क्षीरमांसेक्षुकाश्मर्य्यद्राक्षापीलुरसैः पृथक्।
सर्पिषा वा तयोश्चूर्णमभयार्द्धांशिकं पिवेत् ॥
लिह्याद्वा मधुसर्पिर्भ्यां संयुक्तं ससितोपलम् ॥ १० ॥
अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत्।
चूर्णितं क्षौद्रसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
सन्निपातज्वरस्तम्भदाहतृष्णार्द्दितो नरः ॥ ११ ॥
श्यामात्रिवृत्कषायेण कल्केन च सशर्करम्।
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः ॥ १२ ॥
सक्षौद्रां शर्करां पक्त्वा कुर्य्यान्मृद्भाजने नवे।
क्षिपेच्छीते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ॥
मात्रया लेहयेदेतद्दोषवराणां विरेचनम् ॥ १३ ॥
कुड़वांशान् रसानिक्षुद्राक्षापीलुपरूषकात्।
सितोपलात् पलं क्षौद्रात् कुड़वार्द्धञ्च साधयेत ॥

तं लेहं योजयेच्छीतं त्रिवृच्चूर्णेन शास्त्रवित् ।
एतद्दुष्टाम्लपित्तानामीश्वराणां विरेचनम् ॥ १४ ॥
शर्करामोदकान् वर्त्तिर्गुड़िकामांसपूपकान् ।
अनेन विधिना कुर्य्यात् पैत्तिकानां विरेचनम् ॥ १५ ॥
पिप्पलीं नागरं क्षारं श्यामात्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं श्लेष्मलानां विरेचनम् ॥ १६ ॥
मातुलुङ्गाभयाधात्रीश्रीपर्णीकोलदाड़िमात् ।
सुभृष्टान् स्वरसांस्तैले साधयेत् तत्र चावपेत् ॥
सहकारात् कपित्थाच्च मध्यमम्लञ्च यत् फलम् ।
पूर्व्ववद्वह्लीभूते त्रिवृच्चूर्णं समावपेत् ॥
त्वक्पत्रकेशरैलानां चूर्णञ्च मधुमात्रया ।
लेहोऽयं कफपूर्णानामीश्वराणां विरेचनम् ॥
पानकानि रसान् यूषान् मोदकान् रागषाड़वान् ।
अनेन विधिना कुर्य्याद्विरेकार्थं कफाधिके ॥ १७ ॥
त्वगेलाभ्यां समं नीतं त्रिवृतायाः सशर्करम् ।
चूर्णं फलरसक्षौद्रशक्तुभिस्तर्पणं पिबेत् ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १८ ॥
शर्करा त्रिफला श्यामा त्रिवृन्मागधिका मधु ।
मोदकः सन्निपातोर्द्ध्वरक्तपित्तज्वरापहः ॥ १९ ॥
त्रिवृद्भागास्त्रयः प्रोक्तास्तिस्रश्च त्रिफलात्वचः ।
विड़ङ्गक्षारपिप्पल्यः समास्तिस्रश्च चूर्णिताः ॥
लिह्यात् सर्पिर्मधुभ्याञ्च मोदकं वा गुड़ेन च ।

भक्षयेन्निष्परीहारमेतच्छोधनमुत्तमम् ॥
गुल्मं प्लीहोदरं श्वासं हलीमकमरोचकम्।
कफवातकृतांश्चान्यान् व्याधीनेतद्व्यपोहति॥ २० ॥
विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकम्।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पली ॥
लवणान्यजमोदा च चूर्णितं कार्षिकं पृथक्।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुड़ार्द्धतुलां तथा।
पक्त्वा मृद्वग्निना खादेद्बदरोदुम्बरोपमान् ॥
गुड़ान् कृत्वा न चात्र स्याद्विहाराहारयन्त्रणा।
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम्।
अस्वप्नं गात्रशूलञ्च कासं श्वासं भ्रमं क्षयम् ॥
कुष्ठार्शःकामलामेहगुल्मोदरभगन्दरम् ॥
ग्रहणीपाण्डुरोगांश्च हन्युः पुंसवनाश्च ते।
कल्याणका इति ख्याताः सर्व्वेष्वृतुषु यौगिकाः ॥ २१ ॥

इति कल्याणकगुड़ः।

व्योषत्वक्पत्रमुस्तैलाविड़ङ्गामलकाभयाः।
समभागा भिषग्दद्याद् द्विगुणञ्च मुकूलकम् ॥
त्रिवृतोऽष्टगुणं भागं शर्करायाश्च षड्गुणम्।
चूर्णितं गुड़िकाः कार्य्या क्षौद्रेण पलसम्मिताः ॥
भक्षयेत् कल्यमुत्थाय शीतञ्चानुपिवेज्जलम्।
मूत्रकृच्छ्रे ज्वरे वम्यां कासे श्वासे भ्रमे क्षये ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता निर्यन्त्रिताग्निनः।

योगः सर्व्वविषाणाञ्च मतः श्रेष्ठो विरेचने ॥
मूत्रजानाञ्च रोगाणां विधिज्ञ्नैनावचारितः ॥ २२ ॥
त्रिवृतूपलं द्विप्रसृतं पथ्यात्वग्गुरुवूकयोः ।
दश्येतान् मोदकान् कुर्य्यादोषज्वराणां विरेचनम् ॥ २३ ॥
श्यामा त्रिवृद्धैमवती नीलिनी हस्तिपिप्पली ।
समूला पिप्पली मुस्तमजमोदा दुरालभा ॥
कार्षिकं नागरपलं गुडस्य पलविंशतिः ।
चूर्णितं मोदकान् कुर्य्यादुदुम्बरफलोपमान् ॥
हिङ्गुसौवर्च्चलव्योषयमानीविड्जीरकैः ।
वचाजगन्धात्रिफलाचव्यचित्रकधान्यकैः ।
मोदकान् वेष्टयेच्चूर्णैस्तांस्तु तुम्बुरुदाड़िमैः ॥
त्रिकवंक्षणाद्दहस्तिकोष्ठार्शःप्लीहशूलिनाम् ।
हिक्काकासारुचिश्वासकफोदावर्त्तिनां हिताः ॥ २४ ॥
त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम् ।
क्षौद्रद्राक्षारसोपेतं वर्षास्वेतद्विरेचनम् ॥ २५ ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्व सातलं जलदात्यये ॥ २६ ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ।
स्वर्णक्षीरीञ्च हेमन्ते चूर्णमुष्णाम्बुना पिवेत् ॥ २७ ॥
शर्करा त्रिवृता तुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृत्त्रायन्तीहवुषां सातलां कटुरोहिणीम् ।
स्वर्णक्षीरीञ्च संचूर्ण्य गोमूत्रे भावयेत् त्र्यहम् ॥
एष सर्व्वर्त्तुको योगः स्निग्धानां मलदोषहृत् ॥ २८ ॥

दुरालभा त्रिवृच्छ्यामा वतुसकं हस्तिपिप्पली।
नीलिनी त्रिफला मुस्तं कटुकाच सुचूर्णितम्॥
सर्पिर्मांसरसोष्णाम्बुयुक्तं पाणितलं ततः।
पिवेत् सुखतमं ह्येतद्रूक्षाणामपि शस्यते॥ २९॥
तूषणत्रिफलाहिङ्गुकार्षिकं त्रिवृतापलम्।
सौवर्चलार्द्धकर्षञ्च पलार्द्धञ्चाम्लवेतसात्॥
तच्चूर्णं शर्करातुल्यं मद्येनाम्लेन वा पिवेत्।
गुल्मपार्श्वार्त्तिनुत् सिद्धं जीर्णे चाद्याद्रसौदनम्॥ ३०॥
सप्तलां त्रिफलां दन्तीं त्रिवृतां व्योषसैन्धवम्।
कृत्वा चूर्णन्तु सप्ताहं भाव्यमामलकीरसे।
तद्योज्यं तर्पणे यूषे पिष्टिते रागयुक्तिषु॥ ३१॥
तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम्॥
मूलं श्यामात्रिवृतयोः पचेदामलकैः सह।
जले तेन कषायेण पक्त्वा सर्पिः पिवेन्नरः॥ ३२॥
श्यामात्रिवृत्कषायेण सिद्धं क्षीरं पिवेत् तथा।
साधितं वा पयस्ताभ्यां सुखं तेन विरिच्यते॥ ३३॥
त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत्।
पादशेषं कषायं तं शीतं गुड़तुलायुतम्॥
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः।
प्रलिप्ते विधिना मासं जातं तन्मात्रया पिवेत्॥
ग्रहणीपाण्डुरोगघ्नं गुल्मश्वयथुनाशनम्।
सुरां वा त्रिवृतापादकल्कां तत्क्वाथसंयुताम्॥ ३४॥
यवैः श्यामात्रिवृत्क्वाथस्विन्नैः कुल्माषमम्भसा।

आसुतं षडहं पश्चाज्जातं सौवीरकं पिबेत् ॥
भृष्टान् वा सतुषान् शुद्धान् यवांस्तच्चूर्णसंयुतान् ।
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम् ॥ ३५ ॥
तथा मदनकल्पोक्तान् षाड़वादीन् पृथग्दश ।
त्रिवृच्चूर्णेन संयोज्य विरेकार्थं प्रयोजयेत् ॥ ३६ ॥

भवन्ति चात्र ।

त्वक्क्षीराम्रातकदाड़िमैलासितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैस्तथान्यैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि ॥३७॥
शीताम्बुना पीतवतश्च तस्य सिञ्चेन्मुखं छर्द्दिविघातहेतोः ।
हृद्यांश्च मृत्पुष्पफलप्रवालानम्लञ्च दद्यादुपजिघ्रणार्थम् ॥ ३८ ॥

तत्र श्लोकाः ।

एकोऽम्लादिभिरष्टौ च दश द्वौ सैन्धवादिभिः ।
मूत्रेऽष्टादश यष्ट्यां द्वौ जीवकादौ चतुर्द्दश ॥
क्षीरादौ सप्त लेहेऽष्टौ चत्वारः सितयापि च ।
पानकादिषु पञ्चैव षड़्तौ पञ्च मोदकाः ॥
चत्वारश्च घृतक्षीरे द्वौ चूर्णे तर्पणे तथा ।
द्वौ मद्ये काञ्जिके द्वौ च दशान्ये षाड़वादिषु ॥
श्यामायास्त्रिवृतायाश्च कल्पेऽस्मिन् समुदाहृतम् ।
शतं दशोत्तरं सिद्धं योगानां परमर्षिणा ॥ ३९ ॥

इत्याग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
श्यामात्रिवृत्कल्पो नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

अथातश्चतुरङ्गुलकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

आरग्वधो राजवृक्षः सम्पाकश्चतुरङ्गुलः ।
प्रग्रहः कृतमालश्च कर्णिकारोगघातकः ॥ २ ॥
ज्वरहृद्रोगवातास्रगुदावर्त्तादिरोगिषु ।
राजवृक्षोऽधिकः पथ्यो मृदुर्मधुरशीतलः ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
देयो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ३ ॥
फलकाले फलं तस्य ग्राह्यं परिणतञ्च यत् ।
तेषां गुणवतां भारं सिकतासु निधापयेत् ॥
सप्तरात्रात् समुद्धृत्य शोषयेदातपे भिषक् ।
ततो मज्जानमुद्धृत्य शुचौ भाण्डे निधापयेत् ॥ ४ ॥
द्राक्षारसेन तं दद्याद्दाहोदावर्त्तपीड़िते ।
चतुर्वर्षे सुखं बाले यावद् द्वादशवार्षिके ॥ ५ ॥
चतुरङ्गुलमज्ज्ञस्तु प्रसृतं वाथवाञ्जलिम् ।
सुरामण्डेन संयुक्तमथवा कोलशीधुना ॥
दधिमण्डेन वा युक्तं रसेनामलकस्य वा ।
कृत्वा शीतकषायं तं पिबेत् सौवीरकेण वा ॥ ६ ॥
त्रिवृतो वा कषायेण मज्जकल्कं तथा पिबेत् ।
तथा बिल्वकषायेण लवणक्षौद्रसंयुतम् ॥ ७ ॥
कषायेणाश्मर्या तस्य विडङ्गचूर्णगुड़ान्वितम् ।

साधयित्वा शनैर्लेहं लेहयेन्मात्रया नरम् ॥ ८ ॥
चतुरङ्गुलमिज्जाद्वा क्षीराद् यदुद्दियाद् घृतम् ।
मज्जकल्केन धात्रीणां रसे तत् साधितं पिबेत् ॥
तद्वेव दर्भमूलस्य कुलत्थानां यवस्य च ।
कषायैः साधितं सर्पिः कल्कैः श्यामादिभिः पिबेत् ॥ ९ ॥
दन्तीक्वाथेऽञ्जलिं मज्ज्ञः शम्पाकस्य गुड़स्य च ।
दत्त्वा मासार्द्धमासस्थमरिष्टं पाययेत च ॥ १० ॥

भवति चात्र ।

यस्य यत् पानमन्नञ्च हृद्यं स्यादथवा कटु ।
लवणं वा भवेत् तेन युक्तं दद्याद्विरेचनम् ॥ ११ ॥

तत्र श्लोकौ ।

द्राक्षारसे सुराशीध्वोर्दध्नि चामलकीरसे ।
सौवीरकेऽथ त्वक्ताबिल्वानाञ्च कषायके ॥
लेहारिष्टे घृते द्वे च योगा द्वादश कीर्त्तिताः ।
चतुरङ्गुलकल्पेऽस्मिन् सुकुमाराः सुखोदयाः ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
चतुरङ्गुलकल्पो नामाष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

अथातस्तिल्वककल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः ॥ १ ॥

तिल्वकस्तु मतो लोध्रो बृहत्पत्रस्तिरीटकः ।
तस्य मूलत्वचं शुष्कामन्तर्वल्कलवर्जिताम् ॥
चूर्णयेत्तु त्रिधा कृत्वा द्वौ भागौ क्वाथयेत् भिषक् ।
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥
भागं तं दशमूलस्य पुनः क्वाथेन भावयेत् ।
शुष्कं चूर्णं पुनः कृत्वा तत ऊर्द्ध्वं प्रयोजयेत् ॥
दधितक्रसुरामण्डमावैक्षवरसैर्मधुना ।
रसेनामलकानां वा ततः पाणितलं पिबेत् ॥ २ ॥
सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ।
मेषशृङ्ग्यभयाकृष्णाचित्रकैः सलिलैः शृतैः ॥
तत्तुषां सुनुयात् तच्च जातं सौवीरकं यदा ।
भवेत्तत्सलिलेना तस्य लोध्रकल्कं पिबेत् तदा ॥ ३ ॥
दन्तीश्यिवकयोर्द्रोणे सलिलस्याढकं पृथक् ।
समुत्क्वाथ्य गुडस्यैकां तुलां लोध्रस्य चाञ्जलिम् ।
आवपेत् तत परं पश्चान् मद्यपानाद्विरेचनम् ॥ ४ ॥
तिल्वकस्य कषायेण दशकृत्वः सुभाविताम् ।
मात्रां कम्पिल्लकस्यैव कषायेण पुनः पिबेत् ॥ ५ ॥
चतुरङ्गुलकल्पेन लेहोऽन्यः कार्य्य एव च ।
त्रिफलायाः कषायेण ससर्पिर्मधुफाणितः ॥

लोध्रचूर्णयुतः सिद्धो लेहः श्रेष्ठं विरेचनम्।
तिल्वकस्य कषायेण कल्केन च सशर्करः॥
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम्॥ ६॥
अष्टाष्टौ बिल्वतादीनां मुष्टींश्च सनखान् पृथक्।
द्रोणेऽपां साधयेत् पादशेषे प्रस्थं घृतात् पचेत्॥
पिष्टैस्तैरेव बिल्वांशैः समूत्रलवणैरथ।
पत्त्वा मात्रां पिबेत् काले श्रेष्ठमेतद्विरेचनम्॥
लोध्रकल्केन मूत्राम्ललवणैश्च पचेद्घृतम्।
चतुरङ्गुलकल्पेन सर्पिषी द्वे च साधयेत्॥ ७॥

तत्र श्लोकौ।

पञ्च दध्यादिभिस्त्वेका सुरा सौवीरकेण च।
एकोऽरिष्टस्तथा योग एकः कम्पिल्लकेन च॥
लेहास्त्रयो घृतेनापि चत्वारः सम्प्रदर्शिताः।
योगास्ते लोध्रमूलानां कल्पे षोड़श सम्मताः॥ ८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
लोध्रकल्पो नाम नवमोऽध्यायः॥ ९॥

## दशमोऽध्यायः।

अथातो महावृक्षकल्पं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः॥ १॥

विरेचनानां सर्व्वेषां सुधा तीक्ष्णतमा स्मृता।
सङ्घातन्तु भिनत्त्याशु दोषाणां कोष्ठविभ्रमात्॥

तस्मान्नैषा मृदौ कोष्ठे प्रयोक्तव्या कदाचन।
न दोषनिचये चाल्पे सति मार्गपरिक्रमे ॥ २ ॥
पाण्डुरोगोदरे गुल्मे कुष्ठे दूषीविषार्द्दिते।
श्वयथौ मधुमेहे च दोषविभ्रान्तचेतसि ॥
रोगैरेवंविधैर्ग्रस्तं ज्ञात्वा सप्राणमातुरम्।
प्रयोजयेन्महावृक्षं सम्यक् स ह्यवचारितः ॥
सद्यो हरति दोषाणां महान्तमपि सञ्चयम् ॥ ३ ॥
द्विविधः स मतो यश्च बहुभिश्चैव कण्टकैः।
सुतीक्ष्णैः कण्टकैरल्पैः प्रवरो बहुकण्टकः।
स नाम्ना स्नुग् गुडा नन्दा सुधा निस्त्रिंशपत्रकः ॥ ४ ॥
तां विपाट्याहरेत् क्षीरं शस्त्रेण मतिमान् भिषक्।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ॥ ५ ॥
बिल्वादीनां बृहत्या वा कण्टकार्य्यास्तथैकशः।
कषायेण समापन्नं कृत्वाङ्गारेषु शोषयेत् ॥
ततः कोलसमां मात्रां पिबेत् सौवीरकेण वा।
तुषोदकेन कोलानां रसेनामलकस्य वा ॥
सुरया दधिमण्डेन मातुलुङ्गरसेन वा ॥ ६ ॥
सातलां काञ्चनक्षीरीं श्यामादन्तीं फलत्रिकम् ॥
यथोपपत्ति सप्ताहं सुधाक्षीरेण भावयेत्।
कोलमात्रां घृतेनातः पिबेन्मांसरसेन वा ॥ ७ ॥
त्र्यूषणं त्रिफलां दन्तीं चित्रकं त्रिवृतां तथा।
स्नुक्क्षीरभावितां सम्यग्विदध्याद् गुडपानके ॥ ८ ॥
त्रिवृतारग्वधौ दन्ती शङ्खिनी सप्तला समम्।

निशिस्थितं गवां मूत्रे शोषयेदातपे ततः ॥
सप्ताहं भावयित्वैवं स्नुक्क्षीरेणापरं पुनः ।
सप्ताहं भावयेच्छुष्कं ततस्तेनापि भावितम् ॥
गन्धमाल्यं समाघ्राय प्रावृत्य पटमेव च ।
सुखमाशु विरिच्यन्ते मृदुकोष्ठा नराधिपाः ॥ ६ ॥
श्यामात्रिवृत्कषायेण स्नुक्क्षीरघृतफाणितैः ।
लेहं पक्त्वा विरेकार्थं लेहयेन्मात्रया नरम् ॥ १० ॥
पाययेत्तु सुधाक्षीरं यूषैर्मांसरसैर्घृतैः ।
भावितं शुष्कमत्स्यं वा मांसं वा भक्षयेन्नरम् ॥ ११ ॥
क्षीरेणामलकैः सर्पिश्चतुरङ्गुलवत् पचेत् ।
सुरां वा कारयेत् क्षीरे सुतां वा पूर्ववत् पिवेत् ॥ १२ ॥

तत्र श्लोकौ ।

सौवीरकादिभिः सप्त सर्पिषा च रसेन च ।
पानकं च्रयलेहौ च योगा यूषादिभिस्त्रयः ॥
द्वौ शुष्कमत्स्यमांसाभ्यां सुरैका द्वे च सर्पिषी ।
महावृक्षस्य योगास्ते विंशतिः समुदाहृताः ॥ १३ ॥

इत्याग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
महावृक्षकल्पो नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

अथातः सप्तलाशङ्खिनीकल्पं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

सप्तला चर्म्मसाह्वा च बहुफेनरसा च सा ।
शङ्खिनी तिक्तला चैव यवतिक्ताक्षिपीड़कः ॥
ते गुल्मगरहृद्रोगकुष्ठशोफोदरादिषु ।
विकासितीक्ष्णरूक्षत्वाद्योज्यः श्लेष्माधिकेषु तु ॥ २ ॥
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ।
सप्तलायाश्च मूलानि गृहीत्वा भाजने क्षिपेत् ॥ ३ ॥
अक्षमात्रं तयोः पिण्डं प्रसन्नालवणायुतम् ।
हृद्रोगे वातकफजे गुल्मे चैव प्रयोजयेत् ॥
पियालपीलुकर्कन्धूकोलाम्राम्लकदाड़िमैः ।
द्राक्षापनसखर्ज्जूरबदराम्लपरूषकैः ॥
मैरेयदधिमण्डाम्लैः सौवीरकतुषोदकैः ।
शीधौ चापेत्रष कल्पः स्यात् सुखं शीघ्रविरेचनम् ॥ ४ ॥
लेह्या विदारिगन्धाद्यैः पयसि क्वथिते पचेत् ।
सप्तलाशङ्खिनीकल्के त्रिवृच्छ्रमार्द्धभागिके ।
दधिमण्डेन संनीय सिद्धं तत् पाययेत च ॥
शङ्खिनीचूर्णभागौ द्वौ तिलचूर्णञ्च चापरः ।
हरीतकीकषायेण तैलं तत् पीड़ितं पिबेत् ॥
अतसीसर्षपैरण्डकरञ्जेष्वेष संविधिः ॥ ५ ॥

शङ्खिनीसप्तलासिद्धात् क्षीराद् यदुदियाद् घृतम् ।
कल्कभागं तयोरेव त्रिवृच्छ्यामार्धसंयुतम् ॥
क्षीरेणालोड्य सम्पक्वं पिबेत् तच्च विरेचनम् ॥ ६ ॥
तथा दन्तीद्रवन्त्योः स्यादजशृङ्ग्यजगन्धयोः ।
क्षीरिण्या नीलिकायाश्च तथैव च करञ्जयोः ॥
मसूरविदलायाश्च प्रत्यक्श्रेण्यास्तथैव च ।
द्विभागार्धांशकल्केन तद्वत् साध्यं घृतं पुनः ॥
शङ्खिनीसप्तलाधात्रीकषाये साधयेद् घृतम् ।
त्रिवृत्कल्पेन सर्पिश्च त्रयो लेहाश्च पूर्ववत् ॥ ७ ॥
सुराकम्पिल्लयोर्योगः कार्यो लोध्रवदेव च ॥
दन्तीद्रवन्त्योः कल्पेन सौवीरकतुषोदके ।
अजगन्धाजशृङ्ग्योश्च तद्वत् स्यातां विरेचने ॥ ८ ॥

तत्र श्लोकौ ।

कषाया दश षट् चैव षट् तैलेऽष्टौ च सर्पिषि ।
पञ्च मद्ये त्रयो लेहा योगाः कम्पिल्लके तथा ॥
सप्तलाशङ्खिनीकल्पे त्रिंशदुक्ता नवाधिकाः ।
योगाः सिद्धाः समस्तानामेकशोऽपि च ते हिताः ॥ ९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
सप्तलाशङ्खिनीकल्पो नामैकादशोऽध्यायः ॥ ११ ॥

अथातो दन्तीद्रवन्तीकल्पं व्याख्यास्यामः-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

दन्त्युदुम्बरपर्णी च निकुम्भोऽथ मुकूलकः ।
द्रवन्तीनामतश्चित्रा न्यग्रोधी मूषिकाह्वया ॥
तथा मूषिकपर्णी चाप्युपचित्रा च शम्बरी ।
प्रत्यक्श्रेणी सुतश्रेणी दन्ती रण्डा च कीर्त्तिता ॥
तयोर्मूलानि संगृह्य स्थिराणि बहलानि च ।
दन्तिदन्तप्रकाराणि श्यावताम्राणि बुद्धिमान् ॥
पिप्पलीमधुलिप्तानि स्वेदयेन्मृत्कुशान्तरे ।
शोषयेदातपेऽर्काग्नी हिता ह्येषां विकाशिता ॥ २ ॥
तीक्ष्णोष्णान्याशुकारीणि विकाशीनि गुरूणि च ।
विलापयन्ति दोषौ द्वौ मारुतं कोपयन्ति च ॥ ३ ॥
दधितक्रसुरामण्डैः पिण्डमक्षसमं तयोः ।
पियालकोलबदरपीलुशीधुभिरेव च ॥
पिबेद्गुल्मोदरी दोषैरभिखिन्नश्च यो नरः ।
गोमृगाजरसैः पाण्डुक्रिमिकुष्ठी भगन्दरी ॥ ४ ॥
तयोः कल्के कषाये च दशमूलरसायुते ।
कक्षालजीविसर्पेषु दाहे च विपचेद् घृतम् ॥
तैलं मेहे च गुल्मे च सोदावर्त्ते कफानिले ।
चतुःस्नेहं शकृच्छुक्रवातसङ्गानिलार्त्तिषु ॥ ५ ॥
रसे दन्त्यजशृङ्ग्योश्च गुडक्षौद्रघृतान्वितः ।

लेहः सिद्धो विरेकार्थे दाहसन्तापमेहनुत् ॥
पित्तज्वरे वाततर्षे स्यात् स एवाजगन्धया ।
मूलं दन्तीद्रवन्त्योश्च पचेदामलकीरसे ॥
त्रींस्तु तस्य कषायस्य भागौ द्वौ फाणितस्य च ।
तस्मिन् सर्पिषि तैले वा भर्ज्जयेत् तत्र चावपेत् ॥
कल्कं दन्तीद्रवन्त्योश्च श्यामादीनाञ्च भागशः ।
तत् सिद्धं प्राशयेल्लेहं सुखं तेन विरिच्यते ॥
रसे च दशमूलस्य तथा वैभीतके रसे ।
हरीतकीरसे चैव लेहानेवं पचेत् पृथक् ॥ ६ ॥
तयोर्बिल्वसमं चूर्णं तद्रसेनैव भावितम् ।
असृष्टविषि वातोत्थगुल्मे चाम्लयुतं शुभम् ॥ ७ ॥
पाटयित्वेक्षुकाण्डं वा कल्केनालिप्य चान्तरा ।
स्वेदयित्वा ततः खादेत् सुखं तेन विरिच्यते ॥ ८ ॥
मूलं दन्तीद्रवन्त्योश्च सह मुद्गैर्विपाचयेत् ।
लावतित्तिरिकाद्यैश्च ते रसाः स्युर्विरेचनम् ॥ ९ ॥
तयोर्वापि कषायेण यवागूं जाङ्गलं रसम् ।
माषयूषांश्च संस्कृत्य दद्यात् तैश्च विरिच्यते ॥ १० ॥
तत्कषायात् त्रयो भागा द्वौ सितायास्तथैव च ।
एको गोधूमचूर्णानां कार्य्या पोतूकारिका शुभा ॥ ११ ॥
मोदको वास्य कल्पेन कार्य्यस्तच्च विरेचनम् ।
तयोर्वापि कषायेण मद्यमस्योपकल्पयेत् ॥ १२ ॥
दन्तीक्वाथेन चालोड्य दन्तीतैलेन साधितान् ।
गुड़लावणिकान् भक्ष्यान् विविधान् भक्षयेन्नरः ॥ १३ ॥

द्रवन्तीं मरिचं दन्तीं यमानीमुपकुञ्चिकाम् ।
नागरं हेमदुग्धीञ्च चित्रकञ्चेति चूर्णितम् ॥
सप्ताहं भावयेन्मूत्रे गवां पाणितलं ततः ।
पिवेद्घृतेन चूर्णन्तु विरिक्तश्चापि तर्पणम् ॥
सर्व्वरोगहरं मुख्यं सर्व्वेष्वृतुषु यौगिकम् ।
चूर्णं तदनपायित्वाद्बालवृद्धेषु पूजितम् ॥
दुर्भक्ताजीर्णपाण्ड्वर्शिगुल्मप्लीहोदरेषु च ।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥ १४ ॥
पलं चित्रकदन्त्योश्च हरीतक्याश्च विंशतिः ।
त्रिवृत्पिप्पलीकर्षौ द्वौ गुड़स्याष्टपलेन तु ॥
विनीय मोदकान् कुर्य्याद्दशैकं भक्षयेत् ततः ।
उष्णाम्बु च पिवेच्चानु दशमे दशमेऽह्नि च ॥
विरेचनं पित्तकासे पाण्डुरोगे च शस्यते ॥
एते निष्परिहाराः स्युः सर्व्वरोगनिवर्हणाः ।
ग्रहणीपाण्डुरोगार्शःकण्डूकोठानिलापहाः ॥ १५ ॥ *
दन्तीद्विपलनिर्य्यूहे द्राक्षार्द्धप्रस्थसाधितम् ।

---

* इतःपरं पुस्तकान्तरेष्वेवमधिकः पाठो दृश्यते ।
दन्तीद्विपलनिर्य्यूहो द्राक्षार्द्धप्रस्थसाधितः ।
विरेचनं पित्तकासे पाण्डुरोगे च शस्यते ॥
दन्तीकल्कं समगुड़ं शीतवारियुतं पिवेत् ।
विरेचनं सुखतमं कामलाहरमुत्तमम् ॥
शुण्ठीमरिचपिप्पल्यः कार्षिकाः स्युः पृथक् पृथक् ।
त्रिगुणे शर्करे च शङ्खिनी स्याच्चतुर्गुणा ॥

दन्तीकल्कं समगुड़ं शीतवारासुतं पिबेत् ।
विरेचनं मुख्यतमं कामलाहरमुत्तमम् ॥ १६ ॥
श्यामादन्तीरसे गौड़ः पिप्पलीफलचित्रकैः ।
लिप्तेऽरिष्टोऽनिलश्लेष्मप्लीहपाण्डूदरापहः ॥
तथा दन्तीद्रवन्त्योश्च कषाये साजगन्धयोः ।
गौड़ः कार्य्योऽजशृङ्ग्या वा रसैः सुखविरेचनम् ॥ १७ ॥
तच्चूर्णक्काथमाषाम्बुकिण्वतोयसुरोद्भवा ।
मदिरा कफगुल्माल्पवह्निपार्श्वकटीग्रहे ॥ १८ ॥
अजगन्धाकषायेण सौवीरकतुषोदके ।
सुराकम्पिल्लके योगो लोध्रवच्च तयोः स्मृतः ॥ १९ ॥

तत्र श्लोकाः ।

दध्यादिषु त्रयः पञ्च पियालादैस्त्रयो रसे ।
स्नेहेषु वै त्रयो लेहाः षट् चूर्णे त्वेक एव च ॥
द्वावेकस्तथा मुद्गमांसानाञ्च रसास्त्रयः ।
यवाग्वादौ त्रयश्चैक उक्त उत्कारिकाविधौ ॥
एकश्च मोदके मद्ये चैकस्तत्क्वाथतैलके ।
चूर्णमेकं पुनश्चैको मोदकः पञ्च चासवे ॥
एकः सौवीरकेऽथैकयोगः स्यात् तु तुषोदके ।

---

नीलिनीमष्टगुणितां त्रिरष्टगुणितां तथा ।
दन्तीं द्रवन्तीं त्वक्प्राणमेकश्यात्र प्रदापयेत् ॥
यस्मादर्द्धपलं चूर्णात्त्रिफलान्माध्वीकसंयुतम् ।
शीतोदकानुपानन्तु निरपायं विरेचनमिति ॥

एका सुरा कम्पिल्लके चैकः पञ्च घृते स्मृताः ॥
दन्तीद्रवन्तीकल्पेऽस्मिन् प्रोक्ताः षोड़शकास्त्रयः।
नानाविधानां योगानां भुक्तिदोषामयान् प्रति ॥ २० ॥

भवन्ति चात्र।

त्रिशतं पञ्चपञ्चाशद् योगानां वमने स्मृतम्।
द्वे शते नवकाः पञ्च योगानान्तु विरेचने ॥
ऊर्द्ध्वानुलोमभागानामितुग्रक्तानि शतानि षट्।
प्राधान्यतः समाश्रित्य द्रव्याणि दश पञ्च च ॥
यद्वि येन प्रधानेन द्रव्यं समुपसृज्यते।
तत्संज्ञको हि संयोगो भवतीति विनिश्चितम् ॥ २१ ॥
फलादीनां प्रधानानां गुणभूताः सुरादयः।
ते हितान्यनुवर्त्तन्ते मनुजेन्द्रमिवेतरे ॥ २२ ॥
विरुद्धवीर्य्यमप्येषां प्रधानानामबाधकम्।
समानवीर्य्यन्त्वधिकं क्रियासामान्यमिष्यते ॥ २३ ॥
दृष्टवर्णरसस्पर्शगन्धार्थं प्रति चामयम्।
अतो विरुद्धवीर्य्याणां प्रयोग इति निश्चयः ॥ २४ ॥
भूयश्चैषां बलाधानं कार्य्यं स्वरसभावनैः।
सुभावितं ह्यल्पमपि द्रव्यं स्याद्बहुकर्म्मकृत् ॥
स्वरसैस्तुल्यवीर्य्यैर्वा तस्माद् द्रव्याणि भावयेत्।
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्म्मताम् ॥
कुर्य्यात् संश्लेषविश्लेषकालसंस्कारयुक्तिभिः। २५ ॥
प्रदेशमात्रमेतद्धि दृष्टव्यमिह षट्शतम् ॥
एवमेवं सहस्राणि कोटीर्वापि प्रकल्पयेत्।

बहुद्रव्यविकल्पत्वाद् योगसंख्या न विद्यते ॥ २६ ॥
तीक्ष्णमध्यमृदुत्वान्तु तेषां शृणुत लक्षणम् ॥
सुखं क्षिप्रं महावेगमसक्तं यत् प्रवर्त्तते ।
नातिग्लानिकरं पायौ हृदये न च रुक्करम् ॥
अन्नाशयमनुत्क्षिण्वन् कृत्स्नं दोषं निरस्यति ।
विरेचनं निरूहं वा तत् तीक्ष्णमिति निर्द्दिशेत् ॥ २७ ॥
जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितम् ।
ईषन्मात्राधिकैर्युक्तं तुल्यवीर्य्यैः सुभावितम् ॥
स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजम् ॥ २८ ॥
किञ्चिदेभिर्गुणैर्हीनं पूर्व्वोक्तैर्मात्रया तथा ।
स्निग्धस्विन्नस्य वा सम्यङ्मध्यं भवति भेषजम् ॥ २९ ॥
मन्दवीर्य्यं विरूक्षस्य हीनमात्रन्तु भेषजम् ।
अतुल्यवीर्य्यैः संयुक्तं मृदु स्यान्मन्दवेगवत् ॥ ३० ॥
अकृत्स्नदोषहरणाद्दशुद्धो ते बलीयसाम् ।
मध्यावरबलानान्तु प्रयोज्यं सिद्धिमिच्छता ॥ ३१ ॥
तीक्ष्णो मध्यो मृदुर्व्याधिः सर्व्वमध्याल्पलक्षणः ।
तीक्ष्णादीनि भिषक् तेषु बलापेक्षी प्रयोजयेत् ॥ ३२ ॥
देयस्त्वनिहृते पूर्व्वं पीते पश्चात् पुनःपुनः ।
भेषजं वमनार्थाय प्राय आपित्तदर्शनात् ॥ ३३ ॥
बलं वैविध्यमालक्ष्य दोषाणामातुरस्य च ।
पुनः प्रदद्याद्भेषज्यं सर्व्वशो वा विवर्ज्जयेत् ॥ ३४ ॥
निहृते वापि जीर्णे वा दोषनिर्हरणे बुधः ।
भेषजेऽन्यत् प्रयुञ्जीत प्रार्थयन् सिद्धिमुत्तमाम् ॥ ३५ ॥

अपक्वं वमनं दोषं पच्यमानं विरेचनम्।
निर्हरेद्वमनस्यातः पाकं न प्रतिकल्पयेत् ॥ ३६ ॥
पीते प्रस्रंसने दोषान् न निर्हृत्य जरां गते।
वमिते चौषधे धीरः पाययेदौषधं पुनः ॥ ३७ ॥
दीप्ताग्निं बहुदोषञ्च दृढ़स्नेहगुणं नरम्।
दुःशोध्यं तदहर्भुक्तं श्वो भूते पाययेत् पुनः ॥ ३८ ॥
दुर्ब्बलो बहुदोषश्च दोषपाकेन यो नरः।
विरिच्यते रसैर्भोज्यैर्भूयस्तमनुसारयेत् ॥ ३९ ॥
वमनैश्च विरेकैश्च विशुद्धस्याप्रमाणतः।
भोजनान्तरपानाभ्यां दोषशेषं शमं नयेत् ॥ ४० ॥
दुर्ब्बलं शोधितं पूर्व्वमल्पदोषञ्च मानवम्।
अपरिज्ञातकोष्ठञ्च पाययेदौषधं मृदु ॥
श्रेयो मृद्वसकृत्पीतमल्पबाधं निरत्ययम्।
न चातितीक्ष्णं यत् क्षिप्रं जनयेत् प्राणसंशयम् ॥ ४१ ॥
दुर्ब्बलोऽपि महादोषो विरेच्यो बहुशोऽल्पशः।
मृदुभिर्भेषजैर्दोषा हन्युरये न विनिर्हृताः ॥ ४२ ॥
यस्योर्द्ध्वं कफसंसृष्टं पित्तं यात्यनुलोमिकम्।
वमितं कवलैः शुद्धं लङ्घितं पाययेत तम् ॥ ४३ ॥
विबन्धेऽल्पं चिराद्दोषे स्रवतुष्णं पिवेज्जलम्।
तेनाध्मानं सहृदुक्छर्द्दिर्विबन्धश्चैव शाम्यति ॥ ४४ ॥
भेषजं दोषबद्धञ्चेन्नोर्द्ध्वं नाधः प्रवर्त्तते।
सोद्गारञ्च सशूलं वा स्वेदं तत्रावचारयेत् ॥ ४५ ॥
सुविरिक्तन्तु सोद्गारमाश्वेवौषधमुल्लिखेत्।

अतिप्रवर्त्तनं जीर्णे सुशीतैः स्तम्भयेद्भिषक् ॥ ४६ ॥
कदाचित् श्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम् ।
क्षीणे श्लेष्मणि सायाह्ने रात्रौ वा तत् प्रवर्त्तते ॥ ४७ ॥
विरूक्षानाहयोर्जीर्णे विष्टभ्यौष्ठ गतेऽपि वा ।
वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥ ४८ ॥
तृण्मोहभ्रममूर्च्छाद्याः स्युश्च ज्जीर्य्यति भेषजे ।
पित्तघ्नं स्वादु शीतञ्च भेषजं तत्र शस्यते ॥ ४९ ॥
लालाहृल्लासविष्टम्भलोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम् ॥ ५० ॥
सुस्निग्धं क्रूरकोष्ठञ्च लङ्घयेदविरेचितम् ।
तेनास्य स्नेहजः श्लेष्मसङ्गश्चैवोपशाम्यति ॥ ५१ ॥
रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ।
दीप्ताग्नीनाञ्च भैषज्यमविरिच्यैव जीर्य्यति ॥
तेभ्यो वस्तिं पुरा दत्त्वा पश्चाद्दद्याद्विरेचनम् ।
वस्तिप्रवर्त्तितं दोषं हरेत् सम्यग् विरेचनम् ॥ ५२ ॥
रूक्षाशनाः कर्म्मनित्या ये नरा दीप्तपावकाः ।
तेषां दोषाः क्षयं यान्ति कर्म्मवातातपाग्निभिः ॥
विरुद्धाध्यशनाजीर्णाद् दोषानपि हरन्ति ते ।
स्नेह्यास्ते मारुताद्रक्ष्या जाग्याध्यौ तान् विरेचयेत् ॥ ५३ ॥
नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद् विरेचनम् ॥ ५४ ॥
एवं ज्ञात्वा विधिं धीरो देशकालप्रमाणवित् ।
विरेचनं विरेच्येभ्यः प्रयच्छन् नापराध्यति ॥ ५५ ॥

विभ्रंशो विषवद् यस्य सम्यग्योगो यथामृतम्।
कालेष्ववस्थं पेयञ्च तस्माद् यत्नात् प्रयोजयेत्॥ ५६॥

भवति चात्र।

द्रव्यप्रमाणन्तु यदुक्तमस्मिन् मध्येषु तत् कोष्ठवयोबलेषु।
तन्मूलमालम्ब्य भवेद्विकल्पस्तेषां विकल्पोऽभ्यधिकोनभावः॥५७॥

षड्वंश्यस्तु मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः।
अष्टौ ते सर्षपा रक्तिस्तण्डुलश्चापि तद्द्वयम्॥
धान्यमाषो भवेदेको धान्यमाषद्वयं यवः।
अण्डकास्ते तु चत्वारस्तांश्चतस्रस्तु माषकः॥
हेमश्च धानकश्चोक्तो भवेच्छाणास्तु ते त्रयः।
शाणौ द्वौ द्रङ्क्षणं विद्यात् कोलं बदरमेव च॥
विद्याद्द्वौ द्रङ्क्षणौ कर्षं सुवर्णञ्चाक्षमेव च।
विड़ालपदकं तच्च पिचुं पाणितलं तथा॥
तिन्दुकञ्च विजानीयात् कवड़ग्रहमेव च।
द्वे सुवर्णे पलार्द्धं स्याच्छुक्तिरष्टमिका तथा॥
द्वे पलार्द्धे पलं मुष्टिः प्रकुञ्चोऽथ चतुर्थिका।
बिल्वं षोड़शिकञ्चाम्रं द्वे पले प्रसृतं विदुः॥
अष्टमानन्तु विज्ञेयं कुड़वौ द्वौ तु मानिका।
पलं चतुर्गुणं विद्यादञ्जलिं कुड़वं तथा॥
चत्वारः कुड़वाः प्रस्थश्चतुःप्रस्थमथाढ़कम्।
पात्रं तदेव विज्ञेयं कंसः प्रस्थाष्टकं तथा॥
कंसश्चतुर्गुणो द्रोणश्चार्म्मणं लल्वणञ्च तत्।

स एव कलशः ख्यातो घट उन्मान एव च ॥
घटस्तु द्विगुणः सूर्पो विज्ञेयः कुम्भ एव च ।
गोणीं शूर्पद्वयं विद्यात् खारीं भारं तथैव च ॥
द्वात्रिंशच्चैव जानीयाद्द्वाहं शूर्पाणि बुद्धिमान् ।
तुलां शतपलं विद्यात् परिमाणविशारदः ॥ ५८ ॥
शुष्कद्रवोष्विदं मानमेवमादि प्रकीर्त्तितम् ।
द्विगुणं तद्द्रवेष्विष्टं सद्यश्चैवोद्धृतेषु च ॥ ५९ ॥
यदि मानं तुला प्रोक्ता पलं वा तत् प्रयोजयेत् ।
अनुक्ते परिमाणे तु तुल्यं मानं प्रकीर्त्तितम् ॥ ६० ॥
द्रवकार्य्येऽपि चानुक्ते सर्व्वत्र सलिलं स्मृतम् ।
यतश्च पादनिर्द्देशश्चतुर्भागस्ततश्च सः ॥ ६१ ॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥ ६२ ॥
स्नेहपाकस्त्रिधा ज्ञेयो मृदुर्मध्यः खरस्तथा ।
तुल्ये कल्केन निर्यासे भेषजानां मृदुः स्मृतः ॥
मध्यपाक द्रव निर्यासे मध्यो दर्व्वीं विमुञ्चति ।
शीर्य्यमाणे तु निर्य्यासे वर्त्तमाने खरस्तथा ॥ ६३ ॥
खरोऽभ्यङ्गे स्मृतः पाको मृदुर्नस्तःक्रियासु च ।
मध्यपाकन्तु पानार्थे वस्तौ च विनियोजयेत् ॥ ६४ ॥
मानञ्च द्विविधं प्राहुः कालिङ्गं मागधं तथा ।
कालिङ्गान्मागधं श्रेष्ठमेवं मानविदो विदुः ॥ ६५ ॥

तत्र श्लोकौ ।

कल्पार्थः शोधने संज्ञा पृथग् यत्तु प्रवर्त्तते ।

देशादीनां फलादीनां गुणा योगशतानि षट् ॥
विकल्पहेतुर्नामानि तीक्ष्णमध्याल्पलक्षणम्।
विधिश्चावस्थिको मानं स्नेहपाकस्य दर्शितः॥ ६६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते कल्पस्थाने
दन्तीद्रवन्तीकल्पो नाम द्वादशोऽध्यायः ॥ १२ ॥

इति कल्पस्थानं समाप्तम्

# चरक-संहिता।

## सिद्धिस्थानम्।

### प्रथमोऽध्यायः।

अथातः कल्पनासिद्धिं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १॥

का कल्पना पञ्चसु कर्म्मसूक्ता क्रमश्च कः किञ्च कृताकृतेषु।
लिङ्गं तथैवातिकृतेषु संख्या का किंगुणाः केषु च कश्च वस्तिः॥
किं वर्ज्जनीयं प्रतिकर्म्मकाले कृते कियान् वा परिहारकालः।
प्रणीयमानश्च न याति वस्तिः केनैति शीघ्रं सुचिराच्च केन॥
साध्या गदाः स्वैः शमनैश्च केचित् कस्मात् प्रयुक्तैर्न शमं व्रजन्ति ॥
प्रचोदितः शिष्यवरेण सम्यगित्यग्निवेशेन भिषग्वरिष्ठः।
पुनर्व्वसुस्तन्त्रविदाह तस्मै सर्व्वप्रजानां हितकाम्ययेदम् ॥ २ ॥
त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य उक्तः।
नातः परं स्नेहनमादिशन्ति सात्मीभवेत् सप्तदिनात् परं हि ॥३

स्वेदोऽनिलं हन्ति मृदुं करोति देहं मलानां विनिहन्ति सङ्गम्।
स्निग्धस्य सूक्ष्मेष्वयनेषु लीनं स्वेदस्तु दोषं नयति द्रवत्वम् ॥४
ग्राम्यौदकानूपरसैः समांसैरुत्क्लेशनीयः पयसा च वम्यः।
रसैस्तथा जाङ्गलजैः सयूषैः स्निग्धैः कफावृद्धिकरैर्विरेच्यः॥
श्लेष्मोत्तरश्छर्दयति ह्यदुःखं विरिच्यते मन्दकफस्तु सम्यक्।
अधः कफेऽल्पे वमनं नियच्छेद्विरेचनं तद्वकफे तथोर्द्ध्वम्॥
स्निग्धाय देयं वमनं यथोक्तं वान्तस्य पेयादिरनुक्रमश्च।
स्निग्धस्य सुस्विन्नतनोर्यथावद् विरेचनं योग्यतमं प्रयोज्यम् ॥५
पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः॥
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्व्वसहस्तथैव शुद्धस्य पेयादिभिरन्तरग्निः॥ ६॥
जघन्यमध्यप्रवरेषु वेगाश्चत्वार दृष्टा वमने षडष्टौ।
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा द्वित्रिचतुर्गुणश्च ॥ ७॥
पित्तान्तमिष्टं वमनं तथोर्द्ध्वमधःकफान्तञ्च विरेकमाहुः।
द्वित्रीन् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥८
क्रमात् कफः पित्तमथानिलश्च यस्यैति सम्यग्वमितः स दृष्टः।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तथा लघुत्वेऽपि च लक्ष्यमाणे॥
दुश्छर्दिते स्फोटककोठकण्डूहृत्खाविशुद्धिर्गुरुगात्रता च।
तृण्मोहमूर्च्छानिलकोपनिद्राबलातिहानिर्वमितेऽति च स्यात् ॥९
स्रोतोविशुद्धीन्द्रियसंप्रसादो लघुत्वमूर्ज्जोऽग्निरनामयत्वम्।
प्राप्तिश्च विट्पित्तकफानिलानां सम्यग्विरिक्तस्य भवेत् क्रमेण॥
स्यात् श्लेष्मपित्तानिलसंप्रकोपः स्वेदोऽल्पवह्निर्गुरुगात्रता च।

तन्द्रा तथा च्छर्द्दिररोचकश्च वातानुलोम्यं न च दुर्विरिक्ते ॥
कफास्रपित्तक्षयजानिलोत्थाः सुप्तग्ङ्गमर्द्दक्लमवेपनाद्याः ।
निद्राबलाभावतमःप्रवेशाः सोन्मादहिक्काश्च विरेचितेऽति ॥१०॥
संसृष्टभक्तं नवमेऽह्नि सर्पिस्तं पाययेताप्यनुवासयेद्वा ।
दद्यात्त्र्यहान्मातिबुभुक्षिताय तैलाक्तगात्राय ततो निरूहम् ॥११
प्रत्यागते धन्वरसेन भोज्यः समीक्ष्य वा दोषबलं यथार्हम् ।
नरस्ततो निश्यनुवासनार्हो नात्याशितः स्यादनुवासनीयः ॥१२॥

शीते वसन्ते च दिवानुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान् परिरक्षिता ये
स्नेहस्य पानं प्रति कीर्त्तिताः प्राक् ॥ १३ ॥
प्रत्यागते चाप्यनुवासनीये
दिवा प्रदेयं व्युषिताय भोज्यम् ।
सायञ्च भोज्यं परतस्त्र्यहे वा
ताहेऽनुवास्योऽहनि पञ्चमे वा ॥
द्व्यहे त्र्यहे वाप्यथ पञ्चमे वा
दद्यान्निरूहादनुवासनञ्च ।
एकं तथा त्रीन् कफजे विकारे
पित्तात्मके पञ्च तु सप्त वापि ॥
वाते नवैकादश वा पुनर्वा
वस्तीनयुग्मान् कुशलो विदध्यात् ॥ १४ ॥

नरो विरिक्तस्तु निरूहदानं विवर्ज्जयेत् सप्तदिनान्यवश्यम् ।
शुद्धो विरेकेण निरूहदानं तद्धास्य शून्यं विकृषेच्छरीरम् ॥१५

वस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ।
सर्व्वार्थकारी शिशुवृद्धयूनां निरत्ययः सर्व्वगदापहश्च ॥
विट्श्लेष्ममूत्रानिलपित्तकर्षी स्थैर्य्यकृच्छुक्रबलप्रदश्च ।
विष्वक्स्थितं दोषचयं निरस्य सर्व्वान् विकारान् शमयेन्निरूहः ॥
देहे निरूहेण विशुद्धमार्गे संस्नेहनं वर्णबलप्रदञ्च ॥ १६ ॥
न तैलदानात् परमस्ति किञ्चित् द्रव्यं विशेषेण समीरणार्त्ते ।
स्नेहाद्धि रौक्ष्यं लघुतां गुरुत्वादौष्ण्याच्च शैत्यं पवनस्य हत्वा ॥
तैलं ददात्याशु मनःप्रसादं वीर्य्यं बलं वर्णमथाग्निपुष्टिम् ॥ १७ ॥
मूले निषिक्ते हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवाग्रः ।
काले महान् पुष्पफलप्रदश्च तथा नरः स्यादनुवासनेन ॥ १८ ॥
स्तब्धाश्च ये सङ्कुचिताश्च येऽपि ये पङ्गवो येऽपि च भग्नभग्नाः ।
येषाञ्च शाखासु चरन्ति वाताः शस्तो विशेषेण हि तेषु वस्तिः ॥
आध्मापने विग्रथिते पुरीषे शूले च भक्तानभिनन्दने च ।
एवंप्रकाराश्च भवन्ति कुक्षौ येचामयास्तेषु च वस्तिरिष्टः ॥
याश्च स्त्रियो वातकृतोपसर्गाद्गर्भं न गृह्णन्ति नृभिः समेताः ।
क्षीणेन्द्रिया ये च नराः कृशाश्च तेषाञ्च वस्तिः परमः प्रदिष्टः ॥ १९

उष्णाभिभूतेषु वदन्ति शीतान्
शीताभिभूतेषु तथा सुखोष्णान् ।
तत्प्रत्यनीकौषधसंप्रयुक्तान्
सर्व्वत्र वस्तीन् प्रविभज्य युञ्ज्यात् ॥ २० ॥

न वृंहणीयान् विदधीत वस्तीन् विशोधनीयेषु गदेषु वैद्यः ।
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ॥
क्षीणक्षतानां न विशोधनीयान् न शोषिणांनो भृशदुर्ब्बलानाम् ।

न मूर्च्छितानाञ्च न शोधितानां येषाञ्च दोषेषु निबद्धवायुः ॥२१
शाखागताः कोष्ठगताश्च रोगा मर्म्मोर्द्ध सर्व्वावयवङ्गताश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥
विण्मूत्रपित्तादिमलाशयानां विक्षेपसंघातकरः स यस्मात् ।
तस्यातिवृद्धस्य शमाय नान्यद्वस्तेर्विना भेषजमस्ति किञ्चित् ।

तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति
सर्व्वां चिकित्सामपि वस्तिमेके ॥ २२ ॥
नाभिप्रदेशञ्च कटीञ्च गत्वा
कुक्षिं समालोड्य पुनश्च पृष्ठम् ॥
संस्नेह्य कायं शिथिलांश्च कृत्वा
दोषान् पुरीषं ग्रथितं विमथ्य ।
स्वसक्तवेगः सपुरीषदोषः
प्रत्यागतो वस्तिरिति प्रशस्तः ॥ २३ ॥
सनाभिदेशं कटिपार्श्वकुक्षिं
गत्वा शकृद्दोषचयं निरस्य ।
संक्षिप्तवेगः सपुरीषदोषः
सम्यक् सुखेनेति च यश्च वस्तिः ॥
प्रसृष्टविण्मूत्रसमीरणत्व
रुच्यग्निवृद्ध्याशयलाघवादि ।
रोगोपशान्तिः प्रकृतिस्थता च
बलञ्च तत् स्यात् सुनिरूढलिङ्गम् ॥ २४ ॥
स्याद्रुक्शिरोरुग्गुदकुक्षिलिङ्ग-
श्वर्तिः प्रतिश्यायविकर्त्तिके च ।

हृल्लासकासारुचिमूत्रसङ्गः
प्रश्वासो न सम्यक् च निरूहिते स्यात् ॥ २५ ॥
लिङ्गं यदेवातिविरेचितस्य भवेत् तदेवातिनिरूहितस्य ॥ २६ ॥
प्रत्यागमनं सशकृच्च तैलं रक्तादिबुद्धीन्द्रियसंप्रसादः।
स्वप्नानुवृत्तिर्लघुता बलञ्च सृष्टाश्च वेगाः स्वनुवासिते स्युः ॥२७॥
अधःशरीरोदरबाहुपृष्ठपार्श्वेषु रुग् रूक्षखरञ्च वर्च्चः।
ग्रहश्च विण्मूत्रसमीरणानामसम्यगेतान्यनुवासिते स्युः॥ २८ ॥
हृल्लासमोहक्लमसादमूर्च्छा विकर्त्तिका चात्यनुवासिते स्युः ॥२९
यस्यैव यामाननुवर्त्तते त्रीन् स्नेहो नरः स्यात् स विशुद्धदेहः।
आशुव्यागतेऽन्यस्तु पुनर्विधेयः स्नेहो न संस्नेहयति ह्यतिष्ठन् ॥३०
विंशन्मताः कर्म्मसु वस्तयोहि कालस्ततोऽर्द्धेन ततश्च योगः।
सान्वासना द्वादश वै निरूहाः प्राक्स्नेह एकः परतश्च पञ्च॥
काले त्रयोऽन्तः पुरतस्तथैकः स्नेहा निरूहान्तरिताश्च षट्सु।
योगे निरूहास्त्रय एव देयाः स्नेहास्तथा पञ्च परादिमध्याः * ॥३१

त्रीन् पञ्च वाहुश्चतुरोऽथ षड्वा
वाताधिकेभ्यस्त्वनुवासनीयान्।
स्नेहान् प्रदायाशु भिषग्विदध्यात्
स्रोतोविशुद्ध्यर्थमतो निरूहान् ॥ ३२ ॥

विशुद्धकायस्य ततः क्रमेण स्निग्धन्तु तैः स्वेदितमुत्तमाङ्गम्।
विरेचयेद्विस्त्रिरथैकशो वा बलं समीक्ष्य त्रिविधं मलानाम् ॥३३

---

* द्विः पञ्चमताः कर्म्मसु वस्तयो हि काले ततोऽर्द्धेन तथाच योगे।
सान्वासना द्वादश वै निरूहाः प्राक्स्नेह एकः परतश्च पञ्च॥
काले त्रयोऽन्तेऽन्तरितस्तथैकः स्नेहा निरूहाः सहिताश्च षट् स्युः।
योगे निरूहास्त्रय एव देयाः स्नेहास्त्रयः षट् च परादिमध्याः॥
इति पाठान्तरम्।

उरःशिरोलाघवमिन्द्रियाणां स्रोतोविशुद्धिश्च भवेद्विशुद्धे ।
गलोपलेपः शिरसो गुरुत्वं निष्ठीवनञ्चाप्यथ दुर्व्विरिक्ते ॥३४॥
शिरोऽक्षिशङ्खश्रवणार्त्तितोदश्चात्यर्थशुद्धे तिमिरञ्च पश्चात् ॥
स्यात् तर्पणं तत्र मृदु द्रवञ्च स्निग्धस्य तीक्ष्णन्तु पुनर्न योगे।
दृत्यातुरस्वस्थविधिः प्रयोगे बलायुषोर्वृद्धिकृदामयघ्नः ॥ ३५ ॥

कालस्तु वस्त्यादिषु याति यावां-
स्तावान् भवेद्विः परिहारकालः ॥ ३६ ॥
अत्यासनस्थानवचांसि यानं
स्वप्नं दिवा मैथुनवेगरोधान् ।
शीतोपचारातपशोकरोषां-
स्त्यजेदकालाहितभोजनञ्च ॥ ३७ ॥
बद्धे प्रणीते विषमे च नेत्रे
मार्गे तथार्शःकफविड्विबन्धे ।
न याति वस्तिर्न सुखं निरेति
दोषावृतोऽल्पो यदि वाल्पवीर्य्यः ॥ ३८ ॥

प्राप्ते तु वर्च्चोऽनिलमूत्रवेगे वाते विबद्धेऽल्पबले गुदे वा ।
अतुष्णतीक्ष्णश्च मृदौ च कोष्ठे प्रणीतमात्रः पुनरेति वस्तिः ॥३९
मेदःकफाभ्यामनिलो निरुद्धः शूलाङ्गसुप्तिश्वयथून् करोति ।
स्नेहं प्रयुञ्जन्नबुधस्तु तस्मै संवर्द्धयत्येव हि तान् विकारान् ॥४०
रोगास्तथान्येऽप्यवितर्क्यमाणाः परस्परेणावगृहीतमार्गाः ।
सन्दूषिता धातुभिरेव चान्यैः स्वैर्भेषजैर्नोपशमं व्रजन्ति ॥ ४१ ॥
सर्व्वञ्च रोगप्रशमाय कर्म्म हीनातिमात्रं विपरीतकालम् ।
मिथ्योपचाराच्च न तं विकारं शान्तिं नयेत् पथ्यमपि प्रयुक्तम् ॥४२

तत्र श्लोकः ।

प्रश्नानिमान् द्वादश पञ्चकर्म्मा-
ण्युद्दिश्य सिद्धाविह कल्पनायाम् ।
प्रजाहितार्थं भगवान् महार्थान्
सम्यग् जगादर्षिवरोऽत्रिपुत्रः ॥ ४३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
कल्पनासिद्धिर्नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातः पञ्चकर्म्मीयां सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

येषां यस्मात् पञ्चकर्म्माण्यग्निवेश न कारयेत् ।
येषाञ्च कारयेत्तानि तत् सर्व्वं संप्रवक्ष्यते ॥ २ ॥
चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च ।
सद्वैद्यनृपतिद्वेष्टा तद्द्विष्टः शोकपीड़ितः ॥
याद्दृच्छिको मुमूर्षुश्च विहीनः करणैश्च यः ।
वैरी वैद्याभिमानी च श्रद्धाहीनः सशङ्कितः ॥
भिषजामविधेयश्च नोपक्रम्यो भिषग्विदा ।
एतानुपचरन् वैद्यो बहून् दोषानवाप्नुयात् ॥ ३ ॥
एभ्योऽन्येऽत्र समुपक्रम्या नराः सर्व्वैरुपक्रमैः ।
अवस्थां प्रविभज्यैषां कार्य्याकार्य्यञ्च वक्ष्यते ॥ ४ ॥

अच्छर्द्दनीयास्तावत् क्षतक्षीणातिस्थूलकृशबालवृद्धदुर्ब्बल-श्रान्त-पिपासित-क्षुधित-कर्म्मभाराध्वहतोपवास-मैथुनाध्ययन-व्यायामचिन्ता-प्रसक्तक्षाम-गर्भिणी-सुकुमार-संवृतकोष्ठदुश्छर्द्द-नोर्द्ध रक्तपित्तप्रसक्तच्छर्द्दि रूर्द्ध वातास्थापितानुवासितहृद्रोगो-दावर्त्तमूत्राघात-प्लीहगुल्मोदराष्ठीलास्वरोपघात-तिमिरशिरः-शङ्खकर्णाक्षिपार्श्वशूलार्त्ताः ॥ ५ ॥

तत्र क्षतस्य च भूयः क्षणनात् रक्तातिप्रवृत्तिः स्यात् । क्षीणातिस्थूलकृशबालवृद्धदुर्ब्बलानामौषधबलासहत्वात् प्राणो-परोधः । श्रान्तपिपासितक्षुधितानाञ्च तद्वत् । कर्म्मभारा-ध्वहतोपवासमैथुनाध्ययनव्यायामचिन्ताप्रसक्तक्षामाणां रौक्ष्या-द्वातरक्तच्छेदक्षतभयं स्यात् । गर्भिण्या गर्भव्यापद्रामगर्भ-भ्रंशाच्च दारुणरोगप्राप्तिः । सुकुमारस्य हृदयस्य विकर्षणा-दूर्द्धमधो वा रुधिरातिप्रवृत्तिः । संवृतकोष्ठदुश्छर्द्दनयोरति-मात्रप्रवाहनाद्दोषाः समुत्क्लिष्टा ह्यन्तःकोष्ठे विसर्पन्तो जनयन्ति स्तम्भं जाड्यं वैचित्त्यं मरणं वा । ऊर्द्ध रक्तपित्तिनोदान-ऊर्द्धमुत्क्षिप्य प्राणान् हरेद्रक्तञ्चातिप्रवर्त्तयेत् । प्रसक्तच्छर्द्दे-स्तु तद्वत् । ऊर्द्धवातास्थापितानुवासितानामूर्द्ध वातातिप्रवृत्तिः । हृद्रोगिणो हृदयोपरोधः । उदावर्त्तिनो घोरतर उदावर्त्तः स्याच्छीघ्रतरहन्ता । मूत्राघातादिभिरार्त्तानां तीव्रतरशूल-प्रादुर्भावः । तिमिरार्त्तानां तिमिरातिवृद्धिः । शिरःशूलादिषु शूलातिवृद्धिः । तस्मादेते न वाम्याः ॥ ६ ॥

सर्व्वेष्वपि खल्वेतेषु विषगरविरुद्धाध्यवहारामकृतेष्वप्रति-षिद्धं शीघ्रकारित्वाद् दोषाणामिति ॥ ७ ॥

शेषास्तु वाम्याः, पीनसकुष्ठनवज्वरराजयक्ष्म-कासश्वास-गलग्रहगलगण्डश्लीपदमेहमन्दाग्निविरुद्धाजीर्णान्नविसूचिकाल-सक-विषगरपीतदष्टदिग्धविद्धाधःशोणितपित्तप्रसेकदुर्नामहृल्ला-सारोचका-विपाकापच्यपस्मारोन्मादातिसार-शोष-पाण्डु-रोग-मुखपाकदुष्टस्तन्यादयः श्लेष्मव्याधयो विशेषेण महारोगाध्यायो-क्ताश्च। तेषु हि वमनं प्रधानतममित्युक्तं केदारसेतुभेदे शाल्यादिशोषदोषविनाशवत् ॥ ८ ॥

अविरेच्यास्तु सुभगक्षतगुदमुक्तनालाधोभागरक्तपित्त-विलङ्घितदुर्ब्बलेन्द्रियाल्पाग्निनिरूढकामादिव्यग्राजीर्णनवज्वर-मदात्ययिताध्मातशल्यार्द्दिताभिहतातिस्निग्ध-रूक्षदारुणकोष्ठाः क्षतादयश्च गर्भिण्यन्ताः ॥ ९ ॥

तत्र सुभगस्य सुकुमारोक्तो दोषः स्यात्। क्षतगुदस्य क्षते गुदे वायुः प्राणोपरोधकरीं वरां रुजां जनयेत्। मुक्तनालमति-प्रवृत्ता हन्यात्। अधोभागरक्तपित्तिनञ्च तद्वदेव। विल-ङ्घितदुर्ब्बलेन्द्रियाल्पाग्निनिरूढा औषधवेगं न सहेरन्। कामादिव्यग्रमनसो न प्रवर्त्तते कृच्छ्रेण वा प्रवर्त्तमानमयोग-दोषान् कुर्य्यात्। अजीर्णिन आमदोषः स्यात्। नवज्वरस्या-विपक्वान् दोषान् न निर्हरेद् वातमेव च कोपयेत्। मदात्य-यितस्य मद्यक्षीणे देहे वृद्धोवायुः प्राणोपरोधं कुर्य्यात्। आध्मात-स्याध्मायमानस्य वा पुरीषंकोष्ठनिचितो वायुर्विसर्पन् सहसा-नाहं तीव्रतरं मरणं वा जनयेत्। शल्यार्द्दिताभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात्। अतिस्निग्धंस्यातियोगभयं भवेत्। रूक्षस्य वायुरङ्गग्रहं कुर्य्यात्। दारुणकोष्ठस्य विरे-

चनोद्धता दोषा हृच्छूलपर्व्वभेदानाहाङ्गमर्द्दच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः। क्षतादीनां गर्भिण्यन्तानां छर्द्दनोक्तो दोषः स्यात्। तस्मादेते न विरेच्याः॥ १०॥

शेषास्तु विरेच्याः, कुष्ठज्वरमेहोर्द्ध्वरक्तपित्तभगन्दरोदराशोंब्रध्नप्लीह-गुल्मार्व्वुदगलगण्डग्रन्थि-विसूचिकालसक-मूत्राघातक्रिमिकोष्ठवीसर्प-पाण्डुरोगशिरःपार्श्वशूलोदावर्त्त नेत्रास्य-दाह-हृद्रोगव्यङ्गनीलिकानेत्रनासिकास्यश्रवणरोगगुदमेढ़्पाक-हलीमकश्वासकासकामलापच्यपस्मारोन्मादवातरक्तयोनिरेतो-दोषतैमिर्य्यारोचकाविपाकच्छर्द्दिश्वयथुज्वरविस्फोटकादयः पित्तव्याधयो विशेषेण महारोगाध्यायोक्ताश्च। एतेषु हि विरेचनं प्रधानतममित्युक्तमग्न्युपशमेऽग्निगृहवत्॥ ११॥

अनात्स्याप्यास्त्वजीर्णातिस्निग्धपीतस्नेहोत्क्लिष्टदोषाल्पाग्नियानक्लान्तातिदुर्व्वल-क्षुत्तृष्णाश्रमार्त्तातिकृशभुक्तभक्तपीतोदकवमितविरिक्तकृतनस्तःकर्म्मक्रुद्धभीतमत्तमूर्च्छितप्रसक्तच्छर्द्दिनिष्ठीविकाश्वासकासहिक्काबद्धच्छिद्रदकोदराध्मानालसकविसूचिकामप्रजातातिसारमधुमेहकुष्ठार्त्ताः॥ १२॥

तत्राजीर्णातिस्निग्धपीतस्नेहानां दृष्योदरं मूर्च्छा श्वयथुर्वा स्यात्। उत्क्लिष्टदोषमन्दाग्न्योररोचकस्तीव्रः। यानक्लान्तस्य क्षोभव्यापन्नो वस्तिराशु देहं शोषयेत्। अतिदुर्व्वलक्षुत्तृष्णाश्रमार्त्तानां पूर्व्वोक्तो दोषः स्यात्। अतिकृशस्य कार्श्यं पुनर्ज्जनयेत्। भुक्तभक्तपीतोदकयोरुत्क्लिश्योर्द्ध्वमधो वा वायुर्वस्तिमुत्क्षिप्य क्षिप्रं वस्तौ घोरान् विकारान् जनयेत्। वमितविरिक्तयोस्तु रूक्षशरीरं निरूहः क्षतं क्षार इव निर्दहेत्।

क्षतनस्तःकर्म्मणो विभ्रंशं भृशसंवद्धस्रोतसं कुर्य्यात्। क्षुद्भीतयोर्वस्तिरूर्द्ध्वमुपप्लवेत्। मत्तमूर्च्छितयोर्भृशं विचलितायां संज्ञायां चित्तोपघातव्यापत् स्यात्। प्रसक्तच्छर्द्दिनिष्ठीविकाश्वासकासहिक्कार्त्तानामूर्द्ध्वीभूतो वायुरूर्द्ध्वं वस्तिं नयेत्। बद्धच्छिद्रदकोदराध्मातानां भृशतरमाध्माप्य वस्तिः प्राणान् हिंस्यात्। अलसकविसूचिकामप्रजातातिसारिणामामकृतो दोषः स्यात्। मधुमेहकुष्ठिनो व्याधेः पुनर्वृद्धिः। तस्मादिते नास्थाप्याः ॥ १३ ॥

शेषास्त्वास्थाप्याः, सर्व्वाङ्गैकाङ्गकुक्षिरोगवातवर्च्चोमूत्रशुक्रसङ्गबलवर्णमांसरेतःक्षयदोषाध्मानाङ्गसुप्तिक्रिमिकोष्ठोदावर्त्तस्तब्धाङ्गातिसारसर्व्वाङ्गाभितापप्लीहगुल्महृद्रोगभगन्दरोन्मादज्वरब्रध्नशिरःकर्णशूलहृदयपार्श्वपृष्ठकटीग्रहवेपनाक्षेपकगौरवातिलाघवरजः-क्षयानार्त्तव-विषमाग्नि-स्फिग्जानु-जङ्घोरु-गुल्फपार्ष्णि प्रपदयोनिबाह्वङ्गुलिस्तनाङ्गदन्तनखपर्व्वास्थि-शूल-शोथस्तम्भान्त्रकूजनपरिकर्त्तिकाल्पाल्पशब्दोग्रगन्धोत्थानादयो वातव्याधयो विशेषेण महारोगाध्यायोक्ताश्च। एतेष्वास्थापनं प्रधानतममित्युक्तं वनस्पतेर्मूलच्छेदवत्॥ १४ ॥

य एवानास्थाप्यास्त एवाननुवास्याः स्युः। विशेषतस्त्वभुक्तभक्त-नवज्वर-पाण्डुरोगकामलाप्रमेहार्शःप्रतिश्यायारोचकमन्दाग्नि-दुर्व्वलप्लीहकफोदरोरुस्तम्भवर्च्चोभेदपीत-विषगर-पित्तकफाभिष्यन्दगुरुकोष्ठश्लीपदगलगण्डापचीक्रिमिकोष्ठिनश्च ॥१५॥

तत्राभुक्तभक्तस्याभावृतमार्गत्वादूर्द्ध्वमतिवर्त्तते स्नेहः। नवज्वरपाण्डुरोगकामलाप्रमेहिणां दोषानुत्क्लिश्योदरं जनयेत्।

अग्नेश्चर्गांश्चाभिष्यन्दाध्मानं कुर्य्यात्। अरोचकार्त्तस्यान्न-गृद्धिं पुनर्हन्यात्। मन्दाग्निदुर्ब्बलयोर्मन्दतरमग्निं कुर्य्यात्। प्रतिश्यायश्लैष्महाद्दिमताञ्च भृशतरमुत्क्लिष्टदोषाणां भूय एव दोषं वर्द्धयेत्। तस्मादेते नानुवास्याः॥ १६॥

य एवास्थाप्यास्त एवानुवास्याः, विशेषतस्तु रूक्षतीक्ष्णाग्नयः केवलवातरोगार्त्ताश्च। एतेषु ह्यनुवासनं प्रधानतममित्युक्तं वनस्पतिमूलच्छेदनवत् मूले द्रुमाणां प्रसेकवच्चेति॥ १७॥

अशिरोविरेचनार्हास्तु पुनरजीर्णिभुक्तभक्तपीतस्नेहमद्य-तोयपातुकामस्नातशिरःस्नातुकामक्षुत्तृष्णाश्रमार्त्तमत्तमूर्च्छित-शस्त्रदण्डाहत-व्यवायव्यायामपानक्लान्तनवज्वरशोकाभितप्तवि-रिक्तानुवासितगर्भिणीनवप्रतिश्यायार्त्ता अनृतुदुर्द्दिने चेति॥१८

तत्राजीर्णिभुक्तभक्तयोर्दोष ऊर्द्ध्ववहानि स्रोतांस्यावृत्य कासश्वासच्छर्द्दिप्रतिश्यायान् जनयेत्। पीतस्नेहमद्यतोय-पातुकामानां कृते च पिबतां मुखनासास्रावातुपदेहतिमिर-शिरोरोगान् जनयेत्। स्नातशिरसः कृते च स्नातस्य प्रति-श्यायं, क्षुधार्त्तस्य वातप्रकोपं, तृष्णार्त्तस्य पुनस्तृष्णाभिवृद्धिं मुखशोषञ्च। श्रमार्त्तमत्तमूर्च्छितानामास्थापनोक्तो दोषः स्यात्। शस्त्रदण्डहतयोस्तीव्रतरां रुजं जनयेत्। व्यवायव्यायामपानक्ला-न्तानां शिरःस्कन्धनेत्रोरःपीड़नम्। नवज्वरशोकाभितप्तयो-रूष्मा नेत्रनाड़ीरनुसृत्य तिमिरं ज्वरवृद्धिञ्च कुर्य्यात्। विरिक्तस्य वायुरिन्द्रियोपघातं कुर्य्यात्। अनुवासितस्य कफः शिरोगुरु-त्वञ्च कण्डूक्रिमिदोषान् जनयेत्। गर्भिण्या गर्भं स्तम्भयेत् स काणः कुणिः पक्षहतः पीठसर्पी वा स्यात्। नवप्रतिश्यायस्य

स्रोतांसि व्यापादयेत्। अन्तर्दुर्द्दिने शीतदोषात् पूतिनस्यं शिरोरोगश्च स्यात्। तस्मादेते न शिरोविरेचनार्हाः॥ १९॥

शेषास्त्वर्हाः, विशेषतस्तु शिरोदन्तमन्यास्तम्भहनुग्रहपीनसगलशुण्डिकाशालूकशुक्र-तिमिरवर्त्मरोगव्यङ्गोपजिह्विकार्द्धावभेदकग्रीवास्कन्धास्यनासिकाकर्णाक्षिमूर्द्धकपालशिरोरोगार्द्दितापतन्त्रकापतानकगलगण्डदन्तशूलहर्षचालाक्षिरागनाडार्व्वुदस्वरभेदवाग्ग्रहगद्गदक्रथनादय ऊर्द्ध्वजत्रुगता वातविकाराः परिपक्काश्च। एतेषु शिरोविरेचनं प्रधानतममित्युक्तम्। तद्ध्युत्तमाङ्गमनुप्रविश्य मज्जपेशीकासक्तं दोषं विकारकरमपकर्षति॥२०

प्रावृट्शरद्वसन्तेष्वितरेष्वात्ययिकेषु रोगेषु नावनं कुर्य्याद् ग्रीष्मे पूर्व्वाह्णे, शीते मध्याह्ने, वर्षासु दुर्द्दिने वेति॥ २१॥

तत्र श्लोकाः।

इति पञ्चविधं कर्म्म विस्तरेण निदर्शितम्।<br>
येभ्यो यत् त्वहितं यस्मात् कर्म्म येभ्यश्च यद्धितम्॥<br>
न चैकान्तेन निर्द्दिष्टमेकान्तेन समाश्रयेत्।<br>
स्वयमप्यत्र वैद्येन तर्क्यं बुद्धिमता भवेत्॥<br>
उत्पद्यते हि सावस्था देशकालबलं प्रति।<br>
यस्यां कार्य्यमकार्य्यं स्यात् कर्म्म कार्य्यञ्च गर्हितम्॥<br>
छर्द्दिहृद्रोगगुल्मानां वमनं स्वे चिकित्सिते।<br>
अवस्थां प्राप्य निर्द्दिष्टं कुष्ठिनां वस्तिकर्म्म च॥<br>
तस्मात् सत्यपि निर्द्देशे कुर्य्यादूह्यं स्वयं धिया।<br>
विना तर्केण या सिद्धिर्यदृच्छासिद्धिरेव सा॥ २२॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने पञ्चकर्म्मीयसिद्धिर्नाम द्वितीयोऽध्यायः॥ २॥

## तृतीयोऽध्यायः ।

अथातो वस्तिसूत्रीयां सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

कृतक्षणं शैलवरस्य रम्ये स्थितं वनेऽशायतनस्य पार्श्वे ।
महर्षिसंघैर्वृतमग्निवेशः पुनर्व्वसुं प्राञ्जलिरन्वपृच्छत् ॥
वस्तिर्नरेभ्यः किमवेक्ष्य दत्तः स्यात्सिद्धिमान् किम्मयमस्य नेत्रम् ।
कीदृक्प्रमाणाकृति किंगुणञ्च केषाञ्च किंयोनिगुणश्च वस्तिः ॥

निरूहकल्पः प्रणिधानमात्राः
स्नेहस्य वा काः शमने विधिः कः ।
के वस्तयः केषु हिता इतीदं
श्रुत्वोत्तरं प्राह वचो महर्षिः ॥ २ ॥

समीक्ष्य दोषौषधदेशकाल-
सात्म्याग्निसत्त्वादिवयोबलानि ।
वस्तिः प्रयुक्तो नियतं गुणाय
स्युः सर्व्वकर्म्माणि च सिद्धिमन्ति ॥ ३ ॥

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यास्थिलोहद्रुमवेणुदन्तैः ।
नालैर्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि त्रिकर्णिकानि ॥

षड्द्वादशाष्टाङ्गुलसम्मितानि
षड्विंशतिद्वादशवर्षजानाम् ।

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यास्थिवंशद्रुमदन्तनलैः ।

सुराङ्गुष्ठकर्कन्धुसतीनवाहि-
च्छिद्राणि वक्त्राणि पिहितानि चापि ॥

यथावयोऽङ्गुष्ठकनिष्ठकाभ्यां
मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि
श्लक्ष्णानि च स्युर्गुडिकामुखानि ॥
स्यात् कर्णिकैकाग्रचतुर्थभागे
मूलाश्रिते वस्तिनिबन्धने द्वे ॥ ४ ॥

जारद्गवो माहिषहारिणो वा
स्याच्छौकरो वस्तिरजस्य वापि ॥
दृढस्तनुर्नष्टशिरो विगन्धः
कषायरक्तः सुमृदुः सुशुद्धः ।
नृणां वयो वीक्ष्य यथानुरूपं
नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ ५ ॥

वस्तेरभावे प्लवजो गलो वा
स्यादङ्कपादः सुघनः पटो वा ।
नेत्रस्य चालाभत एव नाड़ी
हिताश्थिजा वंशभवो नलो वा ॥ ६ ॥

आस्थापनार्हं पुरुषं विधिज्ञः
समीक्ष्य पुण्येऽहनि शुक्लपक्षे ।
प्रशस्तनक्षत्रमुहूर्त्तयोगे जीर्णान्नमेकाग्रमुपक्रमेत ॥७॥

बलां गुडूचीं त्रिफलां सरास्नां
द्वे पञ्चमूले च पलोन्मितानि ।

अष्टौ पलान्यर्द्धतुलाञ्च मांसा-
च्छागात् पचेदप्सु चतुर्थशेषम् ॥
पूतं यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुड़क्षौद्रघृतैः सतैलै-
र्युतं सुखोष्णैस्तु पिचुप्रमाणैः ॥
गुड़ात् पलं विप्रस्रता तु मात्रा
स्नेहाच्च युक्त्या मधुसैन्धवञ्च ।
स्नेहं सुनिर्मथ्य ततोऽनुकल्पं
प्रक्षिप्य वस्तौ मथितं खजेन ॥ ८ ॥
वस्तिं ततः सव्यकरे निधाय
सुबद्धमुच्छ्राय च निर्व्वलीकम् ।
अङ्गुष्ठमध्येन मुखं पिधाय
नेत्राग्रसंस्थामपनीय वर्त्तिम् ॥
तैलाक्तगात्रं कृतमूत्रविट्कं
नातिक्षुधार्त्तं शयने मनुष्यम् ।
समेऽथ किञ्चिन्नतशीर्षके वा
नात्युच्छ्रिते स्वास्तरणोपपन्ने ॥
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जुदेहं स्वभुजोपधानम् ।
निकुञ्च्य सव्येतरमस्य सक्थि सव्यं प्रसार्य्य प्रणयेत् शनैस्तम् ॥
स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैर्ऋजुपृष्ठवंशम् ।
अकम्पनावेपनलाघवादीन् पाण्योर्गुणांश्चापि हि दर्शयंस्तम् ।
प्रपीड्य चैकग्रहणेन दत्तं नेत्रं शनैरेव ततोऽपकर्षेत् ॥ ९ ॥

तिर्य्यक्प्रणीते तु न याति धारा
गुदे व्रणः स्याच्चलिते च नेत्रे ।
दत्तः शनैर्नाशयमेति वस्तिः
कण्ठं प्रधावत्यतिपीड़ितश्च ॥ १० ॥
शीतस्त्वतिस्तम्भकरो विदाहं
मूर्च्छाञ्च कुर्य्यादतिमात्रमुष्णः ।
स्निग्धोऽतिजाड्यं पवनन्तु रूक्ष-
स्तन्वल्पमात्रालवणस्त्वयोगम् ॥
करोति मात्राभ्यधिकोऽतियोगं
क्षामस्तु सान्द्रः सुचिरेण चैति ।
दाहातिसारौ लवणोऽतिकुर्य्यात्
तस्मात् प्रयुक्तं सममेव दद्यात् ॥ ११ ॥
पूर्व्वं हि योज्यं मधुसैन्धवाभ्यां
स्नेहं विनिर्म्मथ्य तथोदकल्पम् ।
विमथ्य संयोज्य पुनर्द्रवैस्तद्-
वस्तौ निदध्यान्मथितं खजेन ॥ १२ ॥
वामाश्रयोऽग्निर्ग्रहणी गुदञ्च
तत्पार्श्वसंस्थस्य सुखोपलब्धिः ।
लीयन्त एवं वलयश्च तस्मात्
सव्यं शयानोऽर्हति वस्तिदानम् ॥ १३ ॥
विड्वातवेगो यदि चार्द्धदत्ते
निष्कृष्य मुक्ते प्रणयेदशेषम् ।
उत्तानदेहश्च कृतोपधानः

स्याद्दौर्थ्यमाप्नोति तथास्य देहम् ॥ १४ ॥
एकोऽपकर्षत्यनिलं स्वमार्गात्
पित्तं द्वितीयस्तु कफं तृतीयः ।
प्रत्यागते कोष्णजलावसिक्तः
शाल्यन्नमद्यात्तनुना रसेन ॥ १५ ॥
जीर्णे तु सायं लघु चाल्पमात्रं
भुक्तोऽनुवास्यः परिबृंहणार्थम् ।
निरूहपादांशसमेन तैले-
नाम्लानिलघ्नौषधसाधितेन ॥
दत्त्वा स्फिचौ पाणितलेन हन्यात्
स्नेहस्य शीघ्रागमरक्षणार्थम् ।
ईषत् पदाङ्गुष्ठयुगञ्च कर्षेद्-
उत्तानदेहस्य तलौ प्रमृज्यात् ॥
स्नेहेन पार्ष्ण्यङ्गुलिपिण्डिकाश्च
ये चास्य गात्रावयवा रुगार्त्ताः ।
तांश्चावमृज्यात् ससुखं ततश्च
निद्रामुपासीत कृतोपधानः ॥ १६ ॥
भागाः कषायस्य तु पञ्च पित्ते
स्नेहस्य षष्ठः प्रकृतौ स्थिते च ।
वाते विवृद्धे तु चतुर्थभागो
मात्रा निरूहेषु कफेऽष्टभागः ॥
निरूहमात्रा प्रसृतार्द्धमाद्ये
वर्षे ततोऽर्द्धप्रसृताभिवृद्धिः ।

आद्वादशात् स्यात् प्रसृताभिवृद्धि-
रष्टादशाद्वादशतः परं स्युः ॥
आसप्ततेरुक्तमिदं प्रमाण-
मतःपरं षोड़शवद्विधेयम् ।
निरूहमात्रा प्रसृतप्रमाणा
बाले च वृद्धे च मृदुर्विशेषः ॥ १७ ॥
नात्युच्छ्रितं नाप्यतिनीचपादं
सपादपीठं शयनं प्रशस्तम् ।
प्रधानमृद्वास्तरणोपपन्नं
प्राक्शीर्षकं शुक्लपटोत्तरीयम् ॥ १८ ॥
भोज्यं पुनर्व्याधिमवेक्ष्य सम्यक्
प्रकल्पयेद् यूषपयोरसाद्यैः ।
सर्व्वेषु विद्याद्विधिमेतमाद्यं
वक्ष्यामि वस्तीनत उत्तरीयान् ॥ १९ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्व्वशेषः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्व्वानिलव्याधिहरः प्रदिष्टः ॥ २०॥
स्थिरा दिवर्गस्य बलापटोलत्रायन्तिकैरण्डयवैर्युतस्य ।
प्रस्थोरसाच्छागरसार्द्धयुक्तः साध्यः पुनः प्रस्थरसश्च यावत् ॥
प्रियङ्गुकृष्णाघनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलञ्चापि ददाति सद्यः ॥ २१ ॥
एरण्डमूलं त्रिपलं पलानि ह्रस्वानि मूलानि च यानि पञ्च ।
रास्नाश्वगन्धातिबलागुडूचीपुनर्नवारग्वधदेवदारु ॥
भागाः पलांशा मदनाष्टयुक्ता जलाढकांसे क्वथितेऽष्टशेषे ।

पेष्याः शताह्वाहवुषाप्रियङ्गु सपिप्पलीकं मधुकं वचा च ॥
रसाञ्जनं वत्सकबीजमुस्तमथ प्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्नेहयुतः समूत्रो वस्तिर्नृणां दीपनलेखनीयः ॥
जङ्घोरुपादत्रिकपृष्ठशूलं कफावृतं मारुतनिग्रहञ्च ।
विरामृत्रवातग्रहणं सशूलमाध्मानतामश्मरिशर्कराञ्च ॥
आनाहमर्शोग्रहणीप्रदोषानेरण्डवस्तिः शमयेत् प्रयुक्तः ॥ २२ ॥
चतुष्पले तैलघृतस्य भृष्टश्छागात्कृतार्द्धाद् दधिदाड़िमाम्लः ।
रसः सपेष्यो बलवर्णमांसरेतोऽग्निदश्चाम्यशिरोरुजाघ्नः ॥२३॥
जलद्विकंसेऽष्टपलं पलाशात् पक्त्वा रसोऽर्द्धाढ़कमावशेषः ।
कल्कैर्वचामागधिकापलाभ्यां युक्तः शताह्वाद्विपलेन चापि ॥
ससैन्धवक्षौद्रयुतः सतैलो देयो निरूहो बलवर्णकारी ।
आनाहपार्श्वामययोनिदोषान् गुल्मानुदावर्त्तरुजञ्च हन्यात्॥२४
यष्ट्याह्वमूलाष्टपलेन सिद्धं पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधु वातरक्तवैवर्ण्यवीसर्पहितो निरूहः ॥ २५ ॥
यष्ट्याह्वलोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करक्षौद्रयुतं सुशीतं पित्तामयान् हन्ति सजीवनीयम् ॥२६॥
द्विकार्षिकांश्चन्दनपद्मकर्द्धियष्ट्याह्वरास्नावृषशारिवाश्च ।
सलोध्रमञ्जिष्ठमथाप्यनन्ताबलास्थिराद्यं तृणपञ्चमूलम् ॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धाढ़कमम्बुहीनम् ।
मेदर्द्धिजीवन्तिशतावरीभिर्वीराद्विकाकोलिकशेरुकाभिः ॥
सितोपलाजीवकपद्मरेणुप्रपौण्डरीकैः कमलोत्पलैश्च ।
लोध्रात्मगुप्ता मधुकैर्विदारी मुञ्जातकैः केशरचन्दनैश्च ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं ससैन्धवं शीतलमेव दद्यात् ।

प्रत्यागते धन्वरसेन शालीन् चीरेण वाद्यात् परिषिक्तगात्रः ॥
दाहातिसारौ प्रदरास्रपित्तहृत्पाण्डुरोगान् विषमज्वरञ्च ।
स गुल्ममूत्रग्रहकामलादीन् सर्व्वामयान् पित्तकृतान्निहन्ति ॥२७
द्राक्षादिकाश्मर्य्यमधूकसेव्यैः सशारिवाचन्दनशीतपाकैः ।
पयः शृतं श्रावणिमुद्गपर्णीतुगात्मगुप्तामधुयष्टिकल्कैः ॥
गोधूमचूर्णैश्च तथाक्षमात्रैः संक्षौद्रसर्पिर्मधुयष्टितैलैः ।
पथ्याविदारीक्षुरसैर्गुडेन वस्तिं युतं पित्तहरं विदध्यात् ॥
हृन्नाभिपार्श्वोदरदेहदाहे दाहेऽन्तरस्थे च समूत्रकृच्छ्रे ।
क्षीणक्षते रेतसि चापि नष्टे पैत्तेऽतिसारेषु नृणां प्रशस्तः ॥ २८॥
कोशातकारग्वधदेवदारुर्मूर्व्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् वृहतीञ्च तोये रसस्य तस्य प्रसृता दश स्युः ॥
तान् सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
फलाह्वतैलस्य समाक्षिकस्य क्षारस्य तैलस्य च सार्षपस्य ॥
दद्यान्निरूहं कफरोगिणे ज्ञो मन्दाग्नये चाप्यशनद्विषे च ।
पटोलपथ्यामरदारुभिर्वा सपिप्पलीकैः क्वथितैर्जलाख्यैः ॥ २९॥
द्विपञ्चमूले त्रिफलां सबिल्वां फलानि गोमूत्रयुतः कषायः ।
कलिङ्गपाठाफलमुस्तकल्कः ससैन्धवः क्षारयुतः सतैलः ॥
निरूहमुख्यः कफजान् विकारान् सपाण्डुरोगालसकामदोषान् ।
हन्यात्तथा मारुतमूत्रसङ्गं वस्तेस्तथाटोपमथातिघोरम् ॥ ३० ॥
रास्नामृतैरण्डविडङ्गदारुसप्तच्छदोशीरसुराह्वनिम्बैः ।
श्यामाकभूनिम्बपटोलपाठातिक्ताखुपर्णीदशमूलमुस्तैः ॥
त्रायन्तिकाशिग्रुफलत्रिफलैश्च क्वाथः सपिण्डीतकतोयमूत्रः ।
यष्ट्याह्वकृष्णाफलिनीशताह्वारसाञ्जनश्वेतवचाविडङ्गैः ॥

कलिङ्गपाठाम्बुदसैन्धवैश्च कल्कैः ससर्पिर्मधुतैलमिश्रः ।
अयं निरूहः क्रिमिकुष्ठमेहब्रध्नोदराजीर्णकफातुरेभ्यः ॥
रुक्षौषधैरत्यपतर्पितेभ्य एतेषु रोगेष्वपि सत्सु दत्तः ।
निहत्य वातं ज्वलनं प्रदीप्य विजित्य रोगांश्च बलं करोति ॥
हन्यात् तथा मारुतमूत्रसङ्गं वस्तेस्तथाटोपमथापि घोरम् ॥३१
पुनर्नवैरण्डवृषाश्मभेदवृश्चीरभूतीकबलापलाशाः ।
द्विपञ्चमूलानि पलांशिकानि क्षुण्णानि धौतानि फलानि चाष्टौ ॥
बिल्वं यवान् कोलकुलत्थधान्यफलानि चैकप्रसृतोन्मितानि ।
पयोजलार्द्धाढ़कयोः शृतं तत् क्षीरावशेषं कृतवस्त्रपूतम् ॥
वचाशताह्वामरदारुकुष्ठयष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यमान्या मदनैश्च युक्तं नात्युष्णशीतं गुड़सैन्धवाक्तम् ॥
क्षौद्रस्य तैलस्य च सर्पिषश्च तथैव युक्तं प्रसृतत्रयेण ।
दद्यान्निरूहं विधिना विधिज्ञः स सर्व्वसंसर्गकृतामयघ्नः ॥३२
स्निग्धोष्ण एकः पवने निरूहौ द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ॥३३
रसेन वाते प्रतिभोजनं स्यात् क्षीरेण पित्ते तु कफे तु यूषैः ।
तथानुवास्येषु च बिल्वतैलं स्याज्जीवनीयं फलसाधितञ्च ॥३४॥

तत्र श्लोकः ।

इतीदमुक्तं निखिलं यथावद् वस्तिप्रदानस्य विधानमग्र्यम् ।
योऽधीत्य विद्वानिह वस्तिकर्म्म करोति लोके लभते स सिद्धिम् ॥३५

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिसूत्रीयसिद्धिर्नाम तृतीयोऽध्यायः ॥ ३ ॥

अथातः स्नेहव्यापद्दिकीं सिद्धिं व्याख्यास्याम-

इति ह स्माह भगवानात्रेयः ॥ १ ॥

स्नेहवस्तीन् प्रवक्ष्यामि वातपित्तकफापहान् ।
मिथ्याप्रणिहितानाञ्च व्यापदः सचिकित्सिताः ॥ २ ॥

दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूचेरण्डभूतीकभार्गीवृषकरोहिषान् ॥
शतावरीं सहचरं काकनासां पलांशिकाम् ।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ।
तैलाढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥
अनुवासनमेतद्धि सर्व्ववातविकारनुत् ।
आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥ ३ ॥

शताह्वायवबिल्वाम्लैः सिद्धं तैलं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तञ्चानिलनुद्घृतम् ॥ ४ ॥

जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम् ।
पिष्ट्वा तैलं घृतं क्षीरे साधयेत् तच्चतुर्गुणे ॥
वृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ।
मूत्ररेतोरजोदोषान् हरेत् तदनुवासनात् ॥ ५ ॥

लाभतश्चन्दनाद्यैश्च पिष्टैः क्षीरचतुर्गुणम् ।

तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ॥ ६ ॥
सैन्धवं मदनं कुष्ठं शताह्वा निचुलं बला ।
ह्रीवेरं मधुकं भार्गी देवदारु सकट्फलम् ॥
नागरं पुष्करं मेदा चविका चित्रकः शटी ।
विड़ङ्गातिविषे श्यामा हरेणुः किणिही स्थिरा ॥
बिल्वाजमोदे कृष्णा च दन्ती रास्ना च तैः समैः ।
साध्यमेरण्डजं तैलं तैलं वा कफरोगनुत् ॥
ब्रध्नोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात् ॥ ७ ॥
मदनैर्वाम्लसंयुक्तैर्बिल्वाद्येन गणेन वा ।
तैलं कफहरैर्वापि कफघ्नं कल्पयेद्भिषक् ॥ ८ ॥
विड़ङ्गैरण्डरजनीपटोलत्रिफलामृताः ।
जातीप्रवालनिर्गुण्डीदशमूलाखुपर्णिकाः ॥
निम्बपाठासहचरशम्पाककरवीरकम् ।
एषां क्वाथेन विपचेत् तैलमेभिश्च कल्कितैः ॥
फलबिल्वत्रिवृत्कृष्णारास्नाभूनिम्बदारुभिः ।
सप्तपर्णवचोशीरदार्वीकुष्ठकलिङ्गकैः ॥
लतायष्टिशताह्वाग्निशटीचोरकपौष्करैः ।
तत् कुष्ठानि क्रिमीन् मेहानर्शांसि ग्रहणीगदम् ॥
क्लीवतां विषमाग्नित्वं मलं दोषत्रयं तथा ।
प्रयुक्तं प्रणुदत्याशु पानाभ्यङ्गानुवासनैः ॥
व्याधिव्यायामकर्म्माध्वक्षीणाबलनिरोजसाम् ।
क्षीणशुक्रस्य चातीव स्नेहवस्तिर्बलप्रदः ॥

पादजङ्घोरुपृष्ठांसकटीनां स्थिरतां पराम्।
जनयेदप्रजानाञ्च प्रजां स्त्रीणां तथा नृणाम्॥ ९॥
वातपित्तकफात्यन्नपुरीषैरावृतस्य च।
अभुक्ते च प्रणीतस्य स्नेहवस्तेः षड़ापदः॥
शीतोऽल्पो वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः।
अतिभुक्ते गुरुर्वर्च्चः सञ्चयेऽल्पबलस्तथा॥
हतस्तैरावृतः स्नेहो न यात्यभिभवादधः।
अभुक्तेऽनावृतत्वाच्च यातूर्द्ध्वं तस्य लक्षणम्॥ १०॥
स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्द्दनैः।
पार्श्वरुग्वेष्टनैर्विद्यात् स्नेहं वातावृतं भिषक्॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतिल्वकैः।
सौवीरकसुराकोलकुलत्थयवसाधितैः॥
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत्॥ ११॥
दाहरागतृषामोहतमकज्वरदूषणैः।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत्॥ १२॥
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः।
संमूर्च्छाग्लानिभिर्विद्यात् श्लेष्मणा स्नेहमावृतम्॥
कषायकटुतीक्ष्णोष्णैः सुरामूत्रोपसाधितैः।
फलतैलयुतैः सास्त्रैर्वस्तिभिस्तं विनिर्हरेत्॥ १३॥
छर्द्दिमूर्च्छारुचिग्लानिज्वरशूलाङ्गमर्द्दनैः।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम्॥
कटूनां लवणानाञ्च क्वाथैश्चूर्णैश्च पाचनम्।

मृदुर्विरेकस्तन्नामविहिता च क्रिया हिता ॥ १४ ॥
विग्रामवानिलसङ्गात्तिगुरुत्वाध्मानहृद्ग्रहैः ।
स्नेहं विड़ावृतं ज्ञात्वा स्नेहस्वेदैः सवर्त्तिभिः ॥
श्यामात्रिवृतादिसिद्धैश्च निरूहैः सानुवासनैः ।
निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ॥ १५ ॥
अभुक्ते शून्यपायौ वा वेगात् स्नेहोऽतिपीड़ितः ।
धावत्यूर्द्धं ततः कण्ठादूर्द्धेभ्यः खेभ्य एत्यपि ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलमिश्रोऽत्र निरूहः सानुवासनः ॥ १६ ॥
कण्ठादागच्छतः स्तम्भः कण्ठग्रहविरेचनैः ।
छर्द्दिघ्नीभिः क्रियाभिश्च तस्य कुर्य्यान्निवर्त्तनम् ॥ १७ ॥
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः ।
सर्व्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता ॥ १८ ॥
भुक्तस्नेहं द्रवोष्णञ्च लघु पथ्योपसेवनम् ।
भुक्तवान्मात्रया भोज्यमनुवास्यस्त्र्यहात् त्र्यहात् ॥
धान्यनागरसिद्धञ्च तोयं दद्याद्विचक्षणः ।
व्युषिताय निशाः कल्यमुष्णं वा केवलं जलम् ॥ १९ ॥
स्नेहाजीर्णं जरयति श्लेष्माणञ्च भिनत्ति च ।
मारुतस्यानुलोम्यञ्च कुर्य्यादुष्णोदकं नृणाम् ॥
वमने च विरेके च निरूहे सानुवासने ।
तस्मादुष्णोदकं सेव्यं वातश्लेष्मप्रशान्तये ॥ २० ॥
रूक्षनित्यस्तु दीप्ताग्निर्भृशं व्यायामपीड़ितः ।
बद्धवर्च्चाश्रोणिगुदावर्त्तवातार्त्ताश्च दिने दिने ॥

एषाञ्चाशु जरां स्नेहो यात्यम्बु सिकतास्विव ।
अतोऽनेषां आशात् प्रायः स्नेहं पचति पावकः ॥ २१ ॥
नत्वामं प्रणयेत् स्नेहं स ह्यभिष्यन्दयेद्गुदम् ।
सावशेषञ्च कुर्व्वीत वायुः कोष्ठे हि तिष्ठति ॥
न चैव गुदकण्ठाभ्यां दद्यात् स्नेहमनन्तरम् ।
सङ्गतः स ह्युभयतो वातमग्निञ्च दूषयेत् ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ।
उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद्भयम् ॥
तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ।
स्नेहशोधनयुक्त्यैवं वस्तिकर्म्म त्रिदोषनुत् ॥ २२ ॥
कर्म्मव्यायामभाराध्वयानस्त्रीकर्षितेषु च ।
दुर्ब्बले वातभग्ने च मात्रावस्तिः सदा मतः ॥ २३ ॥
ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत् ।
यथेष्टाहारचेष्टस्य सर्व्वकालं निरत्ययः ॥
बल्यं सुखोपचर्य्यञ्च सुखं सृष्टपुरीषकृत् ।
स्नेहमात्राविधानं हि बृंहणं वातरोगनुत् ॥ २४ ॥

तत्र श्लोकौ ।

वातादीनां शमायोक्ताः प्रवराः स्नेहवस्तयः ।
तेषाञ्चाप्रयुक्तानां व्यापदः सचिकित्सिताः ॥
प्राग्भोज्यं स्नेहवस्तेर्यद् ध्रुवं येऽर्हाश्चाऽर्हाश्च ये ।
स्नेहवस्तिर्विधिश्चोक्तो मात्रावस्तिविधिस्तथा ॥ २५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
स्नेहव्यापदिकी सिद्धिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातो नेत्रवस्तिव्यापदिकीं सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अथ नेत्राणि वस्तींश्च शृणु वर्ज्याणि कर्म्मसु ।
नेत्रस्याज्ञप्रणीतस्य व्यापदः सचिकित्सिताः ॥ २ ॥
ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम् ।
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्ज्जयेत् ॥
अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः ।
गुदपीड़ा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ॥ ३ ॥
विषममांसलच्छिद्रस्थूलजालकवातलाः ।
छिन्नः क्लिन्नश्च तानष्टौ वस्तीन् कर्म्मसु वर्ज्जयेत् ॥
गतिवैषम्यविस्रत्वस्रावदौर्ग्राह्यनिस्रवाः ।
फेनिलच्युतधार्य्यत्वं वस्तेः स्याद् वस्तिदोषतः ॥ ४ ॥
सवातातिद्रुतोत्क्षिप्ततिर्य्यगुत्क्षिप्तकम्पिताः ।
अतिवाह्यगमन्दातिवेगदोषाः प्रणेतृतः ॥ ५ ॥
अनुच्छ्वास्यानुबन्धे वा दत्ते निःशेष एव वा ।
प्रविश्य कुपितो वायुः शूलतोदकरो भवेत् ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ६ ॥
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटीगुदजङ्घार्त्तिर्वस्तिस्तम्भोरुवेदनाः ॥
भोजनं तत्र वातघ्नं स्नेहस्वेदाः सवस्तयः ॥ ७ ॥
तिर्य्यग्वल्याव्रतद्वारे बन्धेनापि न गच्छति ।

नेत्रं तद्वद्विनिष्कृष्य संशोध्य च पुनर्नयेत् ॥
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ।
उरःशिरोऽर्त्तिमूर्व्वोश्च सदनं जनयेद्बली ॥
वस्तिः स्यात् तत्र बिल्वादिफलश्यामादिमूत्रवान् ॥ ८ ॥
स्याद्दाहो द्रवथुः शोफः कम्पनाभिहते गुदे ।
कषायमधुराः शीताः सेकास्तत्र सवस्तयः ॥ ९ ॥
अतिमात्रप्रणीतेन नेत्रेण चपणाद्वलेः ।
स्यात् सार्त्तिदाहनिस्तोदगुदवर्च्चःप्रवर्त्तनम् ॥
तत्र सर्पिः पिचुः चीरं पिच्छावस्तिश्च शस्यते ॥ १० ॥
न वा वहति मन्दस्तु बाह्यस्त्वाशु निवर्त्तते ।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥
अतिप्रपीड़ितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र वस्तिविरेकश्च गलपीड़ादिकर्म्म च ॥ ११ ॥

तत्र श्लोकः ।

नेत्रवस्तिप्रणेतॄणां दोषानेतान् सभेषजान् ।
वेत्ति तत्त्वेन मतिमान् वस्तिकर्म्माणि कारयेत् ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
नेत्रव्यापद्दिकी सिद्धिर्नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अथ शोधनयोः सम्यग्विधिमूर्द्धानुलोमयोः ।
असम्यक्कृतयोश्चैव दोषान् वक्ष्यामि सौषधान् ॥ २ ॥
ऋतुरुष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ।
तदन्तरे प्रावृडाद्यास्तेषां साधारणास्त्रयः ॥ ३ ॥
प्रावृट् शुचनिभा ज्ञेयौ शरदूर्ज्जः सहाः पुनः ।
तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ॥
एतानृतून् विचिन्त्यैव दद्यात् संशोधनं नृणाम् ।
स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ४ ॥
कर्म्मणां वमनादीनामन्तरेष्वन्तरेषु च ।
स्नेहस्वेदौ प्रयुञ्जीत स्नेहाद्यन्ते प्रयोजयेत् ॥ ५ ॥
वीसर्पपीड़काशोफकामलापाण्डुरोगिणः ।
अभिघातविषार्त्तांश्च नातिस्निग्धान् विरेचयेत् ॥ ६ ॥
नातिस्निग्धशरीराय दद्यात् स्नेहविरेचनम् ।
स्नेहोत्क्लिष्टशरीराय रूक्षं दद्याद्विरेचनम् ॥ ७ ॥
स्नेहस्वेदोपपन्नेन जीर्णे मात्रावदौषधम् ।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते ॥
स्निग्धात् पात्राद्यथा तोयमयत्नेन प्रणुद्यते ।
कफादयः प्रणुद्यन्ते स्निग्धाद्देहात् तथौषधैः ॥

आर्द्रं काष्ठं यथा वह्निर्विष्यन्दयति सर्व्वतः।
तथा स्निग्धस्य वै दोषान् स्वेदो विष्यन्दयेत् स्थिरान्॥
क्षारोत्क्लिष्टो यथा वस्त्रे मलः संशोध्यतेऽम्भसा।
स्नेहस्वेदैस्तथोत्क्लिष्टः शोध्यते शोधनैर्मलः॥ ८॥
अजीर्णे वर्द्धते ग्लानिर्विबन्धश्चापि जायते।
पीतं संशोधनञ्चैव विपरीतं प्रवर्त्तते॥ ९॥
अल्पमात्रं महावेगं बहुदोषहरं सुखम्।
लघुपाकं सुखास्वादं प्रीणनं व्याधिनाशनम्॥
अविकाराविपन्नञ्च नातिग्लानिकरञ्च यत्।
गन्धवर्णरसोपेतं विद्यान्मात्रावदौषधम्॥ १०॥
विधूय मानसान् दोषान् कामक्रोधभयादिकान्।
एकाग्रमनसा पीतं सम्यग्योगाय कल्पते॥ ११॥
नरः पूर्वो वमनं पाता भुञ्जीत कफवर्द्धनम्।
सुजरं द्रवभूयिष्ठं लघु शीतं विरेचनम्॥
उत्क्लिष्टाल्पकफत्वेन चिप्रं दोषाः स्रवन्ति हि॥ १२॥
पीतौषधस्य तु भिषक् शुद्धिलिङ्गानि लक्षयेत्॥
ऊर्द्ध्वं कफानुगे पित्ते विट्पित्तानुगते त्वधः।
हृतदोषं वदेत् कार्श्यं दौर्ब्बल्यं चात्मलाघवम्॥
वामयेत् तु ततः शेषमौषधं न त्वलाघवे।
स्तैमित्येऽनिलसङ्गे च निरुद्गारेऽपि वामयेत्॥
आलाघवाद्गुरुत्वाच्च कफस्यापत् परं भवेत्।
वमिते वर्द्धते वह्निः शमं दोषा व्रजन्ति च॥
वमितं लङ्घयेत् सम्यग् जीर्णे लिङ्गानि लक्षयेत्।

तानि दृष्ट्वा तु पेयादिक्रमं कुर्य्यान्न लङ्घनम् ॥ १३ ॥
संशोधनाभ्यां शुद्धस्य हृतदोषस्य देहिनः।
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ॥ १४ ॥
कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके।
तर्पणादि क्रमं कुर्य्यात् पेयाभिष्यन्दयेद्धि तान् ॥ १५ ॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णोर्ज्जौ मनस्विता।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ १६ ॥
क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ १७ ॥
अकालेऽल्पातिमात्रञ्च पुराणं न च भावितम्।
असम्यक् संस्कृतञ्चैव व्यापदेऽतौषधं ध्रुवम् ॥ १८ ॥
आध्मानं परिकर्त्तिश्च स्रावो हृद्गात्रयोर्ग्रहः।
जीवादानं सविभ्रंशः स्तम्भः सोपद्रवः क्लमः ॥
अयोगादतियोगाच्च दशैता व्यापदो मताः।
प्रेष्यभैषज्यवैद्यानां वैगुण्यादातुरस्य च ॥
शुद्धोत्क्लिष्टेन दुर्गन्धमहृद्यमतिबाध्यते ॥ १९ ॥
योगः सम्यक्प्रवृत्तिः स्यादतियोगोऽतिवर्त्तनम्।
अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्त्तनम् ॥ २० ॥
उत्क्लिष्टश्लेष्म दुर्गन्धमहृद्यं नाति वा बहु।
विरेचनमजीर्णं च पीतमूर्द्ध्वं प्रवर्त्तते ॥
क्षुधार्त्तमृदुकोष्ठाभ्यां पीतं स्वल्पकफेन वा।
तीक्ष्णं स्थिरं संक्षुभितं वमनं स्याद्विरेचनम् ॥
प्रातिलोम्येन दोषाणां हरणात् ते ह्यकृतप्रशः।

अयोगसंज्ञो कृच्छ्रेण यदागच्छति चाल्पशः ॥ २१ ॥
पीतौषधो न शुद्धश्चेज्जीर्णे तस्मिन् पुनः पिबेत्।
औषधं न त्वजीर्णेऽन्यद्भयं स्याद्‌तियोगतः ॥
कोष्ठस्य गुरुतां ज्ञात्वा लघुत्वं बलमेव च।
अयोगे मृदु वा दद्यादौषधं तीक्ष्णमेव वा ॥ २२ ॥
वमनं न तु दुश्छर्द्यां मृदुकोष्ठे विरेचनम्।
पाययेतौषधं भूयो हन्यात् पीतं पुनर्हि तौ ॥ २३ ॥
अस्निग्धास्विन्नदेहस्य रूक्षस्यानवमौषधम्।
दोषानुत्क्लिश्य निर्हर्त्तुमशक्तं जनयेद्गदान् ॥
विभ्रंशं श्वयथुं हिक्कां तमसो दर्शनं तृषम्।
पिण्डिकोद्वेष्टनं कण्डूमूर्व्वोः सादं विवर्णताम् ॥ २४ ॥
स्निग्धस्विन्नस्य चात्यल्पं दीप्ताग्नेर्जीर्णमौषधम्।
शीतैर्वा स्तब्धमामैर्वा दोषानुत्क्लिश्य नाहरेत् ॥
तानेव जनयेद्रोगान् न योगः सर्व्व एव सः।
विज्ञाय मतिमांस्तत्र यथोक्तां कारयेत् क्रियाम् ॥
तं तैललवणाभ्यक्तं स्विन्नं प्रस्तरसङ्करैः।
पाययेत पुनर्जीर्णे समूत्रैर्वा निरूहयेत् ॥
निरूढञ्च रसैर्धन्वैर्भोजयित्वानुवासयेत्।
फलमागधिकादारुसिद्धतैलेन मात्रया ॥
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ॥ २५ ॥
अतितीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम्।
हत्वाशु विट्पित्तकफान् धातून् विस्रावयेद् द्रवान् ॥
बलस्वरक्षयं दाहं कण्ठशोषं क्लमं तृषाम्।

कुर्य्याच्च मधुरैस्तत्र शेषमौषधमुल्लिखेत् ॥ २६ ॥
वमने तु विरेकः स्याद्विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥
कषायमधुरैः शीतैरन्नपानौषधैस्तथा ।
रक्तपित्तातिसारघ्नैर्दाहज्वरहरैरपि ॥ २७ ॥
अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥
शुङ्गाभिर्वा वटादीनां सिद्धां पेयां समाक्षिकाम् ।
वर्च्चःसांग्राहिकैः सिद्धं क्षीरं भोज्यञ्च दापयेत् ॥
जाङ्गलैर्वा रसैर्भोज्यं पिच्छावस्तिश्च शस्यते ।
मधुरैरनुवास्यश्च सिद्धेन क्षीरसर्पिषा ॥ २८ ॥
वमनस्यातियोगे तु शीताम्बुपरिषेचितः ।
पिबेत् फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥
सोद्गारायां भृशं वम्यां मूर्च्छायां धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणा हृद्यैर्यूषक्षीररसैर्हिताः ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।
निःसृतान्तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च बुद्धिमान् ॥ २९ ॥
वमितस्य विरिक्तस्य मन्दाग्नेश्च विलङ्घितः ।
अग्निप्राणविवृद्ध्यर्थं क्रमं पेयादिमाचरेत् ॥ ३० ॥

बहुदोषस्य रूक्षस्य हीनाग्नेरल्पमौषधम् ।
सोदावर्त्तस्य चोत्क्लिश्य दोषान्मार्गान् निरुध्य च ॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजाम् ।
श्वासविण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ॥
अभ्यङ्गस्वेदवर्त्त्यादिः सनिरूहानुवासनम् ।
उदावर्त्तहरं सर्व्वं कर्म्माध्मातस्य शस्यते ॥ ३१ ॥
स्निग्धेन गुरुकोष्ठेन सामे बलवदौषधम् ।
क्षामेण मृदुकोष्ठेन श्रान्तेनाल्पबलेन वा ॥
पीतं गत्वा गुदं साममाशु दोषं निरस्य च ।
तीव्रशूलां सपिच्छास्रां करोति परिकर्त्तिकाम् ॥ ३२ ॥
लङ्घनं पाचनं सामे रूक्षोष्णं लघु भोजनम् ।
वृंहणीयो विधिः सर्व्वः क्षामस्य मधुरस्तथा ॥ ३३ ॥
आमाजीर्णे तु बध्वश्चेत् क्षारोऽम्लं लघु शस्यते ।
पुष्पकासीसमिश्रं वा क्षारेण लवणेन च ॥ ३४ ॥
सदाड़िमरसं सर्पिः पिवेद्वातेऽधिके सति ।
दध्यम्लं भोजने पाने संयुक्तं दाड़िमत्वचा ॥
देवदारुतिलानां वा कल्कमुष्णाम्बुना पिवेत् ।
अश्वत्थोदुम्बरप्लक्षकदम्बैर्वा शृतं पयः ॥
कषायमधुरं वस्तिं पिच्छावस्तिमथापि वा ।
यष्टीमधुकसिद्धं वा स्नेहवस्तिं प्रदापयेत् ॥ ३५ ॥
अल्पन्तु बहुदोषस्य दोषानुत्क्लिश्य भेषजम् ।
अल्पाल्पं स्रावयेत् कण्डूं शोफकुष्ठानि गौरवम् ॥
कुर्य्याच्चाग्निवधोत्क्लेशस्तैमित्यारुचिपाण्डुताः ।

परिस्रावगतं दोषं शमयेद्वामयेत्तदा ॥
लेहितं वा पुनस्तीक्ष्णं पाययेच्च विरेचनम् ।
शुद्धे चूर्णांस्तथारिष्टान् संस्कृतांश्च प्रदापयेत् ॥ ३६ ॥
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ।
कुपिता हृदयं गत्वा घोरं कुर्व्वन्ति हृद्ग्रहम् ॥
स हिक्काश्वासपार्श्वार्त्तिदैन्यलालाचिविभ्रमैः ।
जिह्वां खादति निःसंज्ञो दन्तान् किटिकिटापयन् ॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ।
मधुरैः पित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम् ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ।
कायाग्निञ्च बलञ्चास्य क्रमेणाभिविवर्द्धयेत् ॥ ३७ ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ।
तस्मै स्निग्धाम्ललवणं दद्यात् पित्तकफे तथा ॥ ३८ ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ।
रुद्धोऽति चाविशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्त्तिभूर्च्छितैः ।
तत्र वातहरं सर्व्वं स्नेहस्वेदादि कारयेत् ॥ ३९ ॥
अतितीक्ष्णं मृदौ कोष्ठे लघुदोषस्य भेषजम् ।
दोषान् हृत्वा विनिर्म्मथ्य जीवं हरति शोणितम् ॥ ४० ॥
तेनान्नं मिश्रितं दद्याद्वायसाय शुनेऽपि वा ।
भुङ्क्ते तच्चेद्वदेज्जीवं न भुङ्क्ते पित्तमादिशेत् ॥
शुक्लं वा भावितं वस्त्रमाधानं कोष्णवारिणा ।
प्रक्षालितं विवर्णं चेत् पित्तं शुद्धन्तु शोणितम् ॥ ४१ ॥

तृष्णामूर्च्छामदार्त्तस्य कुर्य्यादामरणात् क्रियाम् ।
तस्य पित्तहरीं सर्व्वामतियोगे च या मता ॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ।
पिवेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति ॥
तदेव दर्भमृदितं रक्तं वस्तिं प्रदापयेत् ॥
श्यामाकाश्मर्य्यबदरीदूर्व्वावीरैः शृतं पयः ।
घृतमण्डाञ्जनयुतं वस्तिं शीतं प्रदापयेत् ॥
पिच्छावस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥ ४२ ॥
गुदभ्रंशं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
सामगन्धर्व्वशब्दांश्च संज्ञानाशेऽस्य कारयेत् ॥ ४३ ॥
यदा विरेचनं पीतं विड्भ्रन्तरवतिष्ठते ।
वमनं भेषजान्तं वा दोषानुत्क्लेश्य नावहेत् ॥
तदा कुर्व्वन्ति कण्ड्वादीन् दोषाः प्रकुपिता गदान् ।
सविभ्रंशानतस्तत्र स्याद् यथाव्याधि भेषजम् ॥ ४४ ॥
पीतं स्निग्धेन सस्नेहं तद्दोषैर्माद्दवावृतम् ।
न वाहयति दोषांस्तु स्वस्थानात् स्तम्भयेच्चुतान् ॥
वातसङ्गगुदस्तम्भशूलैः क्षरति चाल्पशः ।
तीक्ष्णं वस्तिं विरेकं वा दद्यात्तद्धनपाचनम् ॥ ४५ ॥
रूक्षं विरेचनं पीतं रूक्षेणाल्पबलेन वा ।
मारुतं कोपयित्वाशु कुर्य्याद्घोरानुपद्रवान् ॥
स्तम्भशूलानि घोराणि सर्व्वगात्रेषु मारुतः ।
स्नेहस्वेदादिकस्तत्र कार्य्यो वातहरो विधिः ॥ ४६ ॥
स्निग्धस्य गुरुकोष्ठस्य मृद्वृत्क्लेश्यौषधं कफम् ।

पित्तं वातञ्च संरुध्य सतन्द्रागौरवं क्लमम् ॥
दौर्ब्बल्यञ्चाङ्गमर्द्दञ्च कुर्य्यादाशु तदुल्लिखेत् ।
लङ्घनं पाचनञ्चात्र स्निग्धं तीक्ष्णञ्च शोधनम् * ॥ ४७ ॥

तत्र श्लोकौ ।

इत्येता व्यापदः प्रोक्ताः सरूपाः सचिकित्सिताः ।
वमनस्य विरेकस्य कृतस्याकुशलैर्नृणाम् ॥
एतान् विज्ञाय मतिमानवस्थाश्चैव तत्त्वतः ।
दद्यात् संशोधनं सम्यगारोग्यार्थं नृणां सदा ॥ ४८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वमनविरेचनव्यापत्सिद्धिर्नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातो वस्तिव्यापद्सिकीं सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

धीधैर्य्यौदार्य्यगाम्भीर्य्यक्षमादमतपोनिधिम् ।
पुनर्व्वसुं शिष्यगणः पप्रच्छ विनयान्वितः ॥
काः कति व्यापदो वस्तेः किंसमुत्थानलक्षणाः ।
काश्चिकित्सा इति प्रश्नान् श्रुत्वा तानब्रवीद् गुरुः ॥ २ ॥
नातियोगौ क्लमाध्माने हिक्का हृत्प्राप्तिरूर्द्धता ।

* लङ्घनं पाचनं काले स्निग्धं तीक्ष्णञ्च भोजनमिति पाठान्तरम् ।

प्रवाहिका शिरोऽङ्गार्त्तिः परिकर्त्तौ परिस्रवः ॥
द्वादश व्यापदो वस्तेरसम्यग्योगसम्भवाः ।
आसामेकैकशो रूपं चिकित्साञ्च निबोधत ॥ ३ ॥
गुरुकोष्ठेऽनिलप्राये रूक्षे वातोल्बणेऽपि वा ।
शीतोऽल्पलवणस्नेहद्रवमात्रो घनोऽपि वा ॥
वस्तिः संक्षोभ्य तं दोषं दुर्ब्बलत्वादनिर्हरन् ।
करोति गुरुकोष्ठत्ववातमूत्रशकृद्ग्रहम् ॥
नाभिवस्तिरुजं दाहं हृल्लेपं श्वयथुं गुदे ।
कण्डूगण्डानि वैवर्ण्यमरुचिं वह्निमार्द्दवम् ॥ ४ ॥
तत्रोष्णायाः प्रमथ्यायाः पानं स्वेदाः पृथग्विधाः ।
फलवर्त्त्योऽथवा कालं ज्ञात्वा शस्तं विरेचनम् ॥
विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ।
सुरादिमूत्रवान् वस्तिः स प्राक् प्रेषितमानयेत् ॥ ५ ॥
स्निग्धस्विन्नेऽतितीक्ष्णोष्णो मृदुकोष्ठेऽतियुज्यते ।
तस्य लिङ्गं चिकित्साञ्च शोधनाभ्यां समाचरेत् ॥ ६ ॥
पृश्निपर्णीं स्थिरां पद्मं काश्मर्य्यं मधुकोत्पलम् ।
पिष्ट्वा द्राक्षां मधूकञ्च क्षीरे तण्डुलधावने ॥
द्राक्षायाः पक्वलोष्ट्रस्य प्रसादो मधुकस्य च ।
विनीय सघृतं वस्तिं दद्याद्दाहेऽतियोगजे ॥ ७ ॥
आमदोषे निरूहेण मृदुना दोष ईरितः ।
रुणद्धि मार्गं वातस्य हन्त्यग्निं मूर्च्छयत्यपि ॥
क्लमं विदाहं हृच्छूलं मोहवेष्टनगौरवम् ।
कुर्य्यात् स्वेदैर्विरूक्षैस्तं पाचनैश्चाप्युपाचरेत् ॥ ८ ॥

पिप्पलीकत्तृणोशीरदारुमूर्व्वाशृतं जलम् ।
पिबेत् सौवर्च्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥
वचानागरकृष्णैला दधिमण्डेन मूर्च्छिताः ।
पेयाः प्रसन्नया वा सुरयारिष्टेनासवेन वा ॥
दारु त्रिकटुकं पथ्यां पलाशं चित्रकं शटीम् ।
पिष्ट्वा कुष्ठञ्च मूत्रेण पिबेत् चारांश्च दीपनान् ॥
वस्तिंमस्य विदध्यांच्च समूत्रं दाशमूलिकम् ।
समूत्रमथवा व्यक्तलवणं माधुतैलिकम् ॥ ९ ॥
अल्पवीर्य्यो महादोषे रूक्षे क्रूराशये कृतः ।
वस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम् ॥
स विमार्गोऽनिलः कुर्य्यादाध्मानं मर्म्मपीड़नम् ।
विदाहं गुरुकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति । १० ॥
फलश्यामादिभिः कुष्ठकृष्णालवणसर्षपैः ।
धूममाषवचाकिण्वचारचूर्णगुड़ैः कृताम् ॥
कराङ्गुष्ठनिभां वर्त्तिं यवमध्यां प्रवेशयेत् ।
स्वभ्यक्तस्विन्नगात्रस्य तैलाक्तां स्नेहिते गुदे ॥
अथवा लवणागारधूमसिद्धार्थकैः कृताम् ॥
बिल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान् ।
सरलामरदारुभ्यां सिद्धश्चैवानुवासनम् ॥ ११ ॥
मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन् ।
कुर्य्याद्धिक्कादिकं तत्र हिक्काघ्नं बृंहणञ्च यत् ॥
बलास्थिरादिकाश्मर्य्यत्रिफलागुड़सैन्धवैः ।

सुप्रसन्नारनालाम्लैस्तैलं पक्वानुवासयेत् ॥
कृष्णालवणयोश्चूर्णं पिबेदुष्णाम्बुना युतम् ।
धूमो लेहो रसः क्षीरं स्वेदश्चान्नञ्च वातजित् ॥ १२ ॥
अतितीक्ष्णः सवातो वा न वा सम्यक् प्रपीड़ितः ।
घट्टयेद्धृदयं वस्तिस्तत्र काश्मर्यशेतुकटैः ॥
स्यात् साम्ललवणस्कन्धकरीरबदरीफलैः ।
शृतैर्वस्तिर्हितः सिद्धं वातघ्नैश्चानुवासनम् ॥ १३ ॥
वातमूत्रपुरीषाणां दत्ते वेगान् निगृह्णतः ।
अतिप्रपीड़ितो वस्तिर्मुखेनायाति वेगवान् ॥
मूर्च्छाविकारं तस्यादौ दृष्ट्वा शीताम्बुना मुखम् ।
सिञ्चेत् पार्श्वोदरञ्चाधः प्रमृज्याद्वीजयेच्च तम् ॥
केशेष्वाक्षिप्य चाकाशे धनुषा त्रासयेच्च तम् ।
गोखराश्वगजैः सिंहै राजप्रेष्यैस्तथोरगैः ॥
उल्काभिरेवमन्यैश्च वस्तिमस्यानयेदधः ।
वस्त्रपाणिग्रहैः कण्ठं रुन्ध्यान्न म्रियते यथा ॥
प्राणोदाननिरोधाद्धि प्रसिद्धतरमार्गगः ।
अपानः पवनो वस्तिं तमाश्वेवापकर्षति ॥
ततः क्रमुककल्काक्षं पाययेताम्लसंयुतम् ।
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च वस्तिञ्चास्यानुलोमयेत् ॥ १४ ॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥
बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरःस्थिते ।
शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥ १५ ॥

स्निग्धस्विन्ने महादोषे वस्तिर्मृद्वल्पभेषजः।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम्॥
प्रश्वयथुं वस्तिपायोश्च जङ्घोरुसदनं तथा।
निरुहसारतो जन्तुरभीक्ष्णं संप्रवाहते॥ १६॥
स्वेदाभ्यङ्गनिरूहांश्च शोधनीयानुलोमिकान्।
विदध्याल्लङ्घयित्वा तु वर्त्तिं कुर्य्याद्विरिक्तवत्॥ १७॥
दुर्ब्बले तीव्रदोषे च क्रूरकोष्ठे तनुर्मृदुः।
शीतोऽल्पश्चावृतो दोषैर्वस्तिस्तद्विहतोऽनिलः॥
गात्राण्यनुसरन् मार्गं ऊर्द्ध्वमूर्द्ध्वं विधावति।
ग्रीवां मन्ये च गृह्णाति शिरः कण्ठं भिनत्ति च॥
बाधिर्य्यं कर्णनादञ्च पीनसं नेत्रविभ्रमम्।
कुर्य्यादभ्यञ्जनं तैललवणेन यथाविधि॥
युञ्ज्यात् प्रधमनैर्धूमैर्नस्यैरास्यविरेचनैः।
विरेचनैर्निरूहैश्च वस्तिभिश्चानुलोमिकैः॥ १८॥
सुस्विन्नस्निग्धदेहस्य यस्य वस्तिर्विधीयते।
अतितीक्ष्णो गुरुश्चैव सोऽतिमात्रं प्रवर्त्तयेत्॥
स्रुतेषु तस्य दोषेषु निरूढस्यातिमात्रशः।
सर्व्वोऽन्तावृत्तकोष्ठस्य वायुः संप्रतिहन्यते॥
विलोमनसमुद्भूतो रुजत्यङ्गानि देहिनः।
गात्रवेष्टननिस्तोदभेदस्फुरणजृम्भणैः॥
तं तैललवणाभ्यक्तं सेचयेदुष्णवारिणा।
एरण्डपत्रनिष्क्वाथैः प्रस्तरैश्चोपपादयेत्॥
यवान् कुलत्थान् कोलानि पञ्चमूले तथोभये।

जलाढ़कद्वये पक्त्वा पादशेषेण तेन च ॥
कुर्य्यात् सबिल्वतैलोष्णलवणेनानुवासनम् ।
निरूहणं समाश्वस्तं द्रोण्यां तमवगाहयेत् ॥
ततो भुक्तवतस्तस्य कारयेदनुवासनम् ।
यष्टीमधुकतैलेन बिल्वतैलेन वा भिषक् * ॥ १८ ॥
मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णोऽतिमात्रवान् ।
वस्तिर्दोषान् निरस्याशु जनयेत् परिकर्त्तिकाम् ॥
त्रिकवङ्क्षणवस्तीनां तोदं नाभेरधो रुजम् ।
विबन्धाल्पाल्पमुत्थानं वस्तिनिर्लेखनं भवेत् ॥ २० ॥
स्वादुशीतौषधैस्तत्र पय द्व्याद्विभिः शृतम् ।
यष्ट्याह्वतिलकल्काभ्यां वस्तिः स्यात् क्षीरभोजिनः ॥
ससर्ज्जरसयष्ट्याह्वजिङ्गिनीकर्द्दमाञ्जनम् ।
विनीय दुग्धे वस्तिः स्यात् तिक्ताम्लमृदुभोजिनः ॥ २१ ॥
पित्तरक्तेऽम्ल उष्णो वा तीक्ष्णो वा लवणोऽथवा ।
वस्तिर्गुदं विलिखति तीक्ष्णोऽति विदहत्यपि ॥

---

* रूक्षस्वेदैरनापाद्य गुरुतीक्ष्णातिमात्रया ।
यस्य वस्तिः प्रयुज्येत नातिमात्रं प्रयुज्यते ॥
स्तब्धोदावृत्तकोष्ठस्य रुद्धः स्रोतःसु मारुतः ।
प्रपन्नोऽङ्गरुजं कुर्य्याच्च तैललवणान्वितम् ॥
उष्णाम्बुप्रस्तरक्वाथस्वेदैस्तमुपपादयेत् ।
सबिल्वतैललवणो निरूहस्तस्य शस्यते ॥
तैलावगाहस्विन्नस्य कारयेदनुवासनम् ।
अभ्युज्य विधिना सम्यक् स्निग्धं कायं ततः परम् ॥
इत्येवंविधः पाठः पुस्तकान्तरेषु दृश्यते ।

स विदग्धं स्रवत्यस्रं पित्तज्वानेकवर्णवत्।
बहुधा ह्यतिवेगेन मोहं गच्छति चासकृत्॥ २२॥
आर्द्रशाल्मलिवृन्तैस्तु च सा राजं पयः शृतम्।
सर्पिषा योजितं शीतं वस्तिमस्मै प्रदापयेत्॥
वटादिपल्लवेष्वेष कल्पो यवतिलेषु च।
सुवर्चलोपोदिकयोः कर्व्वुदारे च शस्यते॥
गुदे सेकाः प्रदेहाश्च शीताः सुश्रमधुराश्च ये।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते॥॥ २३॥

तत्र श्लोकाः।

इतीरता व्यापदः प्रोक्ता वस्तेः साकृतिभेषजाः।
बुद्धा कार्त्स्न्येन तान् वस्तीन् नियुञ्जन् नापराध्यति॥
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः।
प्राप्तकालं विधातव्यं क्षीराद्यैर्मार्दवं तथा॥
आपादतलमूर्द्धस्थान् दोषान् पक्वाशये स्थितः।
वीर्य्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव॥
यद्वत् कुसुम्भसंमिश्रात् तोयाद्रागं हरेत् पटः।
तद्वद्द्रवीकृतात् कायान्निरूहो निर्हरेन्मलान्॥ २४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिव्यापदिकी सिद्धिर्नाम सप्तमोऽध्यायः॥ ७॥

## अष्टमोऽध्यायः ।

अथातः प्रासृतयोगिकीं सिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्म्मणा विप्लुतानाञ्च वक्ष्यामि प्रसृतैः पृथक् ॥ २ ॥
क्षीराद्‌ द्वौ प्रसृतौ कार्य्यौ मधुतैलघृतात् त्रयः ।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ ३ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्काथाद्‌ द्वौ कौलत्थाद्‌ द्वौ स वातनुत् ॥ ४ ॥
पञ्चमूलरसात् पञ्च द्वौ तैलात् क्षौद्रसर्पिषोः ।
एकैकः प्रसृतो बस्तिः स्नेहनीयोऽनिलापहः ॥ ५ ॥
सैन्धवार्द्धाक्ष एकैकः क्षौद्रतैलपयोघृतात् ।
प्रसृतो हपुषात् क्षौद्रान् निरूहः शुक्रकृत् परः ॥ ६ ॥
पटोलनिम्बभूनिम्बरास्नासप्तच्छदाम्भसः ।
चत्वारः प्रसृता एको घृतात् सर्षपकल्कितः ॥
निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दकुष्ठनुत् ॥ ७ ॥
विडङ्गत्रिफलाशिग्रुफलमुस्ताखुपर्णिकात् ।
कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान् ।
विडङ्गपिप्पलीकल्को निरूहः क्रिमिनाशनः ॥ ८ ॥
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ।
एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ॥ ९ ॥

चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात्।
प्रसृताः सर्षपैः कल्कैर्विट्सङ्गानाहभेदनः॥ १०॥
श्वदंष्ट्राश्मभिदेरण्डरसात् तैलात् सुरासवात्।
प्रसृताः पञ्च यष्ट्याह्वात् कौन्तौ मागधिका सिता॥
कल्को वस्तिस्तु सानाहे मूत्रकृच्छ्रे परो मतः।
एते सलवणाः कोष्णा निरूहाः प्रसृता नव॥ ११॥
मृदुवस्तिजड़ीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते।
तीक्ष्णैर्विकर्षिते स्वादु प्रत्यास्थापनमेव च॥ १२॥
वातोपसृष्टस्योष्णैः सुरगुदराहादयो यदि।
द्राक्षादिना त्रिवृत्कल्कं दद्याद्दोषानुलोमनम्॥
तद्धि पित्तशक्टद्वातान् हृत्वा दाहादिकान् जयेत्।
शुद्धश्चापि पिबेत् शीतां यवागूं शर्करायुताम्॥ १३॥
अथवातिविरिक्तः स्यात् क्षीणविट्कः स भक्षयेत्।
माषयूषेण कुल्माषान् पिबेद्दध्यथवा सुराम्॥ १४॥
सामं चेदतिसार्य्येत शूलारोचकवान् नरः।
स घनातिविषाकुष्ठनतदारुवचाः पिबेत्॥ १५॥
शक्टद्वातमसृक् पित्तं कफं वा योऽतिसार्य्यते।
पक्वस्तत्र स्ववर्गीयैर्वस्तिः श्रेष्ठं भिषग्जितम्॥ १६॥
पञ्चानामेषां द्विसंसर्गात् त्रिंशद्भेदा भवन्ति तु।
केवलैः सह चेत् त्रिंशद्विद्यात् सोपद्रवानपि॥
शूलप्रवाहिकाध्मानपरिकर्त्तारुचिज्वरान्।
सतृष्णादाहमूर्च्छान्तांश्चैषां विद्यादुपद्रवान्॥ १७॥
तत्रामेऽन्तरपानं स्याद् व्योषाम्ललवणैर्युतम्।

पाचनं शस्यते वस्तिरामे हि प्रतिषिध्यते ॥ १८ ॥
वातघ्नयाहिवर्गीयैर्वस्तिः शक्कति शस्यते ।
स्वाद्वम्ललवणैः शस्तः स्नेहवस्तिः समीरणे ॥ १९ ॥
रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तकैः ।
स्तार्य्यमाणे कफे वस्तिः कषायकटुतिक्तकैः ॥ २० ॥
शकृता वायुना चामे तेन वर्च्चस्यथानिले ।
संसृष्टेऽन्तरपानं स्याद्व्योषाम्ललवणैर्युतम् ॥ २१ ॥
पित्तेनामेऽसृजा वापि तयोरामेन वा पुनः ।
संसृष्टयोर्भवेत् पानं सव्योषस्वादुतिक्तकम् ॥
तथामे कफसंसृष्टे कषायव्योषतिक्तकम् ।
आमे तनुकफे व्योषकषायलवणैर्युतम् ॥ २२ ॥
वातेन विषि पित्ते वा विट्पित्तास्रैस्तथानिले ।
मधुराम्लकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥ २३ ॥
शकृच्छोणितयोः पित्तशकृतो रक्तपित्तयोः ।
वस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ॥ २४ ॥
कफेन विषि पित्ते वा कफे विट्पित्तशोणितैः ।
व्योषतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥ २५ ॥
स्याद्वस्तिर्व्योषतिक्ताम्लः संसृष्टे वायुना कफे ।
मधुरव्योषतिक्तस्तु रक्ते कफविमिश्रिते ॥ २६ ॥
मारुते कफसंसृष्टे व्योषाम्ललवणो भवेत् ।
वस्तिर्वातेन रक्ते तु कार्य्यः स्वाद्वम्लतिक्तकः ॥ २७ ॥
त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत् ।
युक्तिश्चैषातिसारोक्ता सर्व्वरोगेष्वपि स्मृता ॥ २८ ॥

युगपत् षड्रसं षसां संसर्गे पाचनं भवेत् ।
निरामानाञ्च पञ्चानां वस्तिः षाड्रसिको मतः ॥ २९ ॥
उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः ।
शङ्ख सर्ज्जरसं लाक्षां कर्द्दमञ्च पलांशिकम् ॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत् ।
अतीसारेषु सर्व्वेषु पेयमेतद् यथाबलम् ॥ ३० ॥
कच्छुराधातकीविल्वसमङ्गारक्तशालिभिः ।
मसूराश्वत्थशुङ्गैश्च यवागूः स्यात्जले शृतैः ॥ ३१ ॥
बालोदुम्बरकट्वङ्गसमङ्गाम्रचपल्लवैः ।
मसूरधातकीपुष्पबलाभिश्च तथा भवेत् ॥ ३२ ॥
स्थिरादीनां वटादीनामिक्ष्वादीनामथापि वा ।
क्वाथेषु समसूराणां यवाग्वः स्युः पृथक् पृथक् ॥ ३३ ॥
कच्छुरामूलशाल्यादितण्डुलैर्वापि साधिताः ।
दधितक्रारनालाम्लक्षारेष्विक्षुरसेऽपि वा ॥
शीताः सशर्कराः क्षौद्राः सर्व्वातीसारनाशनाः ।
ससर्पिर्मरिचाजाजीमधुरा लवणाः शिवाः ॥ ३४ ॥

भवन्ति चात्र ।

स्निग्धाम्ललवणमधुरं पानं वस्तिश्च मारुते कोष्णः ।
शीतं तिक्तकषायमधुरं पित्ते च रक्ते च ॥
तीक्ष्णोष्णकषायकटु श्लेष्मणि संग्राहि वातनुत्त्वकृति ।
पाचनमामे पानं पिच्छासृग्वस्तयो रक्ते ॥
अतिसारं प्रत्युक्तं मिश्रं द्वन्द्वामजेष्वपि च ।
तत्रोद्रेकविशेषाद्दोषेषूपक्रमः कार्य्यः ॥ ३५ ॥

तत्र श्लोकाः ।

प्रसृतिकाः सव्यापत् क्रिया निरूहास्तथातिसारहिताः ।
रसकल्पप्रतयश्चाप्युक्ता गुरुणा प्रसृतप्रसिद्धौ ॥ ७६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
प्रासृतयोगिका सिद्धिर्नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अथातस्त्रिमर्म्मीयां सिद्धिं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

सप्तोत्तरं मर्म्मशतमस्मिन् शरीरे स्कन्धशाखाश्रितमग्नि-वेश ! तेषामन्यतमपीड़या समधिकपीड़ा भवति चेतनानि-बन्धवैशेष्यात् । तत्र शाखाश्रितेभ्यो मर्म्मभ्यः स्कन्धाश्रितानि गरीयांसि शाखानां तदाश्रितत्वात् । स्कन्धाश्रितेभ्योऽपि हृद्-वस्तिशिरांसि तन्मूलत्वाच्छरीरस्य ॥ २ ॥

तत्र हृदि दश च धमन्यः प्राणोदानमनोबुद्धिचेतनामहा-भूतानि च नाभ्याममरा इव प्रतिष्ठितानि । शिरस्येन्द्रियाणि इन्द्रियप्राणवहानि च स्रोतांसि सूर्य्यमिव गभस्तयः संश्रि-तानि । वस्तिस्तु स्थूलगुदमुष्कसेवनीशुक्रमूत्रवाहिनीनां मध्ये मूत्राधारोऽम्बुवहानां सर्व्वस्रोतसामुदधिरिवापगानां प्रति-ष्ठितो भवति । बहुभिश्च तन्मूलैर्मर्म्मसंज्ञकैः स्रोतोभिर्गगनमिव दिनकरकरैर्व्याप्तमिदं शरीरम् ॥ ३ ॥

तेषां त्रयाणामन्यतमस्यापि भेदादाश्वेव शरीरभेदः स्यादा-श्रयनाशादाश्रितस्य नाशः, तदुपघातात् तु घोरव्याधिप्रादु-र्भावस्तस्मादेतानि विशेषेण रक्ष्याणि बाह्याभिघाताद् वाता-दिदोषेभ्यश्चेति ॥ ४ ॥

तत्र हृदयेऽभिहते कासश्वासबलक्षयकण्ठशोषक्लोमापकर्षण-जिह्वानिर्गम-मुखतालुशोषापस्मारोन्माद-प्रलाप-चित्तनाशादयः स्युः। शिरस्यभिहते मन्यास्तम्भार्द्दितचक्षुर्विभ्रममोहवेष्टन-चेष्टानाशकासश्वासहनुग्रहमूकगद्गदत्वाक्षिनिमीलनगण्डस्पन्द-नजृम्भणलालास्रावस्वरहानिवदनजिह्मत्वादीनि। वस्तौ तु वातमूत्रवर्च्चोनिग्रहवङ्क्षणमेहनवस्तिशूलकुण्डलोदावर्त्तगुल्म-श्रध्मानिलाष्ठीलोपस्तम्भनाभिकुक्षिगुदश्रोणिग्रहादयः। वाता-द्युपसृष्टानान्त्वेषां लिङ्गानि चिकित्सिते सक्रियादिविधौनुग्र-क्तानि। किन्त्वेतानि विशेषतोऽनिलाद्रक्ष्याणानिलो हि पित्त-कफसमुदीरणे हेतुः, प्राणमूलञ्च स वस्तिकर्म्मसाध्यतमः। तस्मान्न वस्तिकर्म्मसमं किञ्चित् कर्म्म मर्म्मपरिपालनम् ॥ ५ ॥

तत्र षड्आस्थापनस्कन्धान् त्रिमाने द्वौ चानुवासनस्कन्धा-विह च विहितान् वस्तीन् बुद्धा विचार्य्य मर्म्मामर्म्मपरिपाल-नार्थं प्रयोजयेद्वातव्याधिचिकित्साञ्च। भूयश्च हृदुपसृष्टे वातेन हिङ्गुचूर्णलवणानामन्यतमचूर्णयुक्तां पेयां मातुलुङ्गस्य रसेन धान्येन वाम्लेन दध्ना वा पाययेत, स्थिरादिपञ्चमूलीरसः सशर्करः पानार्थं बिल्वादिपञ्चमूलरससिद्धा च यवागूः, हृद्रोग-विहितञ्च कर्म्म। मूर्ध्नि तु वातोपसृष्टेऽभ्यङ्गस्वेदनोपनाहन-स्नेहपाननस्तःकर्म्मावपीड़धूमादीनि। वस्तौ तु कुम्भीस्वेदो वर्त्त-

यश्च। श्यामादिभिर्गोमूत्रसिद्धो निरूहः, बिल्वादिभिश्च सुरादि सिद्धः शरकाशेक्षुदर्भगोक्षुरकमूलशृतक्षीरैश्च, त्रपुषैर्वारुखराश्वा-बीजयवान् कुब्जाकल्कितो निरूहः, क्षारयवतिल्वकभृष्टकल्कितो निरूहः, पीतदारुकसिद्धतैलानुवासनम्। तैल्वकञ्च सर्पिर्वि रेकार्थम्। शतावरीगोक्षुरकबृहतीकण्टकारिकागुडूचीपुनर्नवो-शीरमधुकद्विशारिवालोध्रश्रेयसीकुशकाशमूलकषायक्षीरचतुर्गुणं बलावृषर्षभकखराश्वोपकुञ्चिकावत्सफत्रपुषैर्वारुबीजशितिमा-रकमधुकवचाशतपुष्पाश्मभेदवर्षाभूमदनफलकल्कसिद्धं तैल-मुत्तरवस्तिर्निरूहः स्निग्धस्विन्नस्य वस्तिशूलमूत्रविकारहर इति॥ ६॥

भवन्ति चात्र।

हृदि मूर्ध्नि च वस्तौ च नृणां प्राणाः प्रतिष्ठिताः।
तस्मात् तेषां सदा यत्नात् कुर्व्वीत परिपालनम्॥
आघातवर्ज्जनं नित्यं स्वस्थवृत्तानुवर्त्तनम्।
उत्पन्नार्त्तिविघातश्च मर्म्मणां परिपालनम्॥ ७॥
अत ऊर्द्ध्वं विकारा ये त्रिमर्म्मीये चिकित्सिते।
न प्रोक्ता मर्म्मजास्तेषां कांश्चिद्वक्ष्यामि सौषधान्॥ ८॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्द्ध्वं प्रपद्यते।
पीड़यन् हृदयं गत्वा शिरःशङ्खौ च पीड़यन्॥
धनुर्वन्नमयेद् गात्राण्याक्षिपेन्मोहयेत् तदा।
कृच्छ्रेण चाप्युच्छ्वसिति स्तब्धाक्षोऽथ निमीलकः॥
कपोत इव कूजेच्च निःसञ्ज्ञः सोऽपतन्त्रकः॥ ९॥
दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति।

हृदि मुक्ते नरः स्वास्थ्यं याति मोहं व्रते पुनः ॥
वायुना दारुणं प्राहुरेके तदपतानकम् ॥ १० ॥
स नरः कफवाताभ्यां रुद्धस्तञ्च विमोचयेत् ।
तीक्ष्णैः प्रधमनैः संज्ञान्तासु मुक्तासु विन्दति ॥
मरिचं शिग्रुबीजानि विडङ्गञ्च फणिज्झकम् ।
एतानि सूक्ष्मचूर्णानि दद्याच्छीर्षविरेचनम् ॥
हिङ्गु तुम्बुरु पथ्यांश्च पौष्करं लवणत्रयम् ।
यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्तेऽपतन्त्रके ॥
हिङ्गुस्त्ववेतसं शुण्ठीं ससौवर्च्चलदाड़िमम् ।
पिवेद्वातकफघ्नञ्च कर्म्म हृद्रोगनुद्धितम् ॥
शोधना वंस्तयस्तीक्ष्णा हितास्तस्य च कृत्स्नशः ।
सौवर्च्चलाभयाव्योषैः सिद्धन्तु स्याद् घृतं हितम् ॥ ११ ॥
मधुरस्निग्धगुर्व्वन्नसेवनाच्चिन्तनात्क्रमात् ।
शोकाद्व्याध्यनुषङ्गाच्च वायुनोदीरितः कफः ॥
यदासौ समवस्कन्द्य हृदयं हृदयाश्रयान् ।
समावृणोति ज्ञानादींस्तदा तन्द्रोपजायते ॥
हृदयव्याकुलीभावो वाक्चेष्टेन्द्रियगौरवम् ।
मनोबुद्ध्यप्रसादश्च तन्द्राया लक्षणं मतम् ॥ १२ ॥
कफघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च ।
व्यायामो रक्तमोक्षश्च भोज्यञ्च कटु तिक्तकम् ॥ १३ ॥
मूत्रौकसादं जठरं कृच्छ्रं स्रोतूसङ्गसङ्क्षयौ ।
मूत्रातीतोऽनिलाष्ठीला वातवस्त्युष्णमारुतौ ॥
वातकुण्डलिकाग्रन्थिविड्घातौ वस्तिकुण्डलम् ।

अथोदशैते मूत्रस्य दोषांस्तान् लिङ्गतः शृणु ॥ १४ ॥
पित्तं कफो द्वयं वापि वस्तौ संहन्यते यदा ।
मारुतेन तदा मूत्रं रक्तं पीतं घनं सृजेत् ॥
सदाहं श्वेतसान्द्रं वा सर्व्वैर्वा लक्षणैर्युतम् ।
मूत्रैकसादं तं विद्यात् पित्तश्लेष्महरैर्जयेत् ॥ १५ ॥
विधारणात् प्रतिहतं वातोदावर्त्तितं यदा ।
पूरयत्युदरं मूत्रं तदा तदनिमित्तरुक् ॥
अपक्तिमूत्रविट्सङ्गैस्तन्मूत्रजठरं वदेत् ।
मूत्रवैरेचनीं तत्र चिकित्सां संप्रयोजयेत् ॥
हिङ्गुद्विरुत्तरं चूर्णं चिमर्म्मीये प्रकीर्त्तितम् ।
हन्यान्मूत्रादिसंघातं व्याधिञ्च गुदमेढ्रयोः ॥ १६ ॥
मूत्रितस्य व्यवायात् तु रेतो वातोद्धतं च्युतम् ।
पूर्व्वं मूत्रस्य पश्चाद्वा स्रवेत् तत् क्षुक्रमुच्यते ॥ १७ ॥
स्ववेगुणानिलाक्षेपैः किञ्चिन्मूत्रस्य तिष्ठति ।
मणिसन्धौ स्रवेत् पश्चात् तदरुग्वाथवातिरुक् ॥
मूत्रोत्सङ्गः स विच्छिन्नस्तच्छेषो गुरुशेफसः ॥ १८ ॥
वाताकृतिर्भवेद्वातान्मूत्रे शुष्यति सञ्चयः ॥ १९ ॥
चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ २० ॥
आध्मापयन् वस्तिगुदं रुद्धा वायुस्त्वतोन्नताम् ।
कुर्य्यात् तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥ २१ ॥
मूत्रमाधारयेद् वस्तौ वायुः क्रुद्धो विधारणात् ।
मूत्ररोधार्त्ति कण्डुभिर्वातवस्तिः स उच्यते ॥ २२ ॥

उष्मणा सोष्मकं मूत्रं शोषयन् रक्तपीतकम् ।
उष्णवातः सृजेत् कृच्छ्राद्वस्तिपस्थार्त्तिदाहवान् ॥ २३ ॥
गतिसङ्गादुदावृत्तः स मूत्रस्थानमार्गयोः ।
मूत्रस्य विगुणो वायुर्भग्नव्याविद्धकुण्डली ॥
मूत्रं विहन्ति संस्तम्भभग्नगौरववेष्टनैः ।
तीव्ररुङ्मूत्रविट्सङ्गैर्वातकुण्डलिकेति सा ॥ २४ ॥
रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् ।
ग्रन्थिं कुर्य्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥
अश्मरीसमशूलं तं मूत्रग्रन्थिं प्रचक्षते ॥ २५ ॥
रूक्षदुर्ब्बलयोर्वातेनोदावृत्तं शकृद् यदा ।
मूत्रस्रोतः प्रपद्येत विट्संसृष्टं तदा नरः ।
विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं विनिर्द्दिशेत् ॥ २६ ॥
द्रुताध्वलङ्घनायासैरभीघातात् प्रपीड़नात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीड़ितस्तु स्रवेद्धारां स्तम्भनोद्वेष्टनार्त्तिमान् ॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥
तस्मिन् पित्तावृते दाहः शूलं मूत्रविवर्णता ।
श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ॥
श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिध्यति ।
अविभ्रान्तबिलः साध्यो न च यः कुण्डलीकृतः ॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ २७ ॥

दोषाधिक्यमवेच्यैतान् मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च सर्व्वेषामेव योजयेत् ॥ २८ ॥
पुष्पनेत्रन्तु हैमं स्यात् सूच्ममौत्तरवस्तिकम् ।
जातीपुष्पस्य वृन्तेन समं गोपुच्छसंस्थितम् ॥
रौप्यं वा सर्षपच्छिद्रं द्विकर्णं द्वादशाङ्गुलम् ॥ २९ ॥
तेनाजवस्तियुक्तेन स्नेहस्यार्द्धपलं नयेत् ।
यथा वयोविशेषेण स्नेहमात्रां विकल्पय वा ॥ ३० ॥
स्नातस्य भुक्तभक्तस्य रसेन पयसापि वा ।
सृष्टविण्मूत्रवेगस्य पीठे जानुसमे मृदौ ॥
ऋजोः सुखोपविष्टस्य हृष्टे मेढ्रे घृतान्विते ।
शलाकयान्विष्य गतिं यद्यप्रतिहता व्रजेत् ॥
ततः शेफःप्रमाणेन पुष्पनेत्रं प्रवेशयेत् ।
गुदवन्मूत्रमार्गेण प्रणयेदनु सेवनीम् ॥
हिंस्यादतिगतं वस्तिमूने स्नेहो न गच्छति ।
सुखं प्रपीड्य निष्कम्पं निष्कर्षेन्नेत्रमेव च ॥ ३१ ॥
प्रत्यागते द्वितीयन्तु तृतीयञ्च प्रदापयेत् ।
अनागच्छन्नुपेक्ष्यस्तु रजनीव्युषितस्य च ॥
पिप्पलीलवणागारधूमापामार्गसर्षपैः ।
वार्त्ताकुरसनिर्गुण्डीशम्पाकैः ससहाचरैः ॥
मूत्राम्लपिष्टैः सगुडैर्वर्त्तिं कृत्वा प्रवेशयेत् ।
अग्रे तु सर्षपाकारां पश्चाद् द्विमाषसम्मिताम् ॥
नेत्रदीर्घां घृताभ्यक्तां सुकुमारामभङ्गुराम् ।
नेत्रवन्मूत्रनाड्यान्तु पायौ वाङ्गुष्ठसम्मिताम् ॥ ३२ ॥

स्नेहे प्रत्यागते ताभ्यां सानुवासनिको विधिः ।
परिहारश्च सव्यापत्सम्यग्दत्तस्य लक्षणम् ॥ ३३ ॥
स्त्रीणामार्त्तवकाले तु प्रतिकर्म्म तदाचरेत् ।
गर्भासन्ना सुखं स्नेहं तदादत्ते ह्यपावृता ॥
गर्भं योनिस्तदा शीघ्रं जिते गृह्णाति मारुते ॥ ३४ ॥
वस्तिजेषु विकारेषु योनिविभ्रंशजेषु च ।
योनिशूलेषु तीव्रेषु योनिव्यापत्स्वसृग्दरे ॥
अप्रस्रवति मूत्रे च विन्दुं विन्दुं स्रवत्यपि ।
विदध्यादुत्तरं वस्तिं यथास्वौषधसंस्कृतम् ॥ ३५ ॥
पुष्पनेत्रप्रमाणन्तु प्रमदानां दशाङ्गुलम् ।
मूत्रस्रोतःपरीणाहं मूत्रस्रोतोऽनुवाहि च ॥
गर्भमार्गे तु नारीणां विधेयं चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु बालायास्त्वेकमङ्गुलम् ॥ ३६ ॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
अथास्याः प्रणयेन्नेत्रमनु वंशगतं सुखम् ॥
द्वित्रिचतुरिति स्नेहानहोरात्रेण योजयेत् ।
वस्तिं वस्तौ प्रणीते तु वस्तिस्थानन्तरो भवेत् ॥
त्रिरात्रं कर्म्म कुर्व्वीत स्नेहमात्रां विवर्द्धयन् ।
अनेनैव विधानेन कर्म्म कुर्य्यात् पुनस्त्र्यहात् ॥ ३७ ॥
अतः शिरोविकाराणां कश्चिद्भेदः प्रवक्ष्यते ।
रक्तपित्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः ॥
तीव्ररुग्दाहरागं हि शोफं कुर्व्वन्ति दारुणम् ।
स शिरो विषवद्वेगी निरुध्याशु गलं तथा ॥

त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः।
जीवेत् त्र्यहं चेद्भैषज्यं प्रत्याख्याय समाचरेत्।
शिरोविरेकसेकादि सर्व्वं वीसर्पनुच्च यत् ॥ ३८ ॥
रूक्षात्यध्यशनात् पूर्व्ववातावश्यायमैथुनैः।
वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥
केवलः सकफो वापि गृहीत्वार्द्धं शिरो बली।
मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धे च वेदनाम् ॥
शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोऽर्द्धावभेदकः।
नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥
चतुःस्नेहोत्तमा मात्रा शिरःकायविरेचनम्।
नाडीस्वेदो घृतं जीर्णं वस्तिकर्म्मानुवासनम् ॥
उपनाहः शिरोवस्तिर्दहनं चात्र शस्यते।
प्रतिश्याये शिरोरोगे यच्चोद्दिष्टं चिकित्सितम् ॥ ३९ ॥
सन्धारणादजीर्णाद्यैर्मस्तिष्कं रक्तमारुतौ।
दुष्टौ दूषयतस्तच्च दुष्टं ताभ्यां विमूर्च्छितम् ॥
सूर्य्योदयेऽंशुसन्तापाद् दुष्टं विष्यन्दते शनैः
ततो दिने शिरःशूलं दिनवृद्ध्या च वर्द्धते ॥
दिनक्षये ततः स्त्यानं मस्तिष्के संप्रशाम्यति।
सूर्य्यावर्त्तः स तत्र स्यात् सर्पिरौत्तरभक्तिकम् ॥
शिरःकायविरेकौ च मूर्द्धां तु स्नेहधारणम्।
जाङ्गलैरुपनाहश्च घृतक्षीरैश्च सेचनम् ॥
बर्हितित्तिरिलावाद्यिशृतक्षीरोत्थितं घृतम्।
नावनं जीवनीयाष्टगुणक्षीरोपसाधितम् ॥ ४० ॥

उपवासातिशोकातिरूक्षशीताल्पभोजनैः ।
दुष्टा दोषास्त्रयो मन्यापश्चाद्घाटासु वेदनाम् ॥
तीव्रां कुर्व्वन्ति नासाक्षिभ्रूशङ्खेष्ववतिष्ठते ।
स्पन्दनं गण्डपार्श्वस्य नेत्ररोगं हनुग्रहम् ॥
सोऽनन्तवातस्तं हन्याच्छिरोऽर्कावर्त्तनाशनैः ॥ ४१ ॥
वातो रूक्षादिभिः क्रुद्धः शिरःकम्पमुदीरयेत् ।
तत्रामृतावलारास्नामहाश्वेताश्वगन्धकैः ।
स्नेहस्वेदादि वातघ्नं शस्तं नस्यञ्च तर्पणम् ॥ ४२ ॥
नस्तः कर्म्मंच कुर्व्वीत शिरोरोगेषु शास्त्रवित् ।
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति तान् ॥ ४३ ॥
नावनञ्चावपीडश्च ध्मापनं धूम एव च ।
प्रतिमर्षश्च विज्ञेयो नस्तःकर्म्म तु पञ्चधा ॥
स्नेहनं शोधनञ्चैव द्विविधं नावनं स्मृतम् ।
शोधनः स्तम्भनश्च स्यादवपीड़ो द्विधा मतः ॥
चूर्णस्याध्मापनं नाम देहस्रोतोविशोधनम् ।
विज्ञेयस्त्रिविधो धूमः प्रागुक्तः शमनादिकः ॥
प्रतिमर्षो भवेत् स्नेहो निर्दोष उभयार्थकृत् । ४४ ॥
एवं तद्रेचनं कर्म्म तर्पणं शमनं त्रिधा ॥
स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिका ये शिरोगदाः ।
शिरसो रेचनं तेषु नस्तःकर्म्म प्रशस्यते ॥
ये च वातात्मका रोगाः शिरःकम्पार्द्दितादयः ।
शिरसस्तर्पणं तेषु नस्तःकर्म्म प्रचक्ष्यते ॥
रक्तपित्तादिरोगेषु शमनं नस्यमिष्यते ॥ ४५ ॥

ध्मापनं धूमपानञ्च यथायोगेषु शस्यते।
दोषादिकं समीक्ष्यैव भिषक् सम्यक् च कारयेत् ॥ ४६ ॥
फलादि भेषजं प्रोक्तं शिरसो यद्विरेचनम्।
तत्तु संकल्पयेत् तेन पचेत् स्नेहं विरेचनम् ॥
यदुक्तं मधुरस्कन्धे भेषजं तेन तर्पणम्।
साधयित्वा भिषक् स्नेहं नस्तः कुर्य्याद्विधानवित ॥ ४७ ॥
प्राक्सूर्य्ये मध्यसूर्य्ये वा कुर्य्यात् बर्पणमेव च।
उत्तानस्य शयानस्य शयने स्वास्तृते सुखम् ॥
प्रलम्बशिरसः किञ्चित् किञ्चित् पादोन्नतस्य च।
दद्यान्नासापुटे स्नेहं तर्पणं बुद्धिमान् भिषक् ॥ ४८ ॥
अनवाक्शिरसो नस्यं न शिरः प्रतिपद्यते।
अत्यवाक्शिरसो नस्यं मस्तुलुङ्गे च तिष्ठति ॥
अत एव शयानस्य शुद्ध्यर्थं स्वेदयेच्छिरः।
संस्वेद्य नासामुन्नाम्य वामेनाङ्गुष्ठपर्व्वणा ॥
हस्तेन दक्षिणेनाथ दद्यादुभयतः समम्।
प्रणाड्या पिचुना वापि नस्तः स्नेहं यथाविधि ॥ ४९ ॥
कृते च स्वेदयेद्भूय आकर्षेच्च पुनः पुनः।
तं स्नेहं श्लेष्मणा सार्द्धं तथा स्नेहो न तिष्ठति ॥ ५० ॥
स्वेदनोत्क्लेशितः श्लेष्मा नस्तः कर्म्मणापस्थितः।
भूयः स्नेहस्य शैत्येन शिरसि स्त्यायते प्रति ॥
श्रोत्रमन्यागलाद्येषु विकाराय स कल्पते।
ततो नस्तःकृते धूमं पिबेत् कफविनाशनम् ॥
हिताम्नभुङ् निवातोष्णसेवी स्यान्नियतेन्द्रियः ॥ ५१ ॥

विधिरेषोऽवपीड़स्य कार्य्यः प्रधमापनस्य तु।
षड़ङ्गुल्याथवा नाड्या धमेच्चूर्णं मुखेन तु॥
विरिक्तश्चिरसन्तूर्णं पाययित्वाम्बु भोजयेत्।
लघु त्रिष्ववित्तदञ्च निवातस्थमतन्द्रितम्॥ ५२॥
विरेकश्चान्यो दोषस्य कोपनं यस्य सेवते।
स दोषो विचरंस्तत्र करोति स्वान् गदान् बहून्॥
यथास्वं विहितां तत्र क्रियां कुर्य्याद्विचक्षणः।
अकालकृतजातानां रोगाणामनुरूपतः॥ ५३॥
अजीर्णे भुक्तभक्ते च तोयपीतेऽथ दुर्द्दिने।
प्रतिश्याये नवे स्नाने स्नेहपानेऽनुवासने॥
नावनं स्नेहनं रोगान् करोति श्लैष्मिकान् बहून्।
तत्र श्लेष्महरः सर्व्वस्तीक्ष्णोष्णादिविधिर्हितः॥ ५४॥
क्षामे विरेचिते गर्भे व्यायामाभिहतेष्वपि।
वातो रूक्षेण नस्येन क्रुद्धः स्वान् जनयेद्गदान्॥
तत्र वातहरः सर्व्वो विधिः स्नेहनवृंहणः।
स्वेदादिः स्याद् घृतं क्षीरं गर्भिण्यास्तु विशेषतः॥ ५५॥
ज्वरशोकाभितप्तानां तिमिरं मद्यपस्य च।
रूक्षैः शीताञ्जनैर्लेपैः पुटपाकैश्च साधयेत्॥ ५६॥
स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते।
प्रतिमर्षस्तु नस्यार्थं करोति न च दोषवान्॥ ५७॥
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्व्वदा।
नचोत्सिङ्क्देद्रोगाणां प्रतिमर्षः स दार्ढ्यकृत्॥ ५८॥

तत्र श्लोकौ ।

त्रीणि यस्मात् प्रधानानि मर्म्माण्यभिहतेषु च ।
तेषु लिङ्गं चिकित्सा च रोगभेदाश्च सौषधाः ॥
विधिरुत्तरवस्तेश्च नस्तःकर्म्मविधिस्तथा ।
षड्व्यापद्भेषजं सिद्धौ मर्म्माध्याये प्रकीर्त्तितम् ॥ ५६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने त्रिमर्म्मीयसिद्धिर्नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

अथातो वस्तिसिद्धिं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

सिद्धानां वस्तीनां शस्तानां तेषु तेषु रोगेषु ।
शृण्वग्निवेश गदतः सिद्धिं सिद्धिप्रदां भिषजाम् ॥ २ ॥
बलदोषकालरोगप्रकृतीः प्रविभज्य योजितः सम्यक् ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान् नियच्छति ॥
कर्म्मान्यद्वस्तिसमं न विद्यते शीघ्रसुखविशोधित्वात् ।
आश्वपतर्पणतर्पणयोगाच्च निरत्ययत्वाच्च ॥ ३ ॥
सत्यपि दोषहरत्वे कटुतीक्ष्णोष्णादिभेषजादानात् ।
दुःखोद्गारोत्क्लेशाहृद्यत्वकोष्ठरुजा विरेके स्युः ॥
अविरेच्यौ शिशुवृद्धौ तावदप्राप्तप्रहीनधातुबलौ ।
आस्थापनमेव तयोः सर्व्वार्थकृदुत्तमं कर्म्म ॥

बलवर्णहर्षमार्द्दवगात्रस्नेहान् नृणां दधात्याशु । ४ ॥
अनुवासनं निरूहश्चोत्तरवस्तिश्च स त्रिविधः ॥
शाखावातार्त्तानां सङ्कुचितस्तब्धभग्नसन्धीनाम् ।
विट्सङ्गाध्मानारुचिपरिकर्त्तरुगादिषु च शस्तः ॥ ५ ॥
उष्णार्त्तानां शीतान् शीतार्त्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान् वस्तीन् सन्तर्क्य विनियुञ्ज्यात् ॥ ६ ॥
वस्तीन् न बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्त्ताः ॥ ७ ॥
क्षीणक्षतदुर्ब्बलमूर्च्छितकृशशुष्कस्तब्धदेहानाम् ।
दद्यान्न विशोधनीयान् दोषनिबद्धायुषो ये च ॥ ८ ॥
वाजीकरणासृक्पित्तयोश्च मधुघृतपयोयुताः सर्व्वे ।
शस्ताः सतैलमूत्रारनाललवणाश्च कफवाते ॥ ९ ॥
युञ्ज्याद् द्रव्याणि वस्तिष्वम्लं मूत्रं पयःसुराक्वाथान् ।
अविरोधाद्धातूनां रसयोनित्वाच्च जलमुष्णम् ॥
सुरदारुशताह्वैलाकुष्ठमधुकपिप्पलीमधुस्नेहाः ।
ऊर्द्ध्वानुलोमभागाः सर्षपाः शर्करा लवणम् ॥
आपो वस्तीनामतः प्रयोज्यानि येषु यानि सुश्रः ।
युक्तानि सह कषायैस्तदुत्तरतः प्रवक्ष्यामि ॥ १० ॥
चिरजातकठिनबलिषु व्याधिषु तीक्ष्णा विपर्य्यये च मृदवः ।
सप्रतिवापकषायैर्योज्यास्त्वनुवासननिरूहाः ॥ ११ ॥
अर्द्धश्लोकैरतः सिद्धान् नानाव्याधिषु वर्गशः ।
वस्तीन् वीर्य्यसमैर्भागैर्यथार्हानिह तान् शृणु ॥ १२ ॥
बिल्वोऽग्निमन्थः श्योनाकः काश्मर्य्यः पाटलिस्तथा ।

शालपर्णी पृश्निपर्णी वृहत्यौ वर्द्धमानकः।
यवाः कुलत्थाः कोलास्थि स्थिरा चेति त्रयोऽनिले।
अस्यन्ते सचतुःस्नेहाः पिशितस्य रसाः शिवाः॥ १३॥
नलवञ्जुलवानीरशतपत्राणि शैवलम्।
मञ्जिष्ठा शारिवानन्ता पयस्या मधुयष्टिका॥
चन्दनं पद्मकोशीरं तुङ्गञ्च पैत्तिके त्रयः।
सशर्कराघृतक्षौद्राः सक्षीरा वस्तयो हिताः॥ १४॥
अर्कस्तथैव चालर्कं एकाष्ठीला पुनर्नवा।
हरिद्रा त्रिफला मुस्तं पीतदारु कुटन्नटम्॥
पिप्पल्यश्चित्रकश्चेति त्रयस्ते श्लेष्मरोगिणाम्।
सक्षारक्षौद्रगोमूत्रा नातिस्नेहान्विता हिताः॥ १५॥
फलजीमूतकेक्ष्वाकुधामार्गवकोड़वत्सकाः।
श्यामा च त्रिफला चैव स्थिरा दन्ती द्रवन्त्यपि॥
प्रकीर्य्या चोदकीर्य्या च नीलिनी क्षीरिणी तथा।
सप्तला शङ्खिनी लोध्रं फलं कम्पिल्लकस्य च॥
चत्वारो मूत्रसिद्धास्तु पक्वाशयविशोधनाः॥ १६॥
काकोली क्षीरकाकोली मुद्गपर्णी शतावरी।
विदारी मधुयष्ट्याह्वा शृङ्गाटककशेरुके॥
आत्मगुप्ताफलं माषाः सगोधूमा यवास्तथा।
जाङ्गलानूपजं मांसमितोऽते शुक्रमांसदाः॥ १७॥
जीवन्ती चाग्निमन्थश्च धातकीपुष्पवत्सकौ।
प्रग्रहः खदिरः कुष्ठं शमी पिण्डीतको यवाः॥
प्रियङ्गु रक्तमूली च तरुणी स्वर्णयूथिका।

वटाद्याः किंशुकं लोध्रमिति सांग्राहिका मताः ॥ १८ ॥
परिस्रवे शृतं क्षीरं सवृश्चीरपुनर्नवम् ।
आखुपर्णिकया वापि तण्डुलीयकयुक्तया ॥
कोलकतककाण्डेक्षुदर्भपोटेक्षुबालिभिः ।
दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः ॥ १९ ॥
कव्वुदाराढकीनीपविदुलैः क्षीरसाधितैः ।
वस्तिः प्रदेयो भिषजा शीतः समधुशर्करः ॥
परिकर्त्ते तथा वृन्तैः श्रीपर्णीकोविदारजैः ॥ २० ॥
मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः ।
हितः प्रवाहणे तद्वद् वृन्तैः शाल्मलिकस्य च ॥ २१ ॥
अप्लावरोहिका काकनामा राजकशेरुकः ।
सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः ॥
न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिनापरः ॥ २२ ॥
बृहती क्षीरकाकोली पृश्निपर्णी शतावरी ।
काश्मर्य्यं बदरी दूर्व्वा तथोशीरप्रियङ्गवः ॥
जीवनीयैः शृतैः क्षीरैर्द्वौ घृताञ्जनसंयुतौ ।
वस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥
गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैस्तथा ।
तेनैव विधिना वस्तिर्देयः सक्षौद्रशर्करः ॥ २३ ॥
शशैणदक्षमार्ज्जारमहिषाव्यजशोणितैः ।
सद्यस्कैर्मृदुभिर्वस्तिर्जीवादाने प्रशस्यते ॥ २४ ॥
मधूकमधुकद्राक्षादूर्व्वाकाश्मर्य्यचन्दनैः ।
शर्करांचन्दनद्राक्षामधुधात्रीफलोत्पलैः ।

रक्तपित्ते प्रमेहे तु कषायः सोमवल्कजः ॥ २५ ॥

तत्र श्लोकाः ।

त्रिकास्त्रयोऽनिलादीनां चतुष्काश्चापरे त्रयः ।
पक्काशयविशुद्ध्यर्थं वृष्याः सांग्राहिकास्तथा ॥
परिस्रावे तथा दाहे परिकर्त्ते प्रवाहणे ।
अतियोगे मताः पञ्च जीवादाने तथा त्रयः ॥
रक्तपित्ते द्वयं मेह एकस्त्रिंशच्च पञ्च च ।
सुलभाश्चौषधक्लेशा वस्तयो गुणवत्तमाः ॥ २६ ॥
गुल्मातिसारोदावर्त्तस्तम्भसङ्कुचितादिषु ।
सर्व्वाङ्गैकाङ्गरोगेषु रोगेष्वेवंविधेषु च ॥
यथास्वमौषधैः सिद्धान् वस्तीन् दद्याद्विचक्षणः ।
पूर्व्वोक्तेन विधानेन कुर्य्याद् योगान् पृथग्विधान् ॥ २७ ॥

इत्याग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
वस्तिसिद्धिर्नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

अथातः फलमात्रासिद्धिं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः ॥ १ ॥

भगवन्तमुदारसत्त्वधीश्रुतविज्ञानसमृद्धमत्रिजम् ।
फलवस्तिवरत्वनिश्चये सविवादा मुनयोऽभ्युपागमन् ॥
भृगुकौशिककाप्यशौनकाः सपुलस्त्यासितगौतमादयः ।

कतमत् प्रवरं फलादिषु स्मृतमास्थापनयोजनास्विति ॥ २ ॥

कफपित्तहरं वरं फलेष्वथ जीमूतकमाह शौनकः ।
मृदुवीर्य्यतया भिनत्ति तत् शक्रादित्याह नृपोऽथ वामकः ॥
कटुतुम्बीफलमुत्तमं मतं वमने दोषसमीरणाच्च तत् ।
तदयोग्यमशैत्यतीक्ष्णताकटुरौक्ष्यादिति गौतमोऽब्रवीत् ॥
कफपित्तनिबर्हणं परं स च धामार्गवमित्यमन्यत ।
तदमन्यत वातलं पुनर्वड़िशो ग्लानिकरं बलापहम् ॥
कुटजं प्रशशंस चोत्तमं न बलघ्नं कफपित्तहारि च ।
अतिविज्जलमूर्द्ध्वभागिकं पवनक्षोभि च काप्य आह तत् ॥
कृतवेधनमाह वातलं कफपित्तं प्रबलं हरेदिति ।
तदसाध्विति तत्र शौनकः कटुकञ्चापि बलघ्नमित्यपि ॥
इति तद्वचनानि हेतुभिः सुविचित्राणि निशम्य बुद्धिमान् ।
प्रशशंस फलेषु निश्चयं परमञ्चात्रिसुतोऽब्रवीदिदम् ॥ ३ ॥

फलदोषगुणान् सरस्वती प्रति सर्व्वैरपि सम्यगीरिता ।
न तु किञ्चिददोषनिर्गुणं गुणभूयस्त्वमतो विचिन्त्यते ॥ ४ ॥

इह कुष्ठहिता खराग़री हितमिक्ष्वाकु तमे हितं मतम् ।
कुटजस्य फलं हृदामये प्रवरं कोठफलञ्च पाण्डुषु ॥
उदरे कृतवेधनं हितं मदनं सर्व्वगदाविरोधि तु ।
मधुरं सकषायतिक्तकं तदहृत्तं सकटूष्णविज्जलम् ।
कफपित्तहृदाशुकारि चाप्यनपायं पवनानुलोमि च ॥
फलनामविशेषतस्त्वतो लभतेऽन्येषु फलेषु सत्स्वपि ॥ ५ ॥

गुरुणा च वचस्युदाहृते मुनिसङ्घेन च पूजिते ततः ।
प्रणिपत्य मुदा समन्वितः सहितः शिष्यगणोऽनुपृष्टवान् ॥

सर्व्वकर्म्मगुणकृद् गुरुणोक्तो वस्तिरूर्द्ध्वमथ वेदिना मतः ॥
नाभ्यधोगुदगतश्च शरीरात् सर्व्वतः कथमपोहति दोषान् ॥ ६ ॥
तद्गुरुरब्रवीदिदं शरीरं तन्त्रयतेऽनिलः सङ्गविघातात्।
केवल एव दोषसहितो वा स हि वायुः प्रकोपमुपयाति ॥
तं पवनं सपित्तकफविट्कं शुद्धिकरोऽनुलोमयति वस्तिः ।
सर्व्वशरीरगश्च गदसंघातः प्रकाशनात् प्रशान्तिमुपयाति ॥ ७ ॥
अथाभिगम्यार्थमखण्डितं धिया गजोष्ट्रगोऽश्वाव्यजवस्तिकर्म्म ।
अपृच्छदेनं स च वस्तिमब्रवीद् विधिञ्च तस्याह पुनः प्रचोदितः॥८
अजाविके सौम्य गजोष्ट्रयोर्वा गवाश्वयोर्वस्तिमुशन्ति माहिषम् ॥
अजाविकादन्तसुवस्तिमुत्तरं वदन्ति वस्तिं विपरीतरूपम् ।
सुवस्तिमष्टादशषोड़शाङ्गुलं तथैव नेत्रञ्च दशाङ्गुलं क्रमात् ॥
गजोष्ट्रगोऽश्वाव्यजवस्तिसम्मौ चतुर्थभागे कृतकर्णिकं वदेत् ॥९॥
प्रस्थस्त्वजाव्योर्हि निरूहमात्रा गवादिषु द्वित्रिगुणो यथाबलम् ।
निरूह उष्ट्रस्य तथाढ़कद्वयं गजस्य वृद्धिस्त्वनुवासनेऽष्टमः ॥ १० ॥

कलिङ्गकुष्ठे मधुकं सपिप्पली
वचा शताह्वा मदनं रसाञ्जनम् ।
हितानि सर्व्वेषु गुड़ः ससैन्धवो
द्विपञ्चमूलस्य विकल्पनात्त्रियम् ॥
गजेऽधिकोऽश्वत्थवटाश्वकर्णजाः
सखादिराः प्रयत्नशालतालजाः ।
तथा च उष्ट्रे धवशिंशुपाटला-
मधूकसाराः सनिकुम्भचित्रकाः ॥
पलाशभूतीकसुराह्वरोहिणी-

कषाय उक्तस्त्वधिको गवां हितः ।
पलाशदन्तीसुरदारुकत्तृणा-
द्रवन्तश्च उक्तास्तुरगस्य चाधिकाः ॥
खरोष्ट्रयोः पीलुकरीरखादिराः
शम्याकबिल्वादिगणस्य च च्छदाः ।
अजाविकानां त्रिफलापरूषकं
कपित्थकर्कन्धुसबिल्वकोलजम् ॥ ११ ॥
अथाग्निवेशः सततोऽन्तरान्तरा
हितञ्च प्रपच्छ गुरुस्तदाह च ।
सदातुराः श्रोत्रियराजसेवका-
स्तथैव वेश्याः सह पण्यजीविभिः ॥
द्विजो हि शिष्याध्ययनव्रताह्निक-
क्रियादिभिर्देहहितं न चेष्टते ।
नृपोपसेवी नृपवित्तरक्षणात्
परानुरोधाद्बहुचिन्तनाद्भयात् ॥
नृचित्तवर्त्तिन्युपचारतत्परा
मृजाविभूषानिरता पराङ्गना ।
सदासनादत्यनुबन्धविक्रयक्रयादिलोभादपि पण्यजीविनः ॥
सदैव ते ह्यागतवेगनिग्रहं समाचरन्ते न च कालभोजनम् ।
अकालनिर्हारविहारसेविनो भवन्ति येऽनेऽपि सदातुराश्च ते ॥१२॥
समीरणं वेगविधारणोद्धतं विबद्धसर्व्वाङ्गरुजाकरं भिषक् ।
समीक्ष्य तेषां फलवर्त्तिमादितः सुकल्पितां स्नेहवतीं प्रयोजयेत् ॥१३
पुनर्नवैरण्डनिकुम्भचित्रकान् सदेवदारुत्रिवृतानिदिग्धिकान् ।

महान्ति मूलानि च पञ्च तद्भवान्
विपाच्य मूत्रे दधिमस्तुसंयुते ॥
सतैलसर्पिर्लवणैश्च पञ्चभि-
र्विमूर्च्छितं वस्तिमथ प्रयोजयेत्।
निरूहितं धन्वरसेन भोजितं
निकुम्भतैलेन ततोऽनुवासयेत् ॥ १४ ॥
बलाप्लवराम्नाफलबिल्वचित्रकान्
द्विपञ्चमूले कृतमालकोत्पले ।
यवान् कुलत्थांश्च पचेज्जलाढ़के
रसः स पेषैस्तु कलिङ्गकादिभिः ॥
सतैलसर्पिर्गुड़सैन्धवोहितः
सदा नराणां बलवर्णवर्द्धनः ।

तथैव शस्तं मधुकेन साधितं फलेन बिल्वेन शताह्वयाथवा ॥१५॥
सजीवनीयस्तु रसोऽनुवासने निरूहणे चालवणः शिशोर्हितः ।
नचान्यदाप्लवङ्गबलाभिवर्द्धनं निरूहवस्तेः शिशुवृद्धयोः परम् ॥१६

तत्र श्लोकः ।

फलकर्म्मवस्तिषु वरत्वनिश्चयो वस्तयो गवादीनाम् ।
सततान्तराश्चोद्दिष्टाः फलमात्रायां हितश्चैषाम् ॥ १७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
फलमात्रासिद्धिर्नामैकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

अथात उत्तरवस्तिसिद्धिं व्याख्यास्याम-
इति ह स्माह भगवानात्रेयः ॥ १ ॥

अथ खल्वातुरं वैद्यः संशुद्धं वमनादिभिः ।
दुर्ब्बलं कृशमल्पाग्निं मुक्तसन्धानबन्धनम् ॥
निर्हृतानिलविण्मूत्रकफपित्तं कृशाशयम् ।
शून्यदेहं प्रतीकारासहिष्णुं परिपालयेत् ॥
यथैव तरुणं पूर्णं तैलपात्रं तथैव च ।
गोपाल इव दण्डी गाः सर्व्वस्मादपचारतः ॥ २ ॥
अग्निसन्धुक्षणार्थन्तु पूर्व्वं पेयादिभिर्भिषक् ।
रसोत्तरेणैव चरेत् क्रमेण क्रमकोविदः ॥
स्निग्धाम्लस्वादुहृद्यानि ततोऽम्ललवणौ रसौ ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥
अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।
व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् ॥ ३ ॥
बलवान् वर्णवान् सर्व्वरतिः स्वङ्गः स्थिरेन्द्रियः ।
प्रसन्नात्मा सर्व्वसहो विज्ञेयः प्रकृतिं गतः ॥ ४ ॥
एतां प्रकृतिमप्राप्तः सर्व्ववर्ज्ज्यानि वर्ज्जयेत् ।
महादोषकराण्यष्टाविमानि तु विशेषतः ॥
उच्चैर्भाष्यं रथक्षोभमतिचंक्रमणासने ।
अजीर्णाहितभोज्ये च दिवास्वप्नञ्च मैथुनम् ॥

ऊर्द्ध्वं देहेऽथ सर्व्वाधोमध्यपीड़ामदोषजाः।
श्लेष्मजाः क्षयजाश्चैव व्याधयः सुर्यथाक्रमम्॥ ५॥
तेषां विस्तरतो लिङ्गमेकैकस्य सभेषजम्।
यथावत् संप्रवक्ष्यामि सिद्धान् वस्तींश्च यापनान्॥ ६॥

तत्रोच्चैर्भाष्यातिभाष्याभ्यां शिरस्तापकर्णशङ्खनिस्तोदस्रोतोरोधमुखतालुकण्ठशोषतैमिर्य्यपिपासा-ज्वर-तमकहनुमन्याग्रहनिष्ठीवनोरःपार्श्वशूलस्वरभेद-हिक्का-श्वासादयः सुरः। रथक्षोभात् सन्धिपर्व्वशैथिल्य-हनुनासाकर्णशिरःशूल-तोदवङ्क्षिविक्षोभाटोपान्त्रकूजनाध्मापन-हृदयेन्द्रियोपरोध-स्फिक्पार्श्व-वंक्षणवृषण-कटीपृष्ठवेदनासन्धिस्कन्धहनुग्रीवादौर्ब्बल्याङ्गाभितापपादशोफप्रस्वापहर्षणादयः। अतिचंक्रमणात् पादजङ्घोरुजानुवंक्षणश्रोणीपृष्ठशूल-च्छर्द्दि-सक्थिसाद-सन्धिसाद-निस्तोदपिण्डिकोद्वेष्टनाङ्गमर्द्दांसाभितापशिराधमनीहर्षश्वासकासादयः सुरः। अत्यासनाद्रथक्षोभजाः स्फिक्पार्श्ववंक्षणवृषणकटीपृष्ठवेदनादयश्च। अजीर्णाध्यशनाभ्यान्तु मुखशोषाध्मानशूलनिस्तोदपिपासागात्रसादच्छर्द्द्यतीसारमूर्च्छाज्वरप्रवाहणामविषादयः सुरः। विषमाहिताशनाभ्यामनन्नाभिलाषदौर्ब्बल्यवैवर्ण्य-कण्डूपामागात्रावसाद-वातादिप्रकोपजाश्च ग्रहणयर्शोविकारादयः। दिवास्वप्नाद्रोचकाविपाकाग्निनाशस्तैमित्यपाण्डुत्वक्कण्डूपामादाहच्छर्द्द्यङ्गमर्द्दहृत्स्तम्भजाड्य-तन्द्रानिद्राप्रसङ्गग्रन्थिजन्मदौर्ब्बल्यरक्ताक्षितातालुलेपाः पिपासा च। व्यवायाद्राशु बलनाशोरुसादवस्तिशिरोगुदमेढ्रवृषणवंक्षणोरुजानुजङ्घापादशूलहृदयस्पन्दननेत्रपीड़ाङ्गशैथिल्यशुक्रमार्गशोणितागमन-

कासश्वास-शोणितष्ठीवनस्वरावसादकटीदौर्ब्बल्यैकाङ्गसर्व्वाङ्ग-रोगमुष्कश्वयथुवातवर्च्चोमूत्रसङ्ग-शुक्रविसर्गजाड्यवेपथुबाधिर्य्य-विषादादयः स्युः, उत्पाद्यत इव गुदं ताड्यत इव मेढ्रमवसी-दतीव गमने वेपते हृदयं पीड्यन्ते सन्धयस्तमः प्रविश्यत इव च । इत्येवमेभिरष्टाभिरपचारैरेते प्रादुर्भवन्त्युपद्रवाः ॥ ७ ॥

तेषां सिद्धिरुच्चैर्भाष्यातिभाष्यजानामभ्यङ्गस्वेदोपनाहधूम-नस्योपरिभक्तस्नेहपानरसक्षीरादिभिर्वातहरः सर्व्वो विधि-मौनञ्च । रथक्षोभातिचंक्रमणात्यासनजानां स्नेहस्वेदादि वातहरं कर्म्म सर्व्वं निदानवर्ज्जनम् । अजीर्णाध्यशनजानां निरव-शेषतश्छर्द्दनं रूक्षस्वेदधूमपानलङ्घनीयपाचनीयौषधावचार-णञ्च । विषमाहिताशनजानां यथास्वं दोषक्रियाः । दिवा-स्वप्नजानां धूमपानलङ्घनवमनशिरोविरेचनव्यायामरूक्षाशना-दिदीपनीयौषधोपयोगः प्रहर्षणोन्मर्द्दनपरिषेचनादिश्च श्लेष्म-हरः सर्व्वो विधिः । मैथुनजानां जीवनीयसिद्धयोः क्षीरसर्पिषो-रुपयोगः, तथा वातहराः स्वेदाभ्यङ्गोपनाहा वृष्याश्चाहाराः स्नेहाः स्नेहविधयो यापना वस्तयोऽनुवासनञ्च । मूत्रवैकृत-वस्तिशूलेषु चोत्तरवस्तिः, विदारीगन्धादिगणजीवनीयगण-क्षीरसंसिद्धं तैलं स्याद् यापनाश्च वस्तयः सर्व्वकालं देया-स्तानुपदेक्ष्यामः ॥ ८ ॥

मुस्तोशीरबलारग्वधरास्नामञ्जिष्ठाकटुरोहिणीत्रायमाणापुन-र्नवाविभीतकगुडूचीस्थिरादिपञ्चमूलानि पलिकानि खण्डशः क्लिप्तान्यष्टौ च मदनफलानि प्रक्षाल्य जलाढके निक्काथ्य पाद-शेषो रसः क्षीरद्विप्रस्थसंयुक्तः पुनः शृतः क्षीरावशेषो जाङ्गलरस-

तुल्यो मधुयुतः शतकुसुमामधुककुटजफलरसाञ्जनप्रियङ्गुकल्की-कृतः ससैन्धवः सुखोष्णोवस्तिः शुक्रमांसाग्निबलजननः क्षतक्षीण-कासगुल्मशूलविषमज्वरब्रध्न-कुण्डलोदावर्त्तकुक्षिशूलमूत्रकृच्छ्रा-सृग्रजोविसर्प-प्रवाहिका-शिरोरुजा-जानूरुजङ्घावस्तिग्रहाश्मर्य्यु-न्मादार्शःप्रमेहाध्मानवातरक्तपित्तश्लेष्मव्याधिहरः सद्यो बल-जननो रसायनश्चेति ॥ ९ ॥

एरण्डमूलपलाशात् षट्पलं शालपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरकरास्नाश्वगन्धा गुडूची वर्षाभूरारग्वध-देवदार्व्विति पलिकानि खण्डशः क्लिन्नानि फलानि चाष्टौ प्रक्षाल्य जलाढ़के क्षीरपादे पचेत्। पादशेषं कषायं पूतं शत-कुसुमाकुष्ठमुस्तपिप्पलीहवुषाबिल्ववचावत्सकफलरसाञ्जनप्रियङ्गु-यमानीसंक्षेपकल्कितं मधुघृततैलसैन्धवयुक्तं सुखोष्णं निरूह-मेकं द्वौ त्रीन् वा दद्यात्। सर्व्वेषां प्रशस्तो विशेषतो ललित-सुकुमारक्षतक्षीणस्थविरचिरार्शसामपत्यकामानाञ्च ॥ १० ॥

सहचरबलामूर्व्वामूलशारिवासिद्धेन पयसा तथा बृहती-कण्टकारीशतावरीच्छिन्नरुहामृतेन पयसा सर्षपमदनपिप्पली-कल्कीकृतेन पूर्व्ववद् वस्तिः। तथा बलातिबलाविदारीशाल-पर्णी-पृश्निपर्णीबृहतीकण्टकारिका-दर्भमूलकाश्मर्य्य-बिल्वफल-सिद्धेन पयसा मधुकमदनकल्कीकृतेन मधुघृतसौवर्च्चलप्रयुक्तेन कासज्वरगुल्मप्लीहार्हितक्षीणमद्यक्लिष्टानां सद्यो बलजननो रसायनश्च ॥ ११ ॥

बलातिबलारास्नारग्वधमदनबिल्वगुडूचीपुनर्नवैरण्डाश्व-गन्धासहचरपलाशदेवदारुद्विपञ्चमूलानि पलिकानि. यव-

कोलकुलत्थद्विप्रस्थं शुष्कमूलकानाञ्च जलद्रोणे सिद्धं निरूह-प्रमाणं शेषकषायं पूतं मधूकमदनशतपुष्पाकुष्ठपिप्पलीवचा-वत्सकरसाञ्जनप्रियङ्गुयमानीकल्कीकृतं गुड़घृततैलचौद्रचीर-मांसरसाम्लकाञ्जिकसैन्धवयुक्तं सुखोष्णञ्च वस्तिं दद्यात् । शुक्रमूत्रवर्च्चःसङ्गानिलज-गुल्महृद्रोगाध्मानब्रध्नपार्श्वपृष्ठकटी-ग्रहसंज्ञानाशबलक्षयेषु च ॥ १२ ॥

हवुषार्द्धकुड़वो द्विगुणोऽर्द्धचुम्नायवः चीरोदकसिद्धः चीर-शेषो मधुघृततैललवणयुक्तो वस्तिः सर्व्वाङ्गविसृतवातरक्तसक्त-विण्मूत्रस्त्रीखेदितहितो वातहरो बुद्धिमेधाग्निबलजननश्च । ह्रस्वपञ्चमूलीकषायः चीरोदकसिद्धः पिप्पलीमधूकमदनकल्की-कृतः सगुड़घृततैललवणः चीणविषमज्वरकर्षितस्य वस्तिः । बलातिबलापामार्गात्मगुप्ताष्टपलार्द्धचुम्नायवाञ्जलिकषायः पूर्व्व-वद्वस्तिः स्थविरदुर्ब्बलचीणशुक्ररुधिराणां पथ्यतमः ॥ १३ ॥

बलामधुकविदारीदर्भमूलमृद्वीकायवैः कषायमार्जेन पयसा पुनः पक्त्वा मधुकाचकल्कितं समधुघृतसैन्धवं ज्वरा-र्त्तेभ्यो वस्तिं दद्यात् । शालपर्णीपृश्निपर्णीगोचुरककोल-काश्मर्य्यपरूषकखर्ज्जूरफलमधूकपुष्पैरजाचीरजलप्रस्थाभ्यां सिद्धः कषायः पिप्पलीमधुकोत्पलकल्कितः सघृतसैन्धवः चीणेन्द्रिय-विषमज्वरकर्षितस्य वस्तिः शस्तः ॥ १४ ॥

स्थिरादिपञ्चमूलीपञ्चपलेन शालिषष्टिकयवगोधूममाष-कषायपञ्चप्रस्थेन छागपयः शृतं पादशेषं, कुक्कुटाण्डरसमधु-घृतशर्करासैन्धवसौवर्च्चलयुक्तो वस्तिर्वृष्यतमो बलजननश्च । यापना वस्तयो द्वादश । कल्पश्चैषां शिखिगोनर्द्दहंसाण्ड-

रसेषु स्यात्। सतित्तिरिः समयूरः सपाकहंसपञ्चमूलीसिद्धं पयः शतकुसुमामधुकरास्नाकुटजफलपिप्पलीकल्को घृततैलगुड़-सैन्धवयुक्तो वस्तिर्बलवर्णशुक्रजननो रसायनश्च ॥ १५ ॥

द्विपञ्चमूलीकुक्कुटरससिद्धं पयः पादशेषं पिप्पलीमधूक-रास्नामदनमधुककल्कं शर्करामधुघृतयुक्तं स्त्रीष्वतिकामानां बलजननो वस्तिः। मयूरमपित्तपक्षपादास्यान्त्रं स्थिरादिभिः पलिकैः सह जले पयसि पक्त्वा क्षीरशेषं मदनविदारीपिप्पली-शतकुसुमामधुककल्कीकृतं मधुघृतसैन्धवयुक्तं वस्तिं दद्यात् स्त्रीष्वतिप्रसक्तक्षीणेन्द्रियेभ्यो हितो बलवर्णकरः। कल्पश्चैष विष्किरप्रतुदप्रसहाम्बुचरेषु स्यात् सक्षीरो रोहितादिषु मत्-स्येषु च ॥ १६ ॥

गोधानकुलमार्ज्जारमूषिकशल्लकमांसानां दशपलान् भागान् सपञ्चमूलान् पयसि पक्त्वा, तत्पयःपिप्पलीफलकल्कसैन्धव-सौवर्चलशर्करामधुघृततैलयुक्तो वस्तिर्बल्यो रसायनः क्षीणक्षत-सन्धानकरो मथितोरस्करथगजहयभग्नवातवलासकप्रभृतुगद्गा-वर्त्तवातशुक्रमूत्रवर्च्चःशुक्राणां हिततमश्च ॥ १७ ॥

कूर्म्मादीनामन्यतमपिशितसिद्धं पयो गोवृषशुक्रकुक्कुट-हंसकुक्कुटाण्डरस-मधुघृतशर्करासैन्धवेक्षुरकात्मगुप्ताफलकल्क-युक्तो वस्तिर्वृद्धानामपि बलजननः। गोवृषवस्तवराहवृषण-कर्कटकशशाण्डसिद्धं क्षीरमुच्चटकेक्षुरकात्मगुप्तामधुघृतयुतं किञ्चिल्लवणितं वस्तिः। कर्कटकरसश्चटकाण्ड-रसयुक्तः समधु-घृतशर्करो वस्तिरित्येते वस्तयः परमवृष्याः। 'उच्चटकेक्षुरकात्म-गुप्ताशृतक्षीरप्रतिभोजनानुपानात् स्त्रीशतगामिनं नरं कुर्य्युः ॥१८॥

दशमूलमयूरहंसकुक्कुटक्काथात् पञ्चप्रसृतं मधुतैलघृत-वसामज्जचतुष्प्रसृतयुक्तं शतपुष्पामुस्तहवुषाकल्कीकृतः सलवणो वस्तिः पादगुल्फोरुजानुजङ्घात्रिकवंक्षणवस्तिवृषणानिलरोग-हरः। मृगविष्किरानूपबिलेशयानामेतेनैव कल्पेन वस्तयो देयाः। मधुघृतद्विप्रसृतं तुल्योष्णोदकं शतपुष्पार्द्धपलं सैन्धवार्द्धाक्षयुक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तव्याधिवातहरश्च। मद्योघृततैलवसामज्जचतुःप्रसृघृतं. हवुषार्द्धपलं सैन्धवार्द्धाक्ष-युक्तो वस्तिर्वृष्यतमो मूत्रकृच्छ्रपित्तव्याधिहरो रसायनः। मधु-तैलं चतुःप्रसृतं तुल्योष्णोदकं शतपुष्पार्द्धपलं सैन्धवार्द्धाक्षयुक्तो वस्तिर्दीपनो वृंहणो बलवर्णकरो निरुपद्रवो वृष्यतमो रसा-यनः क्रिमिकुष्ठोदावर्त्तगुल्मार्शोब्रध्नप्लीहमेहहरः। तद्वत् सह मधुघृताभ्यां पयस्तुल्यो वस्तिः पूर्व्वकल्पेन बलवर्णकरो वृष्यतमो निरुपद्रवो वस्तिमेढ्रपाकपरिकर्त्तिकामूत्रकृच्छ्रपित्तव्याधिहरो रसायनश्च॥ १६॥

मधुघृताभ्यां मांसरसतुल्यो मुस्ताद्यक्तः पूर्व्ववत् वस्ति-र्वातासपादहर्षगुल्मजानूरुकुञ्चनवस्तिवृषणमेढ्रत्रिकोरुपृष्ठशूल-हरः। सुरासौवीरककुलत्थमांसरसमधुघृततैलसप्तप्रसृतं मुस्त-शताह्वाकल्कितं सलवणो वस्तिः सर्व्ववातरोगहरः। तथा द्विपञ्चमूलत्रिफलाबिल्वमदनफलकषायो गोमूत्रसिद्धः कुटज-मदनफलमुस्तपाठाकल्कितः सैन्धवयावशूकचौद्रतैलयुक्तो वस्तिः श्लेष्मव्याधिवस्त्राटोपवातशुक्रसङ्गपाण्डुरोगाजीर्ण-विसूचिका-लसकेषु देय इति॥ २०॥

अत ऊर्द्ध वृष्यतमान् स्नेहान् वक्ष्यामः। शतावरीगुडूचीबृ-

विदार्य्यामलकद्राक्षाखर्ज्जूराणां यन्त्रपीड़ितानां रसप्रस्थं पृथगेकैकं तद्वद्घृततैलगोमहिष्यजाक्षीराणां द्वौ द्वौ दद्यात्। जीवकर्षभकमेदामहामेदात्वक्क्षीरी-शृङ्गाटकमधूलिकामधुकोच्चटकपिप्पली-पुष्करबीजनीलोत्पल-कदम्बपुष्प-पुण्डरीककेशर-कल्कान् पृषतरक्षुमांसकुक्कुटचटकचकोरमत्ताक्षबर्हिजीवञ्जीवककुलिङ्गनीलहंसानां रसं वसामज्ज्ञोश्च प्रस्थं दत्त्वा साधयेत्। ब्रह्मघोषशङ्खपटहभेरीनिर्ह्रादैः सिद्धं सितच्छत्रकृतच्छायं गजस्कन्धमारोहयेत्, भगवन्तं वृषध्वजमभिपूज्य तं स्नेहं विभागमाह्निकं समाह्निकं वा मङ्गलाशीःस्तुतिदैवतार्च्चनैर्वस्तिं गमयेत्। नृणां स्त्रीविहाराणां नष्टरेतसां क्षतक्षीणविषमज्वरार्त्तानां व्यापन्नयोनीनां वन्ध्यानां रक्तगुल्मिनीनां मृतापत्यानामनार्त्तवानाञ्च स्त्रीणां क्षीणमांसरुधिराणां पथ्यतमं रसायनमुत्तमं वलीपलितनाशनं विद्यात्॥ २१॥

बलागोक्षुरकरास्नाश्वगन्धाशतावरीसहचराणां शतं शतमायोज्य जलद्रोणशते प्रसाध्य, तस्मिन् जलद्रोणावशेषे रसे वस्त्रपूते विदार्य्यामलकस्वरसयोर्वस्तमहिषवराहवृषकुक्कुटबर्हिहंसकारण्डवसारसरसानां घृततैलयोश्चैकैकं पृथक् प्रस्थमष्टौ प्रस्थान् क्षीरस्य दत्त्वा चन्दनमधुकमधूलिकात्वक्क्षीरीविसमृणालोत्पल-पटोलफलात्मगुप्तान्नपाकितालमज्जाखर्ज्जूरमृद्वीकातामलकीकण्टकारीजीवकर्षभकक्षुद्रसहामहासहाशतावरीमेदामहामेदापिप्पलीह्रीवेरत्वक्पत्रकल्कांश्च दत्त्वा साधयेत्। ब्रह्मघोषादिना विधिना ततुसिद्धं वस्तिमादद्यात्। तेन स्त्रीशतं गच्छेत्। न चात्र दत्ते विहाराहारयन्त्रणा क्वचित्। एष

वृष्यो वयःस्थैर्य्यो वृंहण आयुष्यो बलीपलितनुत् क्षतक्षीणनष्टशुक्र-विषमज्वरार्त्तानां व्यापन्नयोनीनाञ्च पथ्यतमः॥ २२ ॥

सहचरपलशतमुदकद्रोणशते पक्त्वा द्रोणशेषे रसे सुपूते विदारीक्षुरसप्रस्थाभ्यामष्टगुणक्षीरं घृततैलप्रस्थं बलामधुक-मधूक-चन्दन-मधूलिका-शारिवामेदामहामेदाकाकोली-क्षीर-काकोलीपयस्यागुरुमञ्जिष्ठाव्याघ्रनखशटीसहचरासहस्रवीर्य्या-वराङ्गलोध्राणामक्षमात्रैर्द्विगुणशर्करैः कल्कैः साधयेत्। अक्ष-घोषादिना विधिना लतसिद्धं वस्तिं दद्यात्। एष सर्व्व-रोगहरो रसायनो ललितानां श्रेष्ठोऽन्तःपुरचारिणां क्षतक्षय-वातपित्तवेदनाश्वासकासहरस्त्रिभागमाक्षिकोऽकालवलीपलित-नुद्वर्णरूपबलमांसशुक्रवर्द्धनः। इत्येते रसायनाः स्नेहवस्तयः सति विभवे शतपाका सहस्रपाका वा कार्य्या वीर्य्यबलाधा-नार्थमिति॥ २३ ॥

भवन्ति चात्र।

इत्येते वस्तयः स्नेहाश्चोक्ताः प्राणिषु संज्ञिताः।
स्वस्थानामातुराणाञ्च वृद्धानाञ्चाविरोधिनः॥
अतिव्यवायशीलानां शुक्रमांसबलप्रदाः।
सर्व्वरोगप्रशमनाः सर्व्वेष्वृतुषु यौगिकाः॥
नारीणामप्रजातानां नराणाञ्चाप्यपत्यदाः।
उभयार्थकरा दृष्टाः स्नेहवस्तिनिरूहयोः॥
व्यायामो मैथुनं मद्यं मधूनि शिशिराम्बु च।
सम्भोजनं रथक्षोभो वस्तिष्वेतेषु गर्हितम्॥ २४ ॥

तत्र श्लोकाः।

शिखिगोनद्धंहंसाख्यैर्दश्चवद्दस्तयस्त्रयः।
विंशतिर्विंष्किरैस्त्रिंशत् प्रतुदैः प्रसहैर्नव॥
विंशतिश्च तथा सप्तविंशतिश्चाम्बुचारिभिः।
नव मत्स्यादिभिश्चैव शिखिकल्पेन वस्तयः॥
दश कर्कटकाद्यैश्च कूर्म्मकल्पेन वस्तयः।
मृगैः सप्तदशैकोनविंशतिर्विंष्किरैर्दश॥
आनूपैर्दक्षशिखिवन्नूशयैश्च चतुर्दश।
एकोनत्रिंशदित्येते सह स्नेहैः समासतः॥
प्रोक्ता विस्तरशो भिन्ना द्वे शते षोड़शोत्तरे।
एते माक्षिकसंयुक्ताः कुर्व्वन्त्यतिवृषं नरम्॥
नातियोगं न वायोगं स्तम्भितास्ते च कुर्व्वते।
मृदुत्वान्न निवर्त्तेरन् यद्यत्वे ते प्रयोजिताः।
समूत्रैर्वस्तिभिस्त्वेते राश्वाप्यः क्षिप्रमेव सः॥
शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्त्तिकाः।
स्युरर्ज्वरश्चातिसारश्च यापनात्यर्थसेवया॥
अरिष्टक्षीरशीध्वाद्यास्तत्रेष्टा दीपनी क्रिया।
युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः॥
इत्यत्रैर्भाष्यपूर्व्वाणां व्यापदः सचिकित्सिताः।
विस्तरेण पृथक् प्रोक्तास्तेभ्यो रक्षेन्नरं सदा॥ २५॥
कर्म्मणां वमनादीनामसम्यक्करणापदाम्।
यत्रोक्तं साधनं स्थाने सिद्धिस्थानं तदुच्यते॥ २६॥
इत्यध्यायशतं विंशमात्रेयमुनिवाङ्मयम्।

हितार्थं प्राणिनां प्रोक्तमग्निवेशेन धीमता ॥
दीर्घमायुर्यशः स्वास्थ्यं त्रिवर्गञ्चापि पुष्कलम् ।
सिद्धिञ्चानुत्तमां लोके प्राप्नोति विधिना पठन् ॥ २७ ॥
विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् ।
संस्कर्त्ता कुरुते तन्त्रं पुराणञ्च पुनर्नवम् ॥
अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना ।
संस्कृतं तत् तु संसृष्टं विभागेनोपलक्ष्यते ॥
तच्छङ्करं भूतपतिं संप्रसाद्य समापयेत् ।
अखण्डार्थं दृढ़बलो जातः पञ्चनदे पुरे ॥
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च बलोच्चयम् ।
सप्तदशौषधाध्यायसिद्धिकल्पैरपूरयत् ॥ २८ ॥
इदमनूनशब्दार्थं तन्त्रं दोषविवर्ज्जितम् ।
षट्त्रिंशता विचित्रं हि भूषितं तन्त्रयुक्तिभिः ॥
तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ।
प्रदेशोद्देशनिर्द्देशवाक्यशेषाः प्रयोजनम् ॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्य्ययः ॥
पूर्व्वपक्षविधानानुमतव्याख्यानसंशयाः ।
अतीतानागतावेक्षा स्वसंज्ञोह्यसमुच्चयाः ॥
निदर्शनं निर्व्वचनं सन्नियोगो विकल्पनम् ।
प्रत्युच्चारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥
तन्त्रे व्याससमासोक्ता भवन्त्येताहि कृत्स्नशः ।
एकदेशेन दृष्टास्तु समासाभिहितं यथा ॥

यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।
प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः॥ २८॥
एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः।
स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात् प्रबुध्यते॥
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विचक्षणः।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा॥
दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम्।
सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रञ्च रक्षति॥
तस्मादेताः प्रवक्ष्यन्ते विस्तरेणोत्तरे पुनः।
तत्त्वज्ञानार्थमस्यैव तन्त्रस्य गुणदोषतः॥ ३०॥

इदमखिलमधीत्य सम्यगर्थान्
विमृशति यो विमलः प्रयोगनित्यः।
स मनुजसुखजीवितप्रदानाद्
भवति धृतिस्मृतिबुद्धिधर्म्मवृद्धः॥ ३१॥

यस्य द्वादशसाहस्री हृदि तिष्ठति संहिता।
सोऽर्थज्ञः स विचारज्ञश्चिकित्साकुशलश्च सः॥
ऊर्द्ध्वबाहुविरौत्येवं नच कश्चिद् शृणोति मे।
ग्रन्थादर्थं चिकित्साञ्च स किमर्थं न बुध्यते॥ ३२॥
चिकित्सितं वह्निवेश स्वस्थातुरहितं प्रति।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ ३३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते सिद्धिस्थाने
उत्तरवस्तिसिद्धिर्नाम द्वादशोऽध्यायः॥ १२॥

---

सिद्धिस्थानं समाप्तम्।

---

...ग्रन्थ पूर्णोऽयं ग्रन्थः।